ललितोदारमधुरैर्वाक्यैर्गहनार्थविचिन्तनपुरस्सरं निष्कृष्टार्थप्रतिपादकं व्यङ्ग्यार्थादिप्रकाशकं सहृदयहृदयङ्गमं च व्याख्यानमेतावता कालेन प्रकाशपदवीम् अनाधिरूढम् । उत्कण्ठन्ते च नैके सहृदयास्तत्तादृशस्य व्याख्यानस्य । ताम् इमामुत्कण्ठां शमयितुमलमियं रसमञ्जरीति निस्संशयं मुक्तकण्ठं च शक्यं वक्तुम् ।

## व्याख्यारीतिः ।

अन्यादृशी पुनरियं विवरणरीतिः पूर्णसरस्वत्या अदृष्टचरी व्याख्यान्तरेषु मन्ये नाटकव्याख्यातॄणां मातृकायै भविता । अस्यां खलु व्याख्यायां प्रायेण सर्वेषामपि मौलानां पदानां विस्तरेणार्थः प्रतिपादितः । तदनुगुणानि प्राचीनाचार्यप्रमाणवचनानि, महाकविप्रयोगाः कोशव्याकरणादयश्च यावत्सम्भवं समुद्धृत्य प्रकाशितानि । विचित्रया विमर्शनसरण्या बहुमुखेनोदाहरणप्रपञ्चेन प्रतिपाद्यवस्तुमहिम्ना चाद्ययावत् प्रकाशितानि निखिलान्यपि व्याख्यानानि नितरामियमतिशेते रसमञ्जरीति चापरोक्षं प्रेक्षावताम् । तारतम्यपरीक्षयैव च तदिदं व्यक्तं भवतीति प्रदर्शनार्थं स्थलमेकमुदाह्रियते —

"न्यस्तालक्तकरक्तमाल्यवसना पाषण्डचण्डालयोः
पापारम्भवतोर्मृगीव वृकयोर्भीरुर्गता गोचरम् ।
सेयं भूरिवसोर्वसोरिव सुता मृत्योर्मुखे वर्तते
हा धिक् ! कष्टमनिष्टमत्तकरुणः कोऽयं विधेः प्रक्रमः ॥

न्यस्तालक्तकेत्यादि । न्यस्तालक्तका तिलकत्वेन विहितलाक्षारसा । रक्तानि लोहितवर्णानि माल्यानि मालायां साधूनि पुष्पाणि, 'तत्र साधुः' इति यत्, वसने वस्त्रे च यस्याः । पाषण्डचण्डालयोरिति । 'पाषण्डा बाह्यलिङ्गिन' इति वैजयन्ती ।

'कलौ जगत्पतिं विष्णुं सर्वस्रष्टारमीश्वरम् ।
नार्चयिष्यन्ति मैत्रेय पाषण्डोपहता जनाः ॥

किं देवैः किं द्विजैर्वेदैः किं शौचेनाम्बुजन्मना ।
एवं कलौ वदिष्यन्ति पाषण्डोपहता जनाः ॥'

इति श्रीविष्णुपुराणे,

'निशामुखेषु खद्योतास्तमसा भान्ति न ग्रहाः ।
यथा पापेन पाषण्डा नहि वेदाः कलौ युगे ॥'

इति श्रीभागवते च वेदबाह्यानामीश्वरभक्तिरहितानां दुस्समयिनां श्वखर-सृगालसधर्मणां दुष्कर्मणां पाषण्डत्वावगतेस्तथागतनग्नाटककापालिकादयः पाषण्डशब्देनोच्यन्ते । पाषण्डी पाषण्डश्च पाषण्डौ । पुमान् स्त्रियेत्येकशेष-विधानात् । अनेन चान्तेवासिन्या गुरोरेकशेषप्रवचनेन गम्यागम्य-नियमाभावो द्योत्यते । चण्डाली चण्डालश्च चण्डालौ, तदुपमितयोः । अथवा पाषण्डरूपयोर्जनङ्गमयोरित्यनेनैतदाह —

'सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।'

इति,

'हित्वा स्वधर्मं चरणाम्बुजं हरे-
र्भजन्नपक्वोऽथ पतेत् ततो यदि ।
यत्र क वा भद्रमभूदमुष्य किं
को वार्थ आप्तो भजतां स्वधर्मतः ॥'

इत्यादिभिः प्रतिपादितां परमेश्वरभक्तिं,

'यस्य नाहङ्कृतो भावो बुद्धिर्यस्य न लिप्यते ।
हत्वापि स इमान् लोकान् न हन्ति न निबध्यते ॥'

इति,

'ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा ।'

इति,

'अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः ।
सर्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि ॥'

इति,

'सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।
सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥'

इति,

'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशाद्' इत्यादिभिः स्मृतिभिस्तन्मूलभूताभिः श्रुतिभिश्च प्रकाशितं तत्त्वज्ञानं, तद्द्वयमनवष्टभ्य यथेष्टं चेष्टमानानां पुरुषदोषदुष्टागमाभ्यासविक्षुभितानां वेदविरुद्धराद्धान्तविभ्रान्तानाम् अशास्त्रविहितघोरधर्मचर्याणामनार्याणां निरवधिकविपदि निरयतमसि निरवलम्बनं पततां दर्शनस्पर्शनादिष्वपि दुरितोपपत्तेर्दूरतो वर्जनीयत्वं शिष्टैरिति ।

'या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः ।
सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः ॥'

इति मनुवचनात् । भक्तस्य तु स्वधर्मतः स्खलनेऽपि 'मोक्षयिष्यामि मा शुचः' इति, 'योगक्षेमं वहाम्यहम्' इति, 'तेषामहं समुद्धर्ता मृत्युसंसारसागरात्' इति, 'कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति' इत्येवमादिवचनैः करुणाभूतेन भगवतैव जनन्येव शिशोः परिपाल्यमानत्वात्, ज्ञानिनः पुनर्निषिद्धाचरणस्य

'अनभ्यासादप्रसङ्गाच्चाद्वेष्टृत्वादयो गुणाः ।
अयत्नतो भवन्त्यस्य न तु साधनरूपिणः ॥'

इत्यद्वेष्टृत्वादीनामेवाभ्यस्तत्वात्, अलेपकपक्षस्य च

'शुनां तत्त्वदृशां चैव को भेदोऽशुचिभक्षणे ।'

इति निरस्तत्वात्, कर्मानुष्ठानस्य च

'अहं प्रत्ययबीजं यदहंप्रत्ययवत् स्थितम् ।
नाहं प्रत्ययवद्च्युतं कथं कर्म प्ररोहति ॥'

इत्यहमध्यासनिबन्धनकर्तृत्वाद्यारोपमूलत्वात् तस्य च ब्रह्मज्ञानाग्निना दग्धत्वेनानधिकारितया विध्यगोचरत्वेन

'दग्धाखिलाधिकारश्चेद् ब्रह्मज्ञानाग्निना मुनिः ।
वर्तमानः श्रुतेर्मूर्ध्नि नैव स्याद् वेदकिङ्करः ॥'

इति श्रुतिकैङ्कर्यासम्भवेन परास्तत्वाद् भक्तज्ञानिनोः कर्माननुष्ठानमात्रदर्शनेन पतितत्वाशङ्का मोह एव । भक्तिज्ञानयोरन्यतरविरहे तु विहितनिषिद्धकर्मणोरकरणकरणाभ्यां पाषण्डत्वम् अत एव चण्डालत्वमिति साधयति परमप्रमाणभूतो भवभूतिः । तत्र हेतुः — पापारम्भवतोः पापान्

'ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः ।
महान्ति पातकान्याहुः संयोगश्चैव तैः सह ॥'

इति मनुस्मृतानां महापातकानां गोवधादीनामुपपातकानां च, आरम्भोऽनुष्ठानं, तेन नित्ययुक्तयोः । नित्ययोगे मतुप् । मृगी हरिणी । मृगीग्रहणेन मुग्धस्वभावत्वात् स्पृहणीयसभयदृष्टिपाताच्च दयनीयत्वातिशयो द्योत्यते । एकवचनेन यूथभ्रष्टत्वं व्यज्यते । वृकयोः, वृकी च वृकश्च वृकौ तयोः । उपमानत्वेन पापारम्भवत्त्वमेवोपपादयति । न हि वृकादयः श्वापदाः कदाचिदपि सात्त्विका भवन्तीति । भीरुः भयशीला । भियः क्रुक्लुकनौ । इति क्रुक्प्रत्ययः । क्रियावचनत्वादूङ् न भवति । गतेत्येकवचनेनैकाकिनीत्वम् । गोचरं स्वच्छन्दपराभवविषयम् । सेति गर्भेश्वरत्वसौकुमार्यदुःखानभिज्ञत्वादिकं द्योतयति । अथवास्माभिर्यद्विषये भूयोदर्शनमात्रम् आशंसितं सेति । इयमिति अस्मिन् प्रदेशे पुरोवर्तित्वमस्याः स्वप्नेऽप्यसम्भावितमिति दर्शयति । सेति द्योतितस्य गर्भेश्वरत्वादेर्हेतुमाह — वसोः उपरिचरस्य राजर्षेः । वसुसंज्ञया प्रसिद्धस्येति समग्रशक्तित्रयत्वं प्रकाश्यते । सुतेत्येकापत्यत्वादेकत्वमाह । मृत्योः यमस्य मुखे इति । अनन्तरमेव जिघांसितत्वात् मृत्योर्मुखं प्रविष्टेव न निर्गमिष्यतीत्यनेनावानस्माकमाश्वास इत्यर्थः । हा धिक् हेति विषादद्योतकमव्ययम् । धिगिति जुगुप्साव्यञ्जकम् । कष्टमनिष्टमतिदुःखमतिदुःसहमप्रियमस्माकमिति शेषः । अनिष्टं धिगिति 'धिगुपर्यादिषु त्रिषु' इत्यादिना द्वितीया । अस्तकरुणः निरस्तदयः क इति विकल्पे । 'प्रश्ने क्षेपे विकल्पे किम्' इति वैजयन्ती । अयमिदानीं दृश्यमानः प्रक्रमः आरम्भः कः आवयोरुत्सादनार्थो वा, अस्मद्वंशयोः ससुहृद्वर्गयोरुन्मूलनार्थो वा, संसारस्यैव निस्सारीकरणार्थो वा इत्यर्थः । अत्रावेगो व्यज्यते । विधिं प्रत्यसूया वितर्कश्च । उपमालङ्कारः । न्यस्तालक्तकेत्यादिरपवादः विधिदोषप्रख्यापनाद्" इति ।

अत्र हि पाषण्डेत्येकशेषेण गम्यागम्यनियमराहित्यस्य, पाषण्डचण्डालेत्यनेन यथेष्टं सञ्चरमाणानामनार्याणां वेदविरुद्धराद्धान्तविभ्रान्तानां दर्शनस्पर्शनादिषु दुरितोपपत्तेर्दूरतो वर्जनीयत्वस्य, मृगीग्रहणेन दयनीयत्वस्य, एकवचनेन यूथभ्रष्टत्वस्य, वृकयोरित्युपमानेन पापारम्भवत्त्वस्य, गतेत्येकवचनेनैकाकिनीत्वस्य, सेत्येकवचनेन गर्भेश्वरत्वादिकस्य, वसोरित्यनेन शक्तित्रयसम्पन्नत्वस्य च व्यज्यमानत्वेन प्रतिपाद्यमानं सचेतसामतीव चमत्कारातिशयं करोति ।

1787

त्रिपुरारिव्याख्या त्विह पदार्थनिर्वचमात्रपरायणा । यथा—"न्यस्तेति । न्यस्तमनुलिप्तमलक्तकं यस्याः सा चासौ रक्तमाल्यवसना च पापानां पापकारिणामारम्भो मारणं कर्म अनयोरस्तीति तद्वतोः । पाषण्डौ बौद्धावेव चण्डालौ । चण्डालकर्मकारित्वात् तत्सहकारित्वाच्च । तयोः पुमान् स्त्रियेत्येकशेषः । वृकयोर्व्याघ्रादिक्रूरसत्त्वयोर्मृगी हरिणीव गोचरं विषयं गता । भीरुः स्वभावेनैव । वसोरिव अष्टवसुष्वन्यतमसदृशस्य, यद्वा वसोरग्नेरिव पराक्रमसम्पन्नस्य । देवतुल्यस्यापि भूरिवसोरमात्यस्य सुता मृत्योर्मुखे वर्तते । हा खेदे । धिगिति । ममेतः परं जीविताशामिति शेषः । कष्टमिदमनिष्टमापतितम् । अस्तकरुणः कृपाहीनो विधेः प्रक्रम आरम्भः कोऽयम् । कथमत्यन्तानुचितमेवारब्धं दैवहतकेनेत्यर्थः । हा धिक् कष्टमनिष्टमिति पदानामतीवार्थाभावेऽपि अनुकम्पातिशयद्योतनार्थत्वान्न पौनरुक्त्यशङ्केति ध्येयम् । यदाह—

'अनुकम्पाद्यतिशये यदि कश्चिन्निबध्यते ।
न दोषः पुनरुक्त्यादौ प्रत्युतेयमलङ्क्रिया '॥

इति ।

तथा रसमञ्जर्यां 'नान्द्यन्ते सूत्रधारः' इति वाक्यं सानन्दामिति पद्यानन्तरं पठ्यते । सानन्दमित्यादीनि च चत्वारि नान्दीपद्यानि भवन्ति । तत्रापि नान्दीसूत्रधारेण प्रयोज्यैका नान्दी, अनन्तरं च तत्समानाकृतिना स्थापकसूत्रधारेण प्रयोज्यानीतराणि पद्यानि । यथोक्तमारम्भे —

"प्रथमं प्रबन्धमुखलक्षणेरितां परदेवतास्मरणमङ्गलादिकाम् ।
रसिकान् प्रति प्रकरणक्रियोन्मुखः कविराट् करोति भवभूतिराशिषम् ॥

सानन्दामित्यादि . ... ... ... ... ... .... ... .... ॥ १ ॥

प्रत्यूहनिरसनौचित्याद्विनायकमुखेनाशिषं प्रयुज्याधुना सूत्रधारद्वारा स्वाभिमतपरदेवतामुखेन त्रिभिः पद्यैराशिषं प्रयुङ्क्ते कविः – नान्द्यन्ते सूत्रधारः । चूडापीडेत्यादि । नान्दीप्रयोगावसाने सूत्रधारः प्रविश्याहेति नाटकन्यायाद् आपतति । सूत्रं भरतमुनिप्रणीतं नाटकादिलक्षणग्रन्थं धारयतीति सूत्रधारः । ... ... नान्दी नाम पूर्वरङ्गविधाने प्रत्याहारादिप्ररोचनान्तद्वाविंशत्यङ्गतरङ्गिते यवनिकान्तर्गतेन सूत्रधारेण मङ्गलार्थं कर्तव्यः प्रयोगविशेषः । .... .... .... .... .... .... .... तादृश्या नान्द्या अन्ते अवसाने नान्दीसूत्रधारे निष्क्रान्ते सति स्थापकसूत्रधारः प्रविश्याहेत्यर्थः । यथोक्तं भरतेन —

'प्रयुज्य रङ्गं निष्क्रामेत् सूत्रधारः सहानुगः।
स्थापकः प्रविशेत् तत्र सूत्रधारसमाकृतिः॥'

इति। नान्दी च द्विविधा --

'पूर्वरङ्गे प्रयोज्यैका स्थापनायामथापरा' इति। ...... ...... ......
प्रविष्टश्च स्थापकः पदाष्टकविशिष्टामिन्दुपदमुद्रितां नान्दीं प्रयुङ्क्ते—चूडापीडे-त्यादि" इति।

त्रिपुरारिजगद्धरपण्डितयोर्मतेन तु सानन्दमिति चूडापीडेति च पद्यद्वयमेव नान्दी भवति। द्वयोरपि नान्दीपद्ययोः प्रथमप्रविष्टनान्दीसूत्रधारेणैव प्रयोज्यत्वं चाभिहितम्। यद्यपि त्रिपुरारिपण्डितेन पद्यचतुष्टयमपि व्याख्यातं तथापि 'दन्तश्रेणिष्विति पक्ष्माली'ति च पद्यद्वयं प्रक्षिप्तं मन्यते। यथा—'दन्त-श्रेणिषु' इत्यादिश्लोकद्वयं प्रक्षिप्तमिति पूर्वैरव्याकृतमपि क्वचित् पुस्तकेषु दृष्टत्वादस्माभिर्व्याख्यायत' इति।

एवमादिका बहव इह सन्ति विशिष्य प्रस्तावनार्हा विशेषाः। मौलानां पदानां पर्यायपदसमर्पणेनार्थप्रपञ्चनं यद्यपि सुलभमितरव्याख्याने-ष्वपि तथापि प्रमाणशतोदाहरणपूर्वकमेतादृशं विपुलं विवरणं विरल-विरलमेव।

'वक्तुं शक्योऽर्थविस्तारो न विना विस्तरं गिराम्।
अतः प्रथनदोषोऽस्मिन् सह्यः सहृदयैः स्वयम्॥'

इति वाग्विस्तरमन्तरा साकल्येन विवक्षितानामर्थानां यथावत् प्रति-पादनस्याशक्यतया प्रथनदोषो मर्षणीय इति सहृदयानभ्यर्थयन् व्याख्याता स्वकृतेरतिविस्तृतत्वं स्वयमेव ख्यापयति।

न केवलं पदपदार्थविवरणमात्रविश्रान्तेयं व्याख्या, अपितु इतरव्या-ख्यातृभिर्मनसाप्यनाकलितानामर्थानामाशयानामाविष्करणेन, शङ्कासमाधानाभ्यां ग्रन्थकृद्वचनेषु विरोधपरिहारेण, तत्र तत्र प्रसन्नोदारगभीरैर्वाक्यैस्तन्त्रान्तरीय-तत्त्वानां सुव्यक्तं प्रतिपादनेन, शङ्कापुरस्सरं काव्यदोषनिराकरणेन, विमर्शन-पूर्वकं समीचीनपाठव्यवस्थापनेन रसालङ्काराद्यभिव्यञ्जनेन ध्वनिभावादि-प्रकाशनेन च किमप्यसाधारणं गाम्भीर्यमावहन्ती व्याख्यातुश्च पूर्णसरस्वतीति नामधेयमप्यन्वर्थयन्ती मन्ये सहृदयहृदयाह्लादाय सम्पन्ना। स्थालीपुलाक-न्यायेन कानिचन पुनरुद्धृत्य प्रकाश्यन्ते —

## रहस्यार्थप्रकाशनम् ।

"अत्र चायमखिलोपनिषदङ्गनासङ्गीतरङ्गमण्डपेन साङ्ख्ययोगसागरपारावारीणेन कविकुलेन्दुना गुरुमुखैकगम्योऽतिरहस्योऽर्थः सूत्रितोऽनुसन्धेयः । तथाहि—पक्ष्मशब्दो रोमवाचकः, 'निसर्गचित्रोज्ज्वलसूक्ष्मपक्ष्मणा' इत्युक्तेः सूत्रांशवाचकश्च । 'पक्ष्म सूत्राद्यवयवे किञ्जल्के नेत्ररोमसु' इति वैजयन्ती । अत्रच वालाग्रवन्नीवारशूकवच्च तनीयसी त्रपुसीतन्तुवच्च पीतवर्णा प्रभासन्ततिः सादृश्यात् पक्ष्मालीत्युच्यते । ईषद्विघटितमुकुले सद्गुरूपदेशाद् अभ्यासाच्च निवृत्तप्रायमायातिरोधाने । ईषद्ग्रहणं होतृहोतव्यप्रतीत्यनुवृत्तेः, तस्या अपि मायाकार्यत्वात् ।

'शास्त्रेण नश्येत् परमार्थरूपं कार्यक्षमं नश्यति चापरोक्ष्यात् ।
प्रारब्धनाशात् प्रतिभासनाश एवं क्रमान्नश्यति चारममाया ।'

इत्याचार्यवचनात् । 'भूयश्चान्ते विश्वमायानिवृत्तिः' इति श्रुतेश्च । अन्तर्नाडीनियमितमरुद्विघटिताधारद्वारकवाटबन्धे च कालयज्वा नियतकालानतिक्रमेण श्रुतिस्मृतिविहितैः कर्मभिरीश्वरं पूजयन् पुरुषः । कालयज्वेत्यनेन निषिद्धकाम्यवर्जमन्तःकरणशुद्ध्यै विहितकर्मानुष्ठायी मुमुक्षुरिति द्योत्यते । ब्रह्माण्डं जुहोति । अपुनरुत्थानाय ध्यानेन विलापयतीत्यर्थः । यथाहुराचार्याः—

'सङ्कल्प्य हव्यं सकलप्रपञ्चं प्रज्ञास्रुचा सर्वहुतं विमुक्त्यै ।
जाज्वल्यमाने स्वत एव नित्ये सर्वान्तरे ज्योतिषि जोहवीमि ॥'

इति । अम्बास्तवे च—

'ब्रह्माण्डबुद्बुदकदम्बकसङ्कुलोऽयं मायोदधिर्विविधतत्त्वतरङ्गमालः ।
आश्चर्यमम्ब झटिति प्रलयं प्रयाति त्वद्ध्यानसन्ततिमहाबडवामुखाग्नौ ॥'

इति । अर्चिरिति । सौषुम्नसरणिविहरणरसिकनिजशिखाद्रावितात् ब्रह्मरन्ध्रारविन्दचन्द्रान्निष्यन्दितेन परमामृतवृष्टिपूरेण सात्कारिमान्तमित्यर्थः । तार्तीयीकम् । 'अन्यदेव तद् विदितादथो अविदितादधि' इत्युपनिषन्नीत्या मायातत्कार्यव्यतिरिक्तं तदध्यासाधिष्ठानतया तृतीयम् । यद्वा—'शैवागमेषु मुख्यं पतिपशुपाशा इति क्रमात् त्रितयम्' इत्युक्तक्रमेण नियाम्ययोः पशुपाशयोर्नियन्तृत्वेन तदुत्तीर्णम् । पुरारेः, पुरं शरीरं, भक्तानामज्ञाननिदानकर्ममिथुननिर्मितदेहबन्धनिर्मूलनस्य, मदनद्वेषिणः संसारविषतरुबीजभूतमन्मथोन्मथनम्,

'काम एष क्रोध एष रजोगुणसमुद्भवः ।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥'

इति भगवद्वचनात् । लोचनम्—लोचृ लोचने इत्यस्माल्ल्युट् । स्वरूपभूतं सच्चिदानन्दरसं मूलाधारस्फुरितं प्रत्यग्ज्योतिः, नहि द्रष्टुर्दृष्टेर्विपरिलोपो वर्तत' इति श्रुतेः । यथाहुराचार्याः—

'मूलाधारात् स्फुरिततटिदाभा प्रभा सूक्ष्मरूपा
गच्छन्त्यामस्तकमणुतरा तेजसां मूलभूता ।
सौषुम्नाध्वाचरणनिपुणा सा सवित्रानुबद्धा
ध्याता सद्योऽमृतमथ रवेः स्रावयेत् सार्धसोमात् ॥'

इति । अत्र च जटानां धर्मलिङ्गत्वाद् धर्मवृद्धिस्रवन्त्यूर्मीणां दुरितहरत्वाद् अधर्मनिरासो लोचनस्य ज्ञानरूपत्वात् तत्साध्यो मोक्षश्चाशासित इति क्रमो मन्तव्यः ।" (पृ० १०, ११.)

"अत्र च माधव इति साक्षाल्लक्ष्मीपतिर्नारायण उच्यते, शृङ्गारो विष्णुदैवत्य इति वचनात्, शृङ्गारदेवता भगवानेवात्र नायक इत्यनुसन्धानार्थम् । मालती तु सौकुमार्यसौरभ्यादियोगाल्लक्ष्मीः । देवरात इति देवैर्भगवदवतारितार्थं भूमाववतारितत्वात् काश्यपः भूरिवसुरित्यनन्तरत्नाकरतया क्षीरसागरः। मकरन्द इति 'रसो वै सः' इत्यादिवचनात् परमानन्दरूपः परमेश्वरः। मदयन्तिकेति महामायात्वेन जगन्मोहनाद् भवानी । कामन्दकीति कामितार्थदानसामर्थ्याद् भक्तिः । बुद्धरक्षितेति बुद्धैर्विद्वद्भिः परिपालितत्वात् सरस्वती । अवलोकितेति प्रेक्षावद्भिः सम्यगालोचितत्वान्नीतिः। लवङ्गिकेति परिमलबहलत्वात् कीर्तिः । कलहंस इति मधुराव्यक्तोच्चारः परमात्ममन्त्रः । अघोरघण्ट इत्यशास्त्रविहितहिंसापरत्वादधर्मः । कपालकुण्डलेति हिंसा । सौदामिनीति प्रकाशात्मिका झटिति स्फुरणेन सकलान्धकारपटलविघटनपटीयसी विद्येत्यादिरुपासनोपयुक्ता वासनापि महाकवेर्दृष्टिकैरनुसन्धेया" (पृ० ६२१)

नाटकीयपात्राणां मालतीमाधवादीनामुपासनोपयुक्ततया साक्षाल्लक्ष्मीनारायणादिरूपेण कल्पनावैचित्र्यमिदं सहृदयमनोहारि व्याख्यातुरस्य नवनवार्थग्रामोल्लेखनेऽसामान्यं प्रतिभावैशिष्ट्यमवगमयति ।

## विरोधपरिहारः ।

दलयति परिशुष्यत् ... ... ... ... माकरन्दः परागः । (पृ० ४४४)

पद्येऽस्मिन्नुदयरागरूषितस्यैन्दवप्रकाशस्योपमानत्वेन कल्पिते केतकीपरागे रागानुविद्धत्वसूचनायोपात्तो माकरन्दः परागः इति प्रयोगो न घटते, केतकीकुसुमानां मध्वभावप्रसिद्धेरिति विरोधमाशङ्क्य युक्त्या समाधत्ते । "यथा—माकरन्दः मकरन्देन पुष्परसेन रक्तः । 'तेन रक्तं रागा'दित्यण् । न पुनः तस्येदमिति । 'मकरन्दः पुष्परसः परागः सुमनोरजः' इत्यभिधानाद् द्वयोः पृथग्द्रव्यत्वात् ।

'अपसर मधुकर दूरं परिमलबहलेऽपि केतकीकुसुमे ।
इह नहि मधुकणलाभो भवति परं धूलिधूसरं वदनम् ॥'

इत्यादिषु केतकीकुसुमस्य मध्वभावः प्रतिपाद्यते । कथमत्र माकरन्द इत्युक्तिः । उच्यते । कुसुमत्वाविशेषादस्यापि मधुसद्भावोऽस्त्येव । न तु कुन्दमाकन्दादिवत् तस्य प्रभूतत्वम् । परागस्यैवाधिक्यात् । 'अपसर मधुकर' इत्यत्रापि न मध्वभावः प्रतिपाद्यते । तल्लवलाभस्यैव निषिध्यमानत्वात् । तत्र हेतुर्धूलीपालीधूसरितवदनत्वम् । अतो न कश्चिद् विरोधः । परागस्य पुष्परजसः स्वतो धवलस्य रागानुविद्धत्वप्रतिपादनायात्र माकरन्दत्वोक्तिः । अन्यथा उदयरागरूषितस्यैन्दवप्रकाशस्योपमानत्वानुपपत्तेः । अतः शोभनसस्याङ्कुरदर्शनादिव सस्यसमृद्धिर्भाविनी यौवनश्रीरनुमीयत इत्यर्थः" इत्येवं विरोधपरिहारपूर्वकं माकरन्दः पराग इति पाठस्यैव सहृदयहृदयङ्गमत्वम् आवेदयति । जगद्धरेण तु इह मन्दमन्दं परागः इत्येव पाठः स्वीकृतः ।

### तन्त्रान्तरीयतत्त्वाविष्कारः ।

"साङ्ख्यस्येति । मूलप्रकृतिरविकृतिः सत्त्वरजस्तमसां साम्यावस्थारूपा चिच्छक्तिशून्या पुरुषस्य भोगमोक्षार्थं स्वत एव प्रवर्तमाना परिणामपरिस्पन्दव्यापारा प्रसवधर्मिणी सकलपुरुषसाधारणभोग्यस्वरूपा च । पुरुषस्तु ज्ञानमात्रस्वरूपो निर्गुणो निष्क्रियो निष्परिमाणो न च विकृतिः न च प्रकृतिः । तस्य चाज्ञानविज्ञाननिबन्धनौ बन्धमोक्षौ । पुरुषाश्च बहवः प्रतिदेहं भिन्नाः सर्वे सर्वगताश्च । महानहङ्कारस्तन्मात्राणि च स्वकारणं प्रति विकृतयः स्वकार्यं प्रति प्रकृतय इत्युभयरूपाः । [illegible] , एकादशेन्द्रियाणि पञ्चभूतानि

चेति षोडश विकृतय एवेति पञ्चविंशतितत्त्वानि । ईश्वरो नाभ्युपगम्यते । पुरुषार्थस्य हेतोः स्वयमेव क्षीरवत् प्रवर्तमानायाः प्रकृतेः किमन्तर्गडुना प्रमाण-शून्यप्रवर्तकान्तरपरिग्रहेणेत्याद्यर्थप्रतिपादकं दृष्टानुमानागमप्रमाणकं कपिलमुनि-प्रणीतं शास्त्रं साङ्ख्यं नाम ।

योगस्येति । योगो नाम हैरण्यगर्भं शास्त्रम् । तत्रापि साङ्ख्यवत् तत्त्वानि प्रमाणानि च । ईश्वरस्तु धर्माधर्मफलप्रदाता षड्विंशकोऽभ्युपगम्यते । विकारेषु च प्रकृतेर्महान् जायते । महतः षड् विशेषाः अहङ्कारः पञ्चतन्मात्राणि च । तत्राहङ्कारस्याविशेषस्य विशेषा एकादशेन्द्रियाणि । शब्दतन्मात्रता-विशेषस्य विशेष आकाशः । एवं स्पर्शतन्मात्रादीनामविशेषाणां वाय्वादयो विशेषा इत्यादि प्रतिपाद्यते ॥" (पृ० २८)

"अत्र च योगवेदान्तशास्त्रसर्वपर्थीनेन कविना तदर्थो विच्छित्त्या प्रकाश्यत इति मन्तव्यम् । तथा हि —निरतिशयेत्यादिना यमादिपञ्चाङ्गी-निष्पन्नत्वमुच्यते । संस्कारस्य इति धारणा । प्रतीयमान इति धारणान्त-षडङ्गीसम्भूतत्वम् । तद्विसदृशैरित्यादिना ध्यानं, 'विजातीयप्रत्ययानन्तरित-सजातीयप्रत्ययप्रवाहकरणं निदिध्यासनम्' इति योगशास्त्रे लक्षितत्वात्,

'तद्रूपप्रत्ययैकान्तसन्ततिश्चान्यनिस्पृहा ।
तद्ध्यानं प्रथमैरङ्गैः षड्भिर्निष्पाद्यते नृप ॥'

इति श्रीविष्णुपुराणवचनाच्च । तन्मयमिव करोतीत्यादिना समाधिः ।

'तस्यैव कल्पनाहीनं स्वरूपग्रहणं हि यत् ।
मनसा ध्याननिष्पाद्यः समाधिः सोऽभिधीयते ॥'

इति,

'आत्मभावं नयत्येनं तद् ब्रह्म ध्यायिनं मुने ।
विकार्यमात्मनः शक्त्या लोहमाकर्षको यथा ॥'

इति च श्रीविष्णुपुराणोक्तेः ।

'सर्वव्यापिनि चिन्मात्रे शिवे स्वैक्येन भावना ।
अविच्छेदेन सततं समाधिः परमो मतः ॥'

इति गुरुदेवः । वृत्तिसारूप्यत इति इदमिदंरूपादहङ्कारात् मुञ्जादिषीका-मिवानिदमंशं चैतन्यरूपं निष्कृष्य श्रुत्या चाचार्यप्रसादादहं ब्रह्मास्मीति

ज्ञानेन विद्याख्येन बुद्धिवृत्तिरूपेणाभ्यस्तेनैकाकारतया समस्तभेदबाधनाद् ब्रह्मात्मत्वानुभूतिः प्रबोधाख्या जायत इत्यद्वैतसिद्धान्तं प्रतिपादयन्नात्मनः तदभिरुचिमासूत्रयति "। (पृ० २६५, २६६)

अत्र हि साङ्ख्ययोगाद्वैतसिद्धान्ताः बालानामपि सुग्राह्यतया संक्षिप्य सुललितैर्वाक्यैः प्रतिपादिताः। त्रिपुरार्यादीनां व्याख्या त्विह 'साङ्ख्यस्य कापिलस्य योगस्य पातञ्जलस्य योगशास्त्रस्य' इत्येतावता विश्रान्ता व्युत्पित्सुजनोपकाराय नालमिति च निर्विवादम्।

## काव्यदोषोद्धारः।

इह सानन्दमिति पद्ये मुरवरवेत्यस्यालङ्कारिकदिशा प्रसिद्धिधुतदोषाक्रान्तत्वम्। रवशब्दस्य मण्डूकादिशब्द एव कविसमयप्रसिद्धेः। यथाह **काव्यप्रकाशकारः**—

'मञ्जीरादिषु रणितप्रायं पक्षिषु तु कूजितप्रभृति।
स्तनितमणितादि सुरते मेघादिषु गर्जितप्रमुखम्॥'

अत्र हि रवो मण्डूकादिषु प्रसिद्धः इति।

तथा भवानीपतिः (पृ०४१.७) इत्यस्यापि विरुद्धमतिकृद्दोषाक्रान्तत्वम्। यथाह स एव — भवानीपतिशब्दो भवान्याः पत्यन्तरप्रतीतिं करोति' इति।

'भद्रा ह्येषां वाचि लक्ष्मीर्निषक्ता नैते वाचं विप्लुतां धारयेयुः।'
इति प्रमाणानुसारेण देवतानुग्रहलब्धविभवानां वश्यवाचां महाकवीनां वचनेषु दोषशङ्काया अप्यनौचित्यात् तदिदं दोषापादनमविचारिताभिधानं मन्वानः तेषां साधुतां समर्थयति। यथा—" न च मुरवरवेत्यत्र प्रसिद्धिधुतदोषप्रसङ्गः। 'घनरवा नरवाहनसम्पद' इति रघुवंशे, 'प्रतिदिशं क्रियते कलभरवः', 'बलाक्रान्तं क्रीडद्द्विरदमथितोर्वीरुहरवः' इति च माघकाव्ये, 'णमइअ जस्स फुडरवम्', 'णिअअरवा हि फुडणिन्त जस्स णिग्घोसं' इति च सेतौ काव्यान्तरेष्वपि प्रयोगशतैरदुष्टत्वनिर्णयात्। लक्षणतः प्रयोगस्य बलीयस्त्वाच्च। अत एव हि तथाम्नातमपि कविभिरनादृतमित्यप्रयुक्तस्य दुष्टत्वाभिधानम्।"

॥ श्रीः ॥

महाकविश्रीभवभूतिप्रणीतं

# मालतीमाधवम् ।

श्रीपूर्णसरस्वतीप्रणीतरसमञ्जर्याख्यव्याख्योपेतम् ।

---

सानन्दं नन्दिहस्ताहत[1]मुरवरवाहूतकौमारबर्हि-
त्रासान्नासाग्ररन्ध्रं विशति फणिपतौ भोगसङ्कोचभाजि ।
गण्डोड्डीनालिमालामुखरित[2]ककुभो घट्टनव्यस्तविश्वा
वैनायक्यश्चिरं वो वदनविधुतयः पान्तु [3]फीद्कारवत्यः ॥ १ ॥

---

अस्तु हस्तिमुखं वस्तु सच्चिदानन्दविग्रहम् ।
प्रत्यूहव्यूहविहतिवहनाय सदा मम ॥ १ ॥

यस्य भासा जगद्भाति यद्भासा भाति तन्महः ।
अविद्याविद्विषे तस्मै श्रीपूर्णज्योतिषे नमः ॥ २ ॥

शिरस इव गलन्तीमन्तरभ्युद्गिरन्ती
सुरसरितमुदारां वाक्छलादाननेन ।
दहतु भवभयं सा मूर्तिरैशी मुनीनां
दहरकुहरलीलादक्षिणा दक्षिणा वः ॥ ३ ॥

---

१. 'मुरजरवाहूत' ज. झ. पाठः. २. 'ककुभस्ताण्डवे शूलपाणेः' ज. झ. पाठः. 'ककुभो नर्तने शूलपाणेः' छ. पाठः. ३. 'चीत्कारवत्यः' ज. पाठः. 'चीत्कारवत्यः ॥ अपि च चूडापीड' झ. पाठः. 'फूत्कारवत्यः ॥ किञ्च — चूडापीड' छ. पाठः.

---

१. 'आद्यं पद्यद्वयं ख. मातृकायां न दृश्यते । २. 'शम्भुमूर्तिर्मुनीनां' ख. ग. घ. पाठः.

[C]

G. P. T. 1787 28-10.1119

यद्गीतार्थश्रवणरसतो ध्वस्तमोहान्धकारः
कृष्णानन्दी त्रिजगति नरो जिष्णुभूयं जिहीते ।
[1]स्वस्मिन्नेव प्रकटितमहाविश्वरूपं तदेकं
पूर्णज्योतिः स्फुरतु हृदि मे पुण्डरीकायताक्षम् ॥ ४ ॥

चिन्महोदधि[2]कल्लोलस्तन्महो वितनोतु वः ।
स्तनन्धयं यशोदाया धनञ्जयधनं जयम् ॥ ५ ॥

भवसमभवभूतिप्राज्यवैदग्ध्यसीम्नि
प्रकरणतिलकेऽस्मिन् मालतीमाधवाख्ये ।
विवरणकृतिनाम्ना कर्तुमीहे विगाहं
तनुतरगुणगृह्यास्तत्र सन्तो रमन्ताम् ॥ ६ ॥

स्खलितमिह यदि स्यादर्थतः शब्दतो वा
श्रुतपरिणतधीकास्तत्समादध्युरार्याः ।
सपदि पिपतिषूणां सङ्कटे [3]शैलशृङ्गे
ददति सुहृद एव प्रौढहस्तावलम्बम् ॥ ७ ॥

वक्तुं शक्योऽर्थविस्तारो न विना विस्तरं गिराम् ।
अतः प्रथनदोषोऽस्मिन् सह्यः सहृदयैः स्वयम् ॥ ८ ॥

मालतीमाधवस्योच्चैरामोदं स्वं विवृण्वती ।
धार्या सहृदयैः प्रीत्या व्याख्येयं 'रसमञ्जरी' ॥ ९ ॥

प्रथमं प्रबन्धमुखलक्षणेरितां परदेवतास्मरणमङ्गलादिकां रसिकान् प्रति प्रकरणक्रियो[4]न्मुखः कविराट् करोति भवभूतिराशिषं — सानन्दमित्यादि । आनन्दसहितमित्याहननक्रियाविशेषणम् ।

'अजस्रमास्फालितवल्लकीगुणक्षतोज्ज्वलाङ्गुष्ठनखांशुभिन्नया ।'

इति । 'अमन्दमारब्धमृदङ्गवाद्ये' इति ।

'ताम्बूलीपटलैः पिनद्ध[5]फलितव्यानम्रपूगद्रुमाः' ।

---

१. 'तस्मिन्नेव' ख पाठः. २. 'कल्लोल' ग. पाठः. ३. 'शैलमार्गे' ख. ग, घ. च. पाठः. ४. 'प्रकरणोन्मुखः' ख. पाठः. ५. 'पलित' क. पाठः.

इत्यादिवत् । आनन्दताण्डवोद्दण्डखण्डपरशुपरिचर्यावसरलाभमुदितहृदयं यथा तथे-त्यर्थः । नन्दी परमेश्वरपार्षदमुख्यो नन्दीश्वरः । आहतस्ताडितः मुरव आनद्ध-वाद्यविशेषः । आहूतः स्निग्धगम्भीरमुरवरवश्रवणानन्तरमेव जलदबृंहितशङ्कया सहर्षं समागतत्वादाकारित इवेत्युत्प्रेक्षा । न च मुरवरवेत्यत्र प्रसिद्धिच्युतदोष-प्रसङ्गः । 'घनरवा नरवाहनसम्पदः' इति रघुवंशे । 'प्रतिदिशं क्रियते कलभै रवः', 'बलाकान्तं क्रीडद्द्विरदमथितोर्वीरुहरवैः' इति च माघकाव्ये । 'णमह अ जस्स फुडरवं', 'णिअअरवाहि फुडणिन्तजसणिग्घोसं' इति च सेतौ । काव्यान्तरेष्वपि महाकविप्रयोगशतैरदुष्टत्वनिर्णयात् । लक्षणतः प्रयोगस्य बलीयस्त्वाच्च । अत एव हि तथाम्नातमपि कविभिरनादृतमित्यप्रयुक्तस्य दुष्टत्वाभिधानम् । कौमारः वाहनत्वेन सुब्रह्मण्यस्य परिग्रहः । बर्ही मयूरः, तस्माद्यस्त्रासः, ततो हेतोः । नासाग्ररन्ध्रं हस्ताग्रविवरम् । गजानां हस्तस्यैव नासात्वात् । 'नागनासोरुः' इत्यादिप्रयोगात् । विशति प्रवेक्ष्यति । वर्तमानसामीप्ये शता । फणिपतौ वासुकौ, शिवसेवासन्निहित इत्यर्थात् । कौमारवर्हीत्यनेन तदीयदुर्विलसितस्य शर्वेणापि दुर्वारत्वं द्योत्यते । भोगसङ्कोचः फणमुकुलीकारः प्रवेशसौकर्यार्थः ।

'भोगो राज्ये धने सौख्ये पालनाभ्यवहारयोः ।
फणे देहे च सर्पस्य वेश्यादीनां भृतावपि ॥'

इति वैजयन्ती । उड्डीनाः उत्पतिताः । 'डीङ् विहायसा गतौ' इत्यस्मान्नि-ष्ठान्तम् । मुखरिताः वाचालिताः ककुभो दिशो याभिः । घट्टनं शुण्डादण्डेन धरणिमण्डलास्फालनम् । व्यस्तं विघटितसान्धिबन्धनम् । विश्वं ब्रह्माण्डम् । एवं वैनायक्यः, भक्तजनविघ्नविनयनाद् विनायको गणपतिः, तत्सम्बन्धिन्यः । 'टिड्ढा-णञ्—' (४-१-१५) इत्यादिना ङीप् । वदनविधुतयः मुखकम्पनानि । धुनोतेः 'स्त्रियां क्तिन्' (३-३-९४) इति क्तिन् । बहुवचनेन निवारणाय क्रियासमभिहारः प्रकाश्यते । फीत्कारवत्यः फीडिति कुतोऽपि कारणाद् व्याकुलितानां करिकल-भानां शब्दानुकारः । यथा कादम्बर्यां 'भीतकरिपोतफीत्कारपीवरः' इति । भूम्नि

१. 'सणि अरवाही' क. 'णिअअरवाही' ग. पाठः. २. 'फुडणीतजस्स' ग. 'फुडणीतजस' घ. पाठः. ३. 'इति सेतौ' ख. च. पाठः. ४. 'एव तथा' ख. पाठः. ५. 'प्रविशति' ख. च. पाठः. ६. 'उड्डीनं उत्पतितं' ख. पाठः. ७. 'धरणी' क. पाठः. ८. 'ब्रह्माण्डमेव । वैनायक्यः' ख. ग. च. पाठः. ९. 'क्तिन् बहु' क. ख. च. पाठः.

(नान्द्यन्ते सूत्रधारः)

चूडापीडकपालसङ्कुलगलन्मन्दाकिनीवारयो
विद्युत्प्रायललाटलोचनपुटज्योतिर्विमिश्रत्विषः ।

---

मतुप् । अत्र 'वृद्धिरादैच्'(१-१-१)इतिवत् सानन्दमिति मङ्गलशब्दोपक्रमान्नन्दिनः परमेश्वरमूर्तिभेदस्य तदाहतमुरवोक्तिसामर्थ्याद्गूरितनटनाक्षिप्तस्य परमेश्वरस्य कौमारेति प्रस्तुतस्य कुमारस्य प्राधान्येन पद्यप्रतिपाद्यस्य विनायकस्य चानुसन्धानात् सहृदयानुद्दिश्य चाशीर्वचनादभिमतार्थसिद्ध्यै महाकविना परमं मङ्गलं प्रयुक्तमिति वेदितव्यम् । न च मन्तव्यं, नासाग्ररन्ध्रप्रवेशप्रसङ्गतो भुजङ्गपतेरमङ्गलभूतं मतङ्गजमुखस्य किमपि व्यसनमादौ कविना सूचितमिति । तत्प्रसङ्गोपाधिना भगवतो विनायकस्य लोकोत्तरेण रूपेण वर्णितत्वात्तत्रैव च तात्पर्यात् । लक्षयोजनोन्नतेरमरोर्वीभृतः शर्वधनुषो मौर्वीपदमनुभूय गर्वितस्य दर्वीकरपतेः प्रवेशाय पातालगह्वरमिव पुष्करविवरं तावत् पुष्कलम् । एतेन शिष्टः शरीराभोगो व्याख्यात इति । वदनविधुतिग्रहणेन यस्य कस्यापि परदेवताव्यापारस्य भक्तपरिरक्षणसामर्थ्यं प्रकाश्यते । पान्तु — अनिष्टनिवारणेनेष्टपरिपूरणेन च रक्षन्तु । अत्र सानन्दमिति शैलादेः शिवविषयो भावो ध्वन्यते । त्रासादिति फणिपतिगतो भयानकरसः । वदनविधुतय इति विनायकगतो रौद्ररसः । गण्डोड्डीनेत्यादिभिरकाण्डकोपताण्डवितेन जगदण्डमपि खण्डयितुं पण्डितस्य प्रणतजनपरित्राणे कियान् प्रयास इति वस्तुसामर्थ्यातिशययोगात् देवतान्तरेभ्यो व्यतिरेक इति व्यतिरेकालङ्कारश्च । ततश्च त्रिविधध्वनिव्याप्तिं स्वप्रबन्धस्य गन्धयति कविः । 'पान्तु वः' इति कवेर्देवताविषयो भावः प्रकाश्यते । अत्र विकृतद्विरदस्वभाववर्णनात् स्वभावोक्तिः । तत्स्वभावस्फुटीभावात् भाविकालङ्कारः ॥ १ ॥

प्रत्यूहनिरसनौचित्याद्विनायकमुखेनाशिषं प्रयुज्याधुना सूत्रधारद्वारा स्वाभिमतपरदेवतामुखेन त्रिभिः पद्यैराशिषं प्रयुङ्क्ते कविः— **नान्द्यन्ते सूत्रधारः चूडापीडेत्यादि** । नान्दीप्रयोगावसाने सूत्रधारः प्रविश्याहेति नाटकन्यायादापतति । सूत्रं भरतमुनिप्रणीतं नाटकादिलक्षणग्रन्थं धारयतीति सूत्रधारः ।

---

१. 'पद्यमिदं प्रथमम्, सानन्दमिति पद्यं द्वितीयं च जपाठे दृश्यते । २. 'कपालसम्पुट', ३. 'शिखिज्योति' छ. पाठः.

---

१. 'नटनाक्षिप्तस्य' क. ख. पाठः. २. 'राद्धये' ख. ग. घ. च. पाठः. ३. 'पुष्करम्' ख. पाठः. ४. 'भाविकं वाऽलङ्कारः ।' ५. 'प्रयुङ्क्तेदानीं', ६. 'पद्यसंग्रहं' ख. ग. पाठः.

पान्तु त्वामकठोरकेतकशिखासन्दिग्धमुग्धेन्दवो
भूतेशस्य भुजङ्गवल्लिवलयस्रङ्नद्धजूटा जटाः ॥ २ ॥[1]

'भृञ् धारणे' इत्यस्मात् कर्मण्युपपदसमासः[1] । नान्दी नाम पूर्वरङ्गविधाने प्रत्याहारादिप्ररोचनान्तद्वाविंशत्यङ्गतरङ्गिते यवनिकान्तर्गतेन सूत्रधारेण मङ्गलार्थं कर्तव्यः प्रयोगविशेषः । यथोक्तं कोहलेन—

'देवतादिनमस्कारमङ्गलारम्भपाठनम् ।
नाट्यादौ शस्यते यत्तु सा नान्दी कथिता बुधैः ॥'

इति । नान्दीशब्दश्च अङ्घस्युना 'णादि स्तुतौ' इत्यस्मात[2] प्रषोदरादित्वात् साधितः । तथा[3] बादरायणः —

'यद्यप्यङ्गानि भूयांसि पूर्वरङ्गस्य नाटके ।
तथाप्यवश्यकर्तव्या नान्दी विघ्नप्रशान्तये ॥'

इति । तस्याश्चोत्थापनपरिवर्तननान्दीप्ररोचनाख्यानि चत्वार्यङ्गानि । तथाह भरतः —

'यस्मादुत्थापयन्त्यादौ प्रयोगं नान्दिपाठकाः[4] ।
तस्मादुत्थापनं[5] ज्ञेयं वागङ्गव्यक्तिकारकम्[6] ॥
यस्माच्च लोकपालानां परिवृत्य चतुर्दिशम् ।
वन्दनां[7] संप्रकुर्वन्ति तस्मात् स्यात् परिवर्तनम् ॥
आशीर्वचनसंयुक्ता यस्मान्नित्यं भवेदिह ।
देवद्विजनृपादीनां तस्मान्नान्दीति शब्द्यते ॥
सिद्धेनामन्त्रणं या तु विज्ञेया सा प्ररोचना ।
सिद्धस्त्रिविक्रमे विष्णुः सिद्धः क्रौञ्चपदे गुहः ॥'

१. जटाः ॥ नान्द्यन्ते सूत्रधारः । अलमतिविस्तरेण' ङ. जटाः ॥ अग्निच--दन्तश्रेणिषु' ख ग. घ. छ. पाठः.

१. 'कर्मण्यण् । नान्दी' ख. ग. घ. च. पाठ.. २. 'इत्यतः पृषोदरत्वात्' च. छ. पाठः. ३. 'तथाच बादरायणः' क. ख. ग. पाठः. ४. 'वारकाः' च. पाठः. ५. 'पूर्वमेव तु रङ्गेऽस्मिस्तस्मादुत्थापनं स्मृतम्' (अ० ५ श्लो० २३) इति G. O. S. पाठः. ६. 'वागङ्गव्यतिकारकम्' ग. पाठः. ७. 'वन्दनं' क. पाठः. ८. 'तद' ख. ग. घ. ङ. [illegible]

इत्यादि। तादृश्या नान्द्या अन्ते अवसाने नान्दीसूत्रधारे निष्क्रान्ते सति स्थापकसूत्रधारः प्रविश्याहेत्यर्थः। यथोक्तं भरतेन[1] —

'प्रयुज्य रङ्गं[2] निष्क्रामेत् सूत्रधारः सहानुगः।
स्थापकः प्रविशेत्तत्र सूत्रधारसमाकृतिः॥'

इति। नान्दी च द्विविधा —

'पूर्वरङ्गे प्रयोज्यैका स्थापनायाम[3]थापरा।'

सा[4] चावश्यं चन्द्रनामाङ्किता प्रयोक्तव्येति कविसम्प्रदायः। प्रविष्टश्च स्थापकः पदाष्टकविशिष्टामिन्दुपदमुद्रितां नान्दीं प्रयुङ्क्ते — चूडापीडेत्यादि। यथाह भरतः —

'सूत्रधारः पठेत्तत्र मध्यमस्वरमाश्रिताम्[5]।
नान्दीं पदैर्द्वादशभिरष्टभि[6]र्वाप्यलङ्कृताम्॥'

इति। चूडा शिखा[7]।

'चूडा केशी केशपाशी शिखण्डी कमुजा शिखा।'

इति वैजयन्ती। चूडाशब्देनात्र जटाबन्धो लक्ष्यते, शिरो वा ।

'यात्यस्ताचलचूडमुद्रित[8]मधुच्छत्रच्छविश्चन्द्रमाः।'

इतिवत्। आपीडः शेखरः।

'अथापीडे वतंसोत्तंसशेखराः।' इति वैजयन्ती। संकुलं सम्भ्रान्तम्।

'प्रायो वयसि बाहुल्ये तुल्यानशनमृत्युषु।'

इति वैजयन्ती। कपिलतया प्रभाबाहुल्येन च विद्युत्प्रायास्तटित्तुल्याः[9] नयनोदर[10]प्रभामिलिताश्च द्युतयो यासाम्। अकठोरो[11] नवोद्भिन्नः सन्दिग्धः संशयितः। भुजङ्गवल्ली लतावद् द्राघीयान् सर्पः, तस्य वलयं वर्तुलीकृतः शरीरसन्निवेशः, तदेव स्रक् माला तया नद्धो बद्धो जूटः समूहो यासाम्। त्वामित्यनेनौचित्यात्

१. 'भरते' ख. ग. घ. च. पाठः. २. 'रङ्गान्निष्क्रामेत' क. च. पाठः. ३. 'स्थापनायामन्या। सा च' ख. ग. घ. च. पाठः. ४. 'सावश्यं' ग. पाठः. ५. 'मध्यमं स्वरमास्थितः', ६. 'रष्टाभिः' क. पाठः. ७. 'शिखाः' च. पाठः. ८. 'मुद्रसमधुच्छत्र' ख. ग. घ. च. पाठः. ९. 'तटित्तुल्याश्च' क. ख. ग. पाठः. १०. 'नयनोत्तर' घ. पाठः. ११. 'अकठोरं नवोद्भिन्नं' ख. ग. घ. च. पाठः.

[1]दन्तश्रेणिषु सङ्कलत्कलकलव्यावर्तनव्याकुला
नासालोचनकर्णकु[2]ञ्जकुहरेषूद्बुद्बुदध्वानिनः ।
गण्डग्रन्थ्यभिघातज[3]र्जरशिखाश्चूडास्रवन्त्यूर्मयः
शम्भोर्ब्रह्मकपालकन्दरभु[4]वि स्पन्दोल्बणाः पान्तु व[5]ः ॥ ३ ॥

---

सभापतिः सम्बोध्यते, वः इत्यनेन यथा सामाजिकाः । [1]अत्र च गलद्वारि-[2]विद्युदुद्योतकेतकोद्भेदवल्लीवलयप्रतिपादनाज्ज[3]लदसमयवि[4]राजिनीनां वनराजीनां प्रतिभानेन जटानां ताभिरुपमानोपमेयभावः कल्प्यः । ततश्च यथा तादृश्यो वनराजयः [5]सकलजन्तुसन्तापहारिण्यस्तथा तथाविधाः परमेश्वरस्य जटा अपीत्यु-पमालङ्कारेण व्यङ्ग्येन द्योत्यते । [6]स्वभावोक्तिरत्रालङ्कारः ॥ २ ॥

दन्तश्रेणिष्वित्यादि । बहुवचनं कपालानां बाहुल्यात् । सङ्कलत्कलकलेन प्रसरत्कोलाहलेन प्रलुठनेन क्षुभिताः । घ्राणनेत्रश्रोत्रविवरेषु तिर्यक्प्रवर्तनेषु, उद्गत-बुद्बुदं यथा तथा ध्वननशीलाः । गण्डग्रन्थिः कपोलास्थिस्थपुटम् । जर्जरशिखाः विशीर्णाग्राः । चूडास्रवन्त्यूर्मयः मौलिनदीतरङ्गाः । 'भङ्गस्तरङ्ग ऊर्मिर्वा' इत्युक्ते-रुभयलिङ्गता । 'ब्रह्मकपालकन्दरभुवि स्पन्दोल्बणाः' इति पाठः । अतीतानां [7]बहूनां चतुर्मुखानां शिरःकपालान्येव [8]कन्दरा गिरिगुहाः, तद्वत् गम्भीरत्वात् । तद्भुवि तत्स्थाने प्रवर्तनोद्धताः । 'स्पदि किञ्चिच्चलने' इत्यात्मनेपदी । 'कन्दरपरिस्पन्दे'ति तु पाठे कपालानां वृत्त्यन्तरितत्वेन दन्तश्रेण्यादयः केन सम्बध्येरन्नि[9]त्यभवन्मत-योगदोषप्रसङ्गः । अत्र हठात्कारनिर्जितेष्वरिषु महदाश्रयगर्वितानां दुर्विलसितानि [10]दुर्वाराणि कथं वर्ण्यन्तामिति वस्तुना वस्तु व्यज्यते । उल्लेखोऽत्रालङ्कारः, विषयभेदेनानेकधात्वोल्लेखनात् ॥ ३ ॥

---

१. 'दन्तश्रेणिषु' 'पक्ष्माली' इति पद्यद्वयं क्षपाठे न दृश्यते । २. 'कुञ्जवलनेषु ख. घ, कुञ्जकुहरेषूद्गद्गद' छ. ज, 'रन्ध्रवलनेषूद्बुद्बुद' ग. पाठः. ३. 'शीर्णकणिका' ४. 'परि' ज. पाठः. ५. 'वः ॥ पक्ष्मली' छ. पाठः.

---

१. 'अत्रापि' क. पाठः. २. 'विद्युदुद्भेदकेतकोद्भेद', ३. 'द्रुलीवलयवि' राजिनीनां' ख. पाठः. ४. 'विराजिनीनां प्रतिभानेन' च. पाठः. ५. 'सकलजन' क. ग. घ. च. पाठः. ६. 'स्वभावोक्तिरलङ्कारः' क. घ. च. पाठः. ७. 'ब्रह्मणां' क. पाठः. ८. 'कन्दरं' ख. पाठः. ९. 'अभवन्मतयोनदोष' ख. घ. पाठः. १०. 'दुर्व्यापाराणि' क. घ. च. पाठः.

अपि च —

पक्ष्मालीपिङ्गलिम्नः कण इव तटितां यस्य कृत्स्नः समूहो
यस्मिन् ब्रह्माण्डमीषद्विघटितमुकुले कालयज्वा जुहोति ।
अर्चिर्निष्टप्तचूडाशशिगलितसुधासारसीत्कारिकोणं
तार्तीयीकं पुरारेस्तदवतु मदनप्लोषणं लोचनं वः ॥ ४ ॥

---

पक्ष्मालीपिङ्गलिम्न इत्यादि । यस्य लोचनस्य, पक्ष्माली नयनपालि-रोमपङ्क्तिस्तस्याः पिङ्गलिमा कपिलवर्णः । कणः बिन्दुः । मूर्तवस्तुस्तोकत्वा-भिधायिना कणशब्देनामूर्ते पिङ्गलिमस्तोकत्वे व्यवहाराल्लक्षणामूलोऽयं ध्वनिः । कृत्स्नो भूतो भवन् भावी च सर्वः समुदितः । अत्र कार्यभूतस्य कृत्स्नतटित्समूह-कणीभावस्याप्रस्तुतस्य सम्भावनेन कारणभूतः पक्ष्मालीपिङ्गलिम्नो बाहुल्यदुर्निरी-क्षप्रभत्वादिरतिशयः प्रस्तुतो गम्यते इति कार्यात् कारणप्रतीतिरूपेयमप्रस्तुत-प्रशंसा । ब्रह्माण्डं पञ्चाशत्कोटियोजनविस्तारचतुर्दशभुवननिर्भरगर्भं महदादि-विशेषान्तकल्प्यं हिरण्यगर्भोत्पत्तिपेशीमण्डलम् ।

'सूर्याण्डगोलयोर्मध्ये कोट्यः स्युः पञ्चविंशतिः ।'

इति भागवतोक्तेः । ईषद्विघटितमुकुले — मुकुलशब्दः सादृश्यान्निमीलनं लक्षयति, किञ्चिद्विश्लिष्टपक्ष्मबन्ध इत्यर्थः । अन्यदा जगदनुग्रहाय मुकुलित-त्वात् । तथोक्तमम्बास्तवे —

'दग्धं यदा मदनमेकमनेकधा ते मुग्धः कटाक्षविधिरङ्कुरयांचकार ।
धत्ते तदाप्रभृति देवि ! ललाटनेत्रं सत्यं ह्रियेव मुकुलीकृतमिन्दुमौलिः ॥

इति । ईषदिति समग्रोन्मीलनस्यापर्याप्तविषयत्वं ब्रह्माण्डस्य प्रतीयते । काल-यज्वा —

'स्थानात्स्थानं दशगुणमेकस्मात् गण्यते द्विज ! ।
ततोऽष्टादश(मे ? के) भागे परार्धमभिधीयते ॥'

---

१. 'अन्यच्च' ज. पाठः. २. 'विगलित' छ. पाठः. ३. 'जुहाव' छ. ज. पाठः. ४. 'अर्चिनिष्टिप्त' छ. पाठः. ५. 'शात्कारि' छ. ज. पाठः.

---

१. 'पाली' घ. पाठः. २. 'पङ्क्तिः पिङ्गलिमा' घ. च. पाठः. ३. 'पिङ्गलिमके स्तोकत्वे' च. पाठः. ४, 'कणिभावस्याप्रस्तुतस्य' च. पाठः. ५. 'पिङ्गलिम्न इत्यादि बाहुल्यं दु' ग. घ च. पाठः. ६. 'प्रकृतो', ७. 'सामीप्यान्निमीलन' ख. पाठः. ८. 'ह्रियैव' क. ख. च. पाठः. ९ 'अष्टदशमे' ग. घ. पाठः.

इति । "भवानीपतिरित्यत्र पत्यन्तरप्रतीतिरिति यत् कैश्चिदुक्तं तदविचारिताभिधानम् ।

'शिवा भवानी रुद्राणी शर्वाणी सर्वमङ्गला ।'

इति नैघण्टुकैरुमागौर्यादिपदवद् योगरूढ्या संज्ञात्वेन पठितत्वात् । महाकविभिः शतकृत्वस्तत्र तत्र प्रयुक्तत्वात् ।

'नृत्तारम्भे हर पशुपतेरार्द्रनागाजिनेच्छां
शान्तोद्वेगस्तिमितनयनं दृष्टभक्तिर्भवान्या ।'

इत्यादावप्यतिप्रसङ्गात् । तथाहि—भवस्य पत्नीति 'इन्द्रवरुणभवशर्वा'दिसूत्रेणानुकि 'पुंयोगादाख्याया'मिति ङीषि च भवानीशब्दसिद्धिः । अतो भवान्या दृष्टभक्तिः पशुपतेरित्यत्रापि पत्यन्तरप्रतीतेर्दुर्वारत्वाद् भवस्येत्येव वक्तव्यत्वाद् उत्तरग्रन्थोऽतिप्रसङ्गः भगिनीपतिः इत्यादिप्रयोगभङ्गप्रसङ्गात् । भवानीपतिरित्यत्र भवस्य पत्न्याः पतिर्भव एवेति सामञ्जस्येन प्रतीतेरबाधितत्वात् । संयोगाद्यैरर्थविशेषस्मरणस्य स्वोक्तस्य वैयर्थ्यापाताच्च । भवानीजार इत्युक्ते हि पत्यन्तरप्रतीतिरित्यरुमतिविस्तरेण" इति । एवमादिस्थलेषु मौनमेवावलम्ब्यते जगद्धरादिभिः ।

## पाठव्यवस्था ।

कवलित इव कृत्स्नश्चक्षुषा स्फारितेन
प्रसभममृतमेघेनेव सान्द्रेण सिक्तः ।
अविरलमिव दाम्ना पौण्डरीकेण नद्धः
स्नपित इव च दुग्धस्रोतसा निर्भरेण ॥

पद्यमिदं पूर्वोत्तरार्धयोर्व्यत्ययेन पूर्वैर्व्याख्यातृभिः पठितम् । तत्र च पाठेऽनौचित्यं प्रदर्शयन् उपर्युद्धृतपाठस्यैव साधुत्वं स्वीकार्यत्वं च प्रतिपादयति । यथा—"अस्य श्लोकस्य पूर्वोत्तरार्धयोः पाठव्यत्यासः प्रामादिकः । यदहमतर्कितेत्यादिवाक्यशेषस्यासम्बन्धात् उत्प्रेक्षानिमित्तकथनपुरस्सरमेव उत्प्रेक्षणस्यौचित्यात् । अन्यथा तस्याकस्मिकत्वप्रसङ्गात् । मध्यवर्तिनो हेतोः

पुरतोऽनुकर्षणस्यासामञ्जस्यात्, स्नपित इव चेति चकारस्य सर्ववाक्यार्थ-समुच्चायिनश्चरमवाक्य एव कविना तथा पाठाचिह्नत्वेन प्रयुक्तत्वाद्, वाक्यान्तरे त्वप्रयोगाच्च' इति।

तथा,

स्वशस्त्रपूतनिर्व्याजपुरुषाङ्गोपकल्पितम्।
विक्रीयते महामांसं गृह्यतां गृह्यतामिदम्॥

इत्यत्रापि स्वशस्त्रपूतेत्यस्य स्थानेऽशस्त्रपूतेति जगद्धरादिभिः स्वीकृतः पाठः। तस्य च विरुद्धत्वं प्रतिपादयन् स्वशस्त्रपूतेति पाठस्यैव ग्राह्यत्वं समर्थयति —

"स्वशस्त्रपूतेत्यादि। स्वहस्तधृतेन शस्त्रेण खड्गेन खण्डितत्वात् पूतेन शुद्धेन।

'गोब्राह्मणार्थे शस्त्रपूतान्तरात्मा
हतः सङ्ग्रामे क्षत्रियः स्वर्गमेति।'

इति,

'तव प्रयातो यस्यत्वं शस्त्रपूतो ब्रवीमि ते।'

इत्यादिमहाभारतादिवचनेषु शस्त्रपातस्य पापहरत्वावगमात् पूतत्वोक्तिः। तदर्थमेव च कृपाणपाणिरिति शस्त्रधारणोक्तिः ततः पूर्वं पश्चाच्च शस्त्रधारणस्य प्रसङ्गाभावात्। अशस्त्रपूतेति पाठे तु पूतत्वनिषेधादपूतत्वविधेर्विरुद्धत्वं स्फुटमेव" इति। एवमादयो बहवः पाठा इह सचेतसां ग्राह्याः समुचितं समावेशिताः।

इदं चापरं विशिष्येह प्रस्तावनमर्हति। यद् — 'अस्ति दक्षिणापथ इत्यादिना पाण्डित्यवैदग्ध्ययोरित्यन्तेन प्रकरणेन भरतविहितेति कर्तव्यतारूपसम्बन्धाभिधेयप्रयोजनज्ञापनार्थं कविना स्वगोत्रनामनी प्रतिपादिते। यानुदाहरन्त्यार्यमिश्रा इत्यादिना परिषदः पूजा। भूम्ना रसानामित्यादिना परमानन्दानुभवः परमप्रयोजनम्। व्युत्पत्त्यादयस्त्ववान्तर-फलानि सूचितानि' इति व्याख्यारम्भे, "अत्र प्रकरण आदौ सानन्दमिति, मध्ये विधाता भद्रं न इति, अन्ते शिवमस्तु सर्वजगतामिति च प्रयोगाद् मङ्गलोपक्रमत्वाद् मङ्गलमध्यत्वाद् मङ्गलान्तत्वाच्चैतच्छीलनपराणां सकल-समीहितसम्पत्तिः प्रकाशिता' इत्यवसाने च प्रकृतनाटकशीलनपराणां व्युत्पत्त्याद्य-वान्तरफलावाप्तिपूर्वकं परमानन्दानुभवरूपपरमप्रयोजनावाप्तिकथनं नाम।

काव्यपठनस्य हि 'काव्यं यशसे', इत्यादिप्रयोजननिरूपणमन्तरा प्रातिस्विकतयैतादृशं प्रयोजनं न कैश्चिदपि व्याख्यातृभिरद्य यावत् प्रपञ्चितं दृश्यते ।

## व्याख्याता ।

तस्यास्य समग्रगुणगुम्फितस्य व्याख्यारत्नस्य प्रणेता **पूर्णसरस्वती-**नामधेयः पूर्णज्योतिर्मुनिवरान्तेवासी कश्चित् सुधीमणिरिति, व्याख्यानामधेयं च रसमञ्जरीति

'मालतीमाधवस्योच्चैरामोदं स्वं विवृण्वती ।
धार्या सहृदयैः प्रीत्या व्याख्येयं **रसमञ्जरी** ॥'

इति व्याख्यारम्भे,

'मालतीमाधवस्येत्थं प्रथमाङ्कार्थचर्चनम् ।
पूर्णज्योतिःप्रसादेन चक्रे पूर्णसरस्वती ॥'

इत्यादि प्रत्यङ्कपरिसमाप्तौ च दृश्यमानेभ्यः पद्येभ्यः स्फुटमवगम्यते ।

'यद्गीतार्थश्रवणरसतो ध्वस्तमोहान्धकारः
कृष्णानन्दी त्रिजगति नरो जिष्णुभूयं जिहीते ।
स्वस्मिन्नेव प्रकटितमहाविश्वरूपं तदेकं
पूर्णज्योतिः स्फुरतु हृदि मे पुण्डरीकायताक्षम् ॥'

इति ग्रन्थारम्भे, प्रत्यङ्कावसानेषु च पूर्णज्योतिःप्रसादेनेति पूर्णज्योतिः-पदस्यासकृदावर्तनात् पूर्णज्योतिषि गुरौ स्वस्यानितरसाधारणं भक्त्यतिरेकं प्रकटयति । पूर्णज्योतिःपदं चोदाहृतपद्येषु श्रूयमाणं पूर्णत्रयीक्षेत्रे विराजमानम् ईश्वरमभिधत्त इति केचिद्विपश्चितोऽभिप्रयन्ति* । तदिदं न साम्प्रतं मन्यामहे । यतः पूर्णत्रय्यां कृतसन्निधानस्य देवस्य पूर्णत्रयीश इत्येव प्रसिद्धमभिधानं न तु पूर्णज्योतिरिति चिरन्तनप्रतीतमनपलपनीयं वस्तुतत्त्वम् । किञ्च, अनेनैव व्याख्यात्रा विरचिते कमलिनीराजहंसाख्यनाटके स्थापनायां दृश्यमानेन

---

* १. "अयं च केरलीय इत्यत्र नास्ति नः सन्देहः । यतोऽयमादावन्ते च पूर्णज्योतिरभिधमीश्वरं स्मरति स च गोश्रीराज्ये (कोच्चि) तृप्पूणित्तुर इति सुप्रथिते क्षेत्रेऽद्यापि कृतसन्निधानः" Vidyullata Preface Page 11.

२. "तत्र केरलीय इति पक्ष एव ज्यायान्. गोश्रीपुरप्रधानक्षेत्राधिष्ठितपूर्ण-त्रयीशकरुणया लब्धसरस्वतीप्रसादोऽयं पूर्णसरस्वतीनामान्वर्थाभिधानः केरलेषु तृच्च-म्बरदेशीयः स्यात् सम्भवेत् ।" Hamsasandeśa Preface.

1787

" तदिदानीं विशदविश्रुतविनयमाधुर्यधुर्येण परमेश्वरभक्तिसारसीविहारकासारेण पदवाक्यप्रमाणनेत्रत्रयनिरीक्षणापरपरमेश्वरपूर्णज्योतिर्मुनिवरनिहितनिस्सृतकरुणामृतपूर्णचन्द्रेण पूर्णसरस्वतीनामधेयेन कविना निबद्धमिद्धरसमद्भुतार्थं कमलिनीराजहंसं नाम नाटकमभिनवमभिनयन्तो गुणदोषनिकषद्दषदं परिषदमेनां परितोषयितुमर्हन्ति " इति वाक्यान्तर्गत'पूर्णज्योतिर्मुनिवर .... .... कविना' इति वाक्येन पूर्णज्योतिरिति पदं मानुषमेव कञ्चिद् ग्रन्थकर्तुर्गुरुभूतमभिधत्ते न त्वीश्वरमित्ययमर्थः सुव्यक्तं प्रतिपादितः। पूर्णसरस्वतीति नामधेयान्ते श्रूयमाणः सरस्वतीशब्दो ग्रन्थकारं तुरीयाश्रमिणमवगमयति। पूर्वाश्रमे किमस्य नामधेयं कुत्र वा जन्मेत्यादिकं विविच्यावगन्तुं न किमपि प्रमाणमुपलभ्यते। उत्तरकेरलेषु पोन्नानिदेशान्तर्गते काट्टुमाटस् इति सुप्रसिद्धे मान्त्रिककुले लब्धजन्मायं द्विजन्मेति केचिदाचक्षते। चेन्नास्मनक्कल् इति प्रसिद्धजयन्तमङ्गलगृहाभिजात इत्यपरे वदन्ति। तृच्चम्बरदेशीय इति चेतरे ब्रुवते। बलवदुपष्टम्भकप्रमाणाभावादेषु कस्य वा प्रामाण्यमिति निर्णेतुं न पार्यते। सर्वथा केरलीयोऽयमित्यत्र परं नास्ति विप्रतिपत्तिः सर्वेषामपि। कमलिनीराजहंसे केरलानुद्दिश्य कृता गभीरवर्णना, नाटकस्य वृषपुरेऽभिनेतव्यतया प्रस्तावना, हंससन्देशे काञ्चिपुरात् बृन्दावनं प्रस्थितस्य हंसस्य केरलमार्गेण प्रचोदना च कवेः केरलेषु स्वदेशाभिमानं प्रथयतीव।

'भवसमभवभूतिप्राज्यवैदग्ध्यसीम्नि
प्रकरणतिलकेऽस्मिन् मालतीमाधवाख्ये।'

इत्यारम्भे, मध्ये मध्ये च रससुधानिर्झरोल्लासकैलासो महाकविः, पण्डितविदग्धमण्डलमुखमण्डनमहामणिर्महाकविः, रससुधासंविधानसावधानः, योगवेदान्तशास्त्रसर्वपथीनेन कविना, कविकुलमुकुन्दः, परमप्रमाणभूतो भवभूतिः इत्याद्युपश्लोकनाच्च नाटककर्तरि भवभूतौ मालतीमाधवे नाटके च स्वस्यासामान्यं बहुमानं प्रकाशयति। कमलिनीराजहंस—हंससन्देशादिसरसकाव्यनिर्माणेन न केवलं व्याख्यातृकोटौ, अपितु लोकोत्तरप्रतिभाशालिषु कविमण्डलेष्वप्यग्रगणनीयतामर्हत्ययं पण्डितमणिरिति च निर्विवादम्। बहुशः प्रमाणानि सङ्गृह्णतानेन सर्वतोमुखमात्मनो वैदुष्यं प्रकटीकृतम्।

अनेन विरचिता इतरे ग्रन्थाः—

१. मेघसन्देशव्याख्या विद्युल्लता।
२. विष्णुपादादिकेशान्तस्तवव्याख्या भक्तिमन्दाकिनी।

३. अनर्घराघवटिप्पणी ।

४. कमलिनीराजहंसनाटकम् ।

५. हंससन्देशकाव्यम् ।

६. ऋजुलघ्वी (मालतीमाधवकथासंक्षेपः)

एष्वनर्घराघवटिप्पणीं विहायान्ये सर्वेऽपि ग्रन्था मुद्रिताः ।

## जीवितकालः ।

जीवितसमयं चास्य पण्डितश्रेष्ठस्येदन्तया निष्कृष्य प्रतिपादयितुम् ऐकान्तिकं न किमपि प्रमाणं पश्यामः । विमर्शकैश्च बहुभिर्बहुधा जीवितकालोऽभ्यूहितः * ।

परन्तु रसमञ्जर्यां 'न्यायदीपावल्यामुदाहरणवाक्ये यद्यद् दृश्यं तन्मिथ्या यथा शुक्तिरूप्यम् इति व्याप्तिग्रहणेन समर्थितत्वात्' इति (पृ० १३),

"तमालश्यामलज्ञाने निर्बाधे जाग्रति स्फुटे ।
द्रव्यान्तर तमः कस्मादकस्मादुपलभ्यते ॥"

इति चित्सुखाचार्यप्रयोगात्' इति न्यायदीपावलीं चित्सुखाचार्यं च प्रमाणयतानेन ताभ्यामर्वाचीनत्वं ज्ञाप्यते । न्यायदीपावलीकर्ता आनन्दबोधश्च त्रयोदशशतकमध्यजीवीति पि० के० गोडेमहाशयैर्निर्णीतः† । तदीयन्यायमकरन्दव्याख्याता चित्सुखाचार्यश्च ततोऽर्वाग्भवस्त्रयोदशशतकोत्तरार्धे वा चतुर्दशशतकपूर्वार्धे वा लब्धजीवितो भवितुमर्हति । तथाच चित्सुखाचार्यं प्रमाणयतोऽस्य ग्रन्थकर्तुर्जीवितकालश्चतुर्दशशतकोत्तरार्धं वा पञ्चदशशतकपूर्वार्धं वा स्यादित्यभ्यूह्यते ।

अयमभ्यूहः स्थिरीक्रियत इव प्रमाणान्तरेणापि । यदयं जगद्धर पण्डिताशयं तत्र तत्र खण्डयतीव । तथाहि—'प्रेयो मित्रं बन्धुता वा समग्रा' इति

---

* 1. Vide Vidyullata Introduction, Page 11.
2. ,, Rjulaghvī ,, Page 19.
3. ,, Haṁsasandeśa Introduction.
4. ,, Poona Orientalist, Vol. IX, pp. 146–148.

† Vide The Date of Anandabodhayati, by P. K. Gode, Calcutta Oriental Journal Vol. II.

पद्यव्याख्याने "अनया वाचोयुक्त्या प्राजापत्योऽयं विवाहः न तु गान्धर्व इति सूचितम् ।

'सहोभौ चरतं धर्ममिति वाचानुभाष्य तु ।
कन्याप्रदानमभ्यर्च्य प्राजापत्यो विधिः स्मृतः ॥'

इति मनुवचनात्,

'इच्छयान्योन्यसंसर्गः कन्यायाश्च वरस्य च ।
गान्धर्वः स विधिर्ज्ञेयो मैथुनं कामसम्भवम् ॥'

इत्युक्तेः स्वेच्छाविवाहस्य चात्राकथनात् तावता गान्धर्वविवाहत्वाभावाद्" इति गान्धर्वविवाहखण्डनपूर्वकं प्राजापत्यं सिद्धान्तयति ।

जगद्धरपण्डितश्च "अनेन गान्धर्वो विवाहो दर्शितः स चानुरागमूलत्वाच्छ्रेष्ठः । यदाह—

'अनुरागात्मकत्वेन गान्धर्वः श्रेष्ठतां गतः ।'

इति परस्परानुरागनिबन्धनं गान्धर्वविवाहमाचष्टे । तथा 'आश्चर्यमुत्पलदृशः' इति पद्यव्याख्याने 'जडिमानं सन्तापविरहाच्छैत्यम् । अप्रतिपत्तिर्जडतेत्यर्थस्तत्र न घटते । सन्तापदग्धस्येति पूर्वप्रस्तुतसन्तापस्यैव शमनप्रतिपादनौचित्यात् । अनन्तरं द्रवत्वोक्तेश्च' इति जडिमानमिति पदं शैत्यार्थकं व्याचष्टे । जगद्धरस्तु जडिमानं 'सर्वकार्याप्रतिपत्तिरूपम्' इत्यप्रतिपत्त्यर्थकमाह । अनेन च मन्ये जगद्धरपण्डिताशय एव पूर्णसरस्वत्या खण्ड्यत इति ।

जगद्धरपण्डितस्य जीवितसमयश्च क्रिस्त्वब्दीयचतुर्दशशतकमिति व्यवस्थापितो गोडेमहाशयैरेव । तथाच तदाशयं खण्डयंस्तदन्तरभाव्ययं पञ्चदशशतक एव स्याल्लब्धजीवित इति ।

मुद्रणादिष्वनवधानतया मतिमान्द्याद् दृष्टिदोषाच्च समापतिताः सर्वेऽपि दोषा मर्षणीया मनीषिभिरिति सम्प्रार्थयन् ग्रन्थमिमं रसिकजनसमक्षम् अवतारयामि ॥

अनन्तशयनम्,
१-१०-१९५२.

के. एस्. महादेवशास्त्री.

इत्युक्तपरार्धद्वयरूपस्य ब्रह्मायुषः परसंज्ञस्यावसानकाल इत्यर्थात् । स एव यज्वा यजमानः । सुयजोर्ङ्वनिप् (३-२-१०३) । जुहोति--अवदानत्वेन ददाति । वर्तमाननिर्देशादनादिसिद्धे संसारे प्रलयोदययोरपि चक्रवत् परिवृत्तेः प्रतिपरावसानं होमो व्यज्यते । 'जुहाव' इति तु पाठे भूतानद्यतनपरोक्षार्थमात्रप्रतिपादनादस्यार्थस्यासिद्धिः । कालस्य होतृत्वोक्तिस्तस्यैव सर्गप्रलयादिषु प्रेरकत्वात् ।

'प्रकृतेर्गुणसाम्यस्य निर्विशेषस्य मानवि ! ।
चेष्टा यतः स भगवान् काल इत्युपलक्षितः ॥'

इति भागवतोक्तेः ।

'तथाविधानामब्दानां शतं त्वमपि जीवसि ।
त्वदायुर्मम निश्वासः कालेनैव प्रचोद्यते ॥'

इति श्रीभगवत्पादाचार्यवचनाच्च । हरतृतीयनयनानलस्य जगत्संहर्तृत्वप्रसिद्धेरेवमुक्तिः । यथाह मुरारिः —

'नीललोहितललाटलाञ्छने लोचने जयति कोऽपि पावकः ।
रक्षितस्य जगदन्तहेतवे यस्य संज्वलनमात्मभूरभूत् ॥'

इति । कालस्य यज्वत्वेन रूपणाल्लोचनस्याग्निकुण्डत्वं जगदण्डस्य हव्यत्वं चार्थसिद्धमित्येकदेशविवर्तिरूपकम् । अर्चिर्निष्टप्तः---ज्वालया किञ्चित्[3] तप्तः । 'निसस्तपतावनासेवने'(८-३ १०२) इति मूर्धन्यः । आसेवनमावृत्तिः । अनावृत्तिश्च कादाचित्कादीषदुन्मीलनादिति मन्तव्यम् । अन्यथा नवनीतशकलकोमलस्य बालशशिनो भस्मीभावप्रसङ्गात् । सुधासारः अमृतवृष्टिः । 'आसारो वेगवान् वर्षः' इति वैजयन्ती । सात्कारो नाम जलबिन्दुपातनिर्वाप्यमाणदहनशब्दानुकारः तद्वान् सात्कारी अपाङ्गदेशो यस्य । तार्तीयीकं तृतीयम् । 'तीयादीकक् स्वार्थे वा वक्तव्यम्' (वा० ४-२-८) इतीकक् । पुरारेः असुरपुरत्रयरिपोः । अनेन जगदनुग्रहताच्छील्यं ध्वन्यते । अवतु । 'अव रक्षणे' इति धातुः । मदनप्लोषणं कामस्य दाहकम् । 'प्लुष दाहे' इत्यस्मात् 'कृत्यल्युटो बहुलम्' (३-३-११३) इति कर्तरि ल्युट् । अत्र चायमखिलोपनिषदङ्गनासङ्गीतरङ्गमण्डपेन साङ्ख्ययोग-

१. 'त्वमायुः' ख पाठः. २. 'यथा --' ख, घ, ङ, पाठः. 'यथाह ---' घ, मातृकायां नास्ति । ३. 'किञ्चित्तप्तम्' घ, ङ, पाठः ४, 'अमृतवृष्टिः' ङ, पाठः

सागरपारावारीणेन कविकुलेन्दुना गुरुमुखैकगम्योऽतिरहस्योऽर्थः सूत्रितोऽनुसन्धेयः। तथाहि—पक्ष्मशब्दो रोमवाचकः। 'निसर्गचित्रोज्ज्वलसूक्ष्मपक्ष्मणा' इत्युक्तेः। सूत्रांशवाचकश्च। 'पक्ष्म सूत्राद्यवयवे किञ्जल्के नेत्ररोमसु' इति वैजयन्ती। अत्र च वालाग्रवत् नीवारशूकवच्च तनीयसी, त्रपुसीतन्तुवच्च पीतवर्णा प्रभासन्ततिः सादृश्यात् पक्ष्मालीत्युच्यते। ईषद्विघटितमुकुले सद्गुरूपदेशादभ्यासाच्च निवृत्तप्रायमायातिरोधाने। ईषद्ग्रहणं होतृहोतव्यप्रतीत्यनुवृत्तेः, तस्या अपि मायाकार्यत्वात्।

'शास्त्रेण नश्येत् परमार्थरूपं कार्यक्षमं नश्यति चापरोक्ष्यात्।
प्रारब्धनाशात् प्रतिभासनाश एवं क्रमान्नश्यति चात्ममाया॥'

इत्याचार्यवचनात्। 'भूयश्चान्ते विश्वमायानिवृत्तिः' इति श्रुतेश्च। अन्तर्नाडीनियमितमरुद्विघटिताधारद्वारकवाटबन्धे च। कालयज्वा नियतकालानतिक्रमेण श्रुतिस्मृतिविहितैः कर्मभिरीश्वरं पूजयन् पुरुषः। कालयज्वेत्यनेन निषिद्धकाम्यवर्जमन्तःकरणशुद्ध्यै विहितकर्मानुष्ठायी मुमुक्षुरिति द्योत्यते। ब्रह्माण्डं जुहोति अपुनरुत्थानाय ध्यानेन विलापयतीत्यर्थः। यथाहुराचार्याः—

'सङ्कल्प्य हव्यं सकलप्रपञ्चं प्रज्ञास्रुचा सर्वहुतं विमुक्त्यै।
जाज्वल्यमाने स्वत एव नित्ये सर्वान्तरे ज्योतिषि जोहवीमि॥'

इति। अम्बास्तवे च—

'ब्रह्माण्डबुद्बुदकदम्बकसङ्कुलोऽयं मायोदधिर्विविधतत्त्वतरङ्गमालः।
आश्चर्यमम्ब झटिति प्रलयं प्रयाति त्वद्ध्यानसन्ततिमहाबडवामुखाग्नौ॥'

इति। अर्चिरिति सौषुम्नसरणिविहरणरसिकनिजशिखाद्रावितात् ब्रह्मरन्ध्रारविन्दचन्द्रान्निष्यन्दितेन परमामृतवृष्टिपूरेण सात्कारिप्रान्तमित्यर्थः। तार्तीयीकम्—

'अन्यदेव तद्विदितादथो अविदितादधि।'

इत्युपनिषन्नीत्या मायातत्कार्यव्यतिरिक्तं तदध्यासाधिष्ठानतया तृतीयम्। यद्वा—

'शैवागमेषु मुख्यं पतिपशुपाशा इति क्रमात् त्रितयम्।'

इत्युक्तक्रमेण नियाम्ययोः पशुपाशयोर्नियन्तृत्वेन तदुत्तीर्णं पुरारेः पुरं शरीरं भक्तानामज्ञाननिदानकर्ममिथुननिर्मितदेहबन्धनिर्मूलनस्य मदनप्लोषणं संसारविषतरुबीजभूतमन्मथोन्मथनस्य।

सूत्रधारः—अलमतिविस्तरेण । (पुरतोऽवलोक्य) अये ! उदित-भूयिष्ठ एष भगवानशेषभुवनद्वीपदीपनस्तमुपतिष्ठे । प्रणम्य

'काम एष क्रोध एष रजोगुणसमुद्भवः ।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥'

इति भगवद्वचनात् । लोचनं 'लोचृ दर्शने' इत्यस्मात् ल्युट् । स्वरूपभूतं सच्चिदानन्दरसं मूलाधारस्फुरितं प्रत्यग्ज्योतिः । नहि द्रष्टुर्दृष्टेर्विपरिलोपो वर्तत इति श्रुतेः । यथाहुराचार्याः —

'मूलाधारात् स्फुरिततटिदाभाप्रभासूक्ष्मरूपो
गच्छन्त्यामस्तकमणुतरा तेजसां मूलभूता ।
सौषुम्नाध्वाचरणनिपुणा सा सवित्रानुबद्धा
ध्याता सद्योऽमृतमथ रवेः स्रावयेत् सार्धसोमात् ॥'

इति । अत्र च जटानां धर्मलिङ्गत्वाद्धर्मवृद्धिस्तवन्त्यूर्मीणां दुरितहरत्वादधर्मनिरासो लोचनस्य ज्ञानस्वरूपत्वात्तत्साध्यो मोक्षश्चाशास्ति इति क्रमो मन्तव्यः ॥

इत्थमाशिषं प्रयुज्याकाण्डप्रथनदोषजन्यं रसविच्छेदखेदं सहृदयानामाशङ्क्य परिहरति— सूत्रधारः—अलमतिविस्तरेणेति । अतिशब्देनैतावतः शब्दप्रथनस्यौचित्यापरित्यागाददोषत्वमितोऽधिकस्य दोषत्वं च ध्वन्यते । यथाह ध्वनिकारः —

"अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम् ।
प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत्परा ॥"

इति । 'प्रथने वावशब्दे' (३-३-३३) इति घञः प्रतिषेधाद् विपूर्वात् स्तृञः शब्दविषये 'ॠदोरप्'(३-३-५७)। 'अलं भूषणपर्याप्तिवारणेषु' इत्युक्तेर्वारणार्थमव्ययम् । इदं तृतीयायुक्तं प्रयुज्यते, 'अलं महीपाल तव श्रमेण' इत्यादिदर्शनात् । प्रकृत्यादितृतीया चेयम् । अथ प्रभातसन्ध्योपासनावसानसमुदितानां भूमिदेवाना-

१. 'नान्द्यन्ते सूत्र' ज. झ. ञ. पाठः. २. 'अलमलम् । उदित', ३. 'द्वीपः । तदुपतिष्ठे' ज. पाठः. ४. 'स्तदुपतिष्ठे' झ. ञ. पाठः.

१. 'इत्याशिषं' क, 'इत्यमाशिषः' च. पाठः. २. 'शब्देनैतावतः' च. पाठः. ३. 'विपूर्वस्य' ख. ग, च. पाठः. ४. 'ॠदोरबेव भवति' ख. ग. घ. च. पाठः. ५. 'समुदितानां' च. पाठः.

कल्याणानां त्वमसि महसां भाजनं विश्वमूर्ते !
धुर्यां लक्ष्मीमथ मयि भृशं धेहि देव ! प्रसीद ।
यद्यत् पापं प्रतिजहि जगन्नाथ ! नम्रस्य तन्मे
भद्रं भद्रं वितर भगवन् ! भूयसे मङ्गलाय ।। ५ ।।

---

प्रुचितं सेवासमयमनुसन्दधानः स्वाभिमतसिद्धये सूर्यमुपतिष्ठासुराह—उदित-भूयिष्ठ (इति)। बहुतरमुदितः । उदयगिरेर्गगनतलमधिरूढ इत्यर्थः । अशेष-भुवनद्वीपदीपः अशेषाणां भुवनविशेषभूतभूलोकावयवानां जम्बूप्लक्षशाल्मली-कुशक्रौञ्चशाक[2]पुष्करनाम्नामन्तरान्तरा समुद्रसीमन्तितसीम्नां प्रदेशानां प्रकाशनाद्दीप इव दीपः,

“[1]रविचन्द्रमसोर्यावन्मयूखैरवभास्यते ।
ससमुद्रसरिच्छैला [4]तावती पृथिवी स्मृता ॥”

इति पुराणवचनात् । दीप[5]रूपेण न्यूनत्वं च नाशङ्कनीयम् , प्रकाश्यदेशमह-त्त्वानुगुण्येन प्रकाशकस्य दीपस्यापि महत्त्वोपपत्तेः । उपतिष्ठे पूजयामि । उपाद्देव-पूजासङ्गतिकरणमित्रकरणपथिषु' (वा० १-३-२५) [7]इति तिष्ठतेरात्मनेपदम् ॥

प्रणम्येति । उपस्थानप्रकारमाह—कल्याणानामित्यादि । कल्याणा-नामिति वाभिमतोपक्षेपः । मङ्गलहेतुभूतानां, कारणे कार्योपचारः । महसां — तेजसाम् । बहुवचनेन चन्द्रादिगतानामप्युपसंग्रहः क्रियते ।

“यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥” इति ।

“ज्योतिषां [9]रविरंशुमान् ”

इति च भगवद्वचनात् । भाजनम्—आधारः । नियतनपुंसकतया भाजनशब्दस्य त्वमिति सामानाधिकरण्यम् । विश्वमूर्ते! विश्वं स्थावरजङ्गमात्मकं जगद्विग्रहो यस्य ।

---

१. ‘दीपः रविचन्द्रमसो’ च. पाठः २. ‘पुष्करसंज्ञानां द्वीपानामन्तरान्तरा’ ख. घ. पाठः. ‘पुष्करसंज्ञादीनां द्वीपानामन्तरान्तरा’ ग. पाठः ३. ‘सूर्याचन्द्रमसो’ ख. पाठः. ४. ‘तावता’ ग. घ. च. पाठ. ५. ‘रूपणे’ ख. ग. घ. च. पाठः. ६. ‘सङ्गतकरण’ घ. च पाठः. ७. ‘इति वक्तव्यमिति तिष्ठते’ ख. ग. पाठः. ८. ‘प्रकारः—’ ख. ग. घ. च. पाठः. ९. ‘रविमिति’ घ. पाठः.

चैतन्यात्मना व्याप्त इत्यर्थः । 'स यश्चायं पुरुषे, यश्चासावादित्ये, स एकः' इति श्रुतेः । अथ — अतो हेतोः । देव ! जगत्सर्गादिक्रीडारसिक ! । प्रसीद — मद्विषये कारुण्यकटाक्षमर्पय । धुर्यां — सज्जनसमाराधनभरनिर्वहणसमर्थाम् । 'धुरो यड्ढकौ' (४-४-४७) इति यत् । लक्ष्मीं — विद्यातिशयप्रयोगजनितां ख्यातिलाभपूजात्मिकां सम्पदम् । धेहि — पोषय । 'घ्वसोरेद्धावभ्यासलोपश्च' (६-४-११९) इत्येत्वमभ्यासलोपश्च । यद्यदिति वाङ्मनःकायोपादानम् । येन केनचिद्रूपेणावस्थितं सर्वं वीप्सया परामृश्यते । तदित्येकेन तच्छब्देन तथाभूतमेव परामृश्यते । न्यायदीपावल्यामुदाहरणवाक्ये 'यद्यद् दृश्यं तन्मिथ्या यथा शुक्तिरूप्यम्' इति व्याप्तिग्रहणे उभयथापि समर्थितत्वात् । न्यायमरबन्धेन[3] चास्मिन् पद्ये तथा व्याख्यातत्वात् । पापं — निषिद्धाचरणपरिणतमपूर्वम् । प्रतिजहि — प्रतिहतं कुरु । 'हन्तेर्जः' (६-४-३६)' । जगन्नाथ ! नाथ्यत इति नाथः, लोकानां प्रार्थनीय[4]!, सकलपुरुषार्थसवितृत्वात् । 'नाथृ याच्ञायाम्' इत्यस्माद्[5] पचाद्यच् । नम्रस्य[6] — नमनशीलस्य । 'नमिकम्पिस्म्यजसकमिहिंसदीपो रः'[7] (३-२-१६७) इति रः । भद्रं भद्रं[8] — उपर्युपरि[9] भवत्तत्त्वज्ञानोदयलक्षणमैश्वर्यम् । 'नित्यवीप्सयोः' (८-१-४) इति द्वित्वम्[10] । वितर — देहि । विपूर्वस्तरतिर्दानार्थे वर्तते । भगवन् ! समग्रैश्वर्यवीर्यज्ञान[11]लक्ष्मीकीर्तिवैराग्यसंज्ञषड्गुणनिधे[12] ! अनेन ज्ञानादिदानसामर्थ्यं ध्वन्यते । धनवत एव दानशक्तिर्न निर्धनस्येति भावः । भूयसे मङ्गलाय । मङ्गलशब्देनोपचारात् मङ्गलकार्यं सुखमुच्यते । निश्शेषदुःखनिवृत्तिनिरतिशयसुखप्राप्तिरूपमपवर्गं प्राप्तुम् । 'क्रियार्थोपपदस्य[13] च कर्मणि स्थानिनः (२-३-१४)' इति चतुर्थी । प्रतिवाक्यं सम्बुद्धिः । 'स्तूयमाना हि देवता वीर्येण वर्धते' इति न्यायाद्वीर्यवर्धनाय प्रसादसौमुख्याय चेति मन्तव्यम् । अत्र प्रथमेन वीर्योद्बोधनं, द्वितीयेनैहिकफलप्रार्थना, तृतीयेन पापक्षयाशंसा, चतुर्थेन तत्साधनभूततत्त्वज्ञानप्रार्थना च वाक्यैः कृतेति बोद्धव्यम् ।

---

१. 'व्याप्तविश्व विष्णविरयर्थः' ख, 'व्याप्तविष्णविलासैः' ग. घ. पाठः. २. 'यड्ढकौ' इति मुद्रितसिद्धान्तकौमुदीपाठः. ३. 'न्यायभरानिबन्धेन' च. पाठः. ४. 'प्रार्थनीयः' क ख. ग. च. पाठः. ५. 'णाथृ नाथृ' ख. ग. घ. च. पाठः. ६. 'इत्यस्मिन् नम्रस्य' घ. च. पाठः. ७. 'नमकम्पि' च. पाठः. ८. 'क्षेम' घ. च. पाठ.. ९. 'उपर्युपरि तत्त्व' घ. पाठः. १०. 'द्विर्वचनम्' ख. पाठः. ११. 'समग्रैश्वर्यज्ञान' घ. पाठः. १२. 'निधे इत्यनेन', १३. 'क्रियार्थोपपदस्य कर्मणि' घ. च. पाठः.

(नेपथ्याभिमुखमवलोक्य) मारिष ! सुविहितान्यवतरणरङ्गमङ्गलानि । सन्निपतितश्च भगवतः कालप्रियनाथस्य यात्राप्रसङ्गेन नानादिगन्तवास्तव्यो महाजनसमाजः । तत् किमित्युदासते भरताः । आदिष्टश्चास्मि विद्वज्जनपरिषदा, यथा, केनचिदपूर्ववस्तुप्रयोगेण वयं विनोदनीया इति । तत् परिषदं निर्दिष्टगुणप्रबन्धेनोपतिष्ठावः ।

---

'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ।'

इति भगवद्वचनात् तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशश्रवणाच्च । अत्र च नान्द्यङ्गं देवतानमस्कारः कृतः ॥

"देवतादिनमस्कारमङ्गलारम्भपाठनम् ।
नाट्यादौ क्रियते यत्तु सा नान्दी कथिता बुधैः ॥"

इति वचनात् । नेपथ्ये मिश्रम् इति भरतोक्तेः नेपथ्ये देवतावन्दनं च प्रयुक्तमिति मन्तव्यम् ॥ ५ ॥

नेपथ्याभिमुखमित्यादि । नेपथ्यं नाम नटानां संवृतं वर्णिकापरिग्रहस्थानम् । सुविहितानि नाट्यवेदोक्तक्रमेण सुष्ठु प्रयुक्तानि । अवतरणं नाम मधुरमङ्गलगीतिमुखरमुखीनां गायकीनां प्रवेशः । तदुक्तं भरतेन —

"तथावतरणं चैव गायकीनां प्रवेशनम् ।"

इति । प्रत्याहारादिकेषु सत्स्वप्यन्येषु पूर्वरङ्गाङ्गेष्ववतरणग्रहणं प्राधान्यात् ।

---

१. 'सुविहितानि रङ्ग' ज. झ. ञ. पाठः. 'सुविहितान्यवतरणपावनानि रङ्ग' ख. ग. घ. पाठः. २. 'वास्तव्यो जनः तत्' ग. ? पाठः ३. 'समाजः । आदिष्ट' झ. ञ. पाठः. ४. 'आदिष्टोऽस्मि', ५. 'यथा अद्य वयापूर्वं' ख. झ. पाठः. ६. 'केनचिदपूर्वप्रकरणेन' झ. ञ. पाठः. ७. 'बहुप्रबन्धप्रयोगेणाभिगच्छामः ।' ख. ङ. पाठः ८. 'विनोदयितव्या' ज. झ. ञ. पाठः. ९. 'इति । तत्किमित्युदासते भरताः । प्रविश्य' झ. ञ. पाठः. १०. 'दिष्टावः । नटः— (प्रविश्य) भाव कतमे' ज. पाठः.

---

१. 'उत्तरपूर्वार्धयोरश्लेष' क. ग. घ. च. पाठः. २. 'नान्द्यङ्गदेवता' घ. पाठः. ३. 'दास्यते' घ. च. पाठः. ४ 'इति भगवद्वचनात्' घ. पाठः. ५. 'मिश्रम्' ख. ग. घ. च. पाठः. ६. 'नेपथ्यदेवतावन्दनम्' ख. ग. घ. पाठः. 'नेपथ्यदेवतादिवन्दनं' च. पाठः.

(प्रविश्य)

पारिपार्श्विकः — भाव! कतमे ते गुणास्तत्र यानुदाहरन्त्यार्यमिश्रा[2] भगवन्तो भूमिदेवाश्च[3] ।

---

"गेयं प्राणाः प्रयोगस्य सर्वं वा गेयमुच्यते ।
गेयसाध्यं हि धर्मार्थकाममोक्षचतुष्टयम् ॥"

इति भरतोक्तेः । तथा शार्ङ्गदेवः ।

"नृत्तं वाद्यानुगं प्रोक्तं वाद्यं गीतानुबन्धि च ।
अतो गीतं प्रधानत्वादत्रादावभिधीयते ॥"

इति । रङ्गमङ्गलानि प्रत्याहारादीनि । सन्निपतितः समवेतः । कालप्रियं[1] नाम देवतायतनविशेषः । यात्राप्रसङ्गेन दिव्योत्सवप्रस्तावेन । 'पुरुषोत्तमस्य यात्रायामुपस्थानीयाः सभासद' इति मुरारिः । नानादिगन्तवास्तव्यः[3]— विविधदेशवासी । 'वसेस्तव्यत् कर्तरि णिच्च' (वा० ३-१-९६) । अभिजनविद्यावृत्तैर्लोकोत्तरश्चासौ जनश्चेति महाजनः । समाजः— समूहः । 'समुदोरजः पशुषु' (३-३-६९) इत्यविधानादपशुविषये घञ् । किमिति किमर्थम् । उदासते—कृत्येषु निरुत्साहतया वर्तन्ते । प्रोत्साहनपरमेतत् । भरताः— नटाः । अपूर्ववस्तुप्रयोगेण—अदृष्टचरेतिवृत्ताभिनयेन । वस्तुशब्दव्याख्याने धनिकः— इतिवृत्तभेदा इति । विनोदनीयाः—कालक्षेपं कारयितव्याः । निर्दिष्टगुणप्रबन्धेनेत्यनेनैतद्गुणविशिष्टेन प्रबन्धेन भवितव्यमिति परिषन्नियोगमासूत्रयति । प्रबन्धशब्दः काव्यनाटकादिसाधारणः । 'विद्धि नः षट्प्रबन्धान्' इत्यादिदर्शनात् ॥

प्रविश्य पारिपार्श्विकः इति । सूचितार्थश्रवणसाकांक्षत्वेन तत्प्रवेशोपपत्तिः । प्रविशतीत्युक्ते पुनः पात्रनिर्देशो युक्तः । वचनक्रियानुक्तेः । प्रविश्येत्युक्ते

---

१. 'भाव! परिषन्निर्दिष्टगुणं प्रबन्धं नावगच्छामः । सूत्रधारः —मारिष कतमे', २. 'विदग्धमिश्रा' क. ख. पाठः. ३. 'भूमिदेवाः ।' ख. ङ. पाठः.

---

१. 'तथाच' ख. ग. घ. ङ. पाठः. २. 'प्रिया' ङ. पाठः. ३. 'वसेस्तव्यः' ग. घ. ङ. पाठः. ४. 'पशुष्वित्यभिधानात्' ग. पाठः. ५. 'अनुत्साहतया' ङ. पाठः. ६. 'इतिवृत्तविभेदाद्' ख. ग. घ. ङ. पाठः. ७. 'षट्प्रबन्धानीत्यादि' ख. ङ. ङ. पाठः.

'समानकर्तृकयोः पूर्वकाले' (३-४-२१) इति क्त्वो विधानात् आहेत्यस्य नान्तरीयकत्वेन सिद्धेः पुनः पात्रनिर्देशः प्रमादः । एवं सर्वत्रानुसन्धेयम् । परिपार्श्ववर्ती सूत्रधारस्येति नटः । सूत्रधारस्य नटेन सह सल्लापादामुखं चैतत् ।

"सूत्रधारो नटीं ब्रूते मारिषं वा विदूषकम् ।
स्वकार्यप्रस्तुताक्षेपि चित्रोक्त्या यत्तदामुखम् ॥"

इत्युक्तेः । भाव कतमे ते गुणा इति । प्रवेशात् प्रयोगातिशय आमुखाङ्गमेतत् ।

"एषोऽहमित्यपेक्षावान् सूत्रधारप्रयोगतः ।
पात्रप्रवेशो यत्रैष प्रयोगातिशयो मतः ॥"

भावेति नाट्योक्तौ ।

'भावो नटेन सूत्री च मारिषेत्यमुनापि च'

इति वचनान्नटः सूत्रधारं सम्बोधयति । कतमे— किंरूपाः । आर्यमिश्राः— सदाचारेषु पूज्याः । मिश्रशब्दः पूज्येषु प्रयुज्यते पादादिशब्दवत् । कृष्णमिश्रादिदर्शनात् । भगवन्तः—

"उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् ।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥"

उक्तगुणविशिष्टाः । भूमिदेवाः ब्राह्मणाः ब्राह्मणग्रहणेन वेदादिष्वष्टादशसु विद्यास्थानेषु तेषामेव मुख्याधिकारित्वात् नाट्यप्रयोगस्य च चतुर्वेदसारत्वात् तदनुसरणेनैव वर्णान्तरैः द्रष्टव्यत्वं ध्वन्यते । यथोक्तं भरतेन—

"ऋग्भ्यः पाठ्यमभूद् गीतं सामभ्यः समपद्यत ।
यजुर्भ्योऽभिनया जाता रसाश्चाथर्वणः ॥"

इति ॥

१. 'क्त्वाविधानात्' ग. घ. च पाठः. २. 'विचित्रोक्त्या यदामुखम्' घ पाठः. ३. 'इत्युक्तेः । भावेति नाट्योक्तौ' ख. ग. घ. च. पाठः. ४. 'मार्षेत्येतेव योऽपि' ख. घ. च. पाठः. ५. 'वेदादिष्वष्टादशविद्यास्थानेषु' ग पाठः. ६. 'प्रयोगस्य चतुर्वेदसारत्वात' घ. 'प्रयोगस्य चतुर्वेदसारत्वात' च पाठः. ७. 'भरते' ख. ग. घ. च. पाठः.

सूत्रधारः—[1]

भूम्ना रसानां गहनाः प्रयोगाः
सौहार्दहृद्यानि विचेष्टितानि ।
औत्सुक्यमायोजितकामसूत्रं
चित्रा[2] कथा वाचि विदग्धतेति[3] ॥ ६ ॥

नटः— कस्मिन् प्रकरणे ।[4]

---

भूम्नेत्यादि—भूम्ना—बाहुल्येन । रसानां—शृङ्गारादीनामङ्गिनामङ्ग-[1]भूतानां च । कारणकार्यसहकारिपर्यायविभावानुभावव्यभिचारिरञ्जितालम्बनादि-[2][3]विषयप्रीत्यात्मकरत्यादिरूपा[4] स्थायिभावा रसाः । रसग्रहणं भावानामप्युपलक्षणम् । गहनाः — स्वल्पमतिभिर्दुरवगाहाः[5] सहृदयहृदयैकचर्वणीयाः । प्रयोगाः — व्यञ्जकाभिनयाः[6], तेषां व्यङ्ग्यैकस्वभावत्वात् । सौहार्दहृद्यानि (विचेष्टितानि) अकृत्रिमस्नेहमनोहराणि नायकोपनायकादीनां चरितानि । औत्सुक्यमभिलाष-विप्रलम्भः[7], 'औत्सुक्येन कृतत्वरा' 'इत्यौत्सुक्यादपरिगणयन्' इत्यादिप्रयो-गदर्शनात्[8] । "स्यादायल्लकमौत्सुक्यमुत्कण्ठोत्कलिका रतिः"[9] इति वैजयन्ती । औद्धत्यमिति पाठे मन्मथकृतमविनीतत्वमित्यर्थः । आयोजितकाम-सूत्रं — सर्वत्रोदाहरणत्वेन[10] संपादितानि वात्स्यायनमुनिप्रणीतानि कामशास्त्र-सूत्राणि यत्र तत् । चित्रा—संविधानचातुर्येण विस्मयजननी कविप्रति-

---

1. 'सूत्रधारः — (विचिन्त्य) भूम्ना' ख, 'नटः — भूम्ना' छ. ज. पाठः. २. 'चित्राः' ज. पाठः. ३. 'विदग्धता च' ॥ ज, 'विदग्धता च ॥ सूत्रधारः—स्मृतं तर्हि । नटः — भाव ! क इव । सूत्र' झ, 'विदग्धता ... ... भाव ! किमिव । सूत्र' ञ. पाठः. ४. 'नटः — भाव कस्मिन् ।' च. ज, 'नटः — भाव एते गुणाः कस्मिन् ।' छ. पाठः.

---

१. 'शृङ्गारादीनामङ्गिनोऽङ्गभूतानां' घ. च. पाठः. २. 'व्यभिचारिभिर्व्यञ्जिता' ख. घ, 'व्यभिचारिव्यञ्जिता' ग. पाठः. ३. 'ललनादि' ख. च. पाठः. ४. 'प्रीत्याद्यात्मक' ग. ख. च. पाठः. ५. 'स्थूलमतिभिः' घ. च. पाठः. ६. 'व्यञ्जकाभि' क. पाठः. ७. 'विप्रलम्भः' च. पाठः. ८. 'इत्यादिदर्शनात्' ग. पाठः. ९. 'आयल्लक औत्सुक्य' ग. 'स्यादायल्लक औत्सुक्य' घ. पाठः. १०. 'सर्वत्र उदाहरणत्वेन' ग. घ. च. पाठः.

**सूत्रधारः**— (विचिन्त्य) अस्ति दक्षिणापथे विदर्भेषु पद्मनगरं नाम नगरम् । तत्र तैत्तिरीयिणः ब्राह्मणाः पङ्क्तिपावनाः

---

भोत्पादिता च । कथा— इतिवृत्तशरीरम् । वाचीति जात्येकवचनं तत्तत्पात्रोक्तिषु, न पुनः कविसन्दर्भे, 'यत् प्रौढित्वम्' इत्यादिना तस्य वक्ष्यमाणत्वात् । विदग्धता— औचित्यादग्राम्यता । इ(ती)त्यनेन परिषन्नियोगमुखेन कविः स्वसंरम्भगोचरानर्थान् प्रतिजानीते । शब्दस्मृतिनीतिशास्त्रभरतादियोजनानां नान्तरीयकतया सिद्धेः । एते ते गुणा इति शेषः । एतांश्च गुणान् तत्तत्प्रस्तावेषु दर्शयिष्यामः ॥ ६ ॥

चित्रा कथेत्यनेनोत्पाद्येतिवृत्तत्वं प्रकरणलक्षणमनुस्मारितो नटः पृच्छति — कस्मिन् प्रकरण इति । एते गुणा इति शेषः । ननु किमिदं प्रकरणं नाम । उच्यते । यस्मिन्नितिवृत्तं कविप्रतिभानिर्मितं लोकेऽप्यौचित्येन संवादकं, नायको विनयादिसामान्यगुणविशिष्टो धीरप्रशान्तोऽमात्यविप्रवणिजामन्यतमः प्रत्यूहशबलकार्यसिद्धिश्च, नायिका तु कुलस्त्री गणिका वा द्वे एव । अन्यत् सर्वं नाटकवत् , तत् प्रकरणं नाम रूपकभेदः । प्रकृतिभूतं नाटकलक्षणं च तत्र तत्रोपरि योजयिष्यामः । अत्र तु नायको माधवो नाम ब्राह्मणो युवा अनुकूलो धीरप्रशान्तः सापायत्रिवर्गसाधनपरश्च । नायिका मालती नाम ब्राह्मणी शीलार्जवादिगुणवती मुग्धावस्था च । शृङ्गाररसोऽङ्गी । अन्ये पुनरङ्गभूताः । उपनायकः पीठमर्दकपर्यायो[1] नायकात् किञ्चिदूनगुणो मकरन्दो नाम[2] प्रतिनायको लुब्धस्तब्धवृद्धत्वादिगुणविशिष्टो नन्दनो नामेत्यादि वेदितव्यम् ॥

विचिन्त्येति[3]— समाहितेन मनसा तादृशं प्रकरणं विचार्येत्यर्थः ।

"विन्ध्यात्तु दक्षिणो[4] देशो दक्षिणापथसंज्ञितः[5] ।"

इति वैजयन्ती । तैत्तिरीयो नाम गुरुनियोगात् योगीश्वरेण याज्ञवल्क्ये-[6]

---

१. '(विचिन्त्य) स्मृतम् । अस्ति' घ. छ. पाठः. २. 'पुरं' ज. ब. पाठः. ३. 'तत्र केचित् तैत्तिरीयिणः' ज. झ. न. पाठः. ४. 'तैत्तिरीयाः पङ्क्ति' छ., तैत्तिरीयिणश्चरणगुरवः पङ्क्ति' ग. घ. पाठः.

---

१. 'चीरमर्दक' ग. पाठः. २. 'नाम गुणविशिष्टः प्रति' ग. पाठः. ३. 'सूत्रधारः विचिन्त्येति' क. ग. घ. पाठः. ४. 'दक्षिणा देशा दक्षिणा' क. ग. घ. पाठः. ५. 'संज्ञिताः' घ. च. पाठः. ६. 'याज्ञवल्क्येनोद्गीर्णमुक्तं' ब. पाठः.

काश्यपाः पञ्चाग्नयो धृतव्रताः सोमपीथिनश्चरणगुरव उदुम्बरनामानो ब्रह्मवादिनः प्रतिवसन्ति स्म ।

---

नोद्गीर्णो मूर्तस्तित्तिरिभूतैस्तैच्छिष्यैर्गृहीत्वा जगति प्रवर्तितो यजुर्वेदशाखा-विशेषः । यथाह मुरारिः —

"यजूंषि तैत्तिरीयाणि मूर्तानि वसति स्म यः ।
स योगी याज्ञवल्क्यस्त्वां वेदान्तानध्यजीगपत् ॥"

इति । "तित्तिरिवरतन्तुखण्डिकोखाच्छण्" (४-३-१०२) इति छण् । तस्य शब्दतोऽर्थतश्च गृहीतत्वात्तद्वन्तः अत इनिः तैत्तिरीयिण इति । अनेन स्वशाखा-ध्ययनपूर्वकत्वमध्ययनस्य ध्वन्यते । भूरिश्रुतमित्यादिना शाखान्तराध्ययना-देर्वक्ष्यमाणत्वात् । पातकिसहस्रस्य पङ्क्तौ स्थितो य एकस्तान् सर्वान् पुनाति, स पङ्क्तिपावनः, "आसहस्रात् पङ्क्तिं पुनन्ति" इति श्रुतेः —

"अग्र्याः सर्वेषु वेदेषु सर्वप्रवचनेषु च ।
श्रोत्रियान्वयजाश्चैव विज्ञेयाः पङ्क्तिपावनाः ॥"

इति मनुवचनाच्च । काश्यपाः — काश्यपगोत्रसम्भवाः । पञ्चाग्नयः— गार्हपत्याहवनीयदक्षिणाग्निसभ्यावसथ्याख्याः पञ्चाग्नयो यैरुपास्यन्ते । अथवा

"पञ्चाग्नयो मनुष्येण परिचर्याः प्रयत्नतः ।
पिता माताग्निरात्मा च गुरुश्च भरतर्षभ ॥"

इति महाभारतोक्तपञ्चाग्निशुश्रूषणपराः । धृतव्रताः— कृच्छ्रचान्द्रायणादितपः-परिशीलनसंस्कृतशरीराः ।

"व्रतं विष्णवृतुवर्षेज्यातपोमासाग्निभुक्तिषु ।"

इति वैजयन्ती । 'सोमपीथी तु सोमपः' इति वैजयन्ती । पञ्चाग्नय इत्यनेन

---

१. 'धृतव्रताश्चरणगुरवः सोमपीथिन उदुम्बर' क. पाठः. २. 'सोमपीथिन उदुम्बर' ग. घ. च. पाठः, ३ 'उदुम्बरनामानः प्रति' क. पाठः, ४. 'वादिनः । वसन्ति' ख. घ. छ. ञ. झ. ञ. पाठः.

---

१. 'स्तज्जीवैर्गृहीत्वा' क. पाठः. २. 'तैत्तिरीयिणः । अनेन' क. पाठः. ३. 'भूरिश्रुतमित्यादेः' ख. पाठः. ४. 'सोमपाः' इति ख. ग. च. पाठः. ५. 'इत्यमरः ।' ख. पाठः.

ते श्रोत्रियास्तत्त्वविनिश्चयाय भूरि श्रुतं शाश्वतमाद्रियन्ते ।
इष्टाय पूर्ताय च कर्मणेऽर्थान् दारानपत्याय तपोर्थमायुः ॥ ७ ॥

---

गतार्थत्वेऽपि सोमपीथिन इति वचनं ताच्छील्यं द्योतयति। चरणगुरवः — वेदशाखाविशेषाध्यापनाचार्याः ।

"न पृच्छेद् गोत्रचरणं न स्वाध्यायं न चागमम् ।"

इति वचनात् । अथवा

"आचारो वृत्तचारित्रचरित्रचरणानि च । "

इति वैजयन्ती । लौकिकानां स्वयमनुष्ठानेन सदाचारोपदेष्टारः ।

"श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम् ॥"

इति मनुवचनात् ।

"यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत् प्रमाणं कुरुते लोकस्तदनुवर्तते" ॥

इति भगवद्वचनात् । षण्मासमात्रपर्याप्तधान्यसंग्रही[1] गृहस्थः उदुम्बर औदुम्बरश्च[2] ।

'उदुम्बरस्तु षण्मासंसंग्रही तुल्यकालभुक् ।'

इति वैजयन्ती । ततस्तेन नाम्ना प्रसिद्धाः । ब्रह्मविषया वीतरागकथा ब्रह्मवादः, 'एकमेवाद्वितीयं' इत्यादिवेदान्तवाक्यशक्तितात्पर्यपर्यालोचनशीलाः । 'ब्रह्मणि वदः' (वा० ३-२-७८) इति णिनिः ॥

ते श्रोत्रिया इत्यादि । यद्यप्येकशाखामधीत्य श्रोत्रियः इति स्मर्यते, तथाप्यत्र ब्राह्मणत्वमात्रपरः श्रोत्रियशब्दः । पङ्क्तिपावनत्वादिभिः सर्ववेदाध्ययनादिगुणप्रतिपादनात् । तत्त्वविनिश्चयाय — ईश्वरयाथार्थ्यनिर्णयं[3] कर्तुं 'तुमर्थाच्च भाववचनात्' (२-३-१५) इति चतुर्थी । सदसदेकानेकनित्यानित्यादिविकल्पदुस्थपरस्परविरुद्धविविधराद्धान्तविह्वलीकृतबुद्धिस्थिरीकरणायेत्यर्थः । भूरि—बहु । शाश्वतं -संशयविपर्यासनिरसनेन निष्कम्पम् । श्रुतं—शास्त्रश्रवणं, आद्रियन्ते—अशुश्रूषात्वराश्लाघानिरासेन सम्भावयन्ति । 'बहुभ्यः श्रोतव्यं बहुधा श्रोतव्यं' इति वचनात् ।

---

१. 'संग्रहो' ख. पाठः. २. 'औदुम्बरश्च' ख, 'औदुम्बरस्तु' ग. घ. पाठः. ३. 'याथातथ्यनिर्णयं' क. पाठः.

"न ह्येकस्माद् गुरोर्ज्ञानमुत्थितं स्यात् सुपुष्कलम् ।"

"अथैतदद्वितीयं वै गीयते बहुधर्षिभिः" इति भागवतोक्तेः ।

"इष्टं योगात्मकं कर्म पूर्तं खातादिकर्म च"

इति वैजयन्ती । कर्म कर्तुरीप्सिततमं संयोगविभागयोरसमवायिकारणं वा, तदर्थम् । अर्थान् — धनानि ।

"षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका ।
याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः ॥"

इति स्मृतक्रमेणार्जनरक्षणादिभिः । दारान् — पत्नीं । 'दाराः पुंसि च भूम्नि च' इति पुल्लिङ्गत्वं नित्यबहुवचनान्तत्वं च । 'अपत्यं तोकं तयोः समे' इति स्त्रीपुंससाधारणोऽपत्यशब्दः, तदर्थम् ।

"स्त्रियः श्रियो गृहस्योक्तास्तस्मात् पूज्या विशेषतः ।"

इति स्मृतेः, वसनाभरणादिभिराचारपरिरक्षणेन च । तपोर्थं सकलपुमर्थतार्थाय धर्मानुष्ठानाय । "अर्थेन नित्यसमासः सर्वलिङ्गता च वक्तव्या' (पा० २. १. ३६) इति चतुर्थीसमासः नपुंसकत्वं च । आयुः — जीवितधारणकालम् । वेदाभ्यासादिभिरायुर्वेदोपदेशक्रमानुष्ठानेन च ।

"अनभ्यासेन वेदानामाचारस्य च वर्जनात् ।
आलस्यादन्नदोषाच्च मृत्युर्विप्रान् जिघांसति ॥"

इति मनुवचनात् । अत्र श्रुतमित्यृषीणामिष्टायेति देवानामपत्यायेति पितृणामृणापाकरणप्रवृत्तिः प्रतिपाद्यते । किञ्च तपोर्थमिति दारानित्यर्थानिति तत्त्वविनिश्चयायेति धर्मकामार्थमोक्षाख्यपुरुषार्थचतुष्टयावाप्तेः कृतकृत्यता च द्योत्यते । तपोर्थमायुरिति च सर्वसाधारणम् ।

"आयुः कामयमानेन धर्मार्थसुखसाधनम् ।
आयुर्वेदोपदेशेषु विधेयः परमादरः ॥"

---

१. 'खातादिकं' ख. घ. पाठः. २. 'पत्नीः' ख. घ. च. पाठः. ३. 'भूम्न्येव इति' च. पाठः. ४. 'समासवचनं सर्व' ग. च. पाठः. ५. 'सन्धारणकालं' ख, 'सन्धारकालं' ग. घ. च. पाठः.

तदामुष्यायणस्य तत्र भवतो भट्टगोपालस्य पौत्रः पवित्रकीर्तेर्नीलकण्ठस्यात्मसम्भवो श्रीकण्ठपदलाञ्छनः पदवाक्यप्रमाणज्ञो भवभूतिर्नाम कविर्निसर्गसौहृदाद् भरतेषु स्वकृतिमेवंप्रायगुणभूयसीमस्माकमर्पितवान् । यत्र खल्वियं वाचोयुक्तिः ॥

इत्युक्तेः । आदरणक्रियाया मध्यमध्यासीनायाः प्राकरणिकसर्ववाक्यार्थसम्बन्धात् तुल्ययोगितेयम् । अत्र च वाक्यचतुष्टयेन क्रमात् ख्यात्यादीनां द्रविणलोभस्य विषयलौल्यस्य देहाभिमानस्य चार्थतः पर्युदासात् परिसङ्ख्यालङ्कारः ॥ ७ ॥

तत् यस्मादेवं पद्मनगरे ब्रह्मवादिनः प्रतिवसन्ति तस्माद्धेतोः । 'आमुष्यायणामुष्यपुत्रिकामुष्यकुलिकेति वक्तव्यम्(वा० ६. ३. २१)इत्युपसंख्यानात् अलुक् । प्रख्यातपितृजातेऽपत्यप्रत्ययः ।

'प्रख्यातात् पितुरुत्पन्न आमुष्यायण ईष्यते'

इति हलायुधः । तत्र भवतस्तस्मिन् पद्मनगरे सम्भूतस्य । 'वर्तमानसामीप्ये वर्तमानवद्वा'(३. ३. १३१) इति शता, न पुनस्तत्रभवत इति पूजावाचित्वेन योजनीयः । प्रस्तुतब्राह्मणसम्बन्धप्रतिपादकशब्दान्तराभावात् पूजावाचिभट्टशब्दप्रयोगाच्च । भट्टाचार्यभट्टबाणादिवत् । पवित्रा पावनी । श्रीकण्ठपदलाञ्छनः — कनकपट्टादिनिविष्टा परमेश्वरपदन्यासमुद्रा शिखादिधृता लक्षणं यस्य । अनेन शिवभक्त्यतिशयः सूचितः । तत्त्वज्ञानमुषितदेवताभेदानामपि, "भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः" इति भगवद्वचनात् । तत्त्वज्ञानस्य भक्तिमन्तरेणानुपपत्तेर्भक्तेश्च पूर्वजन्मवासनावशात् कचिदेव देवताविशेषे सम्भवादेवमुक्तिः । न पुनर्भेददर्शितया । "द्वैतिनोऽतथ्यदर्शिनः" इति ।

१. 'कण्ठस्य पुत्रः श्री' ज. पाठः. २. 'सम्भवो भट्टश्रीकण्ठ' क. ग. छ. झ. ञ. 'सम्भवः पदवाक्यप्रमाणज्ञः श्रीकण्ठ' छ. पाठः. ३. 'लाञ्छनो भवभूति' छ. झ. ञ. पाठः. ४. 'भवभूतिर्नाम जातुकर्णीपुत्रः कविः' क. ग. च. ज. पाठः. भवभूतिनामा' झ. पाठः. ५. 'सौहृदेन' छ. ज. झ. ञ. पाठः. ६. भरतेषु वर्तमानः स्व' ख. घ. ङ. च. छ. ज. पाठः. ७. 'प्रगुणभूयसीं' छ. पाठः. ८. 'कं हस्ते समर्पितवान्' ज. पाठः. ९. 'अत्र' ख. छ. पाठः.

१. 'क्रियामध्यमध्यासीनायाः' ख. च. पाठः. २. 'सर्ववाक्यदीपनान्मध्यदीपकमिदम् । अत्र' क. पाठः. ३. 'उच्यते' ख. च. पाठः. ४. 'पाद' क. पाठः.

ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्ति ते किमपि तान् प्रति नैष यत्नः।
उत्पत्स्यते तु मम कोऽपि समानधर्मा
कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥ ८ ॥

"सृष्टिस्थित्यन्तकरणीं ब्रह्मविष्णुशिवात्मिकाम्।
स संज्ञां याति भगवानेक एव जनार्दनः" ॥

इति भेदनिन्दनादभेदप्रतिपादनाच्च। "श्रेष्ठः परमहंसानाम्" इत्यादिना स्वयं परमहंसपरिव्राजकान्तेवासित्वकथनात्,

"यद्वेदाध्ययनं तथोपनिषदां साङ्ख्यस्य योगस्य च ज्ञानम्" इति ज्ञानिलोक्तेश्च। पदमिति पदशुद्ध्युपलक्षितं व्याकरणशास्त्रम्, वाक्यं वाक्यविचारपरं मीमांसादिशास्त्रम्, प्रमाणं प्रमाणादिपदार्थलक्षणपरीक्षणविचक्षणमक्षपादादिशास्त्रम्, तानि जानातीति पदवाक्यप्रमाणज्ञः। भवभूतिर्नाम प्रसिद्धः। कविः प्राज्ञः काव्यकृच्च। 'प्राज्ञकाव्यकृतौ कवी' इति वैजयन्ती। निसर्गसौहृदात् अकृत्रिमं मित्रभावमवलम्ब्य। 'ल्यब्लोपे पञ्चमी'। निसर्गसौहृदेत्यनेन तत्कृतेः स्वैरवश्यमादरणीयत्वं द्योत्यते। स्वकृतिं स्वस्य कर्म। एवंप्रायगुणभूयसीं — एवंशब्दो भूम्नेत्याद्युक्तगुणपरामर्शकः। प्रायःशब्दस्तुल्यपर्यायः। एतादृशगुणबहुलाम्। एवंप्रायेति तादृशानां गुणान्तराणां नीतिशास्त्रयोजनादीनामपि बाहुल्यं सूचयति। अस्माकमिति। सम्प्रदानत्वविवक्षाभावात् सम्बन्धमात्रे षष्ठी। अर्पितवान् दत्तवान्। यत्र कृतौ। खलु प्रसिद्धौ। इयमिति वक्ष्यमाणपरामर्शः। वाचोयुक्तिः वागुपपत्तिः। 'वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु' (वा० ६. ३. २१) इति षष्ठ्या अलुक्॥

ये नामेत्यादि। नाम सम्भावनायाम्। 'नाम प्राकाश्यसम्भाव्यक्रोधोपगमकुत्सने' इति वैजयन्ती। केचिदिति सम्भाव्यमानत्वादेवानिर्धारितविशेषो निर्देशः। इहेति स्ववर्तनासन्नदेशपरामर्शः। नः इति। "अस्मदो द्वयोश्च"

१. 'उत्पत्स्यतेऽस्ति मम' झ. ञ. पाठः. २. 'मम तु कोऽपि' ख. घ. ङ. च. छ. ज. पाठः.

१. 'स्व' क, 'सत्संज्ञां' ख. पाठः. २. 'अकृत्रिममित्र' ख. पाठः. ३. 'शब्दः सदृशपर्यायः' ख. ग. घ. ङ. पाठः. ४. 'न इत्यात्मनि' ख. ग. घ. ङ. पाठः.

(१. २. ५९)इत्यात्मनि बहुवचनम् । प्रथयन्ति विस्तारयन्तीति स्वसमकालवर्तित्वं द्योतयति । अवज्ञां—अवमाननां 'रीढावमाननावज्ञावहेलनमसूर्क्षणं' इत्यमरः । इहावज्ञां प्रथयन्तीत्यनेन 'सन्निकर्षो हि मर्त्यानामनादरणकारणम्' इत्येतदनुस्मारयति । यथाह कविवल्लभः—

'संस्तुतादपरिज्ञातस्तस्माद्वैदेशिकः कविः ।
ततोऽपि तावत् स्वर्यातो भाति श्रद्धेयसूक्तिताम्' ॥

इति । किमपीति । तत्तावदर्वाचि पर्वणि तस्थुषामस्मादृशां परिच्छेदपदवीं न ढौकत इति भावः । तान्प्रति—तादृशान्महामतीन् लक्षीकृत्य । एष यत्नः एवं गुणप्रकरणनिर्माणसंरम्भरूपः प्रतिभाव्यापारपरिश्रमः । तर्हि कं प्रतीत्याकांक्षायामाह—उत्पस्यते जनिष्यते । तुशब्दो व्यावृत्तौ । न खलु सर्वे सर्वत्र सर्वदा त इव महामतयो भवन्तीति नियतिरित्यर्थः । कोऽपीति केचिदितिवत्सम्भाव्यमानत्वात् सामान्यनिर्देशः । समानधर्मा—मन्दबुद्धित्वाल्पश्रुतत्वादिगुणः सदृशो यस्य । 'धर्मादनिच् केवलात्' (५. ४. १२४) (इत्यनिच्) । अनुमानं चेदम् । तथा हि कोऽपीति धर्मिनिर्देशः । समानधर्मोत्पत्स्यत इति प्रतिज्ञा । कालस्य निरवधित्वे सति पृथ्व्या वैपुल्यादिति हेतुः ।

'अनादिर्भगवान् कालो नान्तोऽस्य द्विज विद्यते' इति, 'पञ्चाशत्कोटिविस्तीर्णा सेयमुर्वी महामुने' इति च विष्णुपुराणवचनात् । हिशब्देन प्रसिद्धिं ध्वनता सर्वजनसंवादकमुदाहरणमनुस्मार्यते । यथा भूते काले विपुले धरणीतले जातेषु मन्दात्मतया केचिन्मत्सधर्माणोऽपि जाताः श्रूयन्ते । अद्य च यथाहं जातस्तद्वदित्युपनयनिगमनवाक्ये अप्येवमूह्ये । तान् प्रति नेति निषेधसामर्थ्याच्च उत्पत्स्यते तं प्रतीत्यर्थसिद्धेः कं प्रतीत्याकांक्षा च पूरिता भवति । उत्तरार्धे च काव्यलिङ्गमलङ्कारः । शास्त्रानुमानवैलक्षण्येन हेतोर्वाक्यार्थतया निर्देशात् । किमपीति समानधर्मेति च स्तुतिनिन्दासाधारण्येन योजनीयौ । अत्र च गुरुचरणपरिचरणविमुखानामिदानीन्तनानां पल्लवग्रहणदुर्ललितानां क्षुल्लकानां गम्भीरमधुरसन्दर्भगर्भितरससुधानिर्झरोद्गारिषु सकलशास्त्रार्थकदम्बकप्रतिबिम्बनमणिमुकुरबिम्बेषु मादृशां प्रबन्धेषु जात्यन्धानामिव रत्नप्रवेकपरीक्षणेषु कुतस्त्योऽधिकारः? ॥

१. 'मन्दबुद्धित्वादिगुणः' क. पाठः. २. 'विद्यतेपरागत', घ. पाठः. ३. श्रीविष्णु ख. ग. घ. च. पाठः. ४. 'स्मारयति ।' ख. ग. च. पाठः. ५. 'तथा' ग. च. पाठः. ६. 'वल्लभग्रहण' क. पाठः.

तदुच्यन्तां तत्प्रख्यापनाय सर्वे कुशीलवाः यथास्वं सङ्गीतकप्रयोगे वर्णिकापरिग्रहे च त्वर्यतामिति । कविवर्णनं प्रति तैर्न त्वेवमुक्तम् ॥

---

अशक्तास्तत्पदं गन्तुं ततो निन्दां प्रकुर्वते"

इति न्यायेन अस्मन्निन्दैव तेषामसूयाज्वरदोषभेषजं भवतु । का हानिः । अन्यः पुनरवन्यां यत्र कुत्रचिद्यदाकदाचिदुत्पन्नो यः कश्चिदतिनिशितमतिरमलविपुलविद्याविद्योतितः सहृदयो मणिमिव मौलिमानयिष्यत्यामुखे भासमानायाः स्तुतेर्निन्दात्वेन प्ररोहाद्व्याजस्तुतिरलङ्कारः । केचिदिति खलानां कौलेयकानामिव बाहुल्यम् । कोऽपीति सुजनस्य विदुषो मृगमदस्येव दुर्लभता च द्योत्यते ॥ ८ ॥

तत्प्रख्यापनाय—तस्याः कृतेः प्रकाशनाय । 'भरतास्तु कुशीलवाः' इत्यमरः । यथास्वं स्वस्वव्युत्पत्त्यनतिक्रमेण ।

'नृत्तं गीतं च वाद्यं च त्रयं सङ्गीतमुच्यते'

इति हलायुधः । वर्णिका तत्तद्वेषः गाने गायकाः वाद्यवादने वादकास्तत्तद्वेषसंग्रहे च नर्तका इत्यर्थः । कविवर्णनं प्रतीति । प्रबन्धकर्तुः कविवर्णनं प्रशंसनरूपमङ्गमुद्दिश्येत्यर्थः । तेन कविना । तुशब्देनैतदाह — 'उत्पत्स्यते तु मम कोऽपि समानधर्मा' इत्युक्त्या स्फुरितस्य मदहङ्कारस्य गुरुप्रसाद एव निदानं नान्यत् किञ्चित्, 'आचार्यवान् पुरुषो वेद' इति श्रुतेः, सद्गुरुलाभश्च सकलसम्पदामुपरीति समाधानं कृतमिति ॥

---

१. 'तदुच्यतां' ख. पाठः. २. 'प्रवर्तन्तामिति' ख. घ. ङ. 'प्रवर्तन्ताम्' । च, 'यतन्तामिति' छ. पाठः. ३. 'वर्णनं प्रति तु' ङ, 'वर्णनां प्रति' ज. पाठः. ४. 'त्वेव' ख. घ. च. ज. पाठः.

---

१. 'मृगमदमृगस्येव' ग. घ. पाठः. २. 'वादित्रं त्रयं' ख. पाठः. ३. 'गायकाः' ख. ग. घ. ४. 'कवेर्वर्णनं', ५. 'इत्युक्तौ' ख. ग. घ. च. पाठः.

गुणैः सतां न मम को गुणः प्रख्यापितो भवेत् ।
यथार्थनामा भगवान् यस्य ज्ञाननिधिर्गुरुः ॥ ९ ॥

गुणैः सतामित्यादि । 'सद्भावे साधुभावे च सदित्येतत् प्रयुज्यते' इति साधुवाचकस्य सच्छब्दस्य सौजन्यादिगुणद्वारेणैव प्रवृत्तेर्गुणवन्त[1] एव सन्त इति स्थितम् । अतः सतां गुणैर्न पुनरस्माकं गुण्यपेक्षेति भावः । अनेन गुणानामेव[2] परोपकारपरता नैसर्गिकीति[3] द्योत्यते ।

'तथा हि सर्वे तस्यासन् परार्थैकफला गुणाः' ।

इतिवत् । क इति । निरवग्रहेण सर्वनाम्ना वस्तुतः सन्नसन्नपीति[4] ध्वन्यते । गुणः वादित्वकवित्वादिः । प्रख्यापितः प्रकाशितः । भवेदित्यनवक्लृप्तौ लिङ् । अत्र हेतुमाह—यथार्थनामा अभिधेयमनतिक्रान्तं नाम पदं यस्य । भगवान् जगदुत्पत्त्यादिसर्वविज्ञानसम्पन्नः । भगवच्छब्देन परमहंससन्न्यासित्वमपि सूचयति ॥

'भगवद्भिरिदं गुरुभक्तियुतैः पठितव्यमपाठ्यमतोऽन्यजनैः' ।

इत्याद्याचार्यवचनात् 'श्रेष्ठः परमहंसानाम्' इति कविनैव महावीरचरिते प्रतिपादितत्वाच्च । ज्ञाननिधिः ज्ञानान्यस्मिन्निधीयन्ते इत्यधिकरणे घोः किः । यथा धनदेवता निरवधिरत्नादिनिधानान्निधय इति व्यपदिश्यन्ते[5] तथेति नामपदकथनम् । गुरुरिति परमोपकारितया पित्रादिभ्यो[6] मान्यत्वं ध्वन्यते ।

"स गुरुर्यः क्रियाः कृत्वा वेदमस्मै प्रयच्छति" ।

इति याज्ञवल्क्यस्मरणात् ॥

"उत्पादकब्रह्मपित्रोर्गरीयान् ब्रह्मदः पिता ।
ब्रह्मजन्म हि विप्रस्य प्रेत्य चेह च शाश्वतम्" ॥

इति मनुवचनाच्च । अत्र गुरुविषयो भावः प्रतीयते । उदात्तमलङ्कारः । महापुरुषचरितस्याङ्गत्वेन वर्णनात् ॥ ९ ॥

---

१. 'गुणवन्तः सन्त', २. 'गुणानामेव तु परो' ख. ग. घ. पाठः. ३. 'नैसर्गिकी द्यो' घ. ग. च. पाठः. ४. 'सन्नपीति' क. पाठः. ५. 'इत्युच्यन्ते' ख, 'इत्यपदिश्यन्ते' ग. घ. च. पाठः. ६. 'पित्र्यादिभ्यो'. ग. घ. पाठः.

अपि च—

यद्वेदाध्ययनं तथोपनिषदां साङ्ख्यस्य योगस्य च
ज्ञानं, तत्कथनेन किं नहि ततः कश्चिद्गुणो नाटके।
यत्प्रौढित्वमुदारता च वचसां यच्चार्थतो गौरवं
तच्चेदस्ति ततस्तदेव गमकं पाण्डित्यवैदग्ध्ययोः॥ १०॥

अपिचेति पूर्वोक्त्या समुच्चिनोति।

यद्वेदाध्ययनमित्यादि — कर्मोपासनाज्ञानकाण्डलक्षणस्य सर्वस्यापि वेदस्यानुष्ठानसाधनार्थज्ञानपूर्वकं ग्रहणम्। वेदो नाम परमेश्वरान्निश्वसितवदनायासेनाविर्भूतत्वादपौरुषेयसन्दर्भो गभस्तिमालिवत् समस्तपुरुषार्थप्रकाशकोऽनादिरनन्त उदात्तादिस्वरोच्चार्यः परमप्रमाणभूतः शब्दराशिः। तथेति। तेन प्रकारेण। स्वरूपग्रहणपूर्वकमित्यर्थः। उपनिषदां जीवेश्वरैक्यविषयसम्यक्ज्ञानप्रतिपादनैकपराणां वेदान्तानाम्।

'यस्माच्च निर्गता वेदा वेदान्तान्यखिलानि च' इति।
"वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम्"

इतिवत्। वेदशब्देनैवोपसंगृहीतत्वेऽपि पृथगुपादानमन्तःकरणशोधनसाधनतया ज्ञानाङ्गभूतकर्मप्रतिपादकात् पूर्वभागात् परमानन्दरूपविदेहकैवल्यसाधनज्ञानप्रतिपादकस्योत्तरभागस्याभ्यर्हितत्वं द्योतयति।

"सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते"।

इति भगवद्वचनात्

"प्रत्यक्प्रवणतां बुद्धेः कर्माण्युत्पाद्य शुद्धितः।
कृतार्थान्यस्तमायान्ति प्रावृडन्ते घना इव"॥

इति श्रीविश्वरूपाचार्यवचनाच्च। ज्ञानं शक्तितात्पर्यपर्यालोचनेन प्रमेयनिर्णयः। उपनिषदां ज्ञानमिति। 'कर्तृकर्मणोः कृति' (२-३-६५) इति कर्मणि

१. 'किञ्च' छ. पाठः. २. 'पुनः कश्चिद्' च. पाठः. ३. 'प्रौढत्वं' ख. घ. ङ. पाठः. ४. 'वैदग्ध्ययोः॥ अतो यदस्माकमर्पितं प्रियसुहृदात्रभवता भवभूतिनाम्ना प्रकरणं स्वकृतिर्मालतीमाधवं नाम तदेव तत्रभवतः कालप्रियनाथस्य पुरतः प्रयोगेण प्रख्यापयितुमुद्यताः। तत्सर्वे कुशीलवाः सङ्गीतप्रयोगेण मत्समीहितसम्पादनाय प्रवर्तन्ताम्। नटः—(स्मृत्वा) एवं क्रियते युष्मदादेशः, किं तु या यस्य युज्यते भूमिका तां खलु तथैव भावेन सर्वे वर्ग्याः पाठिताः।' झ. ञ. पाठः.

१. 'वदनाविर्भूत' ग. घ. पाठः. २. 'प्रतिपादकोत्तर' घ. पाठः. ३. भागस्याभ्यर्चितत्वं' ग. घ. पाठः.

षष्ठी । पूर्वनिर्देशात् स्वाभिमतत्वं वेदान्तज्ञानस्य प्रकाशयति । सांख्यस्येति । मूलप्रकृतिरविकृतिः सत्त्वरजस्तमसां साम्यावस्थारूपा चिच्छक्तिशून्या पुरुषस्य भोगमोक्षार्थं स्वत एव प्रवर्तमाना परिणामपरिस्पन्दव्यापारा[1] प्रसवधर्मिणी सकलपुरुषसाधारणभोग्य[2]स्वरूपा च । पुरुषस्तु ज्ञानमात्रस्वरूपो निर्गुणो निष्क्रियो निष्परिणामो न[3] च विकृतिः न च प्रकृतिः, तस्य चाज्ञानविज्ञाननिबन्धनौ बन्धमोक्षौ । पुरुषाश्च बहवः प्रतिदेहं भिन्नाः[4] सर्वे सर्वगताश्च । महानहंकारस्तन्मात्राणि च स्वकारणं प्रति विकृतयः स्वकार्यं प्रति प्रकृतयः इत्युभयरूपाः प्रकृतिविकृतयः, एकादशेन्द्रियाणि पञ्चभूतानि चेति षोडश[5] विकृतय एवेति[6] पञ्चविंशतिस्तत्त्वानि । ईश्वरो नाभ्युद्गम्यते[7] । पुरुषार्थस्य हेतोः स्वयमेव क्षीरवत् प्रवर्तमानायाः प्रकृतेः किमन्तर्गडुना प्रमाणशून्यप्रवर्तकान्तरपरिग्रहेणेत्याद्यर्थप्रतिपादकं दृष्टानुमानागमप्रमाणकं कपिलमुनिप्रणीतं शास्त्रं साङ्ख्यं नाम । योगस्येति । योगो नाम हैरण्यगर्भं शास्त्रम् । तत्रापि सांख्यवत्तत्त्वानि प्रमाणानि च । ईश्वरस्तु धर्म्याधर्म्यकर्मफलप्रदाता[8] षड्विंशको[9]ऽभ्युपगम्यते । विकारेषु च प्रकृतेर्महान् जायते, महतः षड्विशेषाः अहंकारः पञ्च तन्मात्राणि[10] च । तत्राहंकारस्याविशेषस्य विशेषा एकादशेन्द्रियाणि शब्दतन्मात्रताविशेषस्य विशेष आकाशः । एवं स्पर्शतन्मात्रादीनामविशेषाणां वाय्वादयो विशेषा इत्यादि प्रतिपाद्यते । सांख्यस्य योगस्य ज्ञानमिति सम्बध्यते । चकारोऽनुक्तसमुच्चयार्थः । पाञ्चरात्रपाशुपतयोश्चेत्यर्थः । तयोरपि शिष्टैः[11] प्रमाणत्वाभ्युपगमात् ।

"सांख्यो[12] योगः पाञ्चरात्रं[13] वेदाः पाशुपतं तथा ।
एतान्यपि प्रमाणानि न हन्तव्यानि हेतुभिः ॥"

इति महाभारतोक्तेः । 'त्रयी सांख्यं योगः पशुपतिमतं वैष्णवमि'ति भट्टाचार्योक्तेश्च । एषां च प्रतिपादनप्रकारभेदेऽपि प्रतिपाद्यपरतत्त्वैक्यादवश्यज्ञेयत्वम् । अन्येषां तु दर्शनानां केषाञ्चित् पूर्वपक्षत्वेन बाध्यत्वात् केषाञ्चिद्विमर्दासहत्वेन हेयत्वान्नैतद्-

१. 'व्यापारः' क. पाठः. २. 'भोगरूपा' घ. पाठः. ३. 'न विकृतिः' ख. ग. च. पाठः. ४. 'भिन्नास्ते सर्वे' ख. च. पाठः. ५. 'षोडश विकाररूपाः प्रवर्तका' क. पाठः. ६. 'एवेति च' ग. घ. च. पाठः. ७. 'नाभ्युपगम्यते' ख. च. पाठः. ८. 'फलदाता' ख. ग. घ. च. पाठः. ९. 'षड्विंशो' ख. पाठः. १०. 'तन्मात्राणि ।' ग. ख. घ. च. पाठः. ११. 'विशिष्टैः' ग. घ. पाठः. १२ 'साङ्ख्ययोगः' ग. घ. च. पाठः. १३. 'पञ्चरात्रं' ख. ग. घ. च. पाठः.

ग्रहणमिति वेदितव्यम् । तत्कथनेन, ममेति पूर्वश्लोकादायाति, एकवक्तृकत्वात् । मम तदस्तीति वचनेन किं फलमिति शेषः । ततस्तत्कथनाद् ज्ञानाद्वा । कश्चिदेकः । अपिशब्दोऽध्याहर्तव्यः । गुण उपकारः । नाटक इति । नाटकस्य प्रकरणप्रकृतित्वात् कारणेन कार्यव्यपदेशः । न कश्चिदप्युपकार इत्यर्थः । अथवा कश्चिच्छब्दोऽपरिच्छेद्यमुखेन मुख्यवाचकः, 'यः कश्चिद्विक्रमोऽयं' 'कोऽप्येष वीरशिशुकाकृतिः' इत्यादिषु तथा दर्शनान्मुख्य उपकारो नास्ति, अस्योपस्कारकत्वमात्रम् । उपस्कार्यायाः शक्तेरेव कवित्वं प्रति प्राधान्यमिति भावः । व्युत्पत्तितः शक्तेरेव कवित्वं प्रति प्राधान्याद् अव्युत्पत्तिकृतस्य दोषस्य शक्त्या तिरस्क्रियमाणत्वात् । अशक्तिकृतस्य तु व्युत्पत्त्या निह्नोतुमशक्यत्वात् । बहुज्ञस्यापि लोके शक्तिवन्ध्यस्य त्रिचतुरपदगुंभनारम्भेऽपि स्तम्भकम्पादिसम्भ्रमशालिनः, समरधरणीमवतरत इव कातरस्य, वचःप्रसरानिष्पत्तौर्निष्पत्तौ वा हास्यायतनत्वात् । किञ्चिज्ज्ञस्यापि तु शक्तिमतः किमपि रचयितुमुन्मुखस्य सिद्धाञ्जनरञ्जितदृश इव महानिधीनां स्वरसत एवाहमहमिकयाहंपूर्विकया च विविधभङ्गितरङ्गितानां शब्दानां प्रादुर्भावादन्वयव्यतिरेकाभ्यां कवित्वबीजरूपसंस्कारविशेषात्मिका शक्तिरेव प्रधानम् । व्युत्पत्तिस्तु तदुपस्कारिकेति निर्णयः । प्रपञ्चितश्चायमर्थो ध्वनिकारैः । अतः शक्तिकार्यमाह— यत् प्रौढित्वमित्यादि ॥

'उक्तेः प्रौढः परीपाकः प्रोच्यते प्रौढिसंज्ञया' ।

इति श्रीभोजः । पाकश्च लक्षितो वामनेन —

"यत्पदानि त्यजन्त्येव परिवृत्तिसहिष्णुताम् ।
तं शब्दन्यासनिष्णाताः शब्दपाकं प्रचक्षते" ॥

इति । नालिकेरसहकारमृद्वीकापाकेषु नालिकेरपाकश्चायमिष्यते । क्रमोत्कर्षात् दृढमधुरत्वाच्च ।

'पदार्थे वाक्यवचनं वाक्यार्थे च पदाभिधा ।
प्रौढिर्व्याससमासौ च साभिप्रायत्वमस्य च ॥'

इति वामनेनार्थद्वारापि प्रौढिरुक्ता । तदुभयमप्यत्र स्वीक्रियते ।

१. 'एकवक्तृत्वात्' च. पाठः. २. 'प्रकृतिकत्वात्' क पाठः. ३. 'शक्तेरेव प्राधान्य' ग. घ. च. पाठः. ४. 'शक्तिवन्धस्य' ग. घ. पाठः. ५. 'प्रसरानिष्पत्तौ' च. पाठः. ६. 'तैः' शक्ति' क. ख. ग. घ पाठः. ७. 'ढौत्वमित्यादि' क. ङ. पाठः. ८. 'प्रौढसंज्ञया च. पाठः.

'विकटाक्षरबन्धत्वमार्यैरौदार्यमुच्यते ।'

इति श्रीभोजः ।

'उत्कर्षवान् गुणः कश्चिदुक्ते[1]र्यस्मिन् प्रतीयते ।
तदुदाराह्वयं तेन सनाथा काव्यपद्धतिः ॥'

इति दण्डिनः । तदु[2]भयं गृह्यते । शब्दार्थगतत्वेन द्वयोरङ्गीकारात् । अर्थतो गौरव-मभिधेयस्य लाघवप्रतियोगिको गुणः । विमर्दसहत्वं व्यङ्ग्यप्राधान्येन चमत्कार-कारित्वं च । लाघवे पुनस्तार्किकगोचरं गतस्यार्थस्य चण्डमारुतोल्लुण्ठितस्य तूलपिण्डस्येव शतधा खण्डनप्रसङ्गात् । अर्थतः इति षष्ठ्यर्थे तसिः । प्रौ(ढ ? ढि)-त्वमुदारता चेति । यदिति द्वाभ्यां वचसां विशेष्यमाणत्वादेकस्य यदुपादानं गौरवेण अर्थस्यैव विशेष्यमाणत्वात् पृथक् यच्छब्दोपादानमिति मन्तव्यम् । तदिति वाक्यार्थभूतं वस्तु परामृश्यते । ततः तस्मिन्नाटके । सप्तम्यर्थे तसिः । तदेव[3] तद्वस्त्वेव । गमकं ज्ञापकम् । गत्यर्थानां बुद्ध्यर्थत्वात् । पाण्डित्यं पण्डितस्य कर्म भावो वा शब्दार्थज्ञानं बाहुश्रुत्यं च ।

'पण्डा तु संस्कृता बुद्धिस्तद्वान् [4]पण्डित उच्यते ।'

वैदग्ध्यं विदग्धस्य कर्म भावो वा । व्यङ्ग्यार्थसंवित् व्यञ्जकशब्दप्रयोगसामर्थ्यं च ।

'अग्राम्ये सरलोदारविदग्धच्छेकदक्षिणा ।'

इति वैजयन्ती । बोद्धृत्वविदग्धत्वव्यपदेशयोः शब्दार्थसाधनज्ञानमात्रव्यङ्ग्य-ज्ञानकार्यत्वस्य काव्यप्रकाशे प्रतिपादनात् । 'पण्डितो वाप्यनात्मवान्' इति महाभारते च पण्डितात्मवतोर्भेदप्रतिपादनात् । 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' (५-१-१२४) इति ष्यञ् । चेदिति । अनेन परीक्षकान् प्रति यत्नतः परी-क्षणप्रा[5]र्थना सूच्यते । अत्र पूर्वार्धे कृतस्य [6]कथनस्याक्षेपादाक्षेपः । उत्तरार्धे यद्यर्थोक्तौ कल्पनादतिशयोक्तिरर्थापत्तिश्चालङ्कारः । अस्ति दक्षिणापथ इत्या-दिना पाण्डित्यवैदग्ध्ययोरित्यन्तेन प्रकरणेन भरतविहितेतिकर्तव्यतारूप-सम्बन्धाभिधेयप्रयोजनज्ञापनार्थं कविना स्वगोत्रनामनी प्रतिपादिते ।

१. 'दुक्ते यस्मिन्', २. 'तदप्युभयं' ख. ग. घ. च. पाठः. ३. 'तदेतद्व-स्त्वेव' ख. घ. च. पाठः. ४. 'पण्डितः । वैदग्ध्यं', ५. 'प्रार्थनां सूचयति ।' ख. ग. घ. च. पाठः. ६. 'कथनाक्षेपादाक्षेपः' ख. पाठः.

**नटः** — ता भूमिकास्तदैव भावेन सर्वे वर्ग्याः पाठिताः । सौगतजरत्प्रव्राजिकायास्तु कामन्दक्याः प्रथमां भाव एवाधीते, तदन्तेवासिन्यास्त्वहमवलोकितायाः ।

---

'यानुदाहरन्त्यार्यमिश्राः' इत्यादिना परिषदः पूजा । 'भूम्ना रसानाम्' इत्यादिना परमानन्दानुभवः परमप्रयोजनम् । व्युत्पत्त्यादयस्त्ववान्तरफलानि सूचितानि । 'प्रकरणनायकस्य मालतीवल्लभस्य माधवस्य' इति वक्ष्यमाणेन मालतीमाधवौ नायकौ, तावधिकृत्य कृतो ग्रन्थो मालतीमाधवमिति प्रकरणनाम च सूचितं वेदितव्यम् । 'लुबाख्यायिकाभ्यः प्रत्ययस्य बहुलम्' (वा० ४-३-८७) इति लुप् । अण् वा । यथोक्तं भरतेन —

'गोत्रं नाम च गृह्णीयात् पूजावाक्यं च पार्षदः ।
नाटकस्य च यन्नाम गर्भनिर्दिष्टलक्षणम् ॥'

इति । अथ —

'दिव्यमर्त्ये स तद्रूपो मिश्रमन्यतरस्तयोः ।
सूचयेद्वस्तुबीजं वा मुखं पात्रमथापि वा ॥'

इति वचनात् ॥ १० ॥

भङ्ग्या पात्रसूचनमुखेन काव्यार्थं स्थापयति — **नटः** — ता इति । तच्छब्दोऽनुभूतं परामृशति । 'तत्तद्वेषस्तु भूमिका' इति वैजयन्ती । भूमिकाशब्देनात्र तदनुगुणः कविव्यापारभूतः शब्दसन्दर्भ उच्यते । 'शृणुत मनोभिरवहितैः क्रियामिमां कालिदासस्य' इत्यत्र शृणुतेति, न तु पश्यतेत्युक्तेः । तदैव — यदा स्वकृतिमर्पितवान् तदनन्तरमेवेत्यर्थः । वर्ग्याः । असमूथभवाः 'दिगादिभ्यो यत्' (४-३-५५) । पाठिताः अध्यापिताः । 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्म-

---

१. 'ताः खलु भूमि' ख. घ. ङ. 'तावद्भूमिकाः सर्वाः खलु तदैव' छ. 'ताः खलु भूमिकाः सर्वास्तदैव' घ. 'तावद्भूमिकास्तदैव भावेन सर्वे वर्ग्याः पठिताः' ज. पाठः. २. 'प्रव्राजिकायाः काम' क. ग. च. ज. पाठः. ३. 'प्रथमभूमिका' क. ख. ग. घ. ङ. च. छ 'प्रथमां भूमिकां' ज. झ. ञ. पाठः. ४. 'भाव एक एव' ज. 'भाव एकोऽधीते' च. पाठः.

---

१. 'भूम्नेत्यादिना' ख. ग. घ. च. पाठः. २. 'लुप् । यथोक्तं' क. पाठः. ३. 'भरते —', ४. 'गृह्णीयात्' ख. ग. घ. च, पाठः. ५. 'पर्षदः' ग. घ. च. 'परिषदः' ख. पाठः. ६. 'तद्रूपौ' ख. ग. घ. च. पाठः. ७. 'न पश्यतेत्युक्तेः' क. पाठः. ८. 'गतिबुद्धीत्यादिसूत्रेण शब्दकर्मकत्वाद्' ग. घ. पाठः.

**सूत्रधारः** — ततः किम् ?

**नटः** — [1]प्रकरणना[2]यकस्य मालतीवल्लभस्य माधवस्य वर्णिकापरिग्रहः कथम् ?

**सूत्रधारः** — कलहंसम[3]करन्द[4]प्रवेशावसरे तत्सुविहितम् ।

**नटः** — तेन हि [5]तत्प्रसिद्धप्रयोगादेवात्रभवतः सामाजिकानुपास्महे ।

**सूत्रधारः** — बाढं, एषोऽस्मि कामन्दकी संवृत्तः ।

---

काणामणि कर्ता स णौ' (१-४-५२) इति शब्दक[1]र्मकत्वाद् द्विकर्मकता । **सौगतजरत्प्रव्राजिकायाः**, बौद्धसिद्धान्तवर्तिन्या वृद्धायाः सन्न्यासिन्याः कामन्दकीति संज्ञा । **प्रथमां** सर्वपात्रादिभूताम् । अधीते पठति । तदन्तेवासिन्यास्तच्छिष्यायाः । 'शयवासवासिष्वकालात्' (६-३-१८) इति सप्तम्या अलुक् । अवलोकितेति संज्ञा । अधीय इति सामर्थ्यात् पुरुषविपरिणामः । भूमिकामिति च तुशब्देनाकृष्यते ।

अनुवाचस्य विधेयमुख[2]प्रेक्षित्वमाशङ्क्य सूत्रधारः पृच्छति — **ततः किमिति** । तस्मात्तव किं विवक्षितमित्यर्थः ।

**कथं** केन प्रकारेणेत्यवसरप्रश्नः ।

तस्योत्तरमाह — **कलहंसमकरन्दप्रवेशावसर** इति । कलहंसो माधवस्य चेटः । मकरन्दः सुहृत् । कलहंसमकरन्देत्युद्देशक्रमेण प्रवेशक्रमं सूचयति — **तदिति** । तद्वस्त्वित्यर्थः । **सुविहितं** कर्तव्यत्वेन सुष्ठु शिक्षितमित्य[3]र्थः ।

**तेन हीति** । एवं सुविहितप्रयोगतयेत्यर्थः । **अत्रभवतः** पूजनीयान् । **सामाजिकान्** समाजे भवान् । 'तत्र भवः' (४-३-५३) इति ठञ् । **उपास्महे** [4]सेवामहे ।

**बाढं** दृढं, युक्तमित्यर्थः । भूमिकापरिग्रहज्ञापित्यात् क्रियादाक्ष्यं प्रकाश-

---

१. 'ततः प्रकरण' ख. घ. ङ. च. छ. झ. ञ. पाठः. २. 'नायकस्य वर्णिका' च. ३. 'मकरन्दयोः प्रवे' अ. ४. 'प्रवेशानन्तरं तत' ख. च. पाठः. ५. 'तत्प्रबन्धप्रयोगादेव' ख. च. छ, ञ. 'तत्प्रयोगादेव' झ. घ, 'प्रबन्धप्रयोगादेव' ख, 'तत्प्रबन्धप्रयोगेणैव' घ. पाठः.

---

१. 'कर्मत्वाद्' ख. ग. घ. पाठः. २. 'प्रेक्षित्वमाशङ्क्य' ग. घ. पाठः. ३. 'सुविहितयेत्यर्थः' घ. पाठः. ४. 'संसेवामहे' ख. ग. घ. च. पाठः.

नटः — (सस्मितं) अहमप्यवलोकिता । (इति परिक्रम्य निष्क्रान्तौ ।

प्रस्तावना ।

(परिवृत्य रक्तपटिकानेपथ्यौ उभावुपविष्टौ प्रविशतः)

कामन्दकी — वत्से ! अवलोकिते !

---

यति — एषोऽस्मीति । विधेयस्य कामन्दकीत्वस्योद्देश्ये विश्रान्त्या संवृत्त इत्येतदो विशेषणात् पुलिङ्गता ।

नटः सस्मितमिति । स्पर्धया दाक्ष्यं प्रकाशयति — अहमपीति । संवृत्त इति सम्बध्यते पूर्ववत् ।

परिवृत्य नेपथ्यं गत्वेत्यर्थः । रक्तपटिकानेपथ्यौ तत्समयसिद्धचीवरपर्यायकषायदखाकङ्कारो । उपलक्षणं चैतदन्येषां कमण्डलवादीनां यतिलिङ्गानाम् । उपविष्टौ गुरुशिष्योचितासनासीनावित्यर्थः । प्रविशत इति नटप्रवाहरूपेण वर्तमानत्वाद्वर्तमाननिर्देशः । एते च मध्यमाधमे विष्कम्भपात्रे इति मन्तव्यम् ।

'आदौ विष्कम्भकं कुर्यादङ्कं वा कार्ययुक्तितः ।
अपेक्षितं परित्यज्य नीरसं वस्तुविस्तरम् ॥
यदा सन्दर्शयेच्छेषं कुर्याद्विष्कम्भकं तदा ।'

इत्युक्तेः ।

'वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः ।
संक्षेपार्थस्तु विष्कम्भो मध्यपात्रप्रयोजितः ॥
एकानेककृतः शुद्धः सङ्कीर्णो नीचमध्यमैः ।'

इत्युक्तेः सङ्कीर्णश्चायम् । अत एव संस्कृतप्राकृतमिश्रत्वम् ।

'पाठ्यन्तु संस्कृतं नृणामनीचानां कृतात्मनाम् ।
लिङ्गिनीनां महादेव्या मन्त्रिजावेश्ययोः क्वचित् ॥'

---

१. 'नटः — अहमपि' छ. झ. पाठः. २. 'अहमवलोकिता संवृत्तः । इति प्रस्तावना ।' च. पाठः. ३. 'ता । परिक्रम्य रक्तपटिका' ख. ङ. 'ता । इति प्रस्तावना ।' ग. छ. पाठः. ४. 'ततः परिवृत्य रक्त' झ. ञ. पाठः. ५. 'नेपथ्यावुपविष्टौ' ख. घ. ङ. च. छ. पाठः.

---

१. 'विशेषणं' ग. घ. पाठः. २. 'अहमपि संवृत्त' ग. घ. च. पाठः.

अवलोकिता — आणवेदु भअवदी । (आज्ञापयतु भगवती)।

कामन्दकी — अपि नाम (कार्यं) कल्याणिनोर्भूरिवसुदेवरातापत्ययोर्मालतीमाधवयोरनयोरभिमतः पाणिग्रहः स्यात् ?

---

इत्युक्तेर्लिङ्गिनीत्वात् पूर्वस्याः संस्कृतव्यवहारः । अन्यस्यास्तु लिङ्गिनीत्वेऽपि शिष्यात्वात् प्राकृतव्यवहारः । प्रथमं प्रव्राजिकाप्रवेशश्च कामसूत्रप्रयोजनस्यारम्भ इति मन्तव्यम् ।

'गान्धिकमालिकरजकस्त्री प्रव्राजिकाथ विक्रेत्री ।
धात्री प्रतिवेशनिका स्थिरभावा दूत्य एताः स्युः ॥'

इति कामसूत्रोक्तेः । भगवतीत्यामन्त्रणं च ।

'भगवन्तोऽधमैर्वाच्या विद्वद्देवर्षिलिङ्गिनः ।

इत्युक्तेः । वत्स इति च ।

'रथी सूतेन चायुष्मान् पूज्यैः शिष्यात्मजानुजाः ।
वत्स तातेति पूज्योऽपि सुगृहीताभिधश्च तैः ॥'

इत्युक्तेः । एवमन्यत्राप्यौचित्यानुसारः कर्तव्यः ।

आज्ञापयतु भगवती । अनेन तद्वचने वक्ष्यमाणे बहुमानातिशयं सूचयति ।

अपि नामेत्यादि । अत्र हेतुः—कार्यं—धर्मार्थानुबन्धि कामात्मकम् ।

'कार्यं त्रिवर्गस्तच्छुद्धमेकानेकानुबन्धि च ।'

इति वचनात् । तथाहि—चरितब्रह्मचर्यस्यास्य सर्वोपकारक्षमं द्वितीयमाश्रममवलम्बितुं प्राप्तकालस्य सहधर्मचारिणीलाभो यज्ञपञ्चकसाधनत्वात् सुखहेतुत्वाद्राजामात्यरूपबन्धुलाभानुबन्धित्वाच्च त्रिवर्गमूलम् ।

---

१. 'भअवई' ख. घ. पाठः. २. 'नाम तयोः कल्या' क. ख, 'नाम कल्या' ख. छ, 'नामानयोः कल्या' घ. ङ. च. पाठः. ३. 'त्ययोरभिमतः' च. पाठः. ४. 'मतं पाणिग्रहणं' छ, 'मतं पाणिग्रहमङ्गलं' ज. पाठः.

---

१. 'योजनारम्भ' ख. ग. घ. च. पाठः. २. 'गान्धिक' ग. घ. पाठः. ३. 'भगवन्तोऽधरैर्वाच्या', ४. 'वत्सेति तात पूज्यो' क. पाठः. ५. 'एवमन्यत्राप्यौचित्यादनु' ग. घ. पाठः. ६. 'महायज्ञ' ख. ग. घ. च. पाठः.

([1]वामाक्षिस्पन्दनं सूचयित्वा सहर्षम्)

विवृण्वतेव कल्याणम[2]न्तरङ्गेन चक्षुषा ।
स्फुरता वामकेनापि दाक्षिण्यमवलम्ब्यते ॥ ९ ॥

---

'यदा भर्ता च भार्या च परस्परवशानुगौ ।
तदा धर्मार्थकामानां [1]त्रयाणामपि सङ्गतिः ॥'

इति महाभारतोक्तेः । अतस्तत्कार्यबीजं सचिवस्थानीयकामन्दकीमुखेनोपक्षिपति । तदायत्त[2]सिद्धित्वान्नेतुः ।

'स्तोकोद्दिष्टस्तु तद्धेतुर्बीजं विस्तार्यनेकधा ।'

इति वचनात् । अपि नामेति सम्भावनाद्योतकमव्ययम् । कल्याणिनोः कल्याणं पुण्यकर्म, तद्वती कल्याणिनी, तद्वान् कल्याणी । अत इनिः । तयोः कल्याणिनोः । 'पुमान् स्त्रिया' (१-२-६७) इत्येकशेषः । अनेन दैवसम्पन्नत्वादव्यभिचरितसिद्धित्वं [3]तयोः, अतिस्नेहः पुनरस्मान् व्याकुलयतीति द्योत्यते । अनयोरिति [4]सन्ततबुद्धिस्थत्वादपरोक्षनिर्देशः । [5]भूरिवसुदेवरातापत्ययोरिति । [6]यथासङ्ख्येन भूरिवसोरपत्यं मालती देवरातस्यापत्यं माधवः, तयोः । अनेन समानसम्बन्धश्लाघ्यत्वं व्यज्यते । अभिमतोऽस्माकमिष्टतमः । पाणिग्रहो विवाहः । [7]स्यादिति संप्रश्ने लिङ् ।

सहर्षम् अभिलषितार्थसिद्धिसूचकसुनिमित्तजनितश्चित्तप्रसादो हर्षः ।

'प्रसत्तिरुत्सवादिभ्यो हर्षोऽश्रुस्वेदगद्गदाः ।' इत्युक्तेः ।

विवृण्वतेवेत्यादि । विवृण्वता इदं त्वत्समीप एव वर्तमानमभीष्टार्थरूपं मङ्गलं दृश्यतामिति दर्शयतेव, न पुनः कथयतेति । अनेनाव्यभिचारित्वानुभावः प्रकाश्यते । 'रामं पुरस्तात्स्थितमाचचक्षे' इतिवत् । अन्तरङ्गेन अवसरं जानता । सन्देहसमये स्फुरणात् । 'अत्रान्तरे सरस्वत्यवतरणवार्ताम्' इतिवत् ।

---

१. '(सहर्षं वामाक्षिस्पन्दनमभिनीय)' छ. २. 'आन्तरङ्गेन' छ. ज. झ. ञ. पाठः.

---

१. 'त्रयाणां तत्र स' ख. ग. घ. च. पाठः. २. 'सिद्धत्वान्नेतुः' ग. घ. पाठः. ३. 'तयोरिति' क. ख. पाठः. ४. 'सतत', ५. 'भूरिवस्वित्यादि ।' ख. ग. घ. च. पाठः. ६. 'यथासङ्ख्यं' ख. पाठः. ७. 'स्यात् संप्रश्ने' ख. ग. घ. च पाठः. ८. 'चरितत्वाद्' ख. पाठः. ९. 'अवः' ख. ग. घ. पाठः.

'आतोऽनुपसर्गे कः' (३-२-३) । स्फुरतः स्पन्दमानेन । वामकेन सव्येन । स्वार्थे कः । अनुकम्पायां वा ।

'दाक्षिण्यं नाम तत्प्राहुरनुकूलप्रवृत्तिषु ।
प्राणानप्याददानस्य स्थातुं शक्तिर्न यद् भवेत् ॥'

इति लक्षितम् । अत्र त्वानुकूल्यमात्रं वक्ष्यते । वामशब्दः प्रतिकूलमप्याह — 'कामस्वभाववाम' इत्यादिप्रयोगात् । अत्र स्फुरणस्य विवरणत्वेनोत्प्रेक्षणम्; अन्तरङ्गत्वं हेतुः, अतः पूर्वार्धे उत्प्रेक्षालङ्कारः । उत्तरार्धे पुनर्विरोधः । सव्येन दक्षिणभागत्वमवलम्ब्यते । प्रतिकूलेनानुकूलत्वमित्युभयथापि गुणयोर्विरोधस्फुरणात् । पुरुषकारफलसाधकं दैवानुकूल्यं चानेन व्यञ्जितम् । अत्र च क्रमाद् आरम्भयत्नप्राप्त्याशानियताप्तिफलागमरूपपञ्चावस्थान्वितं बीजबिन्दुपताकाप्रकरीकार्यलक्षणमर्थप्रकृतिपञ्चकं मुखप्रतिमुखगर्भावमर्शनिर्वहणाख्याः पञ्च सन्धयो भवन्ति ।

'मुखं बीजसमुत्पत्तिर्नानार्थरससम्भवा ।'

तत्रोपक्षेपादीनि मुखसन्धेर्द्वादशाङ्गानि ।

'लक्ष्यालक्ष्य इवोद्भेदस्तस्य प्रतिमुखं भवेत् ।'

तस्य विलासादीनि त्रयोदशाङ्गानि ।

'गर्भस्तु दृष्टनष्टस्य बीजस्यान्वेषणं मुहुः ।'

तस्य चाभूताहरणादीनि द्वादशाङ्गानि ।

'क्रोधेनावमृशेद्यत्र व्यसनाद्वा विलोभनात् ।
गर्भनिर्भिन्नबीजार्थं सोऽवमर्श इति स्मृतः ॥'

तस्य चापवादाद्यानि त्रयोदशाङ्गानि ।

'बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम् ।
ऐकार्थ्यमुपनीयन्ते यत्र निर्वहणं हि तत् ॥'

१. 'इगुपधज्ञाप्रीकिरः कः', २. 'तत्प्राहुः स्वानुकूल' ख. ग. घ. च. पाठः. ३. 'लक्ष्यते' ख. घ. च. पाठः. ४. 'प्रातिकूल्यमप्याह' ख. ग. घ. च. पाठः. ५. 'प्रयोगदर्शनात्' ख. पाठः. ६. 'दैवं चानुकूल्यं' क. पाठः. ७. 'चापवादादीनि' ख. पाठः.

अवलोकिता---महन्तो क्खु भअवदीए एसो चित्तावक्खेवो । अच्चरीयं च । जं दाणिं चीरचीवरपरिग्गहां पिण्डपाअमेत्तपाणअत्तं पि भअवदीं ईरिसेसु आआसेसु अमच्चभूरिवसू णिओएदि । तस्सि अ उत्तुटिअ संसारावग्गहो तुम्मेहिं पिअप्पा णिक्खिवीअदि ।

(महान् खल्वेष भगवत्याश्चित्तावक्षेपः । आश्चर्यं च । यदिदानीं चीरचीवरपरिग्रहां पिण्डपातमात्रप्राणयात्रामपि भगवतीमीदृशेष्वायासेष्वमात्यभूरिवसुर्नियोजयति । तस्मिंश्चोत्त्रुटितसंसारावग्रहो युष्माभिरात्मा निक्षिप्यते ।)

---

तस्य च सन्ध्यादीनि चतुर्दशाङ्गानि । इत्थं चतुःषष्ट्यङ्गाः पञ्च सन्धयः प्रतिपादिताः । एषां च षट् प्रयोजनाङ्गानि विवक्षितार्थनिबन्धनं, गोप्यगोपनं, प्रकाश्यप्रकाशनम्, अभिनवरागवृद्धिः, चमत्कारकारित्वं, कार्यस्येतिवृत्तविस्तर इति । सन्ध्यङ्गानि च तत्र तत्र योजयिष्यामः । अपि नामेत्यादिरुपक्षेपः । बीजन्यासाद्विवृण्वतेत्यादिः परिन्यासः । अनुकूलदैवस्य स्वव्यापारस्य निष्पत्तिनिर्णयात् ।

महन्तो --- महान् खल्वेष भगवत्याश्चित्तावक्षेपः । अवक्षेपो व्याकुलता आश्चर्यं च । यदिदानीं चीरचीवरपरिग्रहां पिण्डपातमात्रप्राणयात्रामपि भगवतीमीदृशेष्वायासेष्वमात्यभूरिवसुर्नियोजयति । तस्मिंश्चोत्त्रुटितसंसारावग्रहो युष्माभिरप्यात्मा निक्षिप्यते । चीरचीवरं वल्कखण्डकृतं व्रतिनां काषायवस्त्रम् । चीवरं भिक्षुसङ्घाटी चेति वैजयन्ती । परिग्रहो धनसङ्ग्रहो यस्याः । पिण्डपात इति बौद्धादीनां नियतस्याहारस्य संज्ञा । 'पिण्डपाअवेळं वज्जिअ' इति

---

१. 'भअवईए' ख. घ. पाठः. २. 'चित्तविक्खेवो' झ. ञ. पाठः. ३. 'अच्चारिअं' ख. ग. च. पाठः. ४. 'जं दाव चीर' ख. पाठः. ५. 'चीवरमेत्तपरिच्छदं पिण्ड' छ. ज, 'चीवरपरिच्छदं पिण्ड' ख. च. झ. ञ. पाठः. ६. 'दाणिं बि भ' ज, 'उत्तिं भ अवदिं' छ. पाठः. ७. 'ईरिसे आआसे' झ. ञ. पाठः. ८. 'अमच्चो भूरिवसू' च. छ. पाठः. ९. 'तहिंच उक्खुडिअ' ख. घ. ङ. च, 'तहिं अ' झ. ञ, 'तस्सि उक्खुडिअ' ज. 'तहिं खु उज्झिअ' ग. छ. पाठः. १०. 'ग्गहो क्खप्पा तु' ख. पाठः. ११. 'तुह्मेहिं वि अप्पा' च. ज. झ. ञ. पाठः. १२. 'णिउज्जीअदि' झ. ञ, 'णिक्खिप्पइ' च. पाठः.

---

१. 'प्रयोजनानि' ख. ग. घ. च. पाठः, २. 'युष्माभिरात्मा' क. पाठः. ३. 'सङ्ग्रहः ।'. ४. 'बौद्धानां' ख. ग. घ. च. पाठः. ५. 'पीण्डपाअ' ख. ञ. पाठः.

कामन्दकी — वत्से ! मा मैवम् ।

यन्मां विधेयविषये स भवान्नियुङ्क्ते
स्नेहस्य तत्फलमसौ प्रणयस्य सारः ।

---

स्वेनैव वक्ष्यमाणत्वात् । 'दिवाकरमित्रनामा पिण्डपाती' इति हर्षचरितोक्तेः । प्राणयात्रा शरीरस्थितिः । ईदृशेषु वधूवरसङ्घटनोपायप्रयोगरूपेषु ! आयासेषु वाङ्मनःकायक्लेशजनकेषु कर्मसु । नियोजयति भृत्यादिवदाज्ञापयतीति सौहार्दातिशयो ध्वन्यते ।

'पृथिव्यां सागरान्तायां द्वावेव पुरुषाधमौ ।
गृहस्थश्च निरारम्भः सारम्भश्चैव भिक्षुकः ॥'

इति निन्दितत्वात् । तस्मिंन्निति नियुक्तं वस्तु परामृश्यते । अविद्याकामकर्मपरतन्त्रा सुखदुःखादिकलुषा लौकिकप्रवृत्तिः संसारः स एवावग्रहो बन्धनम् । अथवा वर्षप्रतिबन्धः । परमानन्दानुभवरूपवृष्टिप्रतिघातकत्वात् । स उत्त्रुटितः खण्डितो येन । युष्माभिरिति गुरुषु बहुवचनम् । आत्मा स्वरूपमेव । अथवा मनः, तत्पूर्वकत्वात् सर्वप्रवृत्तीनाम् । निक्षिप्यते पारतन्त्र्येणार्प्यते । न पुनर्यदा कदाचित् प्रवेश्यते । 'भअवई णिओएदि' इत्यारम्भावस्था ।

मा मैवम्—एवं मा वादीरित्यर्थः । त्वराद्योतिका वीप्सा । सौहृदसम्भ्रमद्योतकं न्यूनपदत्वम् ।

यन्मामित्यादि । विधेयविषये कर्तव्यस्थले । स भवान् पूज्यः सः, तत्रभवानितिवत् । नियुङ्क्त इति । नियोजयतीत्युक्तस्य किंकरीकरणस्यानुसन्धानम् ।

'वस्तुसिद्धं प्रति प्राहुरुद्भूतां कारणैः स्वकैः ।
सुखावहां च तद्बुद्धौ स्नेहाख्यामात्मविक्रियाम् ॥'

इति दिवाकरः । तस्य फलं प्रयोजनं हृदयगतस्य स्नेहस्य कार्यानुमेयत्वात् । असौ सः अयमसाविति प्रयोगात् । प्रणयस्य चिरपरिचयस्य ।

---

१. 'मैवं ब्रूहि ।' ख. ग. पाठः. २. 'यन्मा विधेय' ख. ग. घ. ङ. च. पाठः.

---

१. 'नियोगरूपं वस्तु', २. 'परमानन्दानुभववृष्टि' क. ग. घ. च. पाठः. ३. 'प्रतिघातत्वात्' ग. घ. पाठः. ४. 'प्रवर्त्यते' ख. ग. घ. च. पाठः. ५ 'णिओजेदि' ख. च. पाठः. ६. 'यन्मेत्यादि' ख. ग. घ. च. पाठः.

प्राणैस्तपोभिरथवाभिमतैर्मदीयैः
कृत्यं घटेत सुहृदो यदि तत्कृतं स्यात् ॥ १० ॥

किन्न वेत्सि यदेव नो विद्यापरिग्रहाय नानादिगन्तवासिनां साहचर्यमासीत् । तदेव चास्मत्सौदामिनीसमक्षमनयोर्भूरिवसुदेवरातयो-

'प्रणयः स्यात् परिचये याच्ञायां सौहृदेऽपि च ।'

इति वैजयन्ती । सारः स्थिरांऽशः । 'सृस्थिरे' (३-३-१७) इति घञ् । मज्जेत्यर्थः । प्राणैः—शरीरसन्धारको वायुः प्राणः, ऊर्ध्वाधोगमनादिवृत्तिभेदाद् बहुवचनम् । लोकानुसारेण पूर्वं प्राणैरित्युक्तिः । लौकिकानां तेभ्यः प्रेमाभावात् । अथवेति पक्षव्यावृत्तौ । अभिमतैरिति तपोविशेषणम् । उपवासादिभिः प्राणानपि परिक्लेश्य तेषामार्जितत्वात् प्राणेभ्योऽपि तपसां स्वलोभविषयत्वं प्रकाश्यते । घटेतेति सम्भावनायां लिङ् । उपायान्तरविरहेणैतैः सुहृदः कार्यं निर्वर्तयितुं शक्यं चेत् तत् कृतं स्यात् । न पुनः क्रियमाणं करिष्यमाणं वा तन्निर्वर्तितमेव भवेदित्यवधारय । मा तेऽत्र संशयो भूदित्यर्थः । अनेन सुहृत्कार्यसिद्धि प्रत्यौत्सुक्यं ध्वन्यते । अत्र पूर्वार्धेऽतिशयोक्तिरलङ्कारः । उत्तरार्धे प्राणेभ्यस्तपोभ्यश्च सुहृत्कार्यस्य गौरवकथनाद्व्यतिरेकालङ्कारध्वनिः । अत्र 'सौहार्दहृद्यानी'त्युक्तेः प्रयोगारम्भश्च ॥

किं न वेत्सि, इदमिति शेषः । पूर्वमप्यस्माभिः प्रसङ्गात् कथ्यमानं त्वया ज्ञातमेवेत्यर्थः । यदैव यस्मिन्नेव काले । नोऽस्माकमिति स्वस्या भूरिवसुदेवरातयोश्च परामर्शः । विद्या वेदयन्ति धर्मादीनिति वेदादिशास्त्राणि । संज्ञायां समजनिषदादिना क्यप् (३-३-९९) । परिग्रहः स्वीकरणम् । नानादिगन्तेत्यनेन तत्तद्विद्यागुरूणां भिन्नदेशवर्तित्वादेकत्र दौर्लभ्यम् । श्रद्धया तदनुसरणेन परि-

१. 'वाभिमतं मदीयैः' ज. झ. ञ. पाठः. २. 'अयि किं न'. ३. 'यदेकत्र नो' झ. म. पाठः ४. 'दिगन्तसाहचर्यं' ख. ग. च. पाठः. ५. 'वासिसाहचर्यं' छ. ज. पाठः. ६. 'तदैवास्मत्' च. ज. पाठः.

१. 'स्थिरः स्र' ख. 'स्थिरांशः' ग. घ. च. पाठः. २. 'प्राणैरित्युक्तम्' ख. ग. घ. च. पाठः. ३. 'विरहे तैः'. ४. 'सुहृत्कार्यं प्रत्यौत्सुक्यं' ख. पाठः. ५. 'ध्वनिः । सौहार्द'. ६. 'प्रयोगारम्भश्चायं', ख. ग. घ. च. पाठः. ७. 'निषेदेत्यादिना' ख. च. पाठः.

[1]वृत्तेयं प्रतिज्ञा, अवश्यमावाभ्यामपत्यसम्बन्धः कर्तव्य इति । तदि-दानीं विदर्भराजमन्त्रिणा सता देवरातेन, माधवं पुत्रमान्वीक्षिकीमध्यय-[2]नाय, कुण्डिनपुरादिमां पद्मावतीं प्रेषयता[3] सुविहितम्[4] ।

भ्रमणं च द्योत्यते । साहचर्यमिति सतीर्थ्यतया धर्मतो भ्रातृत्वमभङ्गुरस्नेहयन्त्रि-तत्वं च । तदेवेत्येवकारेण चिरकालमनोरथत्वमस्यार्थस्य प्रकाश्यते । अस्मत्सौदा-मिनीसमक्षं शिष्यात्वेनास्मत्सम्बन्धिन्याः सौदामिनीसंज्ञायाः सन्निधौ । 'प्रतिपरस-मनुभ्योऽक्ष्णः' (५-४-१२३)इति टच् । अनुवादेन निर्वहणाङ्गस्य सौदामिनीपात्रस्य भङ्ग्या[1] सूचनं क्रियते । इयं वक्ष्यमाणा । प्रतिपिपादयिषया साध्यार्थवचनं प्रतिज्ञा । अवश्यं नियतम् । आवाभ्यां त्वया मया च । अपत्यसंबन्धः अपत्यद्वारकः संश्लेषः । स्त्रीपुंससाधारणेनापत्यशब्देन दैववशात् पुत्रवतः पुत्राय दुहितृमान् दुहितरं ददात्विति द्योत्यते । इतिः प्रतिज्ञाप्रकारे । इयं प्रतिज्ञा कार्यस्य मुख्यं बीजम्, कार्यस्य तत्कार्यत्वात् पाणिग्रहस्य । सोऽपि त्रिवर्गे[2] हेतुत्वात् बीजमित्यव-गन्तव्यम् । "यन्मां[3] विधेय" इत्यारभ्य "आवाभ्यामपत्यसम्बन्धः कर्तव्यः" इत्यन्तः परिकरः । बीजस्य बाहुल्यकरणात् । तदिति हेतौ । सता भवता ।

'आन्वीक्षिक्यात्मविद्या स्यादीक्षणात् सुखदुःखयोः ।
ईक्षमाणस्तया तत्त्वं हर्षशोकौ व्युदस्यति ॥'

इति कामन्दकः । तदध्ययनाय । कुण्डिनं विदर्भराजनगरी 'कुण्डिनं न प्रवे-क्ष्यामि' इत्यादिवचनात् । पद्मावतीति भूरिवसोर्निवासः पुरी, ताम्; प्रतीत्या-पतति, प्रेषयतेत्युक्तेः ।

'तौ दम्पती स्वां प्रति राजधानीं
सम्प्रेषयामास वशी वसिष्ठः ।

इतिवत् । सुविहितं शोभनं कृतम् ।

१. 'प्रवृत्तेयं प्रतिज्ञा' ख. ग. घ. छ. ज. पाठः. २. 'कीश्रवणाय' ख. ग. घ. ङ. च. छ. ज. झ. ञ. पाठः. ३. 'प्रहिण्वता' ख. घ. च. छ. झ. ञ. पाठः. ४. 'तस्सुविहितम्' च. पाठः.

१. 'ग्रहणस्य' च. पाठः. २. 'त्रिवर्गहेतु' ख. च. पाठः. ३. 'यन्मा' ख. ग. घ. ङ. पाठः.

अपत्यसम्बन्धविधिप्रतिज्ञा
प्रियस्य नीता सुहृदः स्मृतिं च ।
अलोकसामान्यगुणस्तनूजः
प्ररोचनार्थं प्रकटीकृतश्च ॥ १३ ॥

अवलोकिता — तदो, किं ति मालदिं अमच्चो माहवस्स अप्पणा ण पडिवादेइ, जेण चोरिआविवाहे भअवदिं तुवरावेदि ॥

(ततः किमिति मालतीममात्यो माधवायात्मना न प्रतिपादयति । येन चौरिकाविवाहे भगवतीं त्वरयति ।)

---

सुविहितत्वमेवोपपादयति — अपत्येति । प्रियस्येत्यवश्यं स्मारयितव्यत्वम् । तत्सम्बन्धस्याभ्यर्हितत्वादिति भावः । स्मृतिं संस्कारोद्बोधनम् । लोक इतरजनः । 'गतानुगतिको लोकः' इतिवत् । अनितरजनसाधारणरूपविनयमाधुर्यादयो गुणा यस्य । समान एव सामान्यः स्वार्थिकस्तद्धितः । "ब्राह्मणक्षत्रियविशां सामान्यो धर्म उच्यते" इतिवत् । तनूजस्तन्वा जातः । "अन्येष्वपि दृश्यते" (३-२-१०१) इति डः । प्ररोचनार्थं कन्यामात्रादीनां प्रकृष्टरुचिजननार्थम् । प्रकटीकृतः प्रत्यक्षीकृतः । पारोक्ष्ये रूपादिषु संशयप्रसङ्गात् । तदिदानीमित्यादियुक्तिः कार्यानुगुणार्थसम्प्रधारणात् ॥ १३ ॥

तदो । ततः किमिति मालतीममात्यो माधवायात्मना न प्रतिपादयति, येन चौरिकाविवाहे भगवतीं त्वरयति । ततः यस्मात् स्वयं प्रतिज्ञा कृता अभिजनादयश्च परस्य विज्ञाताः तस्मात् । आत्मना स्वयम् । विभक्तिप्रतिरूपकमव्ययमिदम् ।

'अप्याज्ञया शासितुरात्मना वा
प्राप्तोऽसि सम्भावयितुं वनान्माम् ।'

इतिवत् । प्रतिपादयति ददाति ।

---

१. 'किति', २. 'मालइं' ख. ग. घ. ङ. च. पाठः. ३. 'पडिवादेदि' ख. ङ. छ. झ. ञ', 'पडिवाएइ' घ. पाठः. ४. 'चोरिअ' ज. पाठः. ५. 'विवाहेण' ख. छ. पाठः. ६. 'भअवइं' ख. घ. च. पाठः. ७. 'त्वरावेइ' ख ग. घ. पाठः.

---

१. 'जातः' । 'पञ्चम्यामजातौ इति डः' क, 'जातः अन्येष्वपि दृश्यत इतिवत्' । ग. च. पाठः. २. 'रूपादीनां' ख. पाठः. ३. 'प्राप्तोऽसीतिवत्' ख. ग. घ. च. पाठः.

कामन्दकी—

तां याचते नरपतेर्नर्मसुहृन्नन्दनो नृपमुखेन ।
तत्साक्षात् प्रतिषेधः कोपाय शिवस्त्वयमुपायः ॥ १४ ॥

अवलोकिता — अच्चरियं णक्खु अमच्चो माहवस्स णामं पि जानाति त्ति निरवेक्खदाए लक्खीअदि ।

(आश्चर्यं न खल्वमात्यो माधवस्य नामापि जानातीति निरपेक्षतया लक्ष्यते ।)

कामन्दकी— संवरणं तत् ।

"विश्राणनं वितरणं स्पर्शनं प्रतिपादनम् ।"

इत्यमरः । चोरस्य भावश्चौरिका । 'द्वन्द्वमनोज्ञादिभ्यश्च' (५-१-१३३) इति वुञ् । तयानुष्ठितो विवाहश्चौरिकाविवाहः तस्मिन् । लोकैरपरिज्ञात इत्यर्थः ।

अत्र हेतुमाह— तां याचत इत्यादि । नर्मसुहृत् क्रीडासु मित्रम् । विदूषक इत्यर्थः । अत एव जरावैरूप्यजडत्वादिदोषविशिष्टत्वं सिध्यति । नर्मसुहृदिति वाल्लभ्यातिशयं द्योतयति । नृपमुखेन नत्वात्ममुखेनेति, राजमुखेन पुनरप्रत्याख्येयत्वम् । साक्षात् प्रतिषेधः न दास्यामीति मुखतः प्रत्याख्यानम् । कोपाय विकृतये । नरपतेरित्यर्थात् । तुशब्दो भिन्नक्रमः । अयमुपायस्तु शिवः, राजकोपाद्यनर्थपरिहारेण शुद्धः । अयमिति मुखतः प्रारब्धचौरिकाविवाहरूपः ॥

अच्चरियम् । आश्चर्यं न खल्वमात्यो माधवस्य नामापि जानातीति निरपेक्षतया लक्ष्यते । अपिर्विरोधे । अभिजनादि सर्वं जानन्नपि नामापि न जानातीति विरोधः । निरपेक्षतया तत्प्रसङ्गपरिहारेण । लक्ष्यत इति हृदयस्याप्रत्यक्षत्वात् ।

प्रवृत्त्यनुमेयत्वं प्रकाशयति—संवरणं तत् । मन्त्रगुप्तिः सा । गूढाकारेङ्गितत्वमित्यर्थः ।

१. 'अच्छरिअं' ख. ग. घ. ङ; 'अच्चरिअं अच्चरिअं' ज. झ. ञ. पाठः. २. 'णहु' ख. ग. ङ. च. छ. झ. ञ. पाठः. ३. 'णाम बि' ञ. पाठः. ४. 'दा लक्खीअदि' ज. पाठः. ५. 'वत्से! संवरणमेतत्' छ. 'वच्छे संव' ज. पाठः. ६. 'णं हि तत्' घ. च. छ. ञ. पाठः.

१. 'तत्र', २. 'नृपमुखेनेति', ३. 'मुखेन राज', ४. 'जानन्नपि न' क. ग. घ, ब, पाठः.

विशेषतस्तु बालत्वात्तयोर्विवृतभावयोः ।
तेन माधवमालत्योः कार्यः स्वमतिनिह्नवः ॥ १५ ॥

अपिच —
अनुरागप्रवादस्तु[1] वत्सयोः सार्वलौकिकः ।
श्रेयो[2] ह्यस्माकमेवं तु[3] प्रतार्यौ राजनन्दनौ ॥ १६ ॥

---

'संरक्षेन्मन्त्रबीजं तु तद्बीजं हि महीक्षिताम् ।
तस्मिन् भिन्ने ध्रुवो भेदो गुप्ते गुप्तिरनुत्तमा ॥'

इति कामन्दकोक्तेः ।

न केवलं लोकतो मन्त्रसंरक्षणं कार्यमपि त्वतो हेतोरित्याह — विशेषतस्त्विति । बालत्वान्मुग्धतयेति भाविगुणदोषापरिज्ञातृत्वं ध्वन्यते । विवृतभावयोः प्रकाशितपरस्पराभिलाषरूपाभिप्राययोः । तेन भूरिवसुना । कार्यः कर्तुं योग्यः । अर्हे ण्यत् । स्वमतिनिह्नवः स्वबुद्धिगूहनम् । अन्यथामात्यबुद्ध्यनुसारेणैवेदं वस्तु वर्तत इति प्रवादसम्भावनात् ॥ १५ ॥

तथापि तयोरनुरागमप्युद्दिश्य प्रवादो भविष्यतीत्याशङ्क्याह — अनुराग इति । परस्परप्रेमविषयः । प्रवादो जनवादः । तुशब्दो विशेषे । न केवलं दोषः प्रत्युतास्माकं गुण एवेत्यर्थः । वत्सयोर्मालतीमाधवयोः । सार्वलौकिकः सर्वजनविदितः । तत्र विदित इत्यर्थे 'लोकसर्वलोकाभ्यां ठञ्' (५-१-४४), 'अनुशतिकादीनां च' (७-३-२०) इत्युभयपदवृद्धिः । प्रवादः स्याच्चेदिति शेषः । माधवेन मालत्या इतः पूर्वमदृष्टत्वात् । अस्माकं श्रेयः प्रशस्यतरम् । हि यस्मात् । एवं तु इत्थंभावे । पुनरमात्यमतिमुल्लङ्घ्य यौवनमदमोहितौ तौ स्वातन्त्र्येण परस्परानुरागतः प्रवृत्ताविति किंवदन्त्यां भवन्त्यामित्यर्थः । प्रतार्यौ वञ्चयितुं शक्यौ । निरपराधोऽमात्य इति तयोः प्रतीतेः ॥ १६ ॥

---

१. 'निह्नवः ॥ 'अनुराग' ख. ग. छ. पाठः २. 'श्रेयोऽप्यस्माक' झ. ञ. पाठः ३. 'स्यात्' ख. च, 'हि' घ. छ. ज. झ. ञ. पाठः

---

१. 'हि', २. 'बालत्वान्मुग्धतया भावि', ३. 'दोषापरिज्ञानं ध्व' ख. ग. घ. च. पाठ, ४. 'दं वर्तत' क. पाठः ५. 'मदनमोहितौ' ख. ग. ए. पाठः

पश्य —

बहिः सर्वाकारप्रवणरमणीयं व्यवहरन्
परास्यूहस्थानान्यपि तनुतराणि स्थगयति ।
जनं विद्वानेकः सकलमतिसन्धाय कपटै-
स्तटस्थः स्वानर्थान् घटयति च मौनं च भजते ॥ १७ ॥

नीतिशास्त्रनिश्चितमतेः पुरुषस्यैवंप्रायेषु प्रयोगेषु फलान्यभिचरितमति-गाम्भीर्यादनितरज्ञेयचरितत्वं च लोके निपुणैर्निरूपणीयमित्याह — पश्येति । बुद्ध्या निपुणं निरूपयेत्यर्थः ।

बहिरित्यादि । बहिः हृदयव्यतिरिक्ते प्रत्यक्षगोचरे स्थले । सर्वाकार-प्रवणरमणीयं वेषभाषादिभिः सर्वैः प्रकारैरनुद्धतम्, अकृत्रिमत्वप्रतीतेः शोभनं च यथा स्यात्तथा । व्यवहरन् कार्येषु निस्संशयं प्रवर्तमानः ।

'वि नानार्थेऽव सन्देहे हारो हरणमुच्यते ।
नानासन्देहहरणाद्व्यवहार इति स्मृतः ॥'

इति स्मृतेः । तनुतराणि अतिसूक्ष्माण्यपि । परास्यूहस्थानानि परेषां शत्रूणामयमन्यथा वृत्त इति वितर्कजनकानि रन्ध्राणि । स्थगयति छादयति । झटिति समावृत्त इत्यर्थः । विद्वान् नीतिशास्त्रार्थप्रयोगनिपुणः । एक इत्यस-हायशूरत्वं ध्वन्यते । अतिसन्धाय वञ्चयित्वा ।

'वञ्चनं त्वतिसन्धानं व्यलीकं च प्रतारणम् ।'

इति वैजयन्ती । कपटैः मायाप्रयोगैः । तटस्थः तीरस्थित एव न पुनर्जल-मवतीर्ण इति लाक्षणिकः प्रयोगः । यथा तीरगत एव बको मत्स्यमन्वेति तमेव कबलीकृत्य तूष्णीमास्ते, तथा स्वयं दूरस्थितोऽननुप्रविष्ट एवेत्यर्थः । स्वान् आत्मनोऽभिप्रेतान् । अर्थान् प्रयोजनानि । बहुवचनेनैकस्यार्थस्य प्रारब्धस्याने-कार्थानुबन्धित्वं द्योत्यते । घटयति अविघ्नमापादयति । साध्यमाने कार्ये तूष्णीं भवतु नाम, सिद्धे पुनर्विकत्थनमपि शोभते इत्याशङ्क्याह — मौनं तूष्णींभावम् । फलसिद्धावपि कैमर्थक्यादेव विकत्थनं न करोतीत्यर्थः ।

१. 'प्रगुणरमणीयं' झ. ञ पाठः. २. 'लघुतराणि' क. ङ. पाठः.

१. 'फलाव्यभिचार मति' ख. ग. पाठः. २. 'स्थानानि शत्रूणामयमन्यथा' ख. पाठः. ३. 'शास्त्रप्रयोग' ग. पाठः. ४. 'मत्स्यान (चे ? न्वे)ति' ख. ग. घ. च. पाठः.

अवलोकिता — मए वि तुह्मवअणादो, तेण तेण उवण्णासेण भूरिवसुमन्दिरासण्णराअमग्गेण माहवो सञ्चारीअदि ।

(मयापि युष्मद्वचनात्तेन तेनोपन्यासेन भूरिवसुमन्दिरासन्नराजमार्गेण माधवः सञ्चार्यते ।)

कामन्दकी — कथितमेव नो मालती धात्रेय्या लवङ्गिकया ।

भूयो भूयः सविधनगरीरथ्यया पर्यटन्तं
दृष्ट्वा दृष्ट्वा भवनवलभीतुङ्गवातायनस्था ।

---

"सिंहवच्चेष्टमानस्य काले कर्म विपश्चितः ।
क्रियमाणं स्वकुल्यास्तु विदुरस्यापरे कृतम् ॥"

इति कामन्दकोक्तेः । अत्र चकाराभ्यां मतिधृत्योर्भावयोः सन्धिः प्रकाश्यते । स्वभावोक्तिः सूक्ष्मश्चालङ्कारः ॥ १७ ॥

मए वीत्यादि । मयापि युष्मद्वचनात्तेन तेनोपन्यासेन भूरिवसुमन्दिरासन्नराजमार्गेण माधवः सञ्चार्यते । तेन तेनेति प्रत्युत्पन्नमतित्वात् तदात्वोत्पन्नत्वं ध्वन्यते । 'उपन्यासस्तु वाङ्मुखम्' इत्यमरः ।

धात्रेयी उपमातुः पुत्री । स्त्रीभ्यो ढक् । धात्रेयिकाग्रहणं च तस्या अपि दूतीवर्गे गणितत्वात् ।

भूयो भूय इत्यादि — पुनः पुनः । सविधनगरीरथ्यया समीपभूतराजमार्गेण । 'रथ्या प्रतोली विशिखा' इत्यमरः । पर्यटन्तं सञ्चरमाणम् । अट गतावित्यस्माच्छता । दृष्ट्वा दृष्ट्वेति भूयो भूयः पर्यटनफलम् । भवनवलभी स्वगृहकूटागारम् । 'समं वधूभिर्वलभीर्युवानः' इति माघोक्तेः । 'कूटागारं तु वलभिः' इति वैजयन्ती । 'वातायनं गवाक्षोऽस्त्री' इत्यमरः । तदन्तर्वर्तिनी । अनेन तस्या माधवेनादर्शनं कथ्यते, अभियोगमात्रसाध्यत्वं च । यथा वात्स्यायनः—

---

१. 'अव — भअवइ मए वि' ख. घ. ङ. च. पाठः. २. 'तुह्माणं वअणादो' छ. पाठः. ३. 'णोवण्णासेण' झ. ञ. पाठः. ४. 'अमच्चभूरिवसु' च. पाठः. ५. 'सण्णेण रा' छ, 'सण्णतरराअ' ज. पाठः.

---

१. 'प्रकाश्यते मए' क. पाठः. २. 'तदात्वोपपन्नत्वम्' ख. ग. घ. च. पाठः. ३. 'ढक् । धात्रीत्युपमातरि इति वैजयन्ती । भूयो भूयः'. ४. 'कथ्यते नवं' क. पाठः.

साक्षात्कामं नवमिव रतिर्मालती माधवं य-
द्गाढोत्कण्ठा लुलितलुलितैरङ्गकैस्ताम्यतीति ॥ १८ ॥

अवलोकिता — बाढं तहअ ताए उव्वेअविणोदणं माहवपडि-च्छन्दअं चित्तफलअम्मि ऑलिहिअ लवङ्गिआहत्थे किदं, ताए मन्दारिआहत्थे अज्ज विणिहिदं दाव ।

(बाढं तथाच तयोद्वेगविनोदनं माधवप्रतिच्छन्दं चित्रफलके आलिख्य लवङ्गिकाहस्ते कृतं, तया मन्दारिकाहस्तेऽद्य विनिहितं तावत् ।)

---

'प्रासादाद् राजमार्गावलोकिनी' इति । नवं विरिञ्चिशापदुर्जातमतीत्य प्रादुर्भूतम् । साक्षादिति रूपमाधुर्यादिस्मरगुणसर्वस्वनिधानभूतत्वं ध्वन्यते । उत्प्रेक्षया निरतिशयमुद्दीपनविभावत्वं द्योत्यते । रतिरिवेत्यनेन भाविनीमव्यभिचरितां प्रेमफलप्रवृत्तिं द्योतयति । गाढोत्कण्ठा अन्तः प्ररूढः उत्कण्ठाख्यो भावो यस्याः ।

'सर्वेन्द्रियसुखास्वादो यत्रास्तीति मनस्क्रिया ।
तत्प्राप्तीच्छां ससङ्कल्पामुत्कण्ठां कवयो विदुः ॥'

इति भावप्रकाशः । लुलितलुलितैः करतलमृदितमालतीमालिकावदतिम्लानैः । अङ्गकैरतिसौकुमार्यादनुकम्पनीयैः करचरणादिभिः । अनुकम्पायाम् (५-३-७६) इति कन्प्रत्ययः । उपलक्षणे चेयं तृतीया । ताम्यति तमु ग्लानौ । 'रत्यायासादितृट्क्षुद्भिर्ग्लानिर्निष्प्राणतेह च' इति धनिकः । ताम्यतीति यत्तत् कथितमेवेत्यन्वयः । उत्प्रेक्षात्रालङ्कारः, साक्षात्त्वस्य नवत्वस्य चोत्प्रेक्ष्यमाणत्वात् । 'मए वि' इत्यारभ्य 'ताम्यति' इत्यन्तं करणम्, प्रकृतारम्भात् ॥ १८ ॥

बाढं सत्यम् । तहअ—तथाच तयोद्वेगविनोदनं माधवप्रतिच्छन्दं चित्र-

---

१. 'बाहं' ख. घ. पाठः. २ 'ज ताए वि उक्कण्ठाविणोदणं' क. 'तदो एदाए उव्वेअ' छ, 'तदो ताए' ञ. 'ताए वि अत्तणो विणोदणणिमित्तं माहव' ज. झ. पाठः. ३. 'विणोदणनिमित्तं माहव' क. पाठः. ४. 'पडिच्छन्दअं आलिहिअं तं लवङ्गिआए' क. ज. झ. पाठः. ५. 'अभिलिहिअं' ज. पाठः. ६. 'लवङ्गिआए मन्दारिआए हत्थे' क. झ. ञ. पाठः. ७. 'हत्थे णिहिअं' क. ञ. झ. 'हत्थे अज्ज णिहिअं' ख. घ. ङ. च. छ. पाठः. ८. 'णिक्खित्तं दाव' ज. पाठः.

---

१. 'निरतिशयालम्बन' ख. ग. घ. च. पाठः. २ 'प्रवृत्तिर्द्योत्यते गाढोत्कण्ठा', ३. 'कन् ।', ४. चोत्प्रेक्ष्यमाणत्वात् । बाढं', ५. 'प्रतिच्छन्दमालिख्य' क. पाठः

कामन्दकी— (विचिन्त्य) सुविहितं लवङ्गिकया यतो माधवानुचरः कलहंसकस्तां विहारदासीं मन्दारिकां कामयते, तदनेन तीर्थेन तत्प्रतिच्छन्दकमुपोद्घाताय माधवान्तिकमुपेयादित्यभिप्रायः ।

अवलोकिता— माहवो वि कोदूहलमुप्पादिअ मए पउत्तमअणमहूसवं मअरन्दुज्जाणं पभादे अणुप्पेसिदो । तत्थ मालदी गमि-

फलके आलिख्य लवङ्गिकाहस्ते कृतं, तया मन्दारिकाहस्तेऽद्य विनिहितं तावत्। उद्वेगविनोदनं विरहदुःखकालक्षेपणम् ।

'वियोगे चायोगे प्रियजनसदृक्षानुभवनं चिरं चित्रालोकस्वपनसमये दर्शनमपि । तदङ्गस्पृष्टानामुपगतवतां स्पर्शनमिति प्रतीकारः कामव्यथितमनसां कोऽपि गदितः' इति गुणपताकोक्तेः । 'प्रतिरूपं प्रतिकृतिः प्रतिच्छन्दम्' इति हलायुधः ।

विचिन्त्येति— मन्दारिकाहस्तनिक्षेपहेतुं विचार्येत्यर्थः । माधवानुचरो माधवस्य दासः । विहारदासीं बौद्धायतनचेटीम् । 'बौद्धादीनां विहारः स्या'दित्यमरः । तथा दशकुमारचरिते 'महतः क्षपणकविहारमण्डलस्ये'ति । कामयते अभिलष्यति । अनेन कलहंसेन । तीर्थेनोपायभूतेन ।

'तीर्थमन्त्राद्युपाध्यायशास्त्रेष्वम्भसि पावने ।
पात्रोपायावतारेषु स्त्रीपुष्पे योनियज्ञयोः' ॥

इति वैजयन्ती । उपोद्घाताय मालतीवृत्तान्तप्रसङ्गाय । 'उपोद्घात उदाहार उपन्यासः पुरोवचः । प्रस्तावः पुनरुद्घातोऽपि' इति वैजयन्ती । उपेयादिति सम्भावनायां लिङ् । अभिप्रायो लवङ्गिकाया इत्यर्थात् ।

माहवोऽवि — माधवोऽपि कौतूहलमुत्पाद्य मया प्रवृत्तमदनमहोत्सवं

१. 'लवङ्गिकया माधवानु' ख. ग. घ. ङ. च. छ. ज. पाठः. २. 'कलहंसस्तां' ग. घ. ङ. छ. पाठः. ३. 'इत्यनेन' क. पाठः. ४. 'तीर्थेन घटेत तत्' झ. ञ. पाठः. ५. 'तत्प्रतिच्छन्दकं माधवा' क, तत्प्रतिच्छन्दमुपोद्घातप्रक्रियया माधवा' छ' पाठः. ६ 'मअणुज्जाणं' क. ख. च. छ. ज. पाठः. ७. 'पहादे' घ, 'अज्ज पभादे' झ. पाठः. ८. 'तहिं किल' क, 'तत्थ किल' ज. झ ञ. 'तत्त मालदी' ख. ग. पाठः.

१. निहितं क पाठः. २. 'ततश्चित्रालोक' ख. ग. घ. च. पाठः. ३. 'स्पर्शनमपि' ग. पाठः.

स्सदि, तदो अण्णोणदंसणं होदि[1] त्ति ।

(माधवोऽपि कौतूहलमुत्पाद्य मया प्रवृत्तमदनमहोत्सवं मकरन्दोद्यानं प्रभातेऽनुप्रेषितः । तत्र मालती गमिष्यति, ततोऽन्योन्यदर्शनं भवतीति ।)

कामन्दकी— साधु वत्से साधु, अनेन मत्प्रियाभियोगेन [3]स्मारयसि मे[4] पूर्वशिष्यां सौदामिनीम् ।

अवलोकिता— भअवइ[5] सा दाणिं सौदामिणी, समासादि-दअच्छरिअ(रूव)[6]मन्तसिद्धिप्पहावा[7], सिरिपव्वदे[8] कावालिअं[9] वदं धारेदि[10] ।

(भगवति! सेदानीं सौदामिनी समासादिताश्चर्यरूपमन्त्रसिद्धिप्रभावा श्रीपर्वते कापालिकं व्रतं धारयति ।)

---

[1]मकरन्दोद्यानं प्रभातेऽनुप्रेषितः । तत्र मालती गमिष्यति । ततो अन्योन्यदर्शनं भवतीति । मकरन्दोद्यानं नामोपवनम् । (प्रवृत्तमदनमहोत्सवं) प्रतिमारूपेण स्थितस्य भगवतो मदनस्य प्रवृत्तः प्रारब्धो महोत्सवो यस्मिन्नित्यर्थः ।

साधु, इदमिति शेषः । मत्प्रियाभियोगेन मदिच्छानुवर्तननिर्बन्धेन । पूर्वशिष्यां प्रधानशिष्यां, पूर्वस्मिन् विद्यापरिग्रहकाले[2] वा शिष्याम् । सौदामिनीम् अस्मत्सौदामिनीसमक्षमिति पूर्वप्रस्तुताम् । स्मारयसि स्मृतिगोचरीकरोषि । अनेन तस्या लब्धानुज्ञाया देशान्तरगमनं सूच्यते । समानशीलदर्शने तादृशजन-[3]स्मरणावश्यंभावात् ।

निर्वहणोपयोगिनं तस्या वृत्तान्तमवलोकितामुखेन सूचयति कविः—

भअवइ — [4]भगवति सेदानीं सौदामिनी समासादिताश्चर्यरूपमन्त्र-सिद्धिप्रभावा श्रीपर्वते कापालिकं व्रतं धारयति । समासादितः प्राप्तः

---

१. 'होदु' झ, ञ, भोदु' ज. पाठः. २. 'वत्से अनेन' ख. घ. पाठः. ३. स्मरयसि' ख. ग. च. पाठः ४. 'मम' ङ. ञ. पाठः. ५. 'वदि सा सोदामिणी अहुणा समासादिद' क. झ. ञ. पाठः. ६. 'मत्त' ख. पाठः. ७. 'प्पभावा' क. ख. ग. पाठः. ८. 'सिरिअपव्वदे' क. पाठः. ९. 'कावालिअव्वदं' क. ख. ङ. झ. ञ. पाठः. १०. 'धारेसि' ख. ग. पाठः.

---

१. 'मकरन्दोद्यानं मकरन्दोद्यानं', २. 'काले शिष्यां', ३. 'तादृशस्मरणावश्यं', ४. 'भगवति सौदामिनी', क. पाठः.

कामन्दकी— कुतः पुनरियं वार्ता ।

अवलोकिता— अत्थि एत्थ णअरीए महामसाणप्पदेसे, कराला णाम चामुण्डा ।

(अस्त्यत्र नगर्यां महाश्मशानप्रदेशे कराला नाम चामुण्डा ।)

कामन्दकी — अस्ति, या किल विविधजीवोपहारप्रियेति साहसिकानां प्रवादः ।

---

आश्चर्यभूतो विस्मयजनको महाभैरव्यादिमन्त्रसाधनजनितो महिमा यस्याः । आन्ध्रदेशे सकलविद्यासिद्धिक्षेत्रं श्रीपर्वतो नाम पर्वतश्रेष्ठः, अद्यापि यत्र भगवतः परमेश्वरस्य ज्योतिर्लिङ्गमनुवत्सरमाविर्भवति । कापालिकव्रतं सोमसिद्धान्तसिद्धं नियमम् , 'नरास्थिमालाकृतचारुभूषणः श्मशानवासी नृकपालभोजनः' इत्यादिक्रमेणेरितम् ।

कुतः पुनः । कस्माज्जनाच्छ्रुतेति शेषः । 'वार्ता प्रवृत्तिर्वृत्तान्तः' इत्यमरः ।

अथ प्रश्नोत्तरमुखेन प्रकरीपात्रं सूचयति कविः — अत्थि । अस्त्यत्र नगर्यां महाश्मशानप्रदेशे कराला नाम चामुण्डा । चामुण्डा भद्रकाली । 'चण्डमुण्डा च चामुण्डा चर्चा मार्जारकर्णिका' इति वैजयन्ती ।

अस्तीत्यनुवादः । तत्सत्त्वं जानाम्येवेत्यर्थः । किलेत्यपरमार्थे । जीवन्तीति जीवाः प्राणिनः, तदुपहारस्तद्रूपो बलिः प्रियो यस्याः । साहसिकानां यथाप्रतिभातकारिणां रजस्तमःप्रकृतीनाम् । प्रवादः अयथार्थो व्यवहारः । किलेति प्रवाद इति चानेन सात्त्विकप्रवृत्तेरेव वस्तुतो देवताप्रीणनत्वम्, अन्ययोस्तु मूढजनसंकल्पकल्पितत्वान्नातिप्रीतिजनकत्वं च ध्वन्यते ।

---

१. 'णअरे' क. पाठः. 'णअरिए' ज. पाठः. २. 'पसाण' ज. पाठः. ३. कामन्दकी—या किल' घ. पाठः. ४. 'अस्ति किल', ५. 'जीवोपहारेति प्रायेण साहसिकानां' छ. पाठः.

---

१. सकलसिद्धि' क. पाठः. २. 'मालानृकपाल', ३. 'कस्माज्जनाच्छ्रुतमिति', ४. 'चण्डा मुण्डा', ५. 'प्रकृतेरेव' क. पाठः.

अवलोकिता—तं क्खु, सिरिपव्वदादो आअदस्स इदो णादिदूरासण्णवासिणो साहअस्स मुण्डधारिणो अघोरघण्टणामधेअस्स अन्तेवासिणी महप्पहावा कवालकुण्डला णाम अणुसंझं आअच्छदि। तदो इअं पउत्ती।

(तां खलु श्रीपर्वतादागतस्येतो नातिदूरासन्नवासिनः साधकस्य मुण्डधारिणोऽघोरघण्टनामधेयस्यान्तेवासिनी महाप्रभावा कपालकुण्डला नामानुसन्ध्यमागच्छति। तत इयं प्रवृत्तिः।)

कामन्दकी — सर्वं हि सौदामिन्याः सम्भाव्यते।

---

तं क्खु—तां खलु श्रीपर्वतादागतस्येतो नातिदूरासन्नवासिनः साधकस्य मुण्डधारिणोऽघोरघण्टनामधेयस्यान्तेवासिनी महाप्रभावा कपालकुण्डला नामानुसन्ध्यमागच्छति। तत इयं प्रवृत्तिः। इतो नगरादतिदूरोऽत्यासन्नश्च न भवतीति नातिदूरासन्नः, तस्मिन्देशे वस्तुं शीलमस्येति। साधको मन्त्रसाधनप्रवृत्तः। 'साधकस्य तु रक्षार्थं तस्य रूपमिदं स्मृतम्' इत्यागमात्। मुण्डधारिणो नरशिरःकपालभूषणधारणव्रतस्य। 'व्रते' (३-२-८०) इति णिनिः। अनुसन्ध्यं सन्ध्यायां सन्ध्यायाम्। ततस्तस्याः सकाशात्।

सर्वं हि समासादिताश्चर्यमन्त्रसिद्धिप्रभावत्वादि। सौदामिन्या इत्यर्थान्तरसंक्रमितवाच्येन ध्वनिना तस्याः सर्वगुणसम्पत्पात्रत्वं प्रकाश्यते। सम्भाव्यते संगच्छत इति तर्क्यते।

---

१. 'तहिं क्खु' क. झ. ञ, 'तस्सिं क्खु' घ. पाठः. २. 'पव्वआदो' घ. पाठः. ३. 'आअदस्स रत्तिविहारिणो णादि' क. झ. ञ. पाठः ४. 'एत्थ' घ. ङ. पाठः, 'एत्तो' ख. ग. ङ. च. पाठः. ५. 'णादिदूरमसाणवासिणो' छ. ज. पाठः. ६. 'घोर' क. पाठः. ७. 'णामहेअस्स' ख. ङ. च, 'णामहेअस्स महाभैरवस्स अन्ते ग. छ. पाठः. ८. 'महप्पभावा' क. ग. झ. ञ. पाठः. ९. 'सर्वं हि सौदामिन्यां' छ, 'सर्वं सौदामिन्याः' क. ख. ज. झ. ञ. पाठः

---

१. 'स्मृतमित्याह मुण्डमालाधारिणो' क. पाठः

अवलोकिता — अलं दाणिं एदिणा। भअवदि ! सो वि सहअरो माहवस्स बालमित्तं मअरन्दो णन्दणस्स भइणिं मदअन्तिअं जइ समुव्वहइ, तक्खु माहवस्स अहिअं पिअं भोदि।

(अलमिदानीमेतेन। भगवति! सोऽपि सहचरो माधवस्य बालमित्रं मकरन्दो नन्दनस्य भगिनीं मदयन्तिकां यदि समुद्वहति तत्खलु माधवस्याधिकं प्रियं भवति।)

कामन्दकी — नियुक्तैव तत्र मया सा प्रियसखी बुद्धरक्षिता।

अवलोकिता — सुविहिदं भअवदीए।

(सुविहितं भगवत्या।)

---

अलं दाणिं — अलमिदानीमेतेन। भगवति सोऽपि सहचरो माधवस्य बालमित्रं मकरन्दो नन्दनस्य भगिनीं मदयन्तिकां यदि समुद्वहति तत् खलु माधवस्याधिकं प्रियं भवति। एतेन सौदामिनीवृत्तान्तेन। अलमिति प्रतिषेधे। अस्याप्रस्तुतत्वादित्यर्थः। सहचरः सततसमीपवर्ती। बालमित्रं शैशव एव सुहृत्। मित्रशब्दो नित्यनपुंसकलिङ्गः सुहृद्वाचकः। समुद्वहति परिणयति। तद् वस्तु। अधिकमिति मालतीलाभाचरितार्थस्य तत उपरि सुहृत्समृद्ध्या प्रियातिशयोपपत्तेः।

तत्र तद्घटनरूपे कार्ये। सेत्यनुभूततदीयवैदग्ध्यपरामर्शः। प्रियसखीति नियोगादरः प्रतीयते।

सुविहितं भगवत्या।

---

१. 'दाव' क. छ. झ. ञ. पाठः. २. 'एसो वि' क. ग. पाठः. 'एसो पिअसह' छ. पाठः. ३. 'मअरन्दो णाम णन्दणस्स' क. पाठः. ४. 'घहिणिं' क. ङ. झ. ञ. पाठः. ५. 'मदअन्तिअं' ख. ग. ङ. छ. पाठः. ६. 'तं पि णास माहवस्स' क, 'तं पि माहवस्स' झ. ञ. पाठः. ७. 'दुर्दीअं पिअं' क. छ. झ. ञ, 'पिअं भोदि' ञ. पाठः. ८. 'पिअं किदं भोदि' क. झ. ञ. पाठः. ९. 'नियुक्तैव हि तत्र' ख. घ. ङ. ञ, 'नियुक्तैव तत्र मया प्रिय' ञे, 'नियुक्तैव हि सा तत्र मया प्रियसखी' ग. छ, 'नियुक्तैव मया तत्प्रियसखी तत्र बुद्ध' क. पाठः. १०. 'भअवदीए किदं।' क. पाठः.

---

१. 'भगवत्याः' क. पाठः.

कामन्दकी — त[1]दुत्तिष्ठ, माधवप्रवृत्तिमुपलभ्य मालतीमेव प[2]श्यावः । (इ[3]त्युभे उत्तिष्ठतः)

कामन्दकी — (विचिन्त्य) अत्युदारप्र[4]कृतिर्मालती, त[5]न्निपुणं निसृष्टार्थदूतीक[6]ल्पस्तन्त्रयितव्यः । सर्वथा —

शरज्ज्योत्स्ना कान्तं कुमुदमिव तं नन्दयतु सा
सुजातं कल्याणी भवतु कृ[7]तपुण्यः स च युवा ।

---

मालतीमेवेत्यवधारणेन पूर्वप्रस्तुतप्रोत्साहनत्वं द्योत्यते ।

अत्युदारप्रकृतिरतिप्रश्रितस्वभावा 'औदार्यं प्रश्रयः सदा' इति धनिकः । अनेनाचापलत्वात्कृच्छ्रसाध्यत्वं ध्वन्यते । निपुणं वैदग्ध्यादपरिज्ञातप्रयोगमित्यर्थः ।

निसृष्टार्थदूतीकल्पः निसृष्टार्थाया दूत्याः प्रयोगप्रकारो वात्स्यायनप्रतिपादितः 'सा त्वेनां शीलेताऽनुप्रविशेद्' इत्यादिना प्रकरणेन । 'बुद्ध्वैतस्य समीहितमात्मधियैवारभेत या कार्यं सा हि निसृष्टार्थोक्ता' इति रतिरहस्योक्तेः[1] । तन्त्रयितव्यः प्र[2]योक्तव्यः ।

'तन्त्रं स्वराष्ट्रव्यापारे तन्तुवाने परिच्छदे ।
शास्त्रौषधाश्वमुख्येषु प्रयोगेऽध्वरकर्मणाम् ॥
एकस्यैवोभयार्थत्वे'

इति वैजयन्ती । अत्र च पारदारिकोक्तप्र[3]योगयोजनं कन्याविषये न[4]न्दनाय मालती प्रतिपादितेति मख्यापनादिति मन्तव्यम् । अथ वृत्तवर्तिष्यमाणकथांशप्रदर्शनावसाने चि[5]रमनीषितार्थसम्पत्तिस्नेहपरवशतया दैवं प्रति प्रार्थयते — सर्वथेति । स्वप्रवृत्त्या दैवानुकूल्येन चेत्यर्थः ।

शरज्ज्योत्स्नेति । विगलितमेघावरणतया बहळविमलत्वख्यापनाय

---

१. (विचिन्त्य) तदुत्तिष्ठ' क. झ. ञ. पाठः. २. 'पश्यावः । (विचिन्त्य)' ख. छ. पाठः. ३. 'इत्युत्तिष्ठतः' च. ज, 'उभे उत्तिष्ठतः' झ. ञ. पाठः. ४. 'प्रकृतिर्हि मालती' छ. पाठः. ५. 'इति निपुणं' ख. च, 'नाम । निपुणं' ज. पाठः. ६. 'कल्पः सूत्रयितव्यः' झ. ञ. पाठः. ७. 'कृतकृत्यः' क. च. छ. ज. झ. ञ. पाठः.

---

१. 'निसृष्टार्थोक्तिरिति रहस्योक्तेः', २. 'प्रयोक्तव्यः । अत्र च', ३. 'प्रयोजनम्', ४. 'नन्दनाय प्रति', ५. 'चिरकालमनीषितार्थ' क. पाठः.

वरीयानन्योन्यप्रगुणगुणनिर्माणनिपुणो
विधातुर्व्यापारः फलतु च मनोज्ञश्च भवतु ॥ १९ ॥

(उभे निष्क्रान्ते)

मिश्रविष्कम्भः ।

---

शरद्ग्रहणम् । ज्योत्स्ना चन्द्रातपः । कान्तं कमनीयम् । तं माधवम् । नन्दयतु समृद्धं करोतु । प्रार्थनायां लोट् । सा मालती । शरज्ज्योत्स्ना कुमुदमिवेत्यकृत्रिमपरस्परानुरागप्रकाशने तात्पर्यान्नासादृश्यदोषः । नायकस्योपमानत्वे(न) कुमुदस्योपादाने(नः) लिङ्गभेददोषप्रसङ्गः । द्वयोर्द्वितीयान्तत्वेनालक्षितभेदयोरेवान्वयात् । चन्द्र इव मुखमित्यादिप्रयोगप्रसिद्धेः, 'इष्टः पुन्नपुंसकयोः प्रायेण' इति लक्षणाच्च । सुजातं शोभनजन्मानं, अभिजनादिसर्वगुणसामग्र्यात् । कल्याणी मङ्गलगुणवती, 'उपस्थितेयं कल्याणी' इति प्रयोगात्, 'कल्याण्यादीनामिनङ्' इति सूत्राच्च । कृतपुण्यः पूर्वजन्मानुष्ठितसुकृत इत्यनुमेय इत्यर्थः । युवेत्यनेन सफलयौवनत्वहेतुः प्रतिपाद्यते । वरीयान् उरुतरः । 'प्रियस्थिरे'त्यादिनोरुशब्दस्य वरादेशः, ईयसुन् । अन्योन्यप्रगुणगुणनिर्माणनिपुणः । प्रगुणः ऋजुः । 'प्रगुणरचनया लक्षणं संक्षिपामि' इत्युक्तत्वात्, तेन च सादृश्यं लक्ष्यते । परस्परसदृशरूपादिगुणसृष्टिविदग्धः । विधातुर्व्यापारो ब्रह्मणः प्रयत्नः । फलतु अन्योन्यसदृशगुणयोः संगमात् प्रयोजनवान् भवतु । अन्यथा निरर्थकतया सहृदयोपालम्भगोचरत्वात् । मनोज्ञश्च अविच्छिन्नप्रेमबन्धतया सत्पुत्रलाभादिभिश्च शुभानुबन्धो भूयात् । अत्र पूर्वार्धे उपमा, उत्तरार्धे समं चालङ्कारः ॥ १९ ॥

उभे निष्क्रान्ते रङ्गात् बहिर्गते इत्यर्थः ।

मिश्रविष्कम्भः संस्कृतप्राकृतमिश्रत्वात् ।

---

१. 'भवतु ॥ निष्क्रान्ते' ख. च., 'भवतु ॥ इति निष्क्रान्ते' ग. घ. ङ. छ. ज. झ. ञ. पाठः. २. 'विष्कम्भकः' झ. ञ. पाठः.

---

१. 'नायकस्योपादानेन', ख. ग. घ. च. पाठः. २. 'जननं', ३. 'प्रकाश्यते' ४. 'वरादेशः अन्योन्य' क. पाठः.

(ततः प्रविशति गृहीतचित्रोपकरणः कलहंसः)

कलहंसः — कहिं दाणिं तुलिअमअरद्धआवलेवरूअविब्भमाक्खित्तमालदीहिअअमाहप्पं णाधं माहवं पेक्खे।

(केदानीं तुलितमकरध्वजावलेपरूपविभ्रमाक्षिप्तमालतीहृदयमाहात्म्यं नाथं माधवं प्रेक्षे)

(परिक्रम्य)

परिस्संतो म्हि, जाव एत्थ उज्जाणे मुहुत्तं विस्समिअ मअरन्दसहअरं णाहमाहवं पेक्खिस्सं।

(परिश्रान्तोऽस्मि, यावदत्रोद्याने मुहूर्तं विश्रम्य मकरन्दसहचरं नाथमाधवं प्रेक्षिष्ये)

(इति प्रविश्योपविशति।)

---

अथाङ्कमारभमाणः कविः कलहंसमकरन्दप्रवेशावसर इति पूर्वसूचितं नायकप्रवेशाङ्गं कलहंसमकरन्दप्रवेशं क्रमेणादौ निबध्नाति— ततः प्रविशतीति। गृहीतचित्रोपकरणः चित्रं मालतीलिखितं माधवप्रतिच्छन्दम् उपकरणं वर्णतूलिकादिकमालेख्यसाधनं च स्वहस्तधृतं येन सः।

कहिं दाणिं — क्वेदानीं तुलितमकरध्वजावलेपरूपविभ्रमाक्षिप्तमालतीहृदयमाहात्म्यं नाथं माधवं प्रेक्षे। तुलितश्चलितो मकरध्वजस्याभिरूपसामान्यत्वदर्पो येन तेन रूपेण आकारेण विलासैश्चापहृतं मालत्या मनो येन तन्माहात्म्यं महानुभावत्वं यस्य तं, नाथमिति स्वामित्वादुपचारोक्तिः। परिश्रान्तोऽस्मि। यावदत्रोद्याने मुहूर्तं विश्रम्य मकरन्दसहचरं नाथमाधवं प्रेक्षिष्ये। यावच्छब्दो वाक्यालङ्कारे।

प्रविश्य उद्यानमिति प्रकरणादायाति।

---

१. 'प्रविश्य चित्रोपकरणहस्तः कल' छ. पाठः. २. 'चित्रफलकोपकरणः' ज. ञ. पाठः. ३. 'मअरद्धअरूआवलेवविब्भमा' क. पाठः. ४. 'विब्भमावक्खित्त' क. ख. ग. घ. ङ. च. छ. झ. ञ. पाठः. ५. 'णाहमा' ख. घ. झ. ञ. पाठः. ६. 'पेक्खामि' ख, 'पेक्खिस्सं' घ. ज. झ, 'पेक्खिस्सं परि' ञ. पाठः. ७. 'इमास्सिं' झ. ञ, 'इह' ग. घ. च. छ. पाठः. ८. 'धन्तणं णाह' झ. ञ. पाठः. ९. 'णाहं' ङ. छ. ज. पाठः. १०. 'पेक्खिस्सं प्रविश्योप' ख. ग. घ. ङ. च. छ. पाठः.

---

१. 'प्रवेशानन्तरमिति', २. 'प्रतिच्छन्दं वर्ण', ३. 'अवधारणे।' क. पाठः.

(ततः प्रविशति मकरन्दः ।)

मकरन्दः — कथितमवलोकितया मन्मथोद्यानं गतो माधव इति । भवतु, तत्रैव गच्छामि । (परिक्रम्यावलोक्य) दिष्ट्या वयस्य इत एवाभिवर्तते । (निरूप्य) अस्य तु

गमनमलसं, शून्या दृष्टिः, शरीरमसौष्ठवं
श्वसितमधिकं किन्वेतत् स्यात् किमन्यदतोऽथवा ।
भ्रमति भुवने कन्दर्पाज्ञा, विकारि च यौवनं,
ललितमधुरास्ते ते भावाः क्षिपन्ति च धीरताम् ॥ २० ॥

कथितमवलोकितयेति — 'पउत्तमअणमहूसवं मअरन्दुज्जाणं अणुप्पेसिदो' इति पूर्वोक्तमनुसन्धत्ते । प्रतिमारूपेण मन्मथेनाधिष्ठितत्वान्मन्मथोद्यानं, नाम्ना पुनर्मकरन्दोद्यानम् । भवत्विति । ममापि तदनुमतमिति भावः । दिष्ट्या भाग्यवशादिति क्षणविरहदुःखिनस्तस्य झटिति दर्शनेन हर्षः प्रकाश्यते । वयस्यः सखा । इत एव अस्मिन्नेव देशे । निरूप्य अभिवर्तमानस्य दशां मनसानुसन्धाय ।

गमनमित्यादि । गमनं सञ्चरणम् । अलसम् अपटु । अगर्वोद्धतमित्यर्थः । शून्या अहृदयत्वादनद्धलक्षा, दृष्टिर्दर्शनम्, असौष्ठवं विलासरमणीयत्वरहितमित्यनेन गतिः सर्वदा दृष्टिश्च 'विलासे सस्मितं वचः' इति लक्षितविलासविरहः (च) सूच्यते । श्वसितं श्वासः । अधिकं पूर्वावस्थातः प्रमाणाधिकम् । एतत् किं नु स्यात् किन्निमित्तं भवेदिति वितर्कः । अथवेति पक्षव्यावृत्तौ मतिः । अतोऽन्यत् किमिति । अत इति वक्ष्यमाणपरामर्शः । तत्किमित्यत्राह — भ्रमतीति । अविश्रान्त्या प्रवर्तते । भुवन इति जातावेकवचनम् । लोकेष्वित्यर्थः । कन्दर्पाज्ञा

१. 'कथमवलोकितया' ख. पाठः. २. 'यथा मदनोद्यानं' घ. च, 'मदनोद्यानं' ख. ग. पाठः. ३. 'भवतु गच्छामि' ख. घ. पाठः. ४. 'गच्छामि दिष्ट्या' छ. पाठः. ५. '(परिक्राम्य दृष्ट्वा च)' क, '(परिक्रम्याग्रतो विलोक्य)' घ. च. पाठः. ६. 'दिष्ट्यायं वयस्य' क. ख. ङ. झ. ञ, 'दिष्ट्या अये अयं वयस्य' घ. ङ. च. पाठः. ७. 'वयस्यो माधव इत' ख. घ. पाठः. ८. 'निरूप्य गमन' ग. पाठः. ९. 'किमन्यदितोऽथवा' क. ङ. छ. ज. झ. ञ. पाठः.

१. 'म अणुज्जाणं' क. पाठः. २. 'लक्षणम्' क. च. पाठः. ३. 'रहितम् । श्वसितं' क. पाठः.

(ततः प्रविशति[1] यथानिर्दिष्टो[2] माधवः ।)

[3]माधवः — (निश्वस्य)[4]

तामिन्दुसुन्दरमुखीं सुचिरं विभाव्य
चेतः कथं कथमपि व्यपवर्तते मे ।

---

विषयरसमग्नैर्भवितव्यमित्येवंरूपं कामस्य शासनम् । भ्रमतीति सार्वकालिकत्वं, भुवने इति सर्वपथीनत्वं, आज्ञेति राजाज्ञावत् दुर्लङ्घ्यत्वं च द्योत्यते । विकारि मनःक्षोभणशीलम् । ललितमधुराः सुकुमारसुन्दराः । ते त इत्यालम्बनरूपा उद्दीपनरूपाश्च ।[1] वीप्सया किञ्चिदेव कस्यचित् विकारहेतुरिति द्योत्यते । भावाः पदार्थाः । क्षिपन्ति निरस्यन्ति । 'क्षिपु निरसन' इति धातुः । इति यदिति वाक्यार्थपरामर्शः, अतोऽन्यत्[2] किमित्युक्तेः । इदं निमित्तमेवैतदित्यर्थः । गीतनृत्तकामोपभोगाद्यात्मकमृदुललितनायकव्यापाररूपायाः कैशिकीवृत्तेर्नर्मस्फोटाख्यमङ्गमिदं ज्ञेयम् । गमनादिभिर्भावलेशैर्मालत्यनुरागोन्नयनाद् अत्रानुमानं काव्यलिङ्गं चालङ्कारः ॥ २० ॥

निश्वस्येति । अर्थादधिकं निश्वस्येति चिन्तानुभावः ।

तामित्यादि — तामिति मधुरसुकुमारत्वादिसकलगुणविशिष्टत्वानुभवपरामर्शित्वात्तच्छब्दस्य यच्छब्दानुपादानम् । इन्दुसुन्दरमुखीं

'मुखमर्धं शरीरस्य सर्वं वा मुखमुच्यते'

इति प्राधान्यान्मुखस्य वर्णनं शेषाङ्गसौन्दर्योपलक्षणम् । चन्द्र इव लावण्यादिगुणविशिष्टं मुखं यस्या इति द्योतकलोपिनीयमुपमा । विभाव्य नयनद्वारेणानुभूयेति चित्तासङ्गरूपा कामस्य द्वितीयावस्था सूचिता ।

---

१. 'प्रविशति मा' ख. ग. घ. च. छ. पाठः. २. 'निर्दिष्टरूपो मा' ज. पाठः.
३. 'माधवः — तामिन्दु' ख. ज. पाठः. ४. '(स्वगतम्)' क. झ. ञ. पाठः.

---

१. 'विषयाः' ख. ग. घ. च. पाठः. २. 'किमिदं' क. पाठः.

लज्जां विजित्य विनयं विनिवार्य धैर्य-
मुन्मथ्य मन्थरविवेकमकाण्ड एव ॥ २१ ॥

आश्चर्यम् ।

---

"नयनप्रीतिः प्रथमं चित्तासङ्गस्ततोऽथ सङ्कल्पः ।
निद्राच्छेदस्तनुता विषयनिवृत्तिस्त्रपानाशः ॥
उन्मादो मूर्च्छा मृतिरित्येता स्मरदशा दशैव स्युः ।"

इति कामशास्त्रोक्तेः । कथं कथमपि अतिकृच्छ्रेण । 'कथं कथमप्यनैषीत्' इति, 'कथं कथमपि सा क्षपा क्षयमगमत्' इति च भट्टबाणप्रयोगात् । 'दण्डाधिक्य-भयात् कथं कथमपि स्कन्धोपनेयान्मणीन्' इति मुरारिप्रयोगाच्च । व्यपवर्तते इतोऽमुखं प्रतिनिवर्तते । ननु व्यपवृत्तमित्यनेनाशक्यनिवर्तनत्वं ध्वन्यते । स इति लज्जादिगुणविशिष्टत्वादात्मनः स्वप्नेऽप्यसम्भावितविकारत्वं द्योत्यते । तदेव प्रतिषेधमुखेन दर्शयति — लज्जामित्यादि । प्राप्तस्यैव प्रतिषेधोपपत्तेः । अकृत्याद् भयं लज्जा ताम् । विजित्य विशेषेणाभिभूय । विनयः शास्त्रा-दान्वीक्षिक्यादेर्मनसो हर्षशोकव्युदासः, तम् । विनिवार्य दूरतो निरस्य । धैर्यं विकारहेतावप्यविक्रियत्वम् । उन्मथ्यातिशयेन विलोड्य । विवेको युक्तायुक्त-विचारसामर्थ्यं स मन्थरो मन्दो यस्य तत् । अकाण्डे अस्थाने । पूर्वसंस्तवा-भावाद् दुर्लभत्वाच्चानुचिते स्थल इत्यर्थः । ल्यपो मन्थरविवेकशब्देन सम्बन्धः । जितेन्द्रियत्वान्मनोधैर्यस्य विनयं प्रति तस्य च गुणप्रकर्षरूपं लज्जादिकं प्रति कारणत्वं ज्ञेयम् । चेतसो निरङ्कुशत्वे किं कर्तव्यमिति चिन्ताख्यो व्यभि-चारिभावः प्रकाश्यते । अकाण्ड एवेति चेतः प्रत्यसूया । अत्र च तामित्या-लम्बनविभावेन निश्वासादिभिः अनुभावैश्चिन्तादिभिर्व्यभिचारिभिश्च संयुक्तैर्व्यक्तो मालतीं प्रति माधवस्य रत्याख्यः स्थायिभावः शृङ्गाररसात्मना परिणतः प्रतीयते । 'तामिन्दुसुन्दरमुखी'मित्यत्र चेतःक्षोभणसमर्थस्य सौन्दर्यातिशयस्य प्रतिपादनात् महिलान्तरेभ्यो व्यतिरेकाद्व्यतिरेकालङ्कारो व्यङ्ग्यः ॥ २१ ॥

आश्चर्यं विस्मयकरम् ।

---

१. 'ध्वन्यते' क. पाठः.

यद्विस्मयस्तिमितमस्तमितान्यभाव-
मानन्दमन्दममृतप्लवनादिवाभूत् ।
तत्सन्निधौ तदधुना हृदयं मदीय-
मङ्गारचुम्बितमिव क्वथमानमास्ते ॥ २२ ॥

---

यद्विस्मयेत्यादि ।

'उपलब्धौ विरुद्धस्य पूर्वकल्पनया नृणाम् ।
अहोखल्वेतदिति यो भावो विस्मय एव सः' ॥

इति दिवाकरः । तदीयरूपशोभातिशयदर्शनजनितेन विस्मयेन स्तिमितं निश्चलम् ।

'स्वगोचरं न चाल्येत यत्तत् स्तिमितमुच्यते' ॥

इति भावप्रकाशः । अस्तमितान्यभावम् अत्यन्ततिरोभूतपदार्थान्तरस्मरणादिव्यापारम्, सर्वेन्द्रियवृत्तिभिः सह तत्रैव लीनत्वात् । आनन्दमन्दं परमसुखानुभूत्या मधुपानमत्तमिवालसम् । अस्तमितान्यभावत्वे हेतुरानन्दमन्दत्वम् । अमृतप्लवनात् पीयूषह्रदावगाहात् । निरतिशयसुखाद्युपलम्भतो यथा षडूर्मिनिर्मूलनेन तथा तद्दर्शनानन्दमन्दमित्युत्प्रेक्षया लोकोत्तरत्वं तत्सन्निधेः प्रकाश्यते । अभूदिति भूतत्वेन स्मर्तव्यत्वात्तस्या दशाया दैन्यं ध्वन्यते । तस्याः सन्निधावित्यपारोक्ष्यम् । अधुना तदसन्निधावित्यर्थः । मदीयं मत्सम्बन्धि । त्यदादित्वाद् वृद्धसंज्ञायां 'वृद्धाच्छः' इति छः । मदीयं तदित्यहमपि स एवेदमपि तदेवेत्याश्चर्यतामनुसन्धत्ते । अङ्गारचुम्बितम् । 'अङ्गारोऽस्त्री प्रशान्तार्चिः' इति वैजयन्ती । अङ्गारेण स्पृष्टम् । चुबि वक्त्रस्पर्शे इति धातुः । अङ्गारग्रहणात् ज्वालास्पर्शे झटिति भस्मीभावाद्वेदनायाः क्षणिकत्वेन सह्यत्वमङ्गारस्पर्शस्य सन्ततदुःखजनकत्वं च द्योत्यते । क्वथमानं पच्यमानम् । आस्ते वर्तते । वर्तमानत्वादावेगो ध्वन्यते । अमृतप्लवनाङ्गारचुम्बनयोरुपमानत्वात् पूर्वोत्तरावस्थयोर्विरोधस्फुरणात् सान्निध्यासान्निध्यपरिहाराच्च विरोधाभासरूपो विरोधोऽत्रालङ्कारः । यद्विस्मयस्तिमितमिति विधानमिदं, सुखदुःखयोः प्रतिपादनात् ॥ २२ ॥

---

१. 'प्लवनादिवासीत्' ज. पाठः. २. 'क्वथमान' क. छ. ज. झ. ञ, 'कथमानमास्ते (विलोक्य) कथं वयस्यो मकरन्दः । मक' ख, 'क्वथमानमास्ते' (उपसृत्य) कथं वयस्यो मकरन्दः । मक' ग. च. पाठः.

---

१. 'रसाद्युप' ख. ग. घ. च. पाठः. २. 'मन्दमित्युपमाने लोको' क. पाठः. ३. 'चुम्बनयोरुत्प्रेक्ष्यमाणत्वात्'; ४. 'पूर्वोत्तरावस्थयोरत्यन्तवैलक्षण्यं प्रकाश्यते । उत्प्रेक्षात्रालङ्कारः पर्यायो वा । यद्विस्मय' ख. ग. घ. ङ. पाठः.

मकरन्दः[1] — सखे! माधव! इत इतः[2] ।

माधवः — (परिक्रम्य) कथं प्रियवयस्यो मम मकरन्दः ।

मकरन्दः[3] — (उपसृत्य) सखे! ललाटन्तपस्तपति घर्मांशुस्तद[4]स्मिन्नुद्याने मुहूर्तमुपविशावः[5] ।

माधवः[6] — यथा[7] प्रियवयस्याय रोचते । (इत्युभावुपविशतः)[8]

कलहंसः[9] — (दृष्ट्वा) कहं[10] मअरन्दसहअरो इदं[11] एव्व[12] बउलुज्जाणं[13] अलंकरेदि णाहमाहवो[14] । तं[15] दंसेमि मअणवे[16]अणासन्त[17]प्पमाणमालदीलो[18]अणसुहावहं अत्तणो[19] से[20] पडिच्छन्दअम् । अहवा[21] विस्साम[22]सोक्खं दाव अणुहोदु[23] ।

(कथं मकरन्दसहचर इदमेव बकुलोद्यानमलङ्करोति नाथमाधवः तद्दर्शयामि मदनवेदनासन्तप्यमानमालतीलोचनसुखावहमात्मनोऽस्मै प्रतिच्छन्दम् । अथवा विश्रमसौख्यं तावदनुभवतु । )

---

ललाटन्तपः अतिकठोरत्वात् ललाटं तापयतीति 'असूर्यललाटयोर्दृशितपोः'(३-२-३६) इति खश् । तपति प्रकाशते ।

कहं—कथं मकरन्दसहचर इदमेव बालोद्यानमलङ्करोति नाथमाधवः । तद्दर्शयामि मदनवेदनासन्तप्यमानमालतीलोचनसुखावहमात्मनोऽस्मै प्रतिच्छन्दम् । अथवा विश्रमसौख्यं तावदनुभवतु । अयमिति शेषः ।

---

१. 'मकरन्दः — (उपसृत्य) सखे माधव' ज. ञ. 'मकरन्दः — (उपसृत्य) सखे ललाटन्तप' छ. पाठः. २. 'इतः ललाटन्तप' ज. पाठः ३. मकरन्दः — सखे' ग. घ. च. पाठः. ४. 'तपनस्तदस्मिन्' ञ पाठः. ५. 'विशावः । कलहंसः' छ, 'विशावः (उभौ परिक्रामतः) कलहंसः' ज. पाठः. ६. 'माधवः बाढम् । (उभौ प्रविशतः) ख. ग घ. ङ. च. पाठः. ७. 'यदभिरुचितं वयस्याय ।' झ. ञ. पाठः. ८. 'उभौ परिक्रामतः' ञ. पाठः. ९. 'कलहंसः — कहं' ख. ज. पाठः. १०. 'कधं' झ. ञ. पाठः. ११. 'इमं' ख. छ. ज. पाठः. १२. 'जेव्व' क. झ. पाठः. १३. 'मअणुज्जाणं' छ, 'बालवउलुज्जाणं' क. झ. ञ. पाठः. १४. 'माहवो' घ. छ, ज. झ. पाठः. १५. 'तं' छ. पाठः. १६. 'से मअण' झ. ञ. पाठः. १७. 'वेअणाखिद्दमाण, क, वेअणाखिज्जमाण' ज. झ. 'वेअणाविझुरन्तमालदी' झ. पाठः. १८. 'सन्तप्पखिज्जमाण' छ. पाठः. १९. 'अत्तणो पडि' झ. ञ. पाठः. २०. 'मे' क. पाठः. २१. 'अहवा मुहुत्तं विस्साम' ब. पाठः. २२. 'विस्सम' छ. पाठः. २३. 'भोदु' झ. पाठः.

मकरन्दः — तदस्यैव तावदुच्छ्वसितकुसुमकेसरकषायशीतलामोदवासितोद्यानस्य काञ्चनारपादपस्याधस्तादुपविशावः । (तथा कुरुतः)

मकरन्दः—वयस्य ! माधव ! अद्यैव तावत्सकलनगराङ्गनाजनप्रवर्तितमहोत्सवाभिरामकामदेवोद्यानयात्राप्रतिनिवृत्तमन्यादृशं भवन्तमवधारयामि । अपि नाम मनागवतीर्णोऽसि रतिरमणबाणगोचरम् । (माधवः सलज्जमधोमुखस्तिष्ठति ।) (विहस्य) तत्किमवनम्रमुग्धमुखपुण्डरीकः स्थितोऽसि ।

उच्छ्वसितं विकसितम् । केसरः किञ्जल्कः । कषायो रञ्जितः । 'अमुनैव कषायितस्तनी' इतिवत् । शीतलोऽनुग्रः । आमोदः शोभनगन्धः । 'आमोदः सोऽतिनिर्हारी' इत्यमरः । वासितं सुगन्धितः ।

'कोविदारे चमरिको रक्तपुष्पो युगच्छदः ।
काञ्चनारोऽपि '

इति वैजयन्ती ।

यात्रातः प्रतिनिवृत्तं प्रत्यागतम् । कामदेवोत्सवस्य स्त्रीप्रधानत्वान्नगराङ्गनाप्रवर्तितत्वोक्तिः । अन्यादृशं पूर्वावस्थातोऽन्यथाभूतम् । अवधारयामि निश्चिनोमीत्यलसगमनत्वादिलक्षणपौष्कल्याद्व्यभिचरिततर्कत्वमात्मनः सूचयति । 'अपि प्रश्ने सानुनये' इत्यमरः(?) । रतिरमणः कामः । बाणगोचरं शरपतनविषयम् । अवतीर्णः प्राप्तोऽसि । विहस्येति । लज्जया तस्याकारगोपनप्रयत्नमालोच्य स्मितं कृत्वेत्यर्थः । तत् किमिति । तस्य मौनमनुवादं परिकल्प्याह — तत्तस्मादवतीर्णोऽसि चेदित्यर्थः । अन्यथा नावतीर्णोऽसि चेत् तत् किमन्तर्गतत्रपाप्रकाशनेनावनम्रेण मुग्धेन सुन्दरेण मुखपुण्डरीकेण स्थितोऽसि । अनेन अवस्थानेनैव करतलामलकवदाशयो ज्ञात इति सूचयति । मुखावनमनं च लज्जानुभावः ।

१. 'काञ्चनपादपस्य' छ. ज. पाठः. २ 'विशावः । माधवः—बाढम् । तथा' ख, 'विशावः । माधवः — बाढम् । उपविशतः । मकरन्दः' घ. च. छ. पाठः. ३. 'अद्य सकल' ख. ग. घ. च. छ, 'सकलनागराङ्गना' ज. 'अद्य किल सकल' झ. ञ. पाठः ४. 'प्रवर्तित' ख. ग. घ. च. छ. ज. पाठः. ५. 'मदनोद्यान' क. पाठः ६. 'निवृत्तमन्यादृशमेव भ' घ. झ, 'निवृत्तमन्यादृशं भवन्तं' क. झ. ञ. पाठः. ७. 'नन्ववतीर्णो' घ, 'अपि त्वमवतीर्णो' ख. च. छ. ज. पाठः. ८. '(माधवो लज्जयाधोमुखस्तिष्ठति) मकरन्दः—(विहस्य)', ९. 'नत' क. झ. ञ पाठः. १०. 'तिष्ठसि' क. पाठः.

१. 'तत [illegible]' २. 'अनेन चावस्था' क. पाठः.

पद्य —

अन्त्येषु जन्तुषु च यस्तमसावृतेषु
विश्वस्य धातरि समः परमेश्वरेऽपि ।
सोऽयं प्रसिद्धविभवः खलु चित्तजन्मा
मा लज्जया तव कथञ्चिदपह्नुतिर्भूत् ॥ २३ ॥

---

अथ सामान्यतोऽज्ञातस्य विषयाभिषङ्गस्य विशेषप्रकाशनाय तं विश्वासयन्नुपपत्त्या लज्जां निराकरोति — अन्त्येषु जन्तुष्वित्यादि । अन्त्येषु सर्वयोनीनामवसाने भवेषु । अतिनीचयोनिजातेष्वित्यर्थः । जन्तुषु प्राणिषु । कृमिकीटादिष्वित्यर्थः । चकारोऽप्यर्थे विरोधे । तमसावृतेषु अज्ञानेन तिरोहितज्ञानेषु ।

"अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ।'

इति भगवद्वचनात् । विश्वस्येति निरवग्रहेण सर्वनाम्ना स्थिरचरात्मकं जगत् परामृश्यते । धातरि शुक्तिशकल इव रजतस्याधारभूते । अनेनोपादानकारणत्वमुक्तम् । अन्त्यत्वव्यतिरेकश्चायम् । परमेश्वरे ऐश्वर्यस्य ज्ञानशक्त्यादेः विश्रान्तिस्थलभूते शिवे । 'न तत्समश्चाभ्यधिकश्च दृश्यते' इति श्रुतेः । अनेन निमित्तकारणत्वमुक्तम् । 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधाद्' इति स्मृतेः । तमोवृतत्वव्यावृत्तिश्चेयम् । समस्तुल्यवृत्तिः । परमेश्वरस्यापि भक्तानुग्रहगृहीतलीलाविग्रहस्य पार्वतीपरिणयनार्धशरीरविभजनादिप्रसिद्धेः । अपिशब्दाभ्यामत्यन्तविरुद्धे कोटिद्वये वृत्तिसाम्यस्य विचित्रत्वं प्रकाश्यते । स इति तथात्वेन पूर्वं श्रुतः । अयमिति । इदानीं त्वयानुभूयमानसामर्थ्य इत्यर्थः । प्रसिद्धविभवः प्रख्यातशक्तिः । खल्विति संवादं द्योतयति । चित्तजन्मा मनसो जननं यस्येत्याभ्यन्तरत्वेन दुर्निवारत्वं ध्वन्यते । कथञ्चित् केनापि प्रकारेणेति तदर्थः । प्रवृत्तौ निवृत्तौ वा सर्वथा प्रकाशनमेव श्रेय इति भावः । अपह्नुतिः छादनम् । मा भूत् न भवतु ।

---

१. 'अन्येषु' छ. ज. झ. ञ. पाठः. २. 'रजस्तमसा' छ. ज. ञ, 'पुनस्तमसा' क. पाठः. ३. 'च' क. झ. ञ. पाठः. ४. 'किल' क. पाठः.

---

१. 'परमेश्वरे ज्ञान', २. 'वृतत्वावृत्ति'. ३. 'खलुः संवादं', ४. 'जन्मेत्याभ्यन्तर' क. पाठः. ५. 'दुर्निरासत्वं' ख. ग. घ. च. पाठः.

माधवः[1]— किं न कथयामि, श्रूयताम् । गतोऽहमवलोकिताजनितकौतुकः कामदेवायतनमितस्ततः[2] परिक्रम्य[3] परिश्रमादुल्लसितमदिरा[4]मोदपरिमलाकृष्टसंकलकलमिलदलिपटल[5]सङ्कुलाकुलितमुकुलावली[6]मनोहराभरणरमणीयस्याङ्गणभुवो[7] बालबकुलस्यालवालपरिसरे स्थितः[8] । तस्य च यदृच्छया निरन्तरविकसितानि[9] कुसुमान्यादाय[10] विदग्धविरचनामनोहरां स्रजमभिनिर्मातुमारब्धवान्[11] । अनन्तरं च[12] सञ्चारिणीव

'न माङ्योगे'(६-४-७४) इति लुङोऽडागमप्रतिषेधः। मद्विषय इत्यर्थात् । अत्र पूर्वार्धेऽतिवैषम्याद्घटितयोगत्वाद् विषमम् । विरोधाभासत्वाद्विरोधो वालङ्कारः । उत्तरार्धे त्वप्रस्तुतप्रशंसा । अपह्नुतौ को दोष इति । कार्यप्रसङ्गे मन्मथगतस्य महाप्रभावत्वस्य कारणत्वप्रतिपादनेनानिष्टापातशङ्काद्योतनात्[1] । [2]चित्तजन्मनो वीरान्तरेभ्यो व्यावृत्तिकथनाद् व्यतिरेकोऽलङ्कारश्च व्यङ्ग्यः ॥ २३ ॥

तत्प्रतिपादनस्थिरीकृतहृदय आह — किन्न कथयामीति । किमर्थं न कथयामि । वदाम्येवेत्यर्थः । कथननिषेधाक्षेपो लज्जया पूर्वमकथनस्याध्यवसितत्वात् । श्रूयतामिति विस्तरेण कथनोपक्रमः । अवलोकिताजनितकौतुक इति 'माहवो वि कोदूहळं उप्पादिअ' इत्याद्यवलोकितावचनं सङ्गटयति । आयतनमालयम् । इतस्ततः परिक्रम्येति आयतनविस्तारो[3] द्रष्टव्यवस्तुबाहुल्यं च द्योत्यते । परिक्रमणं सञ्चरणं परिश्रमात् श्रमणखेदात् । मदिरामोदो मधुगन्धः ।

---

१ 'माधवः वयस्य किं' क. च. छ. घ. ज. झ. ञ. पाठः. २. 'देवायतनं तत्र चेतस्ततः' क. ख. घ च. ग ञ., 'देवायतनं तत्रेतस्ततः' झ. पाठः. ३. 'परिभ्रम्य' ख घ., 'परिक्रम्यावलोक्य च परि' क. झ. ञ. पाठः. ४. 'मधुरमदिरा' ख. ग. घ. ङ. छ. ङ., 'मदिरामोदमधुरपरि' क. झ. ञ. पाठः. ५. 'सकलमिलदलि' ज झ. ञ. पाठः. ६ 'सङ्कुलमुकुलितबकुलमुकुला' क. पाठः. ७. 'मनोहराभरणस्य रमणीयाङ्गण' छ. ज. पाठः. ८. 'स्थितोऽहम् । तस्य यदृच्छया' छ. पाठः. ९ 'निरन्तरनिपतितविकसितानि कुसुमान्यादाय' ख., 'नि .. ... पतितानि विक .. ... य' ज. ञ. पाठः १०. 'कुसुमान्यादायादय' ख. घ. पाठः. ११. 'निर्मातुमारब्धवानस्मि' ख. ग. ङ. झ. ञ. पाठः. १२. 'च देवस्य सञ्चारिणी मकर' ञ, 'च देवस्य मकरकेतनस्य सञ्चारिणीव जगद्विजय' ख. ग घ. च. पाठः.

---

१. 'कारणत्वस्य प्रति' ख. घ. च. पाठः. २. 'प्रतिपादनेनानिष्टाशङ्का' क. पाठः. ३. 'तद्देशविस्तारो' ख. ग. घ. च पाठः.

देवस्य मकरकेतनस्य[1] जगद्विजयवैजयन्तिका, निर्गत्य गर्भभवनादुज्ज्वलविदग्धमुग्धबालनेपथ्य[2]विरचनाविभावितकुमारीभावा महानुभावप्रकृतिरत्युदारपरिजना कापि तत्रैवागतवती[3] ।

परिमलो बहुकुसुमगन्धसम्मेलनम् । आकृष्टं बलात् स्वसमीपं नीतम् । संकलकलं कोलाहलसहितम् । मिलत् पुञ्जीभवत् । सङ्कुलं सम्भ्रमः तेनाकुलितं क्षोभितम् । मुकुलशब्दोऽविकसदवस्थं कुसुमं लक्षयति । ततश्चोल्लसितमदिरामोदत्वादपर्युषितरसास्वादलोलुपत्वमलीनां प्रकाश्यते । अङ्कणभुवो देवतायतनाजिरजातस्य बालबकुलस्य तरुणकेसरवृक्षस्य । मूलाधारबन्धसमीपे यदृच्छयानभिसन्धिपूर्वकम् । निरन्तरविकसितानि निर्विवराणि विकसितानि चेत्यनेन कुसुमबाहुल्यं बालबकुलस्येत्यधःस्थितप्राह्यत्वं च प्रकाश्यते । विदग्धविरचना शिल्पविशेषकल्पनादग्राम्यं निर्माणम् । स्रजं मालाम् । सञ्चारिणी सञ्चरणशीला । जङ्गमा इत्यर्थः । पताकान्तरेभ्यो व्यतिरेकः । जगद्विजयवैजयन्तिका त्रिभुवनविजयेनोत्थापिता ध्वजपताका । जयलक्षणत्वाद् ध्वजस्य सञ्चारिणी वैजयन्तिकेवेत्युत्प्रेक्षा । ततश्चातिधीरप्रकृतेरपि क्षोभोपपत्तिर्द्योत्यते । 'पताका वैजयन्तिका' इत्यमरः । गर्भभवनात् कामदेवायतनकुक्षेर्निर्गत्येत्युत्प्रेक्षाहेतुः । उज्ज्वलं भासुरं महार्घरत्नमयत्वात् । विदग्धमग्राम्यमनुल्बणत्वात् । मुग्धं कोमलं, बालनेपथ्यं बाल्यावस्थाविशिष्टानां धारणोचितं भूषणं, वर्णाश्रमौचित्येन तत्तदवस्थौचित्येन चाभरणविशेषधारणस्याभरणशास्त्रे विधानात् । विभावितकुमारीभावा प्रकाशितकन्यात्वा । 'कुमारी कन्यका कन्या' इति वैजयन्ती । चापलाद्यनुपहतः प्रभुत्वविशेषोऽनुभावः । 'अनुभावविशेषात्तु सेनापरिगताविव' इत्युक्तवत् ।

> 'भावाः परोपकारार्था लक्ष्यन्ते यस्य सर्वथा ।
> स चानुभाव इत्युक्तो येभ्यः स्पृहयते जनः ॥'

इति भावप्रकाशः । महानुभावप्रकृतिः स्वाभाविकमहाप्रभावा । अत्युदारपरिजना अक्षुद्रपरिवारा । दर्शनसमये गोत्रनामापरिज्ञानात् कापीत्युक्तिः । तत्रैव[1] तस्मिन्नेव प्रदेशे । अनन्तरं च देवस्येत्यादि भावना[2] । अद्भुतरसावेशात् ।

१. 'केतोः जग' क. ङ. छ. पाठः. २. 'मुग्धनेपथ्य' क. झ. ब. पाठः. ३. 'तत एवागतवती' क. ग. ङ. छ. ज. झ. ब. पाठः.

१. 'तत एव' ख. ग. घ. ब. पाठः. २. 'परिभावना' क. ग. पाठः.

सा रामणीयकनिधेरधिदेवता वा
[1]सौन्दर्यसारसमुदायनिकेतनं वा ।
तस्याः सखे! नियतमिन्दुकलामृणाल-
ज्योत्स्नादि कारणमभून्मदनश्च वेधाः ॥ २४ ॥

सेत्यादि । रामणीयकं रमणीयस्य भावः । रमयति नयनं हृदयं चेति रमणीयम् । 'कृत्यल्युटो बहुलम्' (३-३-११३) इति कर्तरि कृत्यः । 'योपधाद् गुरुपोत्तमाद् वुञ्' (५-१-१३२) इति तस्य भावे वुञ् । तस्य निधिरविनाशी राशिः । यथा कनकादीनां राशिः शङ्खनिध्यादिशब्दैरुच्यते । अधिदेवता अभिमानिनी देवता । अभिमन्तव्यानुगुणया ह्यधिदेवतया भवितव्यमिति भावः । यथा शङ्खनिध्यादीनां नवरत्नधारावर्षिण्योऽधिदेवतास्तत्र प्रतिपादिताः ।

'दिव्यमाल्याम्बरधरा दिव्याभरणलेपनाः ।
दिव्याङ्गा निधयो ध्येयाः पूरयन्तो धनैर्धराम् ॥'

इति । वा विकल्पे । ईशितव्याधिदेवतयोर्भेदमाशङ्क्य पुनरन्यथा विकल्पयति -- सौन्दर्यसारसमुदायनिकेतनं वा इति ।

'अन्यूनानतिरिक्तं यदङ्गप्रत्यङ्गसौष्ठवम् ।
सुश्लिष्टसन्धिबन्धं यत्तत्सौन्दर्यमुदाहृतम् ॥'

इति भावप्रकाशः । शिखिकलापकमलकुवलयादिपदार्थनिर्मथनेन नवनीतमिव कान्तिसारमादाय तत्समुदायस्य कचभरवदननयनाद्यौचित्येन निवेशनस्थानम् । वा इत्यस्य सौन्दर्यसारसमुदायत्वोक्तेः पूर्वविकल्पादतिशयो ज्ञेयः । अतश्च निरतिशयसौन्दर्याश्रयत्वहेतुनानन्यसाधारणकारणजन्यत्वमनुमीयते । तस्या इति । या खल्वेवंविधा तस्या इत्यर्थः । सखे इति । न खलु मया प्रियवयस्य[1]स्य पुरतोऽनृतवादीति द्योत्यते । नियतमसन्दिग्धमित्युत्प्रेक्षाद्योतकम् । इन्दुकलामृणालज्योत्स्नादीति मुखस्य चन्द्रकला पाणिपादस्य मृणालिकाः सर्वाङ्गीणस्य लावण्यस्य चन्द्रिका । आदिशब्दः प्रकारवचनः । नयनादीनां कुवलयादि वस्तु ।

१. 'नियतमिन्दुसुधामृणाल' क. झ. ञ. पाठः.

१. 'सखस्य' ग. घ. च. पाठः.

अथ प्रणयिनीभिरनुचरीभिरभ्यर्थ्यमाना, तमेव वकुलपादपोद्देशमलङ्कृतवती, तस्याश्च कस्मिन्नपि महाभागधेयजन्मनि बहुदिवसोपचीयमानमिव मन्मथव्यथाविकारमुपलक्षितवानस्मि ।

यतः —

परिमृदितमृणालीम्लानमङ्गं प्रवृत्तिः
कथमपि परिवारप्रार्थनाभिः क्रियासु ।

---

कारणमर्थादुपादानकारणम् । मदयतीति मदनः त्रैलोक्यमोहनं स्वरूपमास्थितः कामः । चस्त्वर्थे । वेधाः ब्रह्मा । निमित्तकारणमित्यर्थः । अत्र पूर्वार्धे सन्देहः । उत्तरार्धे तु प्रसिद्धकारणव्यावृत्त्या लोकोत्तीर्णकारणवर्णने सम्बन्धेऽसम्बन्धातिशयोक्तिरलङ्कारः ॥ २४ ॥

अथेति । प्रणयिनीभिः अतिस्निग्धजनैरित्यनुल्लङ्घ्यवचनत्वं ध्वन्यते। अनुचरीभिः सखीभिः । पचादिषु चरडिति पाठाद् ङीप् । अभ्यर्थ्यमाना रमणीयोऽयं देशो दर्शनेन सम्भाव्यतामित्यनुनाथ्यमाना । अलङ्कृतवती भूषितवती । तत्सन्निधानात्तस्य देशस्य सविशेषरमणीयतापत्तेः । कस्मिन्नपि पुरुषविषये । महाभागधेयमपरिमितभाग्यं जन्म यस्य तस्मिन् । तादृशीनां प्रेमास्पदत्वस्य सुकृतविशेषकार्यत्वाद् बहुभिर्दिवसैरभिवर्धमानम् । उह्यमानत्वादिवशब्दप्रयोगः । मन्मथव्यथाविकारं मदनसन्तापकार्यमवस्थाविशेषम् ॥

उपलक्षितं विकारप्रकारमाह — परिमृदितेत्यादि । करतलस्पर्शादिक्लेशितबिसकाण्डवन्म्लानं तान्तम् । मृणालीग्रहणान्मृदुस्निग्धमुग्धधवलत्वं च प्रतीयते । 'धर्मयोरेकतरनिर्देशेऽन्यसंवित् साहचर्याद्' इति लक्षणात् । अङ्गं कर-

---

१. 'अथ सा प्रणयिनी' क. झ. ञ. पाठः. २. 'चरीभिरविरलकुसुमसञ्चयावचयलीलादोहदिनीभिरभ्यर्थ्यमाना' ग. घ. ङ. च. झ. ञ., 'चरीभिः कुसुमसञ्चयावचयलीलाभिलाषवतीभिरभ्यर्थ्यमाना' ज. पाठः., ३. 'बालबकुल' क. ग. पाठः. ४. 'पादपोद्देशमिन्दुव[illegible]लङ्कृतवती' घ. पाठः. 'पादपोद्देशमागतवती' क. च. छ. ज. झ. ञ. पाठः. ५. 'कस्मिंश्चिदपि' क. ज. पाठः. ६. 'लब्धवानस्मि' क, 'लब्धवानस्मि परि' ग. ङ. पाठ. ७. 'यतोऽस्याः — परि' झ. ञ. पाठः.

---

१. 'मित्यर्थः ॥ २४ ॥' क. पाठः. २. 'रमणीयोऽयं दर्शने' ग. ङ. च. पाठः

कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मी-
मभिनवकरिदन्तच्छेदकान्तिः कपोलः ॥ २५ ॥

सा[2] मम[3] दर्शनात्[4] प्रभृति अमृतवर्तिकेव[5] चक्षुषोर्निरतिशयमानन्द-मुपपादयन्ती,[6] अयस्कान्तमणिशलाकेव लोहधातुमन्तःकरणमुपसंहृत-वती,[7] किं[8] बहुना सर्वथा ।

---

चरणादिकम् । क्रियासु रमणीयवस्तुदर्शनादिषु । प्रवृत्तिरुद्योगः, परिजनवाञ्छा-भिर्नतु स्वतः । बहुवचनेन प्रतिक्रियं प्रार्थनायाः पौनःपुन्यं प्रतीयते । तत्रापि कथमपि कृच्छ्रेणेति, वाक्यद्वये क्रमात् ग्लान्यालस्याख्यौ व्यभिचारिभावौ प्रकाशितौ । तनुताविषयनिवृत्त्याख्ये मदनावस्थे च । कलयति बध्नाति । निष्क-लङ्कस्य निरस्तलाञ्छनस्य । अभिनवस्य करिदन्तच्छेदस्य कान्तिरिव कान्तिर्यस्य । छेदशब्दः सामीप्याद् द्रव्यं लक्षयति । अभिनवशब्दो रजोधूसरत्वादिविरहं दर्शयति । निष्कलङ्कस्येति । यदा निष्कलङ्को भावी तदा तस्येत्यतिशयोक्तिः । हिमांशोर्लक्ष्मीमित्यत्र लक्ष्मीसदृशीं लक्ष्मीमिति निदर्शनालङ्कारः । कपोल-पाण्डुता च स्मरविकारः । 'पाण्डुक्षामं वदनम्' इति प्रयोगात् ।

'सावर्ण्यभाजां प्रतिमागतानां
लक्ष्यैः स्मरापाण्डुतयाङ्गनानाम् ।
यस्यां कपोलैः कलधौतधाम-
स्तम्भेषु भेजे मणिदर्पणश्रीः ॥'

इति माघोक्तेश्च ॥ २५ ॥

अमृतवर्तिका सुधासारनिर्मिता नयनौषधशलाका ।[3] 'वर्तिः सुनेत्री सकला-क्षिरोगान्' इति दाहटोक्तेः । निरतिशयं अतिशेते इत्यतिशयः, निरस्तं

---

१. 'कान्तः कपोलः' ख. ब. छ. ज, पाण्डुः कपोलः' क. ग झ. ञ. पाठः. २. 'अथ सा' ख. घ. च., 'सा पुनर्मम' झ. ञ. पाठः. ३. 'मम प्रथमदर्श-नक्षणात् प्रभृति' क. ञ. पाठः. ४. 'प्रथमदर्शनात् प्रभृति' झ. . ञ. पाठः. ५. 'वर्तिरिव' ख. घ. च. छ. ज. झ. ञ. पाठः ६. 'मुत्पादयन्ती' झ. ञ. पाठः. ७. 'साकृष्टवती' क. झ. ञ., 'मुपसंहृतवती । सन्ताप' ब. पाठः. ८. 'किं बहुना—सन्ताप' ख. ब. छ., 'सर्वथा । किं बहुना' झ. ञ. पाठः.

---

१. 'पौनःपुन्यं प्रार्थनायाः प्रतिक्रियं प्रतीयते' ग. घ. च. पाठः. २. 'नवद', ३. 'गुलिका' ग. घ. च. पाठः.

सन्तापसन्ततिमहाव्यसनाय तस्या-
मासक्तमेतदनपेक्षितहेतु चेतः ।
प्रायः शुभं च विदधात्यशुभं च जन्तोः
सर्वङ्कषा भगवती भवितव्यतैव ॥ २६ ॥

---

स्वसादधिकमानन्दान्तरं येन । उपपादयन्त्युपहरन्ती । अयस्कान्तमणिशलाका अयःसमाकर्षणशक्तियुक्तः शिलाविशेषोऽयस्कान्तमणिः शलाका तत्कीलकः । शलाकाग्रहणमुपमेयस्य कीतत्वात् । लोहधातुं, 'धातुर्मनःशिलाद्यद्रेः' इत्यभिधानात् । धातूनां बहुविधत्वाल्लोहधातुमिति अयोरूपं धातुमित्यर्थः । अन्तःकरणं मनः । उपसंहृतवती स्वसमीपं नीतवती । अत्र चक्षुषोरिति नयनप्रीतिरन्तःकरणमिति चित्तासङ्गश्चावस्थे प्रतिपादिते । 'सा मम' इत्यादावुपमालङ्कारः । उत्प्रेक्षा वा, वर्तिकात्वशलाकात्वयोरध्यवसायविषयत्वात् । सर्वथा सर्वप्रकारेणेति दुर्निवारत्वं ध्वन्यते । अत्र च 'तामिन्दुसुन्दरमुखीम्' इत्यादिभिः 'सा मम दर्शनात् प्रभृति' इत्यादेः पौनरुक्त्यं नाशङ्कनीयम्, पूर्वं स्वानुभवमन(न्त्वाऽना)-दिदानीं स्वानुभूतकथनाच्च ।

सन्तापेत्यादि — सन्तापसन्ततिः स्मरशरव्यथाप्रवाहः, तद्रूपाय महाव्यसनाय महतीमापदमनुभवितुम् । 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' (२-३-१४) इति चतुर्थी । आसक्तं समन्ताद् बद्धम् । अनेन प्रत्यवयवं सक्तिः प्रकाश्यते । एतदिति । ईदृशमविवेकीत्युपालम्भः । अनपेक्षितहेतु सौलभ्यसामीप्यादिकं निमित्तमनपेक्षमाणम् । अथ कारणमन्तरेण कार्योत्पत्त्यनुपपत्तेर्बाह्यकारणानिरूपणात्[2] कार्योत्पत्तेश्च दर्शनाददृष्टं किमपि कारणमनुमिमीते — प्राय इति । प्रायो बाहुल्येनेति उत्प्रेक्षाद्योतकम् । शुभं चाशुभं च सुखं च दुःखं च । विदधाति करोति । सर्वं जगत् व्याप्नोतीति वा, स्वशक्त्या निराकरोतीति वा

---

१. 'दनवेक्षित' ख. घ. च. पाठः.

---

१. 'विनयादिभिर्दुर्निवार', २. 'निरूपणाच्च का' ग. घ. च. पाठः

मकरन्दः — वयस्य ! माधव ! स्नेहश्च निमित्तसव्यपेक्षश्चेति विप्रतिषिद्धमेतत् ।

पश्य—

व्यतिषजति पदार्थानान्तरः कोऽपि हेतु-
र्न खलु बहिरुपाधीन् प्रीतयः संश्रयन्ते ।

---

सर्वकषा । 'सर्वकूलाभ्रकरीषेषु कषः' (३-२-४२) इति खच् । भगवतीति परमेश्वरशक्तित्वाद् दुर्लङ्घ्यसामर्थ्यत्वाच्चोपचारः । भवितव्यता तस्य तस्य पदार्थस्य तत्तद्धर्मासङ्करणकारणं नियतिशक्तिः ।

'येन यत्रोपभोक्तव्यं सुखं वा दुःखमेव वा ।
स तत्र बद्ध्वा रज्ज्वेव बलाद्दैवेन नीयते ॥'

इति महाभारतोक्तेः ।

'अभिशौरि रथोऽथ चोदिताश्वः
प्रययौ सारथिरूपया नियत्या ।'

इति माघोक्तेश्च । अत्र पूर्वार्धे विभावनालङ्कारः । चेतः प्रति चाभ्यसूया व्यज्यते । उत्तरार्धे त्वर्थान्तरन्यासः । वितर्को दैन्यं च भावौ व्यज्येते ॥ १६ ॥

अथ मकरन्दस्तदीयमेव वितर्कं दृष्टान्तमुखेन स्थापयति — वयस्येति ! स्नेहश्च स्वयं भवति, निमित्तेऽर्थात् बाह्ये सव्यपेक्षः साकाङ्क्षश्च भवतीत्येतद्वचो विप्रतिषिद्धं परस्परविरुद्धम् । तुल्यबलविरोधो विप्रतिषेधः ।

व्याप्तिग्रहणपूर्वकं दृष्टान्तं दर्शयति —पश्येति ।

व्यतिषजति नानाविधमीतिशयेन बध्नाति । षञ्ज सङ्गे । पदार्थानिति । न केवलं चेतनेष्वयं नियमः यावदचेतनेष्वपीति द्योत्यते । आन्तरोऽन्तर्भवः । आन्तरशब्देनाप्रत्यक्षत्वं लक्ष्यते । कोऽपि अचिन्त्यप्रभावः । हेतुः निमित्तमित्यर्थः । बहिरुपाधीन् प्रत्यक्षभूतान् हेतून् ।

---

१. 'सव्यपेक्ष इति' क. ख. छ., 'सापेक्ष इति' छ. पाठः.

---

१. 'चारशब्दप्रयोगः भवि' ग. घ. ब. पाठः. २. 'निhत' ब. घ. पाठः. ३. 'स्थापयति', ४. 'षञ्ज इति धातुः । पदा' ग. घ ब. पाठः.

विकसति हि पतङ्गस्योदये पुण्डरीकं
द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः ॥ २७ ॥

ततस्ततः ।

माधवः — ततश्च तत्र ।

सभ्रूविलासमथ सोऽयमितीव[1] नाम
सप्रत्यभिज्ञमिव मामवलोक्य तस्याः ।

---

'एकसाध्याविनाभावे मिथः संबन्धशून्ययोः ।
सा*ध्यप्रभावाविनाभावी स उपाधिर्यदत्ययः' ॥

इति लक्षितोऽप्युपाधिरत्र कारणमात्रपर्यायः, 'उपाधिस्तत्रायं जयति जनिकर्तुः प्रकृतिता' इति मुरार्युक्तवत् । प्रीतयः परस्परप्रेमनिबन्धनानि सुखानि । बहुवचनेन विषयबाहुल्यं सूच्यते । हि प्रसिद्धौ । पतङ्गस्य सूर्यस्य उदये पूर्वाद्रावाविर्भावे । अनेन दूरगतत्वं प्रकाश्यते । पतङ्गस्येति दुस्पर्शत्वदुर्निरीक्षतादिरर्थान्तरसंक्रमितवाच्येन ध्वनिना प्रकाश्यते 'रामोऽसि सर्वं सहे' इत्यत्र रामवत् । पुण्डरीकमिति च सुस्पर्शत्वदर्शनीयत्वादिः । द्रवति आर्द्रीभवति । हिमरश्माविति शैत्यसौकुमार्यादि, चन्द्रकान्त इति च कठिनविरसत्वादिः, ततश्च परस्परोपकारविरहिणोः विरुद्धगुणयोर्दूरदेशस्थितयोरपि परस्परानुरागोऽयं दृश्यते। स एष भवितव्यतायाः प्रभाव एवेत्यर्थः । अर्थान्तरन्यासोऽलङ्कारः ॥ २७ ॥

ततस्ततः ततः परं कथ्यतामिति नाटकन्यायादायाति : वप्सिया श्रवणकौतुकं ध्वन्यते ।

सभ्रूविलासमित्यादि । पूर्वदृष्टस्य वस्तुनः पुनर्दर्शने तदिदमिति पूर्वानुभवपरामर्शः प्रत्यभिज्ञा । सप्रत्यभिज्ञं प्रत्यभिज्ञासहितम् । तथात्वनिर्णयाभावाद् वितर्कद्योतक इवशब्दः । मामवलोक्य निरीक्ष्य । अथ अनन्तरम् । चतुरेण विदग्धेनेति पृथग्जनापरिज्ञेयेङ्गितभङ्गिसामर्थ्यं प्रकाश्यते । सखीजनेन सहचरीसमूहेन । सभ्रूविलासं भ्रूचलनसहितम् । सोऽयमितीव

---

१. 'मितीरयित्वा स' श. ज. पाठः.

---

१. 'निमित्तं बन्ध', २ 'स्नेहनिब', ३. 'सूचयति', ४. 'द्योत्यते', ५. 'मितिसुस्पर्श', ६ 'नीरस', ७. 'दापतति' ध. ब. ज. पाठः. *'ध्यप्रभाव' ङ. ब. ज. पाठः.

अन्योन्यमेव चतुरेण सखीजनेन
मुक्तास्तदा स्मितसुधामधुराः कटाक्षाः ॥ २८ ॥

मकरन्दः—(स्वगतं) कथं प्रत्यभिज्ञापि नाम ?

माधवः— अथ ताः सलीलम् उत्तालकरकमलतालिकातरलवलयावलीकम्, उत्त्रस्तमत्तकलहंसविभ्रमाभिरामचरणसञ्चरणरणरणायमानमञ्जीरमञ्जुरसितानुविद्धमेखलाकलापकिङ्किणीरणत्कारमुखरं प्रतिनिवृत्य

नाम पूर्वं प्रस्तुतो यः स एवायमितीव । इवशब्दोऽत्रापि वितर्कद्योतकः । नाम प्रकाश्ये सम्भावनायां वा । अन्योन्यमेवेत्येवकारेणान्यतः संवरणचातुरी द्योत्यते । स्मितसुधामधुराः सिततरदशनकिरणवितरणेन स्मितममृतत्वेन रूप्यते । स्मितसुधया मनोहराः । कटाक्षाः मुक्ताः प्रेरिताः । अत्र सूक्ष्ममलङ्कारः ॥ २८ ॥

अथ माधवस्य ताभिर्दृष्टपूर्वत्वमजानानो मकरन्दः पृच्छति — कथमित्याश्चर्ये । प्रत्यभिज्ञापि कथं नामेति । नाम सम्भावनायाम् ।

सलीलं सविलासम् । उत्ताला उद्धता करकमलतालिका तासां संहत्य स्थितत्वात् परस्परकरतलघट्टनम् । 'तल प्रहारे' इति धातोर्वुञ् । तया तरला चञ्चला वलयावली मणिकङ्कणपङ्क्तिर्यत्र तत् । उत्त्रस्तस्यातिशयेन भीतस्य मत्तस्य कमलमधुपानक्षीबस्य कलहंसस्य धूसरच्छदस्य हंसविशेषस्य विभ्रमवद्विलासवदभिरामेण चरणसञ्चरणेन पादन्यासेन । रणरणायमानं रणरणेति शब्दानुकारः । अव्यक्तानुकरणे डाच्, 'लोहितादिडाज्भ्यः क्यष्' (३-१-१३), वा क्यषः' (१-३-९०)इति आत्मनेपदं, शानच् । मञ्जीरं नूपुरं

१. 'प्रत्यभिज्ञा नाम' ख. पाठः. २. 'कमललुलितता' ख. ग. घ. ङ. च. छ. ज. झ. ञ. पाठः. ३. 'स्तकलहंस' छ. ञ. पाठः. ४. 'शिञ्जितानुविद्ध' क ख. पाठः. ५. 'कलापकलीकाङ्कणी' झ. ञ. पाठः ६. रणरणत्कार' ज. पाठः ७. 'परिवृत्य' घ. झ. ञ. पाठः.

१. 'वा परस्परमेव एवकारेण नान्यतः' ग. घ. ङ. पाठः. २. 'विकिरेण' क. पाठः. ३. 'उद्धूतता' ग. घ. पाठः. ४. 'लिर्मणि' ग. ङ. च. पाठः. ५. 'च् क्यष् शानच्' क. पाठः.

भर्तृदारिके ! दिष्ट्या वर्धामहे, यदत्रैव कोऽपि कस्या अपि वल्लभस्तिष्ठतीति मामङ्गुलीविलासेनाख्यातवत्यः ।

मकरन्दः — (स्वगतं) हन्त! महतः प्रागनुरागस्योद्भेदः ।

कलहंसः — (आकर्ण्य) कधं सरसरमणीआणुबन्धिणी इत्थिआकहा । (कथं सरसरमणीयानुबन्धिनी स्त्रीकथा)

---

तस्य मञ्जुना मधुरेण रसितेन शब्देन अनुविद्धेन मिश्रितेन । मेखलाकलापस्य काञ्चीरूपस्य भूषणस्य किङ्किणीनां कनकमयक्षुद्रघण्टिकानां रणत्कारेण शब्दविशेषेण मुखरं वाचालं च यथेति पदत्रयं प्रतिनिवर्तनक्रियाविशेषणम् । प्रतिनिवृत्य प्रतीपं गत्वा । भर्तृदारिके इति ।

'राजा भट्टारको देवस्तत्सुता भर्तृदारिका'

इत्यमरः । राजसमस्यामात्यस्य दुहितृत्वात् तथामन्त्रणम् । दिष्ट्या वर्धामहे भाग्येन सम्पूर्णा भवामः । वर्धामहे न तु वर्धसे इत्युक्तिस्तस्यास्त्रपापरिहाराय, त्वदभ्युदयः सर्वासामस्माकमभ्युदय इति द्योतनाय च । कोऽपीति निरतिशयगुणत्वादशक्यवर्णनत्वं ध्वन्यते । कस्या अपीति । कस्या अपि तथाविधत्वम् । वल्लभः प्रियतमः । कोऽपि कस्या अपि वल्लभः इत्यर्थशक्तिमूलानुरणनव्यङ्ग्येन तव दयित इति वचनस्याचतुरत्वात् गूढत्वपरेण परिहासो ध्वन्यते । अङ्गुलीविलासेन तर्जनीनिर्देशाभिनयलीलया आख्यातवत्यः कथितवत्यः । अङ्गुलीनिर्देशपूर्वकं तिष्ठतीत्याख्यातवत्य इत्यन्वयः ।

हन्तेति हर्षे । माधवमनीषितानुकूलत्वात्तद्वचनस्य । 'हन्त हर्षविषादयोः' इति वैजयन्ती । प्रागनुरागस्य पूर्वोत्पन्नस्य प्रेम्णः । उद्भेदः प्रकाशनम् ।

सरसरमणीयानुबन्धिनी स्त्रीकथा । रससहितमत एव रमणीयं चार्थमनुबध्नाति, स्त्रीविषया कथा उक्तिः ।

---

१. 'व कस्या' छ. पाठः २. 'कस्यापि' क. छ. झ. ञ, 'कस्यापि तिष्ठति' छ. ञ. पाठः ३. 'मामङ्गुलीदलविलासेन' ज. झ. ञ. पाठः ४ 'महान्' छ. पाठः ५. 'प्रथमानु' ज. पाठः ६. 'एदाणं सरस', ७. 'कहं' ग. ङ., 'कघं' छ, 'कल — सरस' ख. च. छ. पाठः ८ 'रमणिज्जाणु' ज. ञ. पाठः ९. 'इन्थि' ग. घ. च. ज. पाठः १०. 'अणकआ' छ. पाठः

---

१. 'मञ्जुभिर्मधुरै रसितैः शब्दैः' ग. घ. पाठः

मकरन्दः — ततस्ततः ।

माधवः —

अत्रान्तरे किमपि वाग्विभवातिवृत्त-
वैचित्र्यमुल्लसितविभ्रममुत्पलाक्ष्याः ।
तद्भूरिसात्त्विकविकारमपास्तधैर्य-
माचार्यकं विजयि मान्मथमाविरासीत् ॥ २९ ॥

---

अथ तस्याः स्वदर्शनकाले

'तात्कालिको विशेषस्तु विलासोऽङ्गक्रियादिषु ।'

इति लक्षितं विलासाख्यं गुणमाह — अत्रान्तर इत्यादि । अस्मिन्नवसरे । तदाख्यानानन्तरं मदवलोकने इत्यर्थः । किमपि अनुभवैकगम्यम् । वाग्विभवातिवृत्तवैचित्र्यं वागिन्द्रियशक्तिमतिक्रान्तं वैचित्र्यं यस्य । उल्लसितविभ्रमम् उद्भूतः कटाक्षभुजाक्षेपादिचेष्टाविशेषो यस्मिन् । उत्पलाक्ष्या इति विकचकुवलयसदृशनयनत्वमपि तस्यास्तदानीं व्यक्तमासीदिति द्योत्यते । तदिति भरतवात्स्यायनादिप्रसिद्धिं परामृशति । भूरिसात्त्विकविकारं सत्त्वमन्तःकरणं तत्क्षोभजातः सात्त्विकः, बहुतरः कम्पस्वेदादिः सात्त्विको विकारो यस्मिन् ।

'कम्पः स्वेदोऽथ रोमाञ्चः स्वरसादोऽथ वेपथुः ।
वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्त्विकाः स्मृताः ॥'

इति भरतः । अपास्तधैर्यं चापलानुपहतचित्तवृत्तिरूपम् अपास्तं दूरतः क्षिप्तं येन । आचार्यकं आचार्यस्य कर्म । 'योपधात् गुरूपोत्तमाद् वुञ्'(५-१-१३२) । उपदेश इत्यर्थः ।

'नीचान्नीचतरोपसर्पणमपामेतत् किमाचार्यकम् ।'

इति मुरार्युक्तवत् । विजयि विजयोऽभिभवपरवशीकरणं शीलं यस्येति

---

१. 'वृत्ति', २. 'मुल्ललित' छ. पाठः. ३. 'विभ्रममायताक्ष्याः' ज. पाठः. ४. किमपि मा' छ. पाठः.

---

१. 'स्वसन्दर्श' ग. घ. च. पाठः. २. 'नमित्यर्थः' ख. ग घ. च. पाठः. ३. 'विकच', ४. 'स्य भावः । यो' ग. घ. च. पाठः.

ततश्च —

स्तिमितविकसितानामुल्लसद्भ्रूलतानां
मसृणमुकुलितानां प्रान्तविस्तारभाजाम् ।

हठात्कारणसामर्थ्यं प्रकाश्यते । मान्मथं मन्मथसम्बन्धि । अनेन मुग्धानामपि मन्मथगुरूपदेशात्तदात्वोन्मीलद्विविधविलासवैदग्धी प्रकाश्यते ।

'उपदिशति कामिनीनां यौवनमद एव ललितानि ।'

इत्युक्तेः । आविरासीत् प्रादुर्भूतं नतूत्पलाक्ष्या कृतमिति प्रेमप्रकर्षात् स्वरसत एव प्रकाशनं व्यज्यते । आविरिति प्रकाशवाचकमव्ययम् । अत्र परिकरोऽलङ्कारः, अतिशयोक्तिश्च, विशेषणसाभिप्रायत्वाद्विलासचेष्टितस्याचार्यकत्वेनाध्यवसितत्वाच्च ॥ २९ ॥

अथ रत्याख्यस्थायिभावानुभावांस्तस्या दृष्टिविशेषानाह — ततश्चेति । चकारः उत्पलाक्ष्या इत्यनुकर्षणार्थः ।

स्तिमितेत्यादि । भरतोक्तानां नवरसोपयोगिनीनां चतुरधिकशतस्य दृष्टीनां मध्ये चतुष्षष्टिदृष्टयः शृङ्गारोपयोगिन्यः, तासु काश्चित् प्रकाश्यन्ते । स्तिमितानां निश्चलानाम् ।

'स्वगोचरान्न चाल्येत यत्तत् स्तिमितमुच्यते ।'

इति भावप्रकाशः । सर्वे च दृष्टिलक्षणसंवादग्रन्था भावप्रकाशतः (इति ?) ज्ञेयाः । विस्मयानुभावश्चायम् । 'यद्विस्मयस्तिमितम्' इति स्वोक्तेः । विकसितानां मुखाद्यवयवसौभाग्यावगाहेन प्रफुल्लानां विकसिताद्यविषयविशेषमवगाहते । हर्षानुभावश्चायम् । उल्लसद्भ्रूलतानां अभिप्रायसूचकोच्चलच्चिल्लीलतानाम् ।

'यत्रोल्लसत्यभिप्रायस्तदुल्लासीति कथ्यते ।'

इति । उद्वर्तिताख्यं चैतद्वीक्षणम्[६] ।

१. 'त्कारसा', २. 'मान्मथमित्यनेन', ३. 'भावायास्तस्या', ४. 'वविशेष सौभाग्य', ५. 'तद्यद्वि', ६. 'द्विशेषणं' ग. घ. च. पाठः

प्रतिनयननिपाते[1] किञ्चिदाकुञ्चितानां
विविधमहमभूवं पात्रमालोकितानाम् ॥ ३० ॥

'उद्वर्तितं तद्विज्ञेयं भ्रुवोरूर्ध्वं प्रकम्पनम् ।'

इति । अद्भुतानुभावश्चायम् । अथवा प्राप्तिचिन्तानुभावः । 'उन्नमितैकभ्रूलतमाननमस्याः' इतिवत् । मसृणमुकुलितानां

'मसृणं तदिति ख्यातमनुरागकषायितम् ।'

इति । मसृणानामनुरागवशादनुद्धतानामित्यर्थः । मुकुलितानामित्यौचित्यादर्धमुकुलितत्वमुच्यते । सुखानुभवादर्धनिमीलितानाम् ।

'अर्धव्याकोशतारा च ह्लादार्धमुकुलैः पुटैः ।
स्मृतार्धमुकुला दृष्टिः'

इति । मोहानुभावश्चायम् ।

'आशु लङ्घितवतीष्टकराग्रे नीविमर्धमुकुलीकृतदृष्ट्या ।'

इति माघोक्तवत् । भ्रान्तविस्तारभाजां प्रान्ते तद्दर्शनावसाने विस्तारभाजाम् ।

'आश्लिष्टो येन विषयस्तद्विस्तारीति कथ्यते ।'

इति पृथ्वग्रतया दृश्यं कवलयतामित्यर्थः । अथवा प्रान्ते अपाङ्गे[2] विस्तारवतां विस्तीर्यमाणानाम् । मोहप्रतियोगिविबोधानुभावोऽयम्[3] । प्रतिनयननिपाते प्रतीपं मदीयनेत्रयोः प्रवृत्तौ । किञ्चिदाकुञ्चितानामीषन्निवर्तितानाम् । आकुञ्चितं[4] यथागतं निवृत्तिः किञ्चिद्ग्रहणं निवृत्तौ मान्द्यं प्रकाशयति । लज्जानुभावश्चायम् ।

'तयोः समापत्तिषु कातराणि
किञ्चिद्व्यवस्थापितसंहृतानि ।
ह्रीयन्त्रणामानशिरे मनोज्ञा-
न्यन्योन्यलोलानि विलोचनानि ॥'

१. 'विपाते', ज. पाठः.

१. 'तद्दृशा' क. ग. घ. ङ. पाठः. २. 'ङ्गे विस्तीर्यमाणानां', ३. 'भावश्चायं', ४. 'आकुञ्चनं', ५. 'नीत्युक्तवत् । यथा शाकुन्तले अपि' ग. घ. ङ. पाठः.

[1]ततश्च —

अलसवलितमुग्धस्निग्धनिष्पन्द[2]मन्दै-
रधिकविकसदन्तर्विस्मयस्मेरतारैः ।

---

इतिवत् । 'अभिमुखे मयि संहृतमीक्षणम्' इति च शाकुन्तले । [1]विविधमित्यनुक्तानामपि प्रकारान्तराणामशक्यवर्णनतया सङ्ग्रहः । आलोकितविशेषणं चेदम् । पात्रं भाजनम् ।

'पात्रन्तु भाजने योग्ये विधे कूलद्वयान्तरे ।'

इति वैजयन्ती । पात्रशब्दस्य नित्यनपुंसकत्वादहमिति सामानाधिकरण्यम् । आलोकितानां दर्शनक्रियाणाम् । भावे क्तः । अहं पात्रमभूवमित्यनेनाहो मम धन्यत्वम्, इतः पूर्वमेतावतः सुकृतराशेर्मय्यसम्भावितत्वमिति द्योत्यते । रक्तावलोकनस्वभाववर्णनात् स्वभावोक्तिरत्रालङ्कारः । अत्र च 'भूम्ना रसानां गहनाः प्रयोगाः' इति प्रतिज्ञातस्य [3]योजनमनुसन्धेयम् ॥ २० ॥

अथ तथाविधानामालोकितानां निरतिशयं मनःक्षोभकत्वसामर्थ्यमाह — [4]अलसेत्यादि । अलसेति किञ्चिदाकुञ्चितानामित्यस्यानुवादः ।

'आलस्यं तदभीष्टार्थाद् व्रीलादेर्यन्निवर्तनम् ।'

इत्युक्तत्वात् । वलितमित्यादि विविधमिति क्रियाविशेषणस्य विवरणम् ।

'वलितं तन्निवृत्तस्य भूयस्त्र्यश्रावलोकनम् ।'

इति । त्र्यश्रं तिर्यगुदञ्चितम् । मुग्धमकृत्रिमम् ।

'स्वभावालोकितं मुग्धं भावगर्भमपि छलात् ।'

इति । स्निग्धमरूक्षंप्रभापटलबहलम् ।

'स्निग्धं तद्यस्य विषयस्तत्प्रभामिलितो भवेत् ।
निष्पन्दं तद्यदन्यत्र दृष्टान्न स्पन्दते क्वचित् ॥'

---

१. 'तैश्च', २. 'निष्यन्द' क. झ. ञ. पाठः.

---

१. 'क्षणमिति । विविध', २. 'निष्ठा', ३. 'योजनारम्भोऽनु', ४. 'अलसमिति' ग. घ. च. पाठः.

हृदयमशरणं मे पक्ष्मलाक्ष्याः कटाक्षै-
रपहृतमपविद्धं पीतमुन्मीलितं च ॥ ३१ ॥

इति। निष्पन्दत्वं नाम स्वयमेव स्वविषयादचलनम्, स्तिमितत्वं पुनः परप्रेरणयाप्यचलनमिति विवेकः। मन्दः सन्निहितेऽपि विषयान्तरे ग्रहणापटुः। 'मूढाल्पापटुनिर्भाग्यमन्दः' इति वैजयन्ती। अलसैर्वलितैर्मुग्धैः स्निग्धैर्निष्पन्दमन्दैश्च। अधिकविकसदन्तर्विस्मयस्मेरतारैः भृशमुज्जृम्भमाणेनान्तर्गतेन विस्मयेन स्मेरा स्मयशीला तारा अक्षिकनीनिका येषु। 'नमिकम्पिस्म्यजसकमहिंसदीपो रः' (३-२-१६७) इति रः।

'स्फुरदभ्रूपक्ष्मतारं यत्तत् स्मेरमिति कथ्यते।' (इति)।

हृदयं मनः। अशरणं रक्षितृरहितम्, रक्षितॄणां विनयादीनां दूरतो निरस्तत्वादिति भावः। 'शरणं गृहरक्षित्रोः' इत्यमरः। पक्ष्मलाक्ष्याः प्रशस्तपक्ष्मविशिष्टलोचनायाः। मत्वर्थे लच्। अथवा लातेः के।

'अपाङ्गे तारविक्षेपः कटाक्ष इति कथ्यते।'

इति। अपहृतं स्वीकृतं 'प्रियतमा यतमानमपाहरत्' इतिवत्। अपविद्धं पातितम्, 'अपविद्धगतो बाहुः' इतिवत्। स्वविषये निमज्जितमित्यर्थः। पीतं कवलीकृतम्, स्वाकारेणान्तर्निगीर्णमित्यर्थः। उन्मूलितमत्यन्तं स्वस्मिन् विलापितम्। हृदयपुण्डरीके मनागप्यदर्शनान्निरवशेषं विनाशितं चेत्यर्थः। अपहृतमित्यादिभिः बाधनस्य क्रमादुत्तरोत्तरोत्कर्षः प्रकाश्यते। ततः परस्य प्रकारान्तरस्याभावादुन्मीलितत्वे विश्रान्तिः। मे हृदयमिति मदीयत्वात्तस्य दुर्बलत्वम्। पक्ष्मलाक्ष्याः कटाक्षैरिति तदीयत्वात्तेषामाश्रयबलेन बलवत्त्वं चेति द्योत्यते। अशरणं हृदयं कटाक्षैरित्यनाथस्यैकस्य बहुभिर्बलोत्तरैर्बाध्यमानत्वे कः प्रतीकार इति हृदयं प्रति दया, कटाक्षान् प्रत्यसूया, स्वस्य हृदयरक्षणाक्षमत्वाद्दैन्यं च प्रकाश्यते। अत्र कटाक्षैर्हृदयविवशीकरणप्रकारभेदस्यापहृतत्वादिभिरध्यवसितत्वादतिशयोक्तिरलङ्कारः। एकस्य कारकस्यापहरणादिबहुक्रियासम्बन्धाद्दीपकं च ॥ ३१ ॥

१. 'विशेषः', २. 'लच्प्रत्ययः', ३. 'स्वसात्कृतं', ४. 'हरन्तीति', ५. 'न्नतो निर', ६. 'रोत्क्रमः' क. पाठः. ७. 'स्वस्य ' च', ८. 'कटाक्षाणां हृ' ग. घ. च. पाठः. ९. 'दिर' क. पाठः. १०. 'हृदयस्यैकस्य', ११. 'हृतत्वादि' ग. घ. च. पाठः.

अहन्तु तस्याः सर्वाकारहृदयङ्गमायाः सम्भाव्यमानस्नेहरसेन सन्निधिना विधेयीकृतोऽपि पारिप्लवत्वमात्मनोऽपह्नोतुकामः, प्राक्प्रस्तुतस्य बकुलदाम्नो यथाकथञ्चिदवशेषं ग्रथितवानेव. ततो वेत्रपाणिवर्षवरप्रायपुरुषपरिवारां गजवधूमारुह्य, नगरगामिनं मार्गमिन्दुवदनालङ्कृतवती ।

---

अथ स्ववृत्तमाह — अहन्त्विति । तुर्विशेषे, अपह्नोतुमशक्ये त्वस्मिन्नवस्थान्तरे दुष्करं मया कृतमिति द्योतयति । सर्वाकारहृदयङ्गमायाः रूपशीलादिभिः सर्वैः प्रकारैरुदारतया हृदयं चित्तं प्रविशन्त्याः । 'गमेस्सुप्युपसङ्ख्यानम्' इति खच् । सम्भाव्यमानस्नेहरसेन मय्यस्याः कोऽपि प्रेमप्रकर्षोऽस्तीत्यूह्यमानस्नेहरसेन । सन्निधिना पुरोवस्थानेन । विधेयीकृतोऽपि स्ववशीकृतोऽपि । पारिप्लवत्वं चपलत्वम् । अपह्नोतुकामः छादयितुमिच्छन् । 'तुं काममनसोरपी'ति मकारलोपः । यथाकथञ्चित् अतिकृच्छ्रेणेति विदग्धविरचनाप्रारम्भपरित्यागः प्रकाश्यते । एवेति । अहो मम धैर्यमिति भावः । तत इति । वेत्रपाणयः प्रतीहाराः, वेत्रं पाणौ येषामिति 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः इति वक्तव्यम्' इति सप्तम्यन्तस्य परनिपातः । वर्षवराः षण्डाः तद्बहुलाः पुरुषाः परिवारयन्तीति परिवाराः परिकरा यस्यास्ताम् । गजवधूं करिणीमिति मङ्गल्यत्वादुक्तिः । नगरगामिनं पुरं प्रति गमनशीलम् । नगरगमनानुकूलमित्यर्थः ।

'एष पन्था विदर्भाणामेषं यास्यति कोसलान्'

इतिवत् । इन्दुवदनेत्यनेन करिणीस्कन्धवर्तिन्यास्तस्या मुखस्योदयगिरिगतचन्द्रबिम्बसादृश्यसम्पत्तिर्द्योत्यते ।

---

१. 'एवमहन्तु' क. पाठः. २. 'रसेनाभिसन्धिना' झ. ञ. पाठः. ३. 'त्वमपह्नोतुकामः' ञ, 'स्वमात्मनापनिह्नोतुकामः' झ. ञ. पाठः. ४. 'पनिह्नोतुकामः' ज. पाठः. ५. 'वकुलपुष्पदा' ङ. ज. पाठः. ६. 'ग्रथितवान्' छ. पाठः. ७. 'ततो मिलितवेत्रपाणि' क. ज. झ. ञ. पाठः. ८. 'परिवारागज' ज. झ. ञ. पाठः.

---

१. 'अवस्थातुमप्यशक्ये तस्मि'; २. 'इति समासः । वर्ष' ग. घ.

३. 'परितो वारयन्तीति' ज. पाठः.

यान्त्या मुहुर्वलितकन्धरमाननं त-
दावृत्तवृन्तशतपत्रनिभं वहन्त्या ।
दिग्धामृतेन च विषेण च पक्ष्मलाक्ष्या
गाढं निखात इव मे हृदये कटाक्षः ॥ ३२ ॥

---

अथ गमनसमये तस्याः प्रवृत्तिमाह—यान्त्येत्यादि । मुहुर्बहुशः । वलितकन्धरं तिर्यग्गतं कण्ठनालं यस्य तत् । आननं मुखम् । तदिति स्वानुभूतसौन्दर्यत्वं द्योत्यते । आवृत्तवृन्तशतपत्रनिभं आवृत्तं वलितं वृन्तं प्रसवबन्धनं शतपत्रं पद्मम् (यथा) । यदा वलितकन्धरं तदा तदाननं आवृत्तवृन्तशतपत्रनिभं सदृशमित्युपमालङ्कारः । कन्धरावृन्तयोराननशतपत्रयोश्च बिम्बप्रतिबिम्बभावेनावस्थानिर्देशात् । वलितत्वावृत्तत्वयोस्तु सम्बन्धिभेदाद् भिन्नत्वं नार्थतः पर्यायत्वात् । दिग्धः उपलिप्तः । 'दिह उपलेपने' इति धातुः । अमृतेनानुकूल्यद्योतकत्वात् । विषेण तु स्वस्य दुर्लभत्वाशङ्कया । अथवा अनुभवसमये सुखावहत्वाद्विरहसमये दुःखावहत्वाच्च विरोधोऽत्रालङ्कारः । गाढं दृढम् । निखातः कीलवत् स्थापितः । इवेत्युत्प्रेक्षाद्योतकम् । तस्य हृदयतोऽनपायात् । 'अत्रान्तरे किमपि' इत्यारभ्य 'हृदये कटाक्षः' इत्यन्तेन कैशिकी वृत्तिरनुसन्धेया । एवमन्यत्राप्यनुसर्तव्यम् ।

'तद्व्यापारात्मिका वृत्तिश्चतुर्धा तत्र कैशिकी ।
गीतनृत्तविलासाद्यैर्मृदुशृङ्गारचेष्टितैः ॥'

इति वचनात् । वीरप्रस्तावे सात्वती । रौद्रबीभत्सप्रस्तावे चारभटीं दर्शयिष्यामः ।

'शृङ्गारे कैशिकी वीरे सात्त्वत्यारभटी पुनः ।
रसे रौद्रे सबीभत्से' ॥

इति वचनात् ।

'भारती संस्कृतप्रायो वाग्व्यापारो नराश्रयः ।
वृत्तिः सर्वत्र भारती'

इति वचनात् । भारती तु व्यापकत्वेन सर्वत्रानुसन्धेया ॥ ३२ ॥

---

१. 'तदाच—यान्त्या' झ. पाठः.

---

१. 'गमने तस्याः' ग. घ. च. पाठः. २. 'तिर्यग्गतकण्ठनालं' ख. पाठः. ३. 'वलितप्रसवबन्धनपद्मसदृशम् । यदा' ग. घ. च. पाठः. ४. 'तादृशमिति दृष्टान्तोऽलङ्कारः' क. पाठः. ५. 'भावेन निर्देशात्', ६. 'अमृतेन दिग्धः आनु' ग. घ. च. ज. पाठः.

ततः प्रभृति,

परिच्छेदातीतः सकलवचनानामविषयः
पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान् ।
विवेकप्रध्वंसादुपचितमहामोहगहनो
विकारः कोऽप्यन्तर्जडयति च तापं च कुरुते ॥ ३३ ॥

---

अथ स्वावस्थामाह—ततः प्रभृति तस्मात्कालादारभ्य । 'प्रभृत्यादिभिरुपसङ्ख्यानम्' इति प्रभृतिशब्दयोगे पञ्चमी । 'स्कन्धात् प्रभृत्येव सपल्लवानि' इतिवत् ।

परिच्छेदातीत इत्यादि — इयानयमिति परिमाणकल्पना परिच्छेदः । स च मनोव्यापारस्तमतिक्रान्तः । 'द्वितीया श्रितातीतपतित' इत्यादिना समासः । पूर्वरूपस्य मनसोऽप्यगोचरत्वे कः पुनरुत्तररूपाया वाचः प्रसङ्ग इत्याह—सकलवचनानां वाचकलाक्षणिकव्यञ्जकादिभेदभिन्नानां सर्वेषां शब्दानाम् । अथवा सकलानां बृहस्पत्यादीनां वक्तॄणां सम्बन्धिनाम् । बहुवचनेन बहुविधस्य वचसः, अविषयः अगोचरः । तर्हि पूर्वानुभवसंवादीति चेत्तत्राह—[पुनरिति] । पुनश्शब्दो विशेषे । अस्मिन् जन्मनि पुनः । अनुभवपथं स्मृतिव्यतिरिक्तज्ञानसरणिम् । जन्मान्तरानुभूतेष्विदानीमस्मृतिगोचरत्वादित्यर्थः । अत्र पूर्ववाक्यगतोऽपि यच्छब्दः उत्तरवाक्ये तच्छब्दमाक्षिपति यत्तदोर्नित्याभिसम्बन्धात् । यथाह कविवल्लभः—

'यदि प्रयुक्तं तदिव प्रत्यभिज्ञमबारितम् ।'

इति । उत्तरवाक्यगतस्य तु यच्छब्दस्य पूर्ववाक्यगततच्छब्दाक्षेपसामर्थ्यं प्रसिद्धमेव । 'स किल वचनानामविषयः' इति वा पाठः । विवेकप्रध्वंसात् युक्तायुक्तविचारो विवेकः, तस्य प्रध्वंसो नाशः । प्रोपसर्गेणात्यन्तिकत्वं प्रकाश्यते । उपचितो वर्धितः, महामोहः महदज्ञानं तेन गहनः निबिडः । कोऽपीत्यनुभवैकगम्यत्वपरामर्शः । अन्तर्विकारो मानसो वृत्तिविशेषः । जडयति इन्द्रिय(म)पाटवयुक्तं करोति । 'तत्करोति' इति णिच् । तापं ज्वलनदाहसदृशीं वेदनाम् । जडशब्देन शैत्यमप्युच्यते । अतो जाड्यतापयोर्यौगपद्ये विरोधप्रतीतेर्विरोधोऽलङ्कारः । प्रस्तुतान्यत्वरूपातिशयोक्तिश्च ॥ ३३ ॥

---

१. 'करणाना' छ. पाठः. २. 'तनुते' छ. ज. पाठः

---

१. 'सम्बन्धिनः', २. 'अस्मरणगोचर' ग. घ. च. पाठः. ३. 'द्योत्यते', ४. 'मोहगहनो बृहदज्ञाननिबिडः' ङ. पाठः. ५. 'मनसो', ६. 'इन्द्रियव्यापारावश्ययुक्तं करोति' ग. घ. च. पाठः.

अपि च —

परिच्छेदव्यक्तिर्न भवति पुरस्थेऽपि विषये
भवत्यभ्यस्तेऽपि स्मरणमतथाभावविरसम् ।
न सन्तापच्छेदो हिमसरसि वा चन्द्रमसि वा
मनो निष्ठाशून्यं भ्रमति च किमप्यालिखति च ॥ ३४ ॥

कलहंसः — आः दिढं क्खु एसो कए पि अवहरिदो, अवि णाम मालदी जेव्व सा भवे ।

(दृढं खल्वेष कयाप्यपहृतः । अपि नाम मालत्येव सा भवेत् ।)

---

अपि च — परिच्छेदव्यक्तिरित्यादि — अयं घटः पटो न भवतीति व्यवच्छिद्य ज्ञानं परिच्छेदः तस्य व्यक्तिः स्फुटीभावः । मृन्मयो न तु हिरण्मय इति । पुरस्थे अग्रतः सन्निहिते । अपीति तथात्वविरोधः । अभ्यस्ते पुनः पुनः शीलिते शास्त्रादौ । अतथाभावः यथा शीलितं तथात्वस्याभावस्तेन विरसमनुपजातनिर्णयसुखम् । सन्तापच्छेदो दाहशान्तिः । हिमसरसि तुहिनसलिलपूरिते जलाशये । चन्द्रमसि अमृतमयत्वेन प्रसिद्धे चन्द्रमण्डले वा । अवगाढ इति शेषः । एतत्सम्भावनामात्रम् । इत्थं सम्भावयामीत्यर्थः । निष्ठाशून्यं निष्कर्षरहितम् । भ्रमति इतस्ततः सञ्चरति । किमपीत्यनुपपद्यमानमनोरथत्वं ध्वन्यते । आलिखति समन्तादुद्भावयति । अनेन तृतीयदशाप्रवेशलक्षणानल्पसङ्कल्पशिल्पत्वकल्पना मनसः प्रकाश्यते । अत्र भाविकमतिशयोक्तिश्चालङ्कारः ॥ ३४ ॥

दृढं खल्वेष कयाप्यपहृतः । अपि नाम मालत्येव सा भवेत् । आः पीडायाम् । स्वामिभक्तत्वात्तद्दुःखदुःखित्वं द्योतयति । सेति, कयापीति, या सामान्यतोऽवगता स्त्री सा मालत्येव भवेत् । अपि नामेति प्रार्थनायाम् ।

---

१. 'व्यक्तिर्भवति पुरस्थेऽपि' क. झ. पाठः. २. 'आः दिढ खु' ख, 'आ दिढं खु' ग. घ. ङ. पाठः. ३. 'काए' ग. घ. ङ. च, 'का अ' ख. पाठः ४. 'अवहओ' ख. ङ. च. 'अवहिदो' ग. घ. छ, 'अज्ज अवहरिदो' ज. पाठः ५. 'मालई' ख. पाठः. ६. 'एसा भवे' ख. च. 'एव्व सा भवे' च. छ. ज. ञ. 'सा भवे' ग. पाठः.

---

१. 'वातं' क. पाठः. २. 'जल', ३. 'निष्कर्म' ग. घ. च. पाठः. ४. 'मालती भवेत्' ख. ग. च. पाठः.

मकरन्दः — (स्वगतं) अहो ! अभिषङ्गः । तत् किं निषेधयामि सुहृदम् ।

अथवा —

मा मूमुहत् खलु भवन्तमनन्यजन्मा
मा ते मलीमसविकारघना मतिर्भूत् ।
इत्यादि नन्विह निरर्थकमेव यस्मिन्
कामश्च जृम्भितगुणो नवयौवनं च ॥ ३५ ॥

---

अहो इत्याश्चर्ये । तत्तादृशधैर्यराशेरस्य कथमीदृशोऽयमिति भावः । अभिषङ्गो विषयासक्तिः । 'अभिषङ्गजलं विजज्ञिवान्' इति रघुवंशे । तथा कादम्बर्याम्—'विषयाभिषङ्गेष्वनिद्यानुबन्धेषु' इति । निषेधयामि निवारयामि । किमिति चिन्ता । सुहृदमित्यवश्यममार्गान्निवारणीयत्वं ध्वन्यते ।

'आ केशग्रहणान्मित्रमकार्यात्सन्निवर्तयेत्'

इति वचनात् ।

दशान्तरावगाहनेन तस्य दुर्निवारत्वं निश्चित्य पूर्वोक्तमाक्षिपति — अथवेति ।

मा मूमुहदित्यादि । मा मोहयतु । 'मुह वैचित्ये' इत्यस्मात् ण्यन्तात् लुङि चङि रूपम् । खलु निश्चये । अनन्यजन्मा कामः । मतिः शास्त्रजलक्षालननिर्मला बुद्धिः । मलीमसविकारघना रजस्तमोमूलतया मलिनैर्विकारपांसुभिर्निबिडा मा भूत् । इतिशब्दः समासौ प्रकरणे वा । आदिशब्दः प्रकारवचनः । एवंप्रकारं वचनमिति शेषः । ननु प्रसिद्धौ । इह अस्मिन् सुहृदि । निरर्थकं निष्फलमेव । जृम्भितगुणः कोकोत्तरालम्बनोद्दीपनविभावजनितश्चिन्तादिव्यभिचार्युपचितः कटाक्षभुजाक्षेपादिभिरनुभावैः प्रकटीभूत इत्यर्थः । कामः रत्याख्यस्थायिभावः । नवयौवनं शरीरे समारोहत्, न पुनः समारूढं तारुण्यञ्च । चकाराभ्यां ज्वलनपवनयोरिव तुल्ययोगे परस्परोपचायकत्वाद् दुर्निवारत्वं द्योत्यते । नन्विति 'दूरापेतः खल्पदेश-

---

१. 'प्रियसुहृदं' ज. पाठः. २. 'यस्मात्' क. झ. म. पाठः.

---

१. 'अतिधीरस्य', २. 'किं निवार', ३. 'मूमुहत् मा', ४. 'इतिस', ५. 'रतिः स्थायी भा' क. पाठः.

M

(प्रकाशं) वयस्य! अपि विदिते तदन्ववायनामनी[3]।

माधवः[4]— सखे! श्रूयतां, अथ तस्याः करेणुकारोहणसमय[5] एव महतः[6] सखीकदम्बकादन्यतमा वारयोषिद्विलम्ब्य[7] बालबकुलकुसुमापचायक्रमेण[8] नेदीयसी भूत्वा, प्रणम्य कुसुमापीडव्याजेन[9] मामेवमुक्तवती[10]— महाभाग! सुश्लिष्टगुणतया रमणीयः एष वः सन्निवेशः[11], कुतू-

---

कालः' इति कादम्बर्यादिप्रसिद्धिं प्रकाशयति। मत्याख्योऽत्र भावः प्रकाश्यते। आक्षेपश्चालङ्कारः। विशेषाभिधित्सया विवक्षितस्य निषेधात्। विशेषश्च[1]— स्मरतापवशतयायमसदवधीरणेनापि प्रवर्तत इति वा, त्रपावशादप्रवृत्तौ प्राणसन्देहोऽपि स्यादिति वा व्यज्यते॥ ३५॥

प्रकाशमिति। तदनुमोदनमेव श्रेय इति निश्चित्याह— अपीति। अपिः सानुनये प्रश्ने। तदन्ववायनामनी तस्याः गोत्रमभिधानं च।

करेणुका गजवधूः। कदम्बकात् समूहात्। अन्यतमा एका। बहूनामेकस्य निर्धारणे डतमच्। 'अन्यारादि'त्यादिना पञ्चमी[2]। 'वारस्त्री गणिका वेश्या' इत्यमरः। अपचायो हस्तादानम्। 'हस्तादाने चेरस्तेये'(३-३-४०) इति घञ्। अपचायक्रमेण पूर्वं दूरतः ततः किञ्चिदासन्नमित्यनभिसन्धिपूर्वकत्वख्यापनार्थं क्रमग्रहणम्। नेदीयसी अन्तिकतमा। 'अन्तिकबाढयोर्नेदसाधौ' (५-३-६३) इतीयसुनि नेदादेशः। ब्राह्मणत्वात् प्रभुत्वाच्च प्रणम्येत्युक्तिः। कुसुमापीडव्याजेन पुष्पमालावर्णनच्छलेन। एवमुक्तवतीति तया प्राकृतभाषयोक्तमर्थवशात् संस्कृतभाषया विवृणोति। अथवा तयैवं संस्कृतमाश्रित्योक्तम्। महाभागेत्यादि। 'भागो भाग्यांशतुर्यांशा' इति वैजयन्ती। सुश्लिष्टगुणतया

---

१. 'अपि वयस्यने वि' क. ख. ज. झ. बु. पाठः. २. 'ते वा तदन्व' ख. पाठः. ३. 'दन्वयनामनी' छ, ज. झ. ञ. पाठः. ४. 'माधव;— श्रूयतां' ज. पाठः. ५. 'कारोहसम' घ, 'काधिरोहण' ज. पाठः. ६. 'एव ततः स' घ. ङ. 'एव तस्मात् स' ग. ङ. पाठः. ७. 'म्ब्य बकुळ' ख. ग. ङ. च. छ, 'म्ब्य कुसुमा' ज. पाठः. ८. 'पचायक्रमेण' ख. च. छ. ज. झ. ञ. पाठः. ९. 'पीडयाचनाव्याजेन' छ. पाठः. १०. 'मामुक्तवती' छ. पाठः. ११. 'य वः सुमनसां स' क. झ. ञ. 'य एष सन्निवेशः' छ. ज. पाठः.

---

१. 'विशेषतश्च' ज. पाठः. २. 'अन्यारादितरर्ते दिक्शब्दाञ्चूत्तरपदाजाहियुक्ते इति प' ग. घ. च. ज. पाठः.

हलिनी च नो भर्तृदारिका वर्तते । तस्यामभिनवो विचित्रः कुसुमेषु व्यापारः तद्भवतु कृतार्थता वैदग्ध्यस्य, फलतु निर्माणं रमणीयतायाः

गुणो ग्रथनसूत्रं पुष्पैर्निर्विवरं सुघटितो गुणो यस्मिन् तद्भावेन । रमणीयो मनोहरः वः सन्निवेशः युष्मत्कर्तृकं कुसुमसन्निवेशनम् । कर्तरि षष्ठी । ब्राह्मणत्वात् प्रभुत्वाच्च व इति बहुवचनप्रयोगः । कुतूहलिनी एतत्प्राप्तिकौतुकिनी । ग्रथ्यमानदशायामस्या मालायास्तया दृष्टत्वात् वर्तत इत्युक्तिः । अभिनवोऽन्यत्राहष्टपूर्वः । विचित्रो विविधभङ्गितरङ्गितः । कुसुमेषु पुष्पेषु । व्यापारः ग्रथनशक्तिः । तद्विदुषामेव तद्विशेषदर्शने कुतूहलमिति भावः । तत् तस्मात् । वैदग्ध्यस्य कर्तृगतस्य मालाग्रथनकौशलस्य । कृतार्थता प्रयोजनसम्पत्तिः । रमणीयतायाः मालागतस्य सन्निवेशविशेषसौन्दर्यस्य । फलतु उपकरोतु । सरस एवाम्लान एव । सन्निवेशस्य विशेष्यत्वात् पुलिङ्गता, कुसुमापीडस्य वा । कण्ठावलम्बनमहार्घतां कण्ठदेशाश्रयेण त्रिभुवनमूल्यक्रेयताम् इति । अयमत्र वाच्योऽर्थः ।

'द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्तु'

इति कामसूत्रोक्तेः वैदग्ध्यादन्योऽप्यर्थो भङ्ग्या प्रकाश्यते । यथा— सुश्लिष्टगुणतया माधुर्यादिभिर्गुणैः सुसम्बद्धतया । सन्निवेशः शरीरसंस्थानम् । रमणीयो हृदयहारी । कुतूहलिनी तस्य तादृशस्य दर्शनादुत्कण्ठिता । अभिनवोऽचिरदृष्टत्वेन भवतस्ततः प्रभृति जातत्वान्नूतनः । अथवा अन्यस्य तादृशस्याभिलाषदुःखस्यादृष्टत्वाद्वा । विचित्रो विविधः क्षणे क्षणेऽवस्थान्तरकरणात् । कुसुमेषुव्यापारः कुसुमानि पुष्पाणीषवः शरा यस्य तस्य कुसुमेषोर्व्यापारः शरवर्षणरूपा प्रवृत्तिः । वैदग्ध्यस्य उभयगतस्य कलाकौशलस्य । रमणीयतायाः उभयाश्रितस्याकारसौन्दर्यादेः । निर्माणं ब्रह्मकर्तृका सृष्टिः । सरस एव लक्षणयानवक्षिप्तकाल एवेति तस्याः कालान्तराक्षमत्वं द्योत्यते । सरसः सहृदयो वा महाभाग इति शेषः । एवकारो भिन्नक्रमः समासाद-

१. 'का अस्मिन् वर्तते' ज. ञ. पाठः. २. 'निर्माणरमणीयताधि' झ. ञ. 'निर्माणस्य रमणीयतास' छ. पाठः.

१. 'वचनम् ।' क. पाठः. २. 'तद्वियानामेव'. ३. 'दृष्टत्वेन नवः । ततः' ज. पाठः. ४. 'अन्यत्र' ग. घ. च पाठः. ५. 'दृग्गतकला' क. पाठः. ६. 'लक्षणयोपाक्षिप्त' ज. पाठः. ७. 'अथवा सरसः. ८. 'यो महाभाग' ग. घ. च. पाठः.

विधातुः, समासादयतु सरस एव भर्तृदारिकायाः कण्ठावलम्बनमहार्घता-मिति।

मकरन्दः—अहो वैदग्ध्यम्।

माधवः—तया च मदनुयुक्तया समाख्यातम्—इयममात्यभूरि-वसोः प्रसूतिर्मालतीनामा। अहं च प्रसादभूमिर्भर्तृदारिकाया धात्रेयिका लवङ्गिकानामेति।

कलहंसः—(सहर्षं) किं णाम मालदि त्ति। दिट्ठिआ विलसिदं भअवदा

यत्वेवेति। भर्तृदारिकायाः स्वामिदुहितुः। कण्ठावलम्बनेन आलिङ्गनेन (महार्घतां) भुवनश्लाघनीयतामिति। सदृशसमागमस्य सहृदयचमत्कारकारित्वादिति भावः। शब्दशक्तिमूलो वस्तुध्वनिरयम्, न पुनः श्लेषालङ्कारः। उभयोरप्यर्थयोस्तत्र वाच्यत्वात्। अत्र त्वेकस्यैव वाच्यत्वात् परस्य व्यङ्ग्यत्वाच्च।

अहो वैदग्ध्यम्। आश्चर्यं निसृष्टार्थदूतीत्वमित्यर्थः।

मदनुयुक्तया मया पृष्टया। 'प्रश्नोऽनुयोगः पृच्छा च' इत्यमरः। प्रसूतिः पुत्री। प्रसादभूमिरनुग्रहपात्रम्। मालतीनामा लवङ्गिकानामेति च समासः। 'डाबुभाभ्यामन्यतरस्याम्' (४-१-१३) इति डाप्। प्रसादभूमिः धात्रेयिकेति च स्नेहविश्वासभूमित्वात् स्वस्या विस्रब्धप्रश्ने योग्यतां सूचयति। उत्तरेणोभयोरपि जिज्ञासितार्थोन्नयनादुत्तरमत्रालङ्कारः।

सहर्षमिति स्वाशासितस्यैव संपत्तेः। किं नाम मालतीति। मालतीति किं संज्ञेत्यर्थः। दिष्ट्या विलसितं भगवता दैवेन कुसुमायुधेन च। विलसितमिति

१. 'विधातुरासादयतु' क. पाठः. २. 'तु नो भर्तृ' ख. पाठः. ३. 'एष नो भ' छ. पाठः. ४. 'ग्ध्यं, ततस्ततः माध-' ख. ग. घ. पाठः. ५. 'वः—ततस्तया च' घ. ङ. पाठः। ६. 'नुक्तया' च. पाठः। ७. 'आख्यात' ख. घ. ङ. च. छ. ज. पाठः। ८. 'तु' ख. घ. च. पाठः. ९. 'यी ल' छ. पाठः. १०. (सहर्षं आत्मगतं) ग. ङ. पाठः.

१. 'कण्ठग्रहेणालिङ्ग' ग. घ. च. पाठः.

देव्वेण कुसुमाउहेण अ । जिदं अह्मेहिं ।

(किं नाम मालतीति । दिष्ट्या विलसितं भगवता दैवेन कुसुमायुधेन च । जितमस्माभिः)

मकरन्दः—अमात्यभूरिवसोरात्मजेत्यपर्याप्तिर्बहुमानस्य । अपि च मालती मालतीति मोदते भगवती कामन्दकी, तां च किल राजा नन्दनाय प्रार्थयत इति किंवदन्ती श्रूयते ।

भावे निष्ठा । दैवेन कुसुमायुधेन च सदृशसमागमनेन परस्परानुरागेण च स्व-महिमा प्रकाशित इत्यर्थः । उपरि च तत्र तत्र कवेर्दैवमदनयोरानुकूल्यकथनसंरम्भो-ऽनुसन्धेयः । 'यस्मिन् विधिश्च मदनश्च कृताभियोगः', 'विधिः स्वास्थ्यं धत्तां भवतु कृतकृत्यश्च मदनः' इत्याद्युक्तेः । जितमस्माभिः जि जय इत्यकर्मकस्य भावे निष्ठायां रूपं जितमिति । सर्वोत्कर्षेण स्थितमित्यर्थः । अस्माभिरिति बहुवचनेन माधवपक्ष्याणां सङ्ग्रहः ।

अपर्याप्तिः अपरिमेयत्वम् । बहुमानस्य चमत्कारस्य ।

'अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम्' ।

इत्यादिवत् । अनेनाभिजनादीनां लोकोत्तरत्वं प्रकाशयति । अपि चेति । ततोऽपि परं गुणान्तरमाह । मालती मालतीति मोदते भगवती कामन्दकीति । वीप्सया तत्प्रसङ्गस्य क्रियासमभिहारो द्योत्यते ।

'रामो रामो राम इति प्रजानामभवन् कथाः'

इति रामायणोक्तवत् । इतिशब्दो मोदनप्रकारे । मोदते परमानन्दमनुभवतीति निरतिशयस्नेहास्पदत्वं प्रतीयते । भगवतीति तपःप्रभावोत्पन्न-

१. 'दव्वेण' ख. घ. च. पाठः. २. मक—'(आत्मगतं) अमा' ग. ङ. ज. ञ. पाठः. ३. 'वसोः प्रसूतिरित्य' ख. ग. च. पाठः. ४. 'मालतीति मोदते' घ. पाठः. ५. 'न्दकी, (स्वगतं) तां' झ. पाठः. ६. 'व राजा' ज. ञ. पाठः. ७. 'य दातुं याचत इति' ग. घ. ङ. पाठः. 'य याचत इति' ख. च. छ. ज. पाठः. ८. 'ते । ततः' । ज. पाठः.

१. 'तत्र दैव' क. पाठः. २. 'योगः इति विधिः', ३. 'भिः । जितमिति भावे निष्ठा जि जय इत्यस्याकर्मकस्य रूपम् । सर्वो' च, 'भिः जि जय इत्यस्याकर्मकस्य रूपम् । सर्वो' ग. घ. पाठः. ४. 'इतिवत्' ग. घ. ञ. पाठः.

माधवः— तया चाहमनुबध्यमानस्तां बकुलमालामात्मनः कण्ठदेवतार्यं दत्तवान्। असौ पुनरभिनिविष्टया दृशा मालतीमुखावलोकनविहस्ततया विषमविरचितैकभागामपि तामेवं बहुमन्यमाना महानयं प्रसादः इति व्याहृत्य (प्र)गृहीतवती। अनन्तरं च यात्राभङ्गप्रचलितस्य महतः पौरनैगमजनस्य सङ्कुलेन विघटितायां तस्यामागतोऽस्मि।

---

दिव्यज्ञानसम्पन्नत्वद्योतनात् तादृशजनानुग्रहपात्रत्वस्य महाभाग्यमन्तरेणानुपपत्तिं व्यञ्जयति। भगवती कामन्दकीत्यनेन तस्याः स्वायत्तत्वात् प्राप्त्युपायश्चोपाक्षिप्यते। ताश्चेति। अनेन 'तां याचते नरपतेः' इति सूचितमनुसन्धत्ते। चकारो वाक्यार्थसमुच्चये। 'किंवदन्ती जनश्रुतिः' इति वैजयन्ती।

अनुबध्यमानः पुनः पुनर्याच्यमान इत्यनेन देयस्य क्षुद्रतया दाने लज्जावशान्मान्द्यं प्रकाश्यते। असौ लवङ्गिका। पुनःशब्दो विशेषवाची। अभिनिविष्टया पक्षपातिन्या। (दृशा) दृष्ट्या। विहस्ततया स्वस्य परवशतया। विषमविरचितैकभागामपीति। मालतीदर्शनानन्तरं यथाकथञ्चिदवशेषस्य ग्रथनात् पूर्वग्रथिताद् भागाद्वैरूप्यमन्यस्य भागस्य प्रकाश्यते। 'विहस्तो व्याकुलः प्रोक्तः' इति हलायुधः। बहु मन्यमानेति। 'वसन्ति हि प्रेम्णि गुणा न वस्तुनि' इति न्यायाद्वैषम्यस्यापि तदवलोकनविहस्ततोहेतुकत्वात् प्रेमसूचनेन तदाश्वासोपयुक्तत्वाच्च चमत्कुर्वाणेति भावः। यात्राभङ्गाद्देवोत्सवावसानात्। प्रचलितस्य स्वस्थानगमनोद्यतस्य। पौरनैगमजनस्य पुरे भवाः पौराः राजधानीनिवासिनः

---

१. 'मभ्यर्थ्यमान' क, 'मनुरुध्यमान' झ. ञ. पाठः. २. 'दत्तमुच्य' छ. पाठः. ३. 'दानेव'। ख. घ. च. पाठः. ४. 'स्तताविषम' ख. ग. 'स्तया विषम' छ. पाठः. ५. 'कदेशभागा' छ. पाठः. ६. 'गां ता' ग. घ. पाठः. ७. 'व सुदुर्वहु' ज. पाठः. ८. 'इति प्रतिगृहीतवती' ख. ग. घ. ङ. च. छ. ज, 'इति गृहीतवती' झ. ञ पाठः. ९. 'नैगमिकजनस्य' ख. ग. ङ. ज, 'पौरजनस्य' घ. च. छ. पाठः. १०. 'यामागतोऽस्मि तस्याम्।' छ. पाठः.

---

१. 'भङ्गः दर्शात्सवावसानं प्र' ग. घ. च. पाठः.

मकरन्दः— वयस्य! मालत्या अपि स्नेहदर्शनात्सुश्लिष्टमेतत् । योऽपि हि कपोलपाण्डुतादिसूचितः प्राक्प्रबद्धस्तस्याः कामाभिषङ्गः, सोऽपि त्वन्निबन्धन इति व्यक्तमेवैतत् । एतत्तु न ज्ञायते क्व दृष्टपूर्व-

निगमे भवाः नैगमाः पत्तनवर्तिनो वणिजः ।

"पूः स्त्री पुरीनगर्यौ वा पत्तनं पुटभेदनम् ।
स्थानीयं निगमः"

इत्यमरः ॥

"निगमो निश्चये वेदे पुरे पथि वणिक्पथे"

इति वैजयन्ती ॥

"धाराहारोपनयनपरा नैगमाः सानुमन्तः"

इति विक्रमोर्वशीये । सङ्कुलेन सम्मर्देन । विघटितायां अन्तरितायाम्, न पुनः स्वयंगतायामित्यनेन द्वयोर्विवक्षितार्थानुक्तावेव विश्लेषः प्रतीयते ।

मालत्या अपि स्नेहदर्शनादिति । 'अत्रान्तरे किमपि' इति 'स्तिमितविकसितानाम्' इत्यादिभिस्तद्भावप्रकाशनादित्यर्थः । एतद् वस्तु सुश्लिष्टं सुष्ठु घटिष्यते । 'आशंसायां भूतवच्च' (३-३-१३२) इति भूतनिर्देशः सौकर्यप्रतिपादनपरः । कस्मिन्नपि महाभागधेयजन्मनीत्यस्य शङ्कातङ्कं परिहरति— योऽपीति । कपोलपाण्डुता 'कलयति च हिमांशोर्निष्कलङ्कस्य' इत्युक्ता । आदिशब्देन 'परिमृदितमृणाली'त्यादि प्रतिपादितं गृह्यते । प्राक्प्रबद्धः पूर्वानुबद्धः । कामाभिषङ्गः कन्दर्पेणाभिभूतत्वं, तस्मिन् सङ्गो वा ।

'अभिषङ्गस्त्वभिभवे सङ्ग आक्रोशनेऽपि च' ।

इति वैजयन्ती । त्वन्निबन्धनः त्वां निमित्तीकृत्य प्रवृत्तः । व्यक्तं स्फुटम् । क्व कस्मिन् देशे इति देशविशेषस्यैव जिज्ञासा वर्तते । दर्शनं तु भवतः प्राङ्निवृत्तमेव । तत्र न सन्देह इति भावः । तत्रोपपत्तिमाह—न खल्विति

१. 'मक-वयस्य माधव मा' ख. घ. च, 'मक-मालत्याः' ग. ङ. पाठः. २. 'योऽपि कपोल' ग. ङ, 'यो हि कपोल' च. ज, सोप्याभिहितः कपोल' छ. पाठः. ३. 'प्राक्प्रवृद्ध' ख, ग, ङ. च, छ 'प्रागनुरागस्तस्याः' ज. पाठः । ४. 'स त्वन्नि' छ. पाठः. ५. 'एव व्य'ज, पाठः. ६. 'मेतद्' ख. ग. ङ. च. छ. ज. झ. पाठः

१. 'घटिष्यते । भूत' २. 'प्रतिपादितमाह प्राक्', ३. 'माह खलु प्रसिद्धौ' ख. घ. च.ज. पाठः.

स्तया वयस्य इति। न खलु तादृश्यो महाभागधेयाः[1] कुमार्योऽन्यत्रासक्तमनसो भूत्वा परत्र चक्षूरागिण्यो भवन्ति।

अपि च—

अन्योन्यसंभिन्नदृशां सखीनां
तस्यास्त्वयि[2] प्रागनुरागचिह्नम्[3]।
कस्यापि कोऽपीति निवेदितं च

किञ्च[4]—

धात्रेयिकायाश्चतुरं[5] वचश्च ॥ ३६ ॥

खलु प्रसिद्धौ। दमयन्त्यादिषु वासवादिवर्जनेन नलादिवरणस्य सार्वलौकिकत्वादित्यर्थः। तादृश्यो मालतीतुल्याः। कुलपालिका इत्यर्थः। महाभागधेयाः लोकोत्तरपुण्या इति। भवादृशे पुण्यराशावेव तासां भावबन्धो न पुनरननुरूप इति द्योत्यते। अन्यत्रान्यस्मिन् पुरुषे। परत्र परस्मिन् पुरुषे। चक्षूरागः सरागनेत्रपातनम्। प्रणय[1]निरीक्षणमित्यर्थः।

तस्याप्यनुभव[2]गोचरसुपपत्त्यन्तरमाह—अपि च—अन्योन्येत्यादि। 'अन्योन्यमेव चतुरेण' इत्युक्तमनुसन्धत्ते। संभिन्नाः संमिश्रिताः। त्वयि प्रागनुरागचिह्नं त्वया तस्यास्सन्दर्शनात् पूर्वमेव यत्र कचन दृष्टे त्वयि तस्याः प्रेमसूचकम्। कस्यापि। जनस्येति विशेष्यमाक्षिप्यते। कस्या अपि कोऽपीत्युक्तस्य परामर्शः। कस्यापीतीन्द्रवज्रानुगुण्येन प्रयोगः। निवेदितं विज्ञापितम् इति भावे निष्ठा। निवेदितञ्चेति चकारेण समुच्चीयमानमर्थान्तरमन्तरेणाविश्रान्तेः[3] पृच्छति—किंचेति। अन्यदिति शेषः। धात्रेयिकायाः उपमातृपुत्रिकाया लवङ्गिकायाः। चतुरं वाच्यस्य व्यङ्ग्यमुखप्रेक्षितया विदग्धम्। वचः 'महाभाग! रमणीय एष वः सन्निवेशः' इत्यादि। निवेदितं च वचश्च चिह्नमित्यन्वयः।

१. 'या अन्यत्रासक्तचेतसो भूत्वा' ख. च. छ. 'या अन्यत्रावसक्तचेतसो भूत्वा' ग. ङ. 'याः कुमार्योऽन्यत्रासक्तचेतसो' झ. ञ. पाठः. २. 'तस्यान्त्वयि' ख. पाठः. ३. 'लिङ्गम्' क. पाठः. ४. 'माधवः— किञ्च' ख. ग. ङ. च. छ, 'माधवः— किञ्चान्यत्' ज. पाठः, ५. 'मकरन्दः—धात्रेयि' ख. ग. ङ. च. ज. पाठः.

१. 'प्रणयि' ग. घ. च. पाठः. २. 'तस्या रागानुभव' क. पाठः. ३. 'नापि विश्रान्तेः' ग. ध. च. पाठः.

**कलहंसः**—(उपसृत्य) एदं च। (एतच्च)।

(इति चित्रफलकं दर्शयति। उभौ पश्यतः)

**मकरन्दः**—कलहंसक! केनैतन्माधवस्य प्रतिबिम्बमभिलिखितम्।

**कलहंसः**—जेणँ से हिअअं अँवहरिदम्।

(येनास्य हृदयमपहृतम्।)

**मकरन्दः**—अँपि मालत्या।

**कलहंसः**—अघइम्। (अथ किम्।)

**माधवः**—वयस्य मकरन्द! प्रसन्नप्रायस्ते तर्कः।

---

समीचि समये चित्रप्रदर्शनेन मालत्यनुरागं माधवसंशयोद्घाटनं कवीश्वरः संविधत्ते। एदं च एतच्च। चकारः पूर्वोक्तेन समुच्चिनोति चिह्नमिति। 'अन्योन्यसंभिन्नदशाम्' इत्यादिः 'एदं च' इत्यन्त उद्भेदः। गूढार्थोद्भेदनात्। अत्रानुमानमलङ्कारः। प्रयत्नाख्यावस्थाविशिष्टबिन्दुन्यासात्मकं प्रतिमुखं चैतत् कलहंसमुखेनालेख्यस्य प्रकाशनात्।

केन। जनेनेति शेषः।

येनास्य हृदयमपहृतं तेन जनेन लिखितमित्यर्थः।

अपिः सानुनये प्रश्ने।

अथ किम्। अथशब्दः पक्षान्तरद्योतकः। किंशब्दः क्षेपवाची। भवन्मतादन्यः कः, अयं स एवेत्यर्थः।

प्रसन्नप्रायः बाहुल्येन संशयकालुष्यरहितः। तर्क ऊहः। "ऊहस्तर्कोऽनुमानोक्तिः" इत्यमरः। प्रायग्रहणम् इयताप्यसन्तोषात्तदधिगमप्रकारापरिज्ञानाच्चेति मन्तव्यम्।

---

१. '(चित्रं दर्शयति)' ख. ग. ङ. च. ज, '(इति चित्रं दर्शयति)' ञ. पाठः. २. 'मक—केनै' छ. पाठः. ३. 'केनेदम्माध' ज. पाठः. ४. 'रूपमभिलिखितं' ख. ग. ङ. च. छ. ज, 'प्रतिच्छन्दकमभिलिखितं' झ ञ. पाठः. ५. 'जेण एव्व से' च. छ. ज, 'ण जेव्व' झ. ञ. पाठः ६. 'अवहअं' ख. ङ, 'अवहिदं' ग. छ. पाठः. ७. 'अपि नाम माल' ज. पाठः. ८. 'इते वितर्कः' घ. झ. ञ. पाठः.

---

१. 'चित्रपटदर्शनेन' ङ. पाठः. २. 'शङ्कयोद्घाटनम्' ग. ख. पाठः. ३. 'भवन्मतान्योऽर्थो न अयं स' क. पाठः. ४. 'अध्याहारस्तर्क ऊहः' इति मुद्रितामरपाठः।

मकरन्दः[1]—कलहंसक ! कुतोऽस्याधिगमः ।

कलहंसः—मह[2] दाव[3] मन्दारिआहत्थादो[4], ताए वि लवङ्गिआसआसादो ।

(मम तावन्मन्दारिकाहस्तात्, तस्या अपि लवङ्गिकासकाशात् ।)

मकरन्दः[5]—अथ किमाह मन्दारिका माधवालेख्यप्रयोजनं[6] मालत्याः ।

कलहंसः—उक्कण्ठाविणोदणं[7] त्ति । (उत्कण्ठाविनोदनमिति ।)

मकरन्दः[8]—वयस्य माधव[9] ! सर्वथा समाश्वसिहि ।

---

कुतः कस्माज्जनात् । अस्य चित्रफलकस्य । अधिगमः प्राप्तिः ।

मम तावन्मन्दारिकाहस्तात्, तस्या अपि लवङ्गिकासकाशात्[1] । अधिगम इति संबध्यते ।

अथशब्दो व्यावृत्तौ । लिखितमिदं[2] भवतु नाम । किंपुनर्माधवालेख्येन मालत्याः प्रयोजनं, मन्दारिका कथयतीत्यर्थः ।

उत्कण्ठाविनोदनमिति । उत्कण्ठायाः किमपि प्रशमनं प्रयोजनमाहेति संबन्धः ।

उपपत्त्या निर्णीतकार्यसिद्धिर्मकरन्द आह—सर्वथा सर्वप्रकारेण । परस्परानुरागेण श्लाघ्यसंबन्धत्वादिभिर्दैवानुकूल्याच्चेत्यर्थः[3] । समाश्वसिहि प्रसन्नहृदयो भव ।

---

१. 'न्दः—कुतोऽस्या' ख. ग. ङ. छ. पाठः. २. 'मरूते ।' ग. ज. पाठः. ३. 'मए दाव' क. पाठः. ४. 'आए हत्थादो' क. च. पाठः. ५. 'न्दः—कलहंसक! अथ' ख. 'न्दः—कथय किमाह' ज. पाठः. ६. 'ख्येन प्रयोजनं' ग. ङ. च. छ. पाठः. ७. 'दोत्ति' क, 'अणन्ति' च. ज. पाठः. ८. 'न्दः—माधव' छ, 'न्दः—वयस्य सर्व' ज. पाठः. ९. 'माधव समा' छ. ज. पाठः.

---

१. 'लवङ्गिकायाः स' २. 'लिखितोऽयं भवतु' ज. पाठः. ३. 'दैवानुकूल्येन चेत्यर्थः' च, 'दैवानुकूल्यैरित्यर्थः ।' ज. पाठः.

या कौमुदी नयनयोर्भवतः सुजन्मा
तस्या भवानपि मनोरथलब्धबन्धुः ।
तत् सङ्गमं प्रति सखे! न हि संशयोऽस्ति
यस्मिन् विधिश्च मदनश्च कृताभियोगः ॥ ३७ ॥

द्रष्टव्यरूपा च भवतो विकारहेतुस्तदत्रैवाभिलिख्यतां मालती ।

---

सर्वथेत्युक्तमुपपादयति—येत्यादि । कौमुदी चन्द्रिका निरतिशयाह्लादजनकत्वात् । सुजन्मा शोभनजननयुक्तेति त्वादृशप्रेमपात्रतां हि स्त्रीणां जन्मफलमिति द्योतयति । मनोरथलब्धबन्धुः संकल्पेनायं मम प्राणेश्वर इत्यात्मकेनोपनीतः परमसुहृत् । स्त्रीणां भर्तैव हि परमो बन्धुरिति बन्धुग्रहणम् । तत् तस्मात् । सङ्गमं उभयोः समागमम् । प्रति लक्षीकृत्य । संशयः सन्देहः । अस्माकमिति शेषः । नास्ति हि नास्त्येव । 'हिर्हेताववधारणे' इति वैजयन्ती । यस्मिन् सङ्गमे विषये । विधिर्दैवम् । कृताभियोगः कृतनिर्बन्धः । 'असन्दध्याभियोगोऽर्स्य' इतिवत् अत्र पूर्वार्धे रूपकम् उत्तरार्धेऽनुमानं चालङ्कारः । अन्योन्यं च व्यञ्जयम्, परस्परसावहत्वात् । या कौमुदी नयनयोरित्याकस्मिकी सहावावाप्तिः समाधिः ॥ ३७ ॥

द्रष्टव्यरूपा, ममेति शेषः । मम तद्रूपदर्शने कुतूहलमस्तीत्यर्थः । तत्र हेतुः भवतो विकारहेतुरिति । भवत इत्यर्थान्तरसङ्क्रमितवाच्येन ध्वनिना तत्तादृशधैर्यज्ञानराशित्वमस्य द्योत्यते । मनःक्षोभणनिमित्तं द्रष्टव्यरूपेत्युक्तिः कन्यकानां निर्दोषदर्शनत्वाद्विस्रम्भाच्चेति मन्तव्यम् । अत्रैव त्वत्प्रतिच्छन्दसुन्दरे चित्रफलक एवेत्यनेन वैदग्ध्यान्मालत्यै माधवानुरागं प्रकाशयितुमुद्बुद्धयति । अभिलिख्यतामित्युक्तिः कलहंसकेनैव चित्रोपकरणानामप्यानयनात् ।

---

१. 'कस्या' ग. पाठः. २. 'बद्ध' ख, 'बन्ध' क. घ. छ. झ. ञ. पाठः. ३ 'द्रष्टव्यस्वरूपा' झ. ञ. पाठः. ४. 'च तत्र भवतो' छ, 'भवतो' च. पाठः. ५. 'चालिख्यतां' ग. ज. ञ, 'च लिख्यतां' च. छ झ, 'चाभिलिख्यताम् ।' ग. ङ. छ. जं. झ. पाठः

---

१. 'या कौमुदीत्यादि' ग. च. ज. पाठः. २. 'ना चेति हि', ३. 'द्योत्यते' क. पाठः. ४. 'स्या' ज. पाठः. ५. 'की बुद्धिपूर्वा च दैवकृता सहा' ख. ग. घ. पाठः. ६. 'कन्यानिर्दोष' ग. घ, 'कन्याया निर्दोष' च. पाठः.

माधवः— यदभिरुचितं वयस्याय[1]! तदुपनय चित्रफलकं[2] चित्रवर्तिकाश्च[3]। (मकरन्द उपनयति)।

माधवः—(खिन्नः सखेदम्[4] ) सखे मकरन्द!

वारं वारं तिरयति[5] दृशावुद्गतो बाष्पपूर-
स्तत्सङ्कल्पोपहितजडिम स्तम्भमभ्येति गात्रम्।
सद्यः स्विद्यन्नयमविरतोत्कम्पलोलाङ्गुलीकः
पाणिर्लेखाविधिषु नितरां[7] वर्तते किं करोमि ॥ ३८ ॥

यदभिरुचितं वयस्याय यत् सुहृदः प्रियं तत्करिष्यामीति शेषः। 'रुच्यर्थानां प्रीयमाणः' (१-४-३३) इति सम्प्रदानसंज्ञायां चतुर्थी।

लिखन्निति। शत्रा प्रारम्भं सूचयति। खेदः निस्सहता।

वारं वारमित्यादि। पर्यायतः। 'वारस्त्ववसरः क्षणः' इति वैजयन्ती। तिरयति छादयति। बाष्पपूरोऽश्रुप्रवाहः। तत्सङ्कल्पः[1] मनसा[2] समालोक्य मालत्येवंरूपेति निर्माणं तेन उपाहितजाडिम जनिता स्वप्रवृत्त्यप्रतिपत्तिर्यस्य। 'अप्रतिपत्तिर्जडता' इति धनिकः। स्तम्भं दारुवन्निश्चेष्टत्वम्। सद्यः लेखनोपक्रम एव। स्विद्यन् घर्मजलं क्षरन्। ञिष्विदा गात्रप्रक्षरण इति धातुः। अविरतोत्कम्पलोलाङ्गुलीकः अविच्छिन्नेन शरीरचलनेन चलाः करशाखा यस्य। 'नद्यृतश्च' (५-४-१५३) इति कप्। लेखाविधिषु तदाकारानुगुणरेखानिर्माणेषु। नतरां नातिशयेन। वर्तते प्रवर्तते। 'न तथा ज्वालाजटिलोऽपि दहनो नतरां च कारीषे' इत्युदयनप्रयोगात्[3]। 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे' (५-४-११) इत्यामुप्रत्ययः। किं करोमि कर्तव्यं न पश्यामि। सूक्ष्मेक्षिकाया निश्चलास्विन्नहस्तत्वादेश्च चित्रलेखनं प्रत्यङ्गत्वात् तेषां च बाष्पादिभिर्विघातादुपायान्तरं न प्रकाशत इति दैन्यं[4] द्योत्यते। बाष्पादीनामनुभावानां[5] प्रकाशनान्निरतिशयो रत्याख्यो भावः प्रतायत। कारणमुखेन कार्यस्य लेखनासामर्थ्यस्य प्रत्यायनादप्रस्तुतप्रशंसानालङ्कारः ॥ ३८ ॥

१. 'य। माधवः—' ख. ग. ङ. च. ज. पाठः. २. 'चित्रवर्तिकां फलकं च' छ. पाठः. ३. 'चित्रवर्तिकाश्च' अ. पाठः ४. 'कलहंसः उप' छ. पाठः. ५. '(लिखन्) मक' ख. च. ज. झ. अ. '(सखेदं) मक' क. पाठः ६. दृशोरुद्गमे क. झ. अ पाठः. ७. नितरां' छ. ज. झ. ञ. पाठः.

१ 'शब्दोऽत्र' क. पाठः. २. 'मनसा माल' ग. च. ज. पाठः. ३. 'इत्युदयनः' क. पाठः. ४. 'दैन्यत्वं' ज. पाठः. ५. भावादीनां' क. ग. च. पाठः.

तथापि[1] व्यवसितोऽस्मि । (चिरादभिलिख्य[2] प्रदर्शयति) ।

मकरन्दः[3] — (विलोक्य) उपपन्नस्तावदत्र भवतोऽभिषङ्गः[4] ।
(सकौतुकं) कथमचिरेणैव[5] निर्माय लिखितः श्लोकः[6] । (वाचयति) ।

जगति जयिनस्ते ते भावा नवेन्दुकलादयः
प्रकृतिमधुराः सन्त्येवान्ये मनो मदयन्ति ये ।
मम तु यदियं याता लोके विलोचनचन्द्रिका
नयनविषयं जन्मन्येकः स एव महोत्सवः ॥ ३९ ॥

---

वारं वारमित्यादिसात्त्विकाभिनयवद् व्यवसितोऽस्मि उपक्रान्तवानस्मीति मध्ये विच्छेदस्यानौचित्यं[1] सूचयति । व्यवसित इति कर्तरि[2] निष्ठा ।

उपपन्नः संवादी स्थाने योगात् । अत्रास्मिन् विषये, कथमिति विस्मये । तत्र हेतुः अचिरेणैव निर्मायाशु सन्दर्भ्यैति । श्लोकः पद्यम् । वाचयति पठति ।

जगतीत्यादि । जगति न पुनः क्षितिमात्रे । त्रैलोक्य इत्यर्थः । जयिनः वस्त्वन्तरतिरस्कारशीलाः, तत्र हेतुः प्रकृतिमधुराः स्वभावतः[3] सुन्दराः । ते त इति जगतो विस्तारित्वात्तेषामप्यगण्यत्वं[4] प्रकाश्यते । भावाः पदार्थाः ।

'भावो लीलाक्रियाचेष्टामूल्यभिप्रायजन्तुषु ।
पदार्थमात्रे सत्तायामात्मयोनिस्वभावयोः ॥'[5]

इति वैजयन्ती । नवेन्दुकलादयः अपरिणतमुग्धचन्द्रलेखादयः । आदिशब्दः प्रकारवाची । कमलकुवलयकिसलयादयः । सन्त्येव सत्तामनुभवन्त्येव[6], न पुनरत्यन्तमुच्छिन्ना इत्यनेनैतत्सन्निधानादेव तेषां स्पर्शप्रायत्वम्[7]। पुनरस्यास्तदभावतः श्लाघ्यत्वमिति[8] द्योत्यते । अन्य इति बुद्धिसन्निहिताया नायिकाया इतरत्वमुच्यते । मम इति प्रतिसंबन्धिविरहेण निर्देशात्सर्वेषामविशेषेण सम्बन्धीति ख्याप्यते । मदयन्ति दर्शनादिभिः परवशीकुर्वन्ति । मम

---

१. 'तथाप्यवहितोऽस्मि' छ. ज. पाठः. २. 'दालिख्य दर्शयति' ख. ङ. च. झ. ञ. 'दभिलिख्य दर्शयति' ग. ज. पाठः. ३. 'मक– ('निर्वर्ण्य) उप' ख. ङ. च. छ. मक–'उपपन्न' गं, 'मक—(......) :(चित्रं निर्वर्ण्य) उप' ज. ञ. पाठः. ४. 'भिष्वङ्गः' झ. ञ. पाठः. ५. 'ण निर्मा' ख. पाठः. ६. 'श्लोकोऽपि ।' ङ. पाठः.

---

१. 'व्यवच्छेदस्य' क. पाठः. २. 'व्यवसितः कर्तरि' ग. च. पाठः. ३. 'स्वभावसुन्दरा' क. पाठः. ४. 'विस्तारत्वात् तेषां' ग. ज. पाठः. ५. 'वचनः ।' क. पाठः. ६. 'अवस्थामनु' ज. पाठः. ७. 'परस्परस्पर्श' क. पाठः. ८. 'भावत्वं श्लाघ्यमिति' क. पाठः. ९. 'इति प्रसक्तिः' ज. पाठः.

([1]प्रविश्य सत्वरम्)

मन्दारिका — [2]कलहंसअ [3]पदाणुसारेण [4]लद्धो सि । ([5]माधवमकरन्दौ

---

त्विति । तुशब्दो व्यावृत्तौ । 'भिन्नरुचिर्हि लोकः' इति न्यायेन । मम पुनरेकस्य गुणविशेषं जानतो वा । इयमिति चित्रगताया अभिनयेन निर्दिश्यमानत्वात् [1]निर्देशः । याता प्राप्ता । लोके मनुष्यलोके । विलोचनचन्द्रिका नेत्राणां कौमुदीति लोकान्तरवर्तिनामकृ[2]तार्थता व्यज्यते । आलोक इति वा पदच्छेदः । आलोके दर्शनमात्र एव नयनाह्लादिकेत्यर्थः । जगति लोक इति चैकत्र प्रयोगस्याचातुर्यात् । नयनविषयं चक्षुर्गोचरम् । जन्मनि अस्मिन्निति [3]शेषः । तस्याप्यनेनैव साफल्याज्जन्मत्वमिति भावः । स एक एव । न पुनरिन्दुकलादिदर्शनादित्येवकारेण व्यावर्त्यते । महोत्सवः महान् कल्याणागमः । नयनविषयं याता यदित्यनेन स्पर्शादिप्राप्तौ पुनरैन्द्रपदादीनामप्यर्वाचीनत्वमसत्पदादिति व्यज्यते । अत्र च चन्द्रिकाशब्दस्य वितते चन्द्रतेजसि प्रसिद्धेः कलाशब्दस्य 'कला तु षोडशो भाग' इत्यंशमात्रवाचित्वाद् अथवा ज्योत्स्नातपादिशब्दानां 'एकदेशस्थितस्याग्नेर्ज्योत्स्ना विस्तारिणी यथा' इति, 'प्रत्यासन्ननिदाघदीधितिमहस्तन्द्रालुचन्द्रातपा' इति, 'नमन्नृपतिमण्डलीमुकुटचन्द्रिकादुर्दिना' इत्यादिषु प्रभामात्रवाचकत्वदर्शनाच्चक्षुरिन्द्रियस्य चालोकानुग्राहकतया [4]तद्भावारोपे कलादिनिन्दने च व्याहतार्थत्वमिति नाशङ्क्यम् । कलाचन्द्रिकयोरत्यर्थभेदात् कलात्वारोपणे हि व्याहतिः । अत्रातिशयोक्त्या ह्यसम्बन्धे [5]सम्बन्धरूपया नायिकायाः सर्वोत्तरत्ववर्णनाद् व्यतिरेकोऽलङ्कारः । तत्प्राप्तावौत्सुक्यं च भावः, त्वद्दर्शनैकोत्सवो जनोऽयमनन्य[6]शरणः करुणया कटाक्ष्यतामिति वस्तु च ध्वन्यते ॥ ३९ ॥

कलहंसक पदानुसारेण लब्धोऽसि । चरणन्यासप्रति[7]बिम्बान्यनुसृत्य प्राप्तोऽसि ।

---

१. '(प्रविश्य) मन्दा'—ख. ग. ङ. च. छ. ज. पाठः. २. 'कलहंस कलहंस चोर चोर पदा' ज. पाठः. ३. 'पआणु' ख. ङ. च. झ. ञ, 'पदण्णाखाणुसारेण' छ, पाठः. ४. 'उवलद्धोसि' झ. ञ. पाठः. ५. ('विलोक्य सलज्जौ)' ख. च, ('सलज्जं)' ग. ज, ('दृष्ट्वा सलज्जं') छ, ('माधवमकरन्दौ विलोक्य सलज्जं') झ. ञ. पाठः.

---

१. 'निर्देशः' क. पाठः. २. 'कृतार्थत्वं' ज. पाठः. ३. 'शेषः जन्मनीति तस्या' ख. ग. च. पाठः. ४. 'तत्प्रभावरोपे' ज. पाठः. ५. 'सम्बन्धरूपाया' ज. पाठः. ६. 'शरणया' ज. पाठः. ७. 'बिंबानुसृत्या' ग. घ. च. पाठः.

दृष्ट्वा सलज्जं) कहं ते वि महाणुभावा एत्थ एव्व। (कलहंसक पदानुसारेण लब्धोऽसि। कथं तावपि महानुभावावत्रैव।)

(उपसृत्य) पणमामि। (प्रणमामि।)

उभौ — मन्दारिके! इह आगस्यताम्।

मन्दारिका — (उपसृत्य) कलहंसअ! उवणेहि चित्तफलअं (कलहंसक! उपनय चित्रफलकम्।)

कलहंसः — गेह्न एदं (गृहाणेदम्)

मन्दारिका —(विलोक्य) केण किं णिमित्तं वा एत्थ मालदी आलिहिदा। (केन किं निमित्तं वात्र मालत्यालिखिता।)

कलहंसः —जो जेव्व जंणिमित्तं मालदीए। एदं उक्कण्ठा विणोदणं त्ति। (य एव यन्निमित्तं मालत्या। एतदुत्कण्ठाविनोदनमिति।)

---

सलज्जं पूर्वं तस्यैव दृष्टत्वात् स्वैरालापप्रस्तावः, पश्चात्तयोरपि दर्शनाल्लज्जा। कथं तावपि महानुभावावत्रैव। प्रणमामि।

कलहंसक उपनय चित्रफलकम्।

गृहाणेदम्।

केन किं निमित्तं वात्र मालत्यालिखिता।

य एव यन्निमित्तं मालत्या। आलिखित इति लिङ्गविपरिणामः। तेनैवेत्यायाति। एतदुत्कण्ठाविनोदनमेव कारणीकृत्येत्यर्थः।

---

१. 'कधं' झ. ञ. पाठः. २. 'दे' ग. ज, 'एदे' झ. ञ. पाठः. ३. 'इह' ख. ग. ङ. च. ञ, 'इध' झ. पाठः. ४. 'ज्जेव्व' झ, 'जेव्व' ञ. पाठः. ५. 'इहास्यतां' क. 'इत आस्यतां' छ. झ. ञ. पाठः. ६. 'मन्दा— (उपविश्य)' क. झ. ञ, 'मन्दा— कलहंसअ' ज. पाठः ७. 'प' ग. पाठः. ८. 'हि मे चित्त' ख. ग. ङ. पाठः. ९. 'कल— (गृहीत्वा) गे' झ. पाठः. 'कल—गह्ण इदं' ख. ग. ङ. च. छ, 'कल— गिह्ण इदं' ज. पाठः. १०. इमं' ग. ङ. च. छ. ज. पाठः. ११. 'कलहंसअ केण' क. पाठ'. १२. 'णिमित्तं एत्थ' ख. च. पाठः. १३. 'लिहिदा' छ. 'अहिलिहिदा' [illegible] माल' ग. ङ. पाठः.

मन्दारिका —(सहर्षं) दिट्ठिआ उद्दंसिदफलं विण्णाणं पआव-दिणो। (दिष्ट्या उद्दर्शितफलं विज्ञानं प्रजापतेः।)

मकरन्दः—मन्दारिके! यदत्र वस्तुनि एष ते वल्लभः कथयति। अपि तत्तथा.

मन्दारिका—महाभाअ! तह (महाभाग! तथा।)

मकरन्दः—क्व पुनर्मालती माधवं प्राग्दृष्टवती।

मन्दारिका—लवङ्गिआ भणादि, वादाअणगदे त्ति (लवङ्गिका भणति वातायनगतेति।)

---

दिष्ट्या उद्दर्शितफलं विज्ञानं प्रजापतेः अनयोर्द्वयोरप्यतियत्नतो निर्माणरूपं ब्रह्मणः शिल्पं प्रयोजनवज्जातम्। सदृशसङ्घटनादित्यर्थः। 'विज्ञानं शिल्पशास्त्रयोः' इति वैजयन्ती।

अत्र वस्तुनि अस्मिन् वृत्तान्ते। मालतीविषय इत्यर्थात्। ते वल्लभः कलहंसकः। यत् कथयति 'एदं च उक्कण्ठाविणोदणं त्ति' इत्यादि। तत्तथा सत्यमेव। अपिः प्रश्ने।

महाभाग तथा।

'एतत्तु न ज्ञायते, क्व दृष्टपूर्वस्तया वयस्य' इति सन्देहनिराकरणाय पृच्छति—क्व पुनरिति। पुनःशब्दो विशेषे। एतद्दर्शनमस्मिन्ननुरागश्च तस्या उपपद्यतां नाम। कस्मिंस्तु देशे स्थिता माधवं दृष्टवतीत्येतावत्येव नः संशय इत्यर्थः।

लवङ्गिका भणति वातायनगतेति। भणतीति वर्तमानसामीप्यान्निर्देशः। प्राकृतन्यायाद्वा। 'भणइ णळो' 'ओभासइ सुग्गीवो' इत्यादिवत् भूते प्रयोगः। अभाणीदित्यर्थः।

---

१. 'दंसिदफलं' छ, 'उबदंसिदफलं' ज. पाठः. २. 'फलं दाणिं विण्णा' ख. ब. पाठः. ३. 'सखि मन्दारिके' ख. च. छ. ज, 'यदत्र' ग. ङ. पाठः. ४. 'तत्तहा' ज, 'अधइं' झ. ब. पाठः, ५. 'मन्दारिके क' ब, 'सखि मन्दारिके क' च. पाठः.

---

१. 'सामीप्यनिर्देशः' ज. पाठः. २. 'अथवा प्राकृतन्यायाद् भण', ३. 'आसइ' ग. ब. च. पाठः.

मकरन्दः—वयस्य ! मन्त्र्यमात्यभवनात्सत्वरध्ययैव बहुशः सञ्चरावहे । तदुपपन्नमेतत् ।

मन्दारिका—अणुमण्णन्तु महाणुभाओ जाव एदं भअवदो देव्वस्स मअणस्स अ सुचरिदं पिअसहीए लवङ्गिआए णिवेदेमि ।

(अनुमन्यतां महानुभावो, यावदेतद् भगवतो देवस्य मदनस्य च सुचरितं प्रियसख्यै लवङ्गिकायै निवेदयामि ।)

मकरन्दः—प्राप्तावसरमेतद्भवत्याः ।

(मन्दारिका चित्रभाण्डं गृहीत्वा निष्क्रान्ता ।)

---

ननु अनुमते । तथापि तत्सेवदत्येवेत्यर्थः ।

'प्रश्नावधारणैतिंषसमीहानुमते ननु' ।

इति वैजयन्ती । अमात्य भवनेति 'भूयो भूयः सविधे लुकं संघट्यति । सञ्चरावहे विक्रमावहे । आवामिति शेषः । रथ्ययैव सञ्चरावहे इति 'समस्तृतीयायुक्तात्' (१-३-५८) इत्यात्मनेपदम् । तत् तस्मात् । उपपन्नं युक्तियुक्तम् ।

अनुमन्यतां महानुभावो यावदेतद्भगवतो देवस्य मदनस्य च सुचरितं प्रियसख्यै लवङ्गिकायै निवेदयामि । यावद्वाक्यालङ्कारे । सुचरितं शोभनमनुष्ठानम् ।

प्राप्तावसरं समयोचितम् ।

चित्रभाण्डं चित्रफलकं तदुपकरणभाजनं च ।

---

१. 'मक—मन्त्रमात्य' ख. ग. ङ. छ. झ. पाठः. २. 'सेव ।' ग. ङ. पाठः. ३. 'ण' झ. पाठः. ४. 'ण्णादु' ख. ग. ङ. छ., 'ण्णादु' ज, 'ण्णन्तु मं महा' झ. ज. पाठः. ५. 'महाभाअ' क, 'महाभाओ' ज पाठः. ६. 'एदं देवस्स भ', ७. 'देव्वस्स' ख. पाठः. ८. 'देव्वस्स अ मअणस्स' ग. पाठः. ९. 'सुअरिअं' ख. छ, 'अ सुअरिदं' ग. ङ., 'सुचरिअं' ज. पाठः. १०. 'णिवेदिस्सामि' ज. पाठः. ११. 'मन्दा—महाभाअ तह । (चित्र' ख. पाठः. १२. 'फलकं' झ. ज. पाठः.

---

१. 'सन्त्वरावहे आवामिति' ग. घ. च. पाठः.

मकरन्दः—वयस्य ! मध्याह्नोऽतिवर्तते । तदेहि संस्त्यायमेव गच्छावः ।

(उत्थाय परिक्रामतः)

माधवः—एवं मन्ये—

घर्माम्भोविसरविवर्तनैरिदानीं
मुग्धाक्ष्याः परिजनवारसुन्दरीणाम् ।
प्रातर्विहितविचित्रपत्रलेखा-
वैदग्ध्यं जहति कपोलकुङ्कुमानि ॥ ४० ॥

मध्याह्नः दिवसस्य यौवनावस्था । गगनमध्यमध्यासीनो भानुर्बहिरवस्थाने तपतीति भावः । 'रात्राह्नाहाः पुंसि' (२-४-२९) इति पुंलिङ्गता । एहि आगच्छ । संस्त्यायं गृहम् । 'सन्निवेशे गणे गेहे संस्त्यायः' इति वैजयन्ती ।

कालवशाद्वितर्कयति—एवं मन्ये इत्थं तर्कयामि ।

घर्माम्भोविसरविवर्तनैः स्वेदप्रसरे विशेषेण वर्तनैः स्वेदबिन्दुप्रसरहेतुकैरन्यथाभावैर्वा । इदानीं मध्याह्नकाले वा । वा इत्यनुभवपरामर्शः । प्रातः मदनयात्रादर्शनागमनसमये । विहितविचित्रपत्रलेखावैदग्ध्यं निर्मितानां नानाविधानां हंसमकरसिंहमञ्जरीप्रभृतिपत्रलेखानां चातुर्यम् । जहति त्यजन्ति । संस्थानशैथिल्यादित्यर्थः । 'ओ हाक् त्यागे' इत्यस्माल्लटि बहुवचने 'अदभ्यस्तात्' इत्यत्त्वम् । वारसुन्दरीग्रहणं मुग्धाक्ष्याः कन्यात्वात् पत्रलेखाभावः कपोल इति द्योतनार्थम् । कुङ्कुमग्रहणं वसन्तवेषपरिग्रहसौभाग्यं प्रकाशयति । मुग्धाक्ष्या इति ग्रहणेन मदनकल्पितायास्तस्या मध्याह्नसमयोन्मीलितसुभगदशाविशेषशोभिन्या दर्शनौत्सुक्यं प्रकाश्यते । अत्र भाविकं सूक्ष्मं वालङ्कारः । एवं मन्ये इत्यनुमानस्यानुसन्धेयम् । ॥ ४० ॥

१. 'स्य मध्याह्नसमयो वर्तते ।' ख., 'स्य मध्याह्नो वर्तते ।' ग. ङ. च., 'स्य खरतरकिरणोऽयं भगवान् सहस्रदीधितिरलङ्करोति नभस्तलम् । तदेहि ।' झ. ञ. पाठः २. 'प्रविशावः ।' ख. ग. ङ. छ. ज. पाठः ३. '(उत्थाय)' ञ. पाठः ४. 'न्ति' ख. पाठः ५. 'एवं हि मन्ये' छ. ज. झ. ञ. पाठः

१. 'प्रसरैर्वि' ख. ग. च पाठः २. 'पत्रभङ्गलेखानां' ख. ग. च. ज. पाठः

अपि च—

उन्मीलन्मुकुलकरालकुन्दकोश-
प्रश्च्योतद्घनमकरन्दगन्धबन्धो ! ।
तामीषत्प्रचलविलोचनां नताङ्गी-
मालिङ्गन् पवन ! मम स्पृशाङ्गमङ्गम् ॥ ४१ ॥

मकरन्दः—(स्वगतम्)

---

अथ तथाविधायामस्याः शिशिरमृदुलेन तदात्वस्पर्शामृतेनोत्सुकस्तदुपायं गवेषयति— उन्मीलदित्यादि । विदलत्सङ्कोचतया विशालात् कुन्दकुसुमकोशात् । कोशशब्दो घनसमृद्धिवाचकोऽत्र लक्षणया समृद्धिवाची । कुड्मलार्थत्वे मुकुलशब्देन पौनरुक्त्यात् । प्रश्च्योतन् प्रक्षरन् यो घनो बहलो मकरन्दः पुष्परसस्तत्सम्बन्धिनः परिमलस्य मित्रभूतत्वेनातिश्लिष्टतया ।

'करालो दन्तुरे तुङ्गे विशाले विकृतेऽपि च'

इति वैजयन्ती । 'श्च्युतिर् क्षरण' इति धातुः । कुन्दग्रहणं शिशिरसंबन्धिनोऽपि कुन्दस्य वसन्तेऽनुवृत्तेः

'निषिञ्चन् माधवीं वृद्धिं कुन्दशेषं च वर्तयन्'

इतिवत् । अत एव तादृशस्य भवतः स्पर्शनसुखेन ईषत्प्रचलविलोचनाम् अर्धमुकुलीभवन्नयनाम् । तां या मम हृदयसिन्धुचन्द्रिका । आलिङ्गन् आश्लिष्यन् । कुलपालिका कथमालिङ्ग्यत इत्यत्राह— पवनेति । पुनातीति पवनः । सर्वपापहरस्य भगवतः पितुरिवालिङ्गनं न दुष्यति भावदोषराहित्यात् ।

'अन्यथालिङ्ग्यते कान्ता भावेन दुहितान्यथा ।'

इत्युक्तेरिति चोत्यते । अङ्गमङ्गं प्रत्येकमङ्गानि । स्पृशेति । तदङ्गस्पर्शेनानीतेन ममाङ्गानि निर्वापयेत्यर्थः । अत्र प्रियतमास्पर्शलोभस्य कारणस्य कार्यमुखेन प्रकाशनादप्रस्तुतप्रशंसालङ्कारः ॥ ४१ ॥

प्रियसुहृदोऽवस्थादौस्थ्यमनुसन्दधानो मकरन्दस्तद्रक्षणोपायं तर्कयति । स्वगतं स्वहृदयगतमिति । माधवेनाश्रुतं सदस्यैश्च श्रुतं यथेति सर्वत्रैवंविधे विषये द्रष्टव्यम् ।

---

१. 'शब्दवैयर्थ्यात्' क. पाठः २. 'नातिक्लिष्टतया', ३. 'नुप्रवृत्तेः' ज. पाठः ४. 'भवतः' क. ख. पाठः ५. 'पितुरिव न दुष्यतीति भावः, दोष' क. पाठः ६. 'स्थादौस्थ्यमनु' ज. पाठः

अभिहन्ति हन्त कथमेष माधवं
सुकुमारकायमनवग्रहः स्मरः ।
अचिरेण वैकृतविवर्तदारुणः
कलभं कठोर इव कूटपाकलः ॥ ४२ ॥

तदत्र भगवती कामन्दकी नः शरणम् ॥

**माधवः**— (स्वगतम्) आश्चर्यम् !

पश्यामि तां तत इतः पुरतश्च पश्चा-
दन्तर्बहिः परित एव च वर्तमानाम् ।

---

'सर्वश्राव्यं प्रकाशं स्यादश्राव्यं स्वगतं मतम्'

इति वचनात् ।

अभिहन्तीत्यादि । [अभिहन्ति] अतीव बाधते । हन्तेति विषादे । हा कष्टमित्यर्थः । कथमित्याश्चर्ये । असंभावितं कथमिदमापतितमिति भावः । माधवमिति धैर्यराशित्वादि ध्वन्यते । सुकुमारकायं कोमलशरीरमिति दुःखासहत्वात् सुलभापायत्वमाशङ्क्यते । अनवग्रहः अनर्गलप्रसरः । अचिरेण सहसैवेत्याशुकारित्वशक्तिः स्मरस्य व्यज्यते । विकृतिरेव वैकृतम् । प्रज्ञादित्वादण् स्वार्थिकः । वैकृतस्य विविधवर्तनेन स्फुरणेन दारुणः क्रूरः । कलभं द्वात्रिंशद्वर्षतया संपूर्णयौवनबलं कुञ्जरम् । कठोरः असाध्यतामापन्नः । कूटपाकलो गजस्य सान्निपातिको ज्वरः । 'कूटपाकलो गजेषु' इति वाहटः । उपमानेन नायकस्य बलवत्त्वं स्मरस्य बलीयस्त्वं च प्रतीयते । उपमालङ्कारः ॥ ४२ ॥

अत्रास्मिन् कार्यविषये । भगवतीति साधनसामर्थ्यं प्रकाश्यते । नः अस्माकमिति सर्वकार्येषु सैवास्मत्कुलस्य शरणमिति व्यज्यते । शरणं रक्षित्री । 'शरणं गृहरक्षित्रोः' इत्यमरः ॥

अथ सङ्कल्पाख्यतृतीयदशामूर्च्छनामात्मनोऽनुसन्धत्ते— पश्यामीत्यादि । ततस्तस्मिन् वस्तुनि । इतोऽस्मिन् वस्तुनीत्यविशेषेण सर्वेषु घटपटादिवस्तुषु सैव स्फुरतीत्यर्थः । सप्तम्यर्थे तसिः । पुरत इत्यादिभिः सर्वदेशस्फुरणमाह—

---

१. 'भवती' ख. ज. पाठः । २. '(स्वगतं) पश्यामि' ख. ग. ङ. छ. पाठः. ३. 'इत' ४. 'विवर्तमानाम्' ज. झ. ञ. पाठः ।

---

१. 'दुर्बलत्वं' क. पाठः. २. 'प्रकाश्यते' ज. पाठः. ३. 'सामर्थ्यं' ख. ग. घ, 'सामर्थ्यात्' च. ञ. पाठः. ४. 'दशाप्रवेशमूर्छना' ङ. पाठः.

रणरणिकाविवृद्धिं बिभ्रदावर्तमानं
ज्वलति हृदयमन्तस्तन्मयत्वं च धत्ते ॥ ४४ ॥

(इति निष्क्रान्ताः सर्वे)

॥ इति बकुलवीथी नाम प्रथमोऽङ्कः ॥

---

तिरस्करोति । करणानामिन्द्रियाणां चक्षुरादीनाम् । ग्राहकत्वं रूपादिविषयज्ञानशक्तिम् । प्रमोहः प्रकृष्टा विचित्तता । रणरणिकाविवृद्धिम् उत्कण्ठातिशयम् । बिभ्रत् धारयत् । आवर्तमानं क्वथनेन विलीयमानम् । आवर्तनं क्वथनेन विलापनम् ।

"सन्ध्यानलेन भृशमम्बरमूषिकायामावर्तितरुक्ममिव कृतोऽयमिन्दुः ।"

इति मुरायुक्तवत् । ज्वलति दीप्यते । अन्तरिति बहिर्ज्वलने हि ज्वलनवत् केनाप्युपायेन निर्वापयितुं शक्यते । अन्तर्ज्वलत् कथं निर्वापणीयमिति दैन्यं ध्वन्यते । तन्मयत्वं नायिकात्मकत्वम् । अनेन 'परिच्छेदव्यक्तिर्न भवति' इत्युक्तस्यार्थस्यानुसन्धानं कृतमिति वेदितव्यम् । अन्यथा प्रकृतरसाननुसन्धाने रसदोषापातसम्भवात् । अतो न पौनरुक्त्यम् । स्मरमोहितस्य च स्वानुभवकथनपौनरुक्त्यं प्रत्युत गुण एवेति सर्वं समीचीनम् । अत्रातिशयोक्तिरलङ्कारः ॥ ४४ ॥

इति निष्क्रान्ताः । रङ्गात् बहिर्निर्गता इत्यर्थः ।

"एकाहप्रयोज्यस्य नाटकांशस्याङ्क" इति भरते कृता संज्ञा । स सम्पूर्ण इत्यर्थः ।

मालतीमाधवस्येत्थं प्रथमाङ्कार्थचर्चनम् ।
पूर्णज्योतिःप्रसादेन व्यधात् पूर्णसरस्वती ॥

॥ इति प्रथमोऽङ्कः ॥

---

१. 'ण' ख. ङ. छ. ज. झ. ञ. पाठः. २. 'इति मात्रं' घ. च. पाठः. ३. 'इति प्रथमोऽङ्कः ।' ख. ग. ङ. पाठः.

---

१. विलापनं ञ. पाठः. २. 'ज्वलनवत्'. ३. 'ज्वलत् कथं निर्वापणीय इति' ञ. पाठः. ४. 'पातात् ।' ख. ग. घ. ङ. ञ. पाठः. ५. 'मेला' ख. ग. घ. च. पाठः.

# अथ द्वितीयोऽङ्कः ।

(ततः प्रविशतश्चेट्यौ)

प्रथमा — सहि! सङ्गीदसालापरिसरे अवलोइदादुदीआ तुमं किं पि मन्तअन्ती आसी ।

(सखि! सङ्गीतशालापरिसरे अवलोकिताद्वितीया त्वं किमपि मन्त्रयन्त्यासीः ।)

द्वितीया — णाट्टिअघरसमीवे तेण किल माहवप्पिअवअस्सेण मअरन्देण सअलो मअणुज्जाणवुत्तन्तो भअवदीए णिवेदिदो । तदो भट्टि-

---

अथ वृत्तवर्तिष्यमाणकथांशप्रदर्शनेन द्वितीयाङ्कावताराय कवीश्वरः प्रवेशकमारभते — ततः प्रविशतश्चेट्याविति । चेट्यौ मालत्या दास्याविति नीचपात्रद्वयम् ।

"तद्वदेवानुदात्तोक्त्या नीचपात्रप्रयोजितः ।
प्रवेशोऽङ्कद्वयस्यान्तः शेषार्थस्योपसूचकः ॥"

इत्युक्तेः प्रथमद्वितीयाङ्कयोर्मध्ये च प्रयुक्तः । प्रथमाङ्के निषेधात् ।

प्रथमेति — प्रवेशक्रमेण प्रथमात्वं द्वितीयात्वं च । सखि! सङ्गीतशालापरिसरे अवलोकिताद्वितीया त्वं किमपि मन्त्रयन्त्यासीः ।

नाट्यगृहसमीपे तेन किल माधवप्रियवयस्येन मकरन्देन सकलो मदनोद्यानवृत्तान्तो भगवत्यै निवेदितः । मालतीमाधवयोरन्योन्यदर्शनोत्कण्ठादिको

---

१. 'एका' क. ख. ज., 'एका — चन्द्रशालापरि' ङ. पाठः. २. 'हला' ज. झ. च. पाठः. ३. 'सा भअवदी कामन्दकी किं पि' ठ. च. पाठः. ४. 'अन्दा— तेण' ख, 'द्वितीया — सहि तेण' क. ज. झ. च. पाठः. ५. णिवेदिदो । प्रथमा— तदो किम् । द्वितीया — तदो' क. झ. ञ. पाठः.

---

१. 'दर्शनेन' क. पाठः. २. 'प्रवेशमारभते' ख. पाठः. ३. 'प्रविशतश्चेट्यौ मालत्याः' ग. घ. पाठः. ४. 'शालायाः परिसरे' घ. पाठः. ५. 'का प्रवृत्तिः' ख. ग. च. पाठः.

**द्वितीया** — अध इं । तं क्खु आपडन्तिं जेव्व हत्थे गेह्णिअ अपरिअणा भट्टिदारिआ उवरि अलिन्दं समारूढा ।

(अथ किम् । तां खल्वापतन्तीमिव हस्ते गृहीत्वा अपरिजना भर्तृदारिका उपर्यलिन्दं समारूढा ।)

**प्रथमा** — णूणं तस्स महाणुहावस्स संकथाए अत्ताणं विणोदेदि ।

(नूनं तस्य महानुभावस्य सङ्कथया आत्मानं विनोदयति ।)

**द्वितीया** — (निश्वस्य) कुदो से आआसो । एदिणा अज्ज सविसेसदंसणेण अदिभूमिं क्खु ताए अहिणिवेसो गमिस्सदि । अण्णं

---

अवचिनोमीति । न पुनरवचेतुम् । इतिशब्दप्रयोगस्तदुत्कण्ठ्योज्ज्वलं सूचयति । साम्प्रतम् इदानीम् । किन्तु सम्प्राप्तेत्यनेन 'सखीकदम्बकादन्यतमा विलम्ब्य' इत्युक्तमनुस्मारयति ।

अथ किम् । तां खल्वापतन्तीमिव हस्ते गृहीत्वा अपरिजना भर्तृदारिका उपर्यलिन्दं समारूढा । आपतन्तीं आगच्छन्तीमिव । न पुनरागतामिति तद्वार्ताश्रवणादरत्वरा व्यज्यते । अपरिजना परिवाररहिता । भूत्वेति शेषः । उपर्यलिन्दं प्रासादगतं प्रकोष्ठम् ।

'प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठके ।'

इत्यलिन्दशब्दो लक्षणयात्र प्रकोष्ठमात्रमाह ।

अपरिजनेत्यनेनानुमिनोति — नूनं तस्य महानुभावस्य सङ्कथया आत्मानं विनोदयति । तस्य माधवस्य । सङ्कथया सख्या सह समेत्य वार्तया ।

निश्वस्येति स्वामिस्नेहादनिष्टमाशङ्कयाविमहृदयत्वं सूचयति । कुतोऽस्या

---

१. 'परावहन्तीं' क. झ. ञ., 'आपअन्ति' छ. पाठः २. 'घेत्तूण' ख. छ. ज. पाठः ३. 'पडिसिद्धपरिअणा'. ४. 'अलिन्दअं' क. झ. ञ. पाठः ५. '(स्व) सहि कुओ से' ख., '(स्व) कुदो क्खु से' ज. पाठः ६. 'दे' ख. पाठः

---

१. 'इति तदुत्कण्ठ्योज्ज्वलं', २. 'प्रकोष्ठमाह ।', ३. 'मानुमिमीते' क. पाठः

च, णन्दणस्स कारणादो महाराओ भट्टिदारिअं पत्थअन्तो अमच्चेण विण्णत्तो ।

(कुतोऽस्याः आश्वासः । एतेनाद्य सविशेषदर्शनेनातिभूमिं खलु तस्या अभिनिवेशो गमिष्यति । अन्यच्च, नन्दनस्य कारणान्महाराजो भर्तृदारिकां प्रार्थयमानोऽमात्येन विज्ञप्तः ।)

**प्रथमा** — किं विअ । (किमिव ।)

**द्वितीया** — पहवदि णिअस्स कण्णआजणस्स महाराओ त्ति । अदो आमरणं क्खु हिअअसल्लं मालदीए माहवाणुराओ त्ति तक्केमि ।

---

आश्वासः । एतेनाद्य सविशेषदर्शनेनातिभूमिं खलु तस्या अभिनिवेशो गमिष्यति । आश्वासः हृदयदुःखशान्तिः । सविशेषदर्शनेन दूरगतवातायनान्तरितक्षणिकदर्शनव्यतिरेकेण, मदनोद्याने समीपतश्चिरसंयुक्तेन दर्शनेन । अतिभूमिं परां काष्ठाम् । अभिनिवेशो हृदयस्याग्रहः ।

'नितान्तरूक्षाभिनिवेशमीशम्'

इतिवत् । अन्यच्च अस्तीति शेषः । नन्दनस्य कारणान्महाराजो भर्तृदारिकां प्रार्थयमानोऽमात्येन विज्ञप्तः ।

किमिव । इवशब्दो वाक्यालङ्कारे । विज्ञप्त इत्यनुकृष्यते ।

प्रभवति निजस्य कन्यकाजनस्य महाराज इति । प्रभवति प्रभुर्भवति; दानादाविति शेषः । निजस्येत्यनेनासत्यपरिहाराय महाराजसम्बन्धिन इति मुख्यवृत्त्या प्रतिपाद्य छलेन स्वपुत्र्या मालत्या राज्ञोऽपि धर्मतः पुत्रीत्वमासूच्य राजानं व्यामोहयतो 'राजकन्यानां राजा प्रभुः, मत्पुत्र्या अहमेव प्रभुः' इति प्रार्थनां

---

१. 'अ, कज्जे एव्व णन्दणस्स' ज. म. पाठः. २. 'किं त्ति ।' छ. ज. झ. ब. पाठः. ३. 'ता अदो आम' क. झ. म. पाठः.

---

१. 'दर्शनस्य व्य' ख. पाठः २. 'समीपगतीचिरप्रयुक्तेन' क. ज. पाठः. ३. 'प्रयुक्तेनातिभूमिं' ख. पाठः. ४. 'अस्ति विशेषः' ग. घ. पाठः. ५. 'इत्यनुकृष्यते' ख. पाठः. ६. 'हरते' ग. घ च. पाठः. ७. 'कन्यकानां ।' च. ज. पाठः.

(प्रभवति निजस्य कन्यकाजनस्य महाराज इति । अत आमरणं खलु मालत्या हृदयशल्यं माधवानुराग इति तर्कयामि ।)

प्रथमा—अवि णाम भअवदी एत्थ किं पि भअवदीत्तणं दंसइस्सदि ।

(अपि नाम भगवती अत्र किमपि भगवतीत्वं दर्शयिष्यति ।)

द्वितीया—अइ असंबद्धमणोरहे ! सहि एहि ।

(अयि ! असंबद्धमनोरथे ! सखि ! एहि ।)

(इति निष्क्रान्ते ।)

। प्रवेशकः ।

---

प्रत्याचक्षाणस्य भूरिवसोर्वचनं यथाश्रुतमेव परिकल्प्य आर्जवेन नीचपात्रं चेटी स्वयमनुशोचति । अत आमरणं खलु मालत्या हृदयशल्यं माधवानुराग इति तर्कयामि । अतः वाग्दत्तत्वात् । आमरणं । आङ् मर्यादायाम् । प्राणत्यागं यावदित्यर्थः । हृदयशल्यं मनोगतं शल्यमुखम् । शल्यग्रहणेन दुस्सहतया प्राणापायोऽप्यचिरेण भविष्यतीति स्नेहादाशङ्क्यते ।

अपि नाम भगवती अत्र किमपि भगवतीत्वं दर्शयिष्यति । ज्ञानतपःप्रभावसम्पन्नतया ननु कामन्दकी सर्वैरस्माभिर्भगवतीति पूज्यते । अतः प्रतिभाबलेन तपसा च स्वसामर्थ्यं प्रकाशयति । अपि नामेति सम्भावनायाम् ।

अयि असंबद्धमनोरथे ! सखि एहि । पितरि प्रतिकूले भगवत्या अप्यकिञ्चित्करत्वाद् अघटित एवायं मनोरथ इत्यर्थः । एहि आगच्छ, स्वाधिकारानुष्ठानायेति भावः ।

निष्क्रान्ते इति । अमात्यविज्ञापनस्य वृत्तस्य मदनोद्यानप्रतिनिवृत्तलवङ्गिकाद्वितीयमालतीदर्शनार्थं कामन्दक्यागमनस्य च वर्तिष्यमाणस्य चांशस्य सूचितत्वात् प्रवेशकफलसिद्धेस्ते निर्गते इत्यर्थः ।

(प्रवेशकः ।)

---

१. 'असंबन्ध' ख. ङ. छ. पाठः. २. 'मणोरहे एहि' । ख. छ. ज. झ. ञ. पाठः. ३. 'इति परिक्रम्य निष्क्रान्ते' क. ञ. ष. पाठः.

---

१. शल्यग्रहणे दुःसहत्वाद् ग. घ. च. पाठः. २. 'दुस्सहतया प्राणापायो' क. पाठः.

(ततः प्रविशत्युपविष्टा सोत्कण्ठा मालती, लवङ्गिका च ।)

**मालती** — सहि तदो तदो । (सखि ! ततस्ततः ।)

**लवङ्गिका** — तदो तेण महाणुहाएण उवणीदा मे इअं बउलमाला ।

(ततस्तेन महानुभावेनोपनीता मे इयं बकुलमाला ।)

(इति मालामर्पयति ।)

---

अथ नीरसे वस्तुनि सूचिते सरसवस्तुप्रयोगाय द्वितीयमङ्कमारभते— ततः प्रविशतीत्यादि । उपविष्टेति । तथात्वेनैव प्रवेशकः । लवाङ्गिका चेति । लवङ्गिकाद्वितीयेत्युक्तं संघटयति ।

सखि ततस्ततः अनन्तरं किमित्यर्थः । वीप्सया श्रवणादरो ध्वन्यते । ततस्तत इत्यनेन पूर्वप्रवृत्तत्वं सङ्कथायाः सूच्यते ।

ततस्तेन महानुभावेनोपनीता मे इयं बकुलमाला ।

इति—अनया उक्तिभङ्ग्या 'अथ तस्याः करेणुकारोहणसमय एवेत्यारभ्य' 'महानयं प्रसाद इति प्रगृहीतवती' इत्यन्तस्य कथांशस्य माधवोक्त्या प्रकाशितस्य लवङ्गिकया मालत्यै पूर्वं निवेदितत्वं सूचयंस्ततः परं विच्छिन्नस्यैव प्रकाशनमधिकरोति रससुधासंविधानसावधानः कवीश्वरः, पुनः कथनस्य रसविघातकत्वात् । अर्पयति-ददाति ।

---

१. 'ती — हुं सहि' क. झ. म. पाठः. २. 'का — सहि तेण' ख. छ. पाठः. ३. 'दा इअं' छ. ज. पाठः. ४. '(बकुलमालामर्पयति)' ख. घ. छ. '(इत्यर्पयति)' ज. पाठः.

---

१. 'विशत इत्यादि' घ. पाठः. २. 'प्रवेशः' क. पाठः. ३. 'वीप्साया श्र' ख. पाठः. ४. 'पूर्वप्रवृत्तत्वं' ग. घ. च. पाठः ५. 'सङ्कथया' ज. पाठः. ६. 'प्रकाश्यते', ७. 'कथांशकस्य' ख. पाठः. ८. 'विघातत्वात्' ग. घ. च. पाठः.

**मालती** — (सहर्षं गृहीत्वा निर्वर्ण्य) सहि ! एक्कपासविसमपडिबद्धा इअं विरअणा ।

(सखि ! एकपार्श्वविषमप्रतिबद्धेयं विरचना ।)

**लवङ्गिका** — एत्थ अरमणिज्जत्तणे तुमं जेव्व अवरद्धासि ।

(अत्रारमणीयत्वे त्वमेवापराद्धासि ।)

**मालती** — कधं विअ । (कथमिव ।)

**लवङ्गिका** — जेण सो दुव्वासामलङ्गो तधा विहत्थीकिदो ।

(येन स दूर्वाश्यामलाङ्गस्तथा विहस्तीकृतः ।)

**मालती** — सहि लवङ्गिए सव्वधा आसासणसीलासि ।

(सखि लवङ्गिके ! सर्वथा आश्वासनशीलासि ।)

---

निर्वर्ण्य निरूप्य । मालामिति प्रकरणात् । सखि ! एकपार्श्वविषमप्रतिबद्धेयं विरचना एकस्मिन् भागे भागान्तरंक्रमप्रकारविसदृशं यथा तथा प्रतिबद्धा गुम्फिता । इयं विरचना विरच्यत इति विरचना माला कथ्यते ।

अत्रारमणीयत्वे त्वमेवापराद्धासि ।

कथमिव — इवशब्दो वाक्यालङ्कारे ।

येन स दूर्वाश्यामलाङ्गस्तथा विहस्तीकृतः । येनेति यस्मादर्थेऽव्ययम् । दूर्वाकाण्डमिव श्यामलमङ्गं यस्येति सौन्दर्योपलक्षणम् । तथेति मालाग्रथनमक्रमनिर्वाहेऽपि यथा न शक्तोऽभूदित्यर्थः । विहस्तीकृतः परवशीकृतः ।

तद्वचनं मृषोद्यमाशङ्कमाना मालत्याह—सखि लवङ्गिके सर्वथा आश्वासनशीलासि । मनोविस्थापनं स्वभावो यस्याः ।

---

१. '(मालां गृहीत्वा सहर्षं निर्वर्ण्य)' ङ. ज. '(गृहीत्वा सहर्षं निर्वर्ण्य)' ञ. झ. म. पाठः, २. 'एक्कावआस' ख पाठः. ३. 'पडिबन्धा' ङ, 'पडिबद्धा खु इअं' क. ख. ब. पाठः. ४. 'एत्थ दाव अ' क. ञ. ञ. पाठः. ५. 'सो मुद्धतुम्हा' क. ख. पाठः. ६. 'पिअसहि' ज. झ. पाठः

---

१. 'विरचितमाला कथ्यते इति विरचना', २. 'यस्य सौन्दर्योपलक्षणम्' । क. पाठः. ३. 'मृषोदितमाशङ्कमाना' घ पाठः.

लवङ्गिका — सहि का एत्थ आसासणसीलदा । णं भणामि । सो पिअसहीए मन्दमारुदप्पअलिदप्पफुल्लपुण्डरीअविब्भमेहिं पढमारद्धबउलावलीविरअणावदेससंजमणबलामोडिवित्थरन्तेहिं लोअणेहिं विअम्भमाणविम्हअत्थिमिददीहपेरन्तपरिअन्तणाविलासुल्लासिअभूविहाविआणंगसारंगविब्भमविअड्ढं ओलोअअन्तो पच्चक्खीकिदो जेव्व ।

(सखि! कात्र आश्वासनशीलता । ननु भणामि । स प्रियसख्या मन्दमारुतप्रचलितप्रफुल्लपुण्डरीकविभ्रमाभ्यां प्रथमारब्धबकुलावलिविरचनापदेशसंयमनबलात्कारविस्तीर्यमाणाभ्यां लोचनाभ्यां विजृम्भमाणविस्मयस्तिमितदीर्घपर्य-

---

सखि! कात्र आश्वासनशीलता । स्वाप्रत्यक्षे हि वस्तुनि परस्य मृषावचनमाशङ्क्यते, इदं तु न तथेत्याह—नन्विति संवादे । ननु भणामि । स प्रियसख्या मन्दमारुतप्रचलितप्रफुल्लपुण्डरीकविभ्रमाभ्यां प्रथमारब्धबकुलावलीविरचनापदेशसंयमनबलात्कारविस्तीर्यमाणाभ्यां लोचनाभ्यां विजृम्भमाणविस्मयस्तिमितदीर्घपर्यन्तपरिवर्तनाविलासोल्लसितभ्रूविभावितानङ्गशार्ङ्गविभ्रमविदग्धमवलोकयन् प्रत्यक्षीकृत एव । प्रथमारब्धेति । त्वद्दर्शनात्पूर्वमेवोपक्रान्तकेसरमालाग्रथनव्याजेन यत्संयमनं निरोधनं, ततो बलात्कारेण परवशतया प्रसरद्भ्यामित्यर्थः । पर्यन्तोऽपाङ्गदेशः तत्र परिवर्तना तारासञ्चरणम् । तद्विलासेनोल्लसिताभ्यामुच्चलिताभ्यां भ्रूभ्यां प्रकाशितेन मदनधनुर्विभ्रमेण विदग्धं यथा तथावलोकयन्निति 'शार्ङ्गं चापे हरेः(श्व तव ? श्रापि')इति विशेषवाचकोऽपि शार्ङ्गशब्दोऽत्र लक्षणया धनुःसामान्यमाह । प्रसन्नं विदग्धं चैतद्वीक्षितम् ।

---

१. 'का — एत्थ' ख. घ. पाठः. २. 'सो वि पिअ' ख. ज. झ. ञ. पाठः. ३. 'मन्दमारुदुव्वेल्लन्तप्पफुल्ल' क. झ. ञ. पाठः. ४. 'पढमाबद्ध' क, 'पुढमारद्ध' ए. ङ. पाठः. ५. 'संजमिद' क. झ. ञ, 'संजमणा' ङ. ज. पाठः. ६. 'बलामोडिअ वि' ङ. ज. झ. ञ. पाठः. ७. 'त्थिमिद' ङ. ज. झ. ञ. पाठः. ८. 'परिअत्तणा' क. ङ. पाठः. ९. 'भूलदाविहाविभा' घ. ज. पाठः.

---

१. 'भ्रूविलासितानङ्ग' ग. 'भ्रूभावितानङ्ग', घ. पाठः. २. 'दर्शनात्' क. ३. 'व्याजे यत्स' ज. पाठः. ४. 'सञ्चारं तद्विलासेन' ज. पाठः. ५. 'भ्रूभ्यां प्रकाशितेन मदन', ६. 'ति विशेषण वाच' ग. घ, 'ति विशेषवाच' ज. पाठः. ७. [illegible] 'सामान्यमाह । विदग्धं' घ. पाठः.

न्तपरिवर्तनाविलासोल्लसितभ्रूविभावितानङ्गशार्ङ्गविभ्रमविदग्धमवलोकयन् प्रत्यक्षीकृत एव ।)

**मालती**—(लवङ्गिकां परिष्वज्य) आम्, पिअसहि! किं दाव तस्स[1] साहाविआ जेव्व ते मुहुत्तसण्णिहाइणो जणस्स विप्पलंभइत्तआ[2] विलासा । अहआ जधा पिअसही संभावेदि ।

(आम्, प्रियसखि ! किं तावत् तस्य स्वाभाविका एव ते मुहूर्तसन्निधायिनो जनस्य विप्रलम्भयितारो विलासाः । अथवा यथा प्रियसखी संभावयति ।)

"तत्प्रसन्नं भवेत् सभ्रूविलासं सस्मितं च यत् ।
विदग्धं तद्यदालोके विवशाः सर्वजन्तवः" ॥

इति भावप्रकाशः ॥

परिष्वज्येति । तदुक्तेः स्वाभिलषितसंवादात् प्रहर्षविवशत्वादालिङ्गनं पूर्णपात्रीकृत्येत्यर्थः[1] ।

आम् इत्यनुवादार्थमव्ययम् । प्रत्यक्षीकृत एवेत्यर्थः । तत्र चोद्यं विधत्त इत्याह—प्रियसखि किं तावत् तस्य स्वाभाविका एव ते मुहूर्तसन्निधायिनो जनस्य विप्रलम्भयितारो विलासाः । अथवा यथा प्रियसखी संभावयति । तावच्छब्दो वाक्यालङ्कारे । स्वाभाविकाः प्रकृतिसिद्धाः । क्षणमात्रदर्शनविषयस्येत्यपरिचितत्वात्[2] संशयौचित्यं द्योत्यते । विप्रलम्भयितारः वञ्चकाः । अस्मादृशस्येति[3] शेषः । जडानां भ्रमकारिण इत्यर्थः । विलासाः शृङ्गारचेष्टाविशेषाः ।

'गतिः सगर्वा दृष्टिश्च विलासे सस्मितं वचः ।'

इति लक्षिताः । प्रियसखी यथा संभावयति त्वद्विषया एवेति । भवती यथा तर्कयति तथैवेत्यर्थः ॥

---

१. 'किं तस्स दाव महाणुहाअस्स साहाविआ एव्व मुहुत्त' ख. ग. पाठः.
२. 'विप्पलंभइदुआ' क. पाठः.

---

१. 'कृत्येत्यर्थः' ग. घ. पाठः. २. 'परिनिश्चितत्वात्' क. पाठः. ३. 'ति । जडानां भ्रमं' ग. घ. च. पाठः.

लवङ्गिका — (विहस्य सासूयमिव) तुमं पि सहावेण जेव्व त-स्सिं अवसरे असङ्गीदं णच्चिदासि ।

(त्वमपि स्वभावेनैव तस्मिन्नवसरे असङ्गीतं नर्तितासि ।)

मालती — (सलज्जं विहस्य) हुं तदो तदो । (हुं ततस्ततः ।)

लवङ्गिका — तदो पडिणिउत्तमाणजणजत्तासङ्कुलेण अन्तरिदे तस्सिं मन्दारिआए घरं उवगदह्मि । ताए चित्तफलअं पभादे हत्थे किदं आसि ।

(ततः प्रतिनिवर्तमानजनयात्रासंकुलेनान्तरिते तस्मिन् मन्दारिकाया गृहमुपगतास्मि । तस्याः चित्रफलकं प्रभाते हस्ते कृतमासीत् ।)

---

विहस्येति । स्वयं सुष्ठु विदिततत्त्वापि तदुदन्तश्रवणकौतुकेन पुनः पृच्छतीति जातहासेत्यर्थः । सासूयं— तदुक्तिमसहमानेव । त्वमपि स्वभावे-नैव तस्मिन्नवसरे असङ्गीतं नर्तितासि । तस्मिन्नवसरे माधवदर्शनसमये । तौ-र्यत्रिकवाचकोऽपि सङ्गीतशब्दोऽत्र पारिशेष्याद् गीतवाद्यमात्रवृत्तिः । त्वमपीति । स चेत्त्वयैवं प्रार्थ्यते, तर्हि त्वमपि स्वभावेनैव नर्तकेन गीतं वाद्यं च विना नृत्तं कारितासि । न पुनस्तद्विषयेण प्रेम्णेति प्रतिबन्दिपरिग्रहेण स्वानुभूत्या तां प्रत्याययति । नर्तितासीति धैर्यलज्जाद्यपगमेन स्पष्टदृष्टवैकृतत्वम् आचार्यकं विज-म्भितमुक्तमनुस्मारयति ।

सलज्जमिति । तदात्ववृत्तान्तमात्मनोऽनुस्मृत्य अहो सखीभिर्ज्ञातोऽय-मर्थ इति लज्जितेत्यर्थः । विहस्येति । तदुक्त्या पराजितत्वाद्विलक्षस्मितं कृत्वेत्यर्थः । हुमित्यनुवादे । 'आमन्त्रणे भर्त्सने हुं' इति वैजयन्ती । ततस्ततः ।

ततः प्रतिनिवर्तमानजनयात्रासंकुलेनान्तरिते तस्मिन् मन्दारिकाया गृहमुपगतास्मि । तस्याः चित्रफलकं प्रभाते हस्ते कृतमासीत् । मयेति शेषः ।

---

१. 'असंगीदअं' ख. घ. ङ. ज. झ. म. पाठः. २. 'णच्चाविआसि' घ, 'णट्टाविआसि' छ, 'णच्चिदासि' ज. म, 'णच्चाविदासि' ट. झ. पाठः, ३. '(सलज्जं) हुं' क. झ. पाठः. ४. 'माणजत्ताजणस्स' क. झ. ज, 'माणजत्तासङ्कुलेण' च. पाठः. ५. 'ळे तस्सि अन्तरिदे महाणुभावे मन्दारिआ' घ. पाठः. ६. 'ताए क्खु चित्त' क. झ. म. पाठः.

---

१. 'विदित्वापि', २. 'तं प्रकाशयति' छ. पाठः ३. 'दृष्टे वैकृतत्वं' म. पाठः. ४. 'तदा पर' ज. पाठः. ५. 'संकुलतेन' घ. पाठः.

मालती — किंणिमित्तं । (किंनिमित्तम् ।)

लवङ्गिका — तं क्खु माहवाणुअरो कलहंसओ णाम कामेदि । तस्स दंसइस्सदि त्ति । तदो पिअणिवेदिआ मे मन्दारिआ संवुत्ता ।

(तां खलु माधवानुचरः कलहंसको नाम कामयते तस्मै दर्शयिष्यतीति । ततः प्रियनिवेदिका मे मन्दारिका संवृत्ता ।)

मालती — (स्वगतं) णूणं तेण वि कलहंसएण तं पडिच्छन्दं अत्तणो पहुणो दंसिदं भविस्सदि (प्रकाशं) । सहि किं दाणिं दे पिअं ।

(नूनं तेनापि कलहंसकेन तत्प्रतिच्छन्दमात्मनः प्रभवे दर्शितं भविष्यति । (प्रकाशं) सखि किमिदानीं ते प्रियम् ।)

लवाङ्गिका — एदं क्खु तस्स सन्दावआरिणो दुल्लहमणोरहावेस-दूसहाआसढज्झतणचित्तक्खणमेत्तणिव्वावअं तुह पडिच्छन्दं ।

(एतत् खलु तस्य सन्तापकारिणो दुर्लभमनोरथावेशदुःसहायासदह्य-मानचित्तक्षणमात्रनिर्वापकं तव प्रतिच्छन्दम् ।) (इति चित्रं दर्शयति ।)

---

किंनिमित्तम् ।

तां खलु माधवानुचरः कलहंसको नाम कामयते तस्मै दर्शयिष्यतीति । ततः प्रियनिवेदिका मे मन्दारिका संवृत्ता । प्रियनिवेदिका दिष्ट्या वर्धस इति प्रियवचनाख्यायिका ।

नूनं तेनापि कलहंसकेन तत्प्रतिच्छन्दमात्मनः प्रभवे दर्शितं भविष्यति । सखि ! किमिदानीं ते प्रियम् ।

एतत् खलु तस्य सन्तापकारिणो दुर्लभमनोरथावेशदुस्सहायासदह्यमानचित्तक्षणमात्रनिर्वापकं तव प्रतिच्छन्दम् । मम प्रियमिति संबध्यते ।

---

१. 'माहवाणुचरो' क. पाठः. २. 'ओ कामेदि' ख. पाठः. ३. 'दि सा तस्स' क. ज. झ. ञ. पाठः. ४. 'आ मन्दारिआ' ज. पाठः. ५. 'एदं पडिच्छन्दअं' ज. पाठः. ६. 'पभुणो' ख. ङ., 'पहुवस्स' घ, 'पहुअस्स' च. पाठः. ७. 'हविस्सदि' ज. पाठः. ८. 'शं) किं दाणिं' क. पाठः. ९. 'क्खु सन्दाविदस्स सन्दाव' क. च. छ. झ. ञ, 'क्खु सेदाविदस्स तुह सन्दाव' ज. पाठः. १०. 'दुल्लभ-मणो' क. पाठः. ११. 'आसदज्झन्तचित्तस्स क्खण' क. ज. छ. झ. ञ. पाठः. १२. 'णिव्वावइत्तअं' ज. पाठः.

---

१. 'दर्शयतीति', २. 'कलहंसेन' ग. घ. च. पाठः. ३. 'दुस्सहायाससन्दह्यमान' क, 'दुस्सहायास्सन्दह्यमान', ४. 'निर्वापयितृकं' ज. पाठः.

**मालती**—(संहर्षोच्छ्वासं निर्वर्ण्य) अहो दाणिं पि हिअअस्स मे अणासासो जेण एदं पि आसासणविप्पलम्भो त्ति सम्भावीअदि। अध अक्खराइं पि।

(अहो इदानीमपि हृदयस्य मेऽनाश्वासो येनैतदप्याश्वासनविप्रलम्भ इति सम्भाव्यते। अथ अक्षराण्यपि।)

(जगति जयिनस्ते ते भावा नवेन्दुकलादयः (१. ३८) इत्यादि पूर्वोक्तं पठित्वा सानन्दम्)

महाभाअ सरिसं क्खु दे णिम्माणस्स वअणं महुरदाए दंसणं उण तक्कालमणोहरं परिणामदीहसन्तावदारुणं अ। धण्णा क्खु ताओ इत्थिआओ जाओ तुमं ण पेक्खन्ति अत्तणो वा हिअअस्स

**सहर्षोच्छ्वासं**। हृदयदुःखभारलघूभावसूचकः उच्छ्वासः। **निर्वर्ण्य** निरूप्य। अहो इदानीमपि हृदयस्य मेऽनाश्वासो येनैतदप्याश्वासनविप्रलम्भ इति सम्भाव्यते। **इदानीमपि** रेखाविन्यासविशेषेण प्रियतमकृतत्वनिर्णयेऽपीत्यर्थः। **अनाश्वासः** अश्रद्धा। **एतद्** मद्रूपलेखनमपि। आश्वासनार्थं सखी स्वहस्तलिखितेन वञ्चनमित्युत्प्रेक्ष्यते। **अथशब्दो** व्यावृत्तौ। चित्रव्यतिरेकेण तेन अक्षराण्यपि लिखितान्यत्रेत्यर्थः। **अक्षरग्रहणं** समुदायनिरीक्षणात्। पूर्वमेव कतिपयाक्षरमात्रदर्शनहर्षाकुलितत्वं द्योतयति। **सानन्दं** सुखानुभवसहितम्।

आकाशे नायकमभिमुखीकृत्याह हृदयसन्निहितं वा। महाभाग सदृशं खलु ते निर्माणस्य वचनं मधुरतया दर्शनं पुनस्तत्कालमनोहरं परिणामदीर्घसन्तापदारुणं च। **निर्माणस्य** देहसृष्टेः। **मधुरतया** हृदयाह्लादकत्वेन। **सदृशं** अनुरूपम्। **परिणामे** कालान्तरे सन्ततदुःखदुस्सहं च। **धन्याः**

१. '(सहर्षं सोच्छ्वासं)' क, '(सहर्षोच्छ्वासं चिरं निर्वर्ण्य)' घ. ङ. छ. ज, '(सहर्षं निर्वर्ण्य)' झ. ञ. पाठः. २. 'अह्मो' ज. ञ. पाठः. ३. 'अणासङ्गो' क., अणासक्खो' च, 'अणासङ्को' ख. घ. ङ. छ. पाठः. ४. 'आसासणं वि' क. छ. ज. झ, 'आसासणावि' ख. घ. ङ. पाठः. ५. 'अद अ अक्खराइं' घ. ङ. पाठः. ६. 'इं विअ। (सानन्दं) जगति' छ. पाठः. ७. 'विरअणं' क. पाठः. ८. 'मणोहारि' ज. पाठः. ९. 'कण्णआओ' क. पाठः १०. 'न्ति पेक्ख वा अत्तणो' छ. पाठः.

१. 'कारसू' ग. पाठः. २. 'लिखिते वञ्चनमित्युत्प्रेक्षते', ३. 'विचित्र' क. घ. पाठः. ४. 'दर्शन एव हर्षाकुलितत्वं' क, 'दर्शने हर्षाकुलत्वं' घ. पाठः. ५. 'दर्शनं न पुनः' ग. ज. पाठः. ६. 'ह्लादकत्वेन' क. पाठः.

पहवन्ति[1]।

(महाभाग सदृशं खलु ते निर्माणस्य वचनं मधुरतया दर्शनं पुनस्तत्कालमनोहरं परिणामदीर्घसन्तापदारुणं च। धन्याः खलु ताः स्त्रियः यास्त्वां न पश्यन्ति आत्मनो वा हृदयस्य प्रभवन्ति।)

लवङ्गिका[2]— किं सहि जेव्वं पि दे णत्थि आसासो।

(किं सखि एवमपि ते नास्त्याश्वासः।)

मालती— कधं[3]? (कथम्?)

लवङ्गिका— जस्स कारणादो तुमं उत्तुडिअबन्धणं कङ्केलिपल्लवं विअ किलन्तणो[4]मालिआकुसुमणीसहा परिहीआसि[5] सो वि जाणाविदो भअवदा मम्महेण सन्दावस्स दूसहत्तणं ति।

(यस्य कारणात् त्वम् उत्त्रुटितबन्धनं कङ्केलीपल्लवमिव क्लान्तनवमालिकाकुसुमनिस्सहा परिहीयसे सोऽपि ज्ञापितो भगवता मन्मथेन सन्तापस्य दुस्सहत्वमिति।)

---

खलु ताः स्त्रियः, यास्त्वां न पश्यन्ति आत्मनो वा हृदयस्य प्रभवन्ति। त्वां न पश्यन्ति निमित्ताभावान्नैमित्तिकस्य रणरणकदुःखस्याप्रसङ्गात्। अति-धीरतया[1] नीरसतया वा स्वहृदयस्य निवारणे[2] वा शक्नुवन्ति।

किं सखि एवमपि ते नास्त्याश्वासः। एवमपि अनेन प्रकारेणापि।

कथमिति एवमित्युक्तप्रकारजिज्ञासा।

यस्य कारणात् त्वमुत्त्रुटितबन्धनं कङ्केली[3]पल्लवमिव क्लान्तनवमालिका-कुसुमनिस्सहा[4] परिहीयसे। खण्डितवृन्तमशोककिसलय[5]मिव शुष्यसि। म्लान-[6]नवमालिकाकुसुममिव प्रकृत्या दुर्बलेत्यर्थः। सोऽपि ज्ञापितो भगवता मन्मथेन सन्तापस्य दुस्सहत्वमिति। अनेन प्रकारेणापि किं नाश्वासः 'अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते' इति न्यायादित्यर्थः।

---

१. 'पहवन्ति (इति रोदिति)। 'लव—' झ. ञ. पाठः २. 'का—सहि एव्वं' च. छ. पाठः. ३. 'कहं विअ?' ख. घ. ङ. छ. पाठः. ४. 'किलिस्सन्त' क. पाठः. ५. 'परिहिज्जासि' झ., 'परिखिज्जासि' ञ. पाठः

---

१. 'धीरतया वा' क. पाठः. २. 'ण शक्नुवन्ति' च. पाठः. ३. 'कङ्केलि-' ङ घ. च. पाठः. ४. 'कुसुममिव निस्सहा' ग. घ. पाठः. ५. 'मशोकपल्लवमिव' च. पाठः. ६. 'म्लानं नव' क. ख. ग. पाठः

मालती—सहि कुसलं दाव तस्स महाणुभावस्स भोदु । मम उण सुदुल्लहो आसासो ।

(सखि कुशलं तावत्तस्य महानुभावस्य भवतु । मम पुनः सुदुर्लभ आश्वासः ।)

(सास्रं संस्कृतमाश्रित्य)

मनोरोगस्तीव्रं विषमिव विसर्पन्नविरतं
प्रमाथी निर्धूमं ज्वलति विधुतः पावक इव ।

अतिस्नेहात् पापमाशङ्कमाना मालत्याशास्ते—सखि! कुशलं तावत्तस्य महानुभावस्य भवतु । पुरुषरत्नत्वात्तस्य लोकानुग्रहायापि कुशलं चिरजीवनमाशास्यमेवेति भावः । मम पुनः सुदुर्लभ आश्वासः । पुनःशब्दो व्यावृत्तौ ।

सास्रं अप्रतीकारदारुणत्वं स्वसन्तापस्यानुचिन्त्याविमहृदयतया सबाष्पम् । संस्कृतमाश्रित्येति ।

'कार्यतश्चोत्तमादीनां कार्यो भाषाव्यतिक्रमः ।'

इति वचनान्निर्यन्त्रणनिजदुःखनिवेदनाय संस्कृतभाषामवलम्ब्याहेत्यर्थः ।

मनोरोग इत्यादि — रुजति भनक्तीति रोगः । मनसो व्याधिरित्यनेनाबाह्यत्वाद् दुरुच्छेदत्वं व्यज्यते । तीव्रमिति विषविशेषणम् । दुस्सहतया प्रसिद्धं कालकूटमिवेत्यर्थः । विधुतः पावक इवेति गरीयान् ज्वर इवेति सविशेषणोपमानप्रक्रमात् । विसर्पन् उपर्युपरि विजृम्भमाणः । कम्पस्वेदादिस्वकार्यकरणेन शरीरं व्याप्नुवन् वा । विसर्पणस्य विधीयमानयोर्ज्वलनहिंसनयोर्द्वयोरपि साधारण्याद् विसर्पन्नित्यनुवादः । 'विसर्पत्यविरतं' इति वा पाठः । प्रमाथी मर्मव्यथनशीलः । निर्धूमं निरस्तधूममिति निर्विच्छेदत्वं ज्वलनस्योक्तम् । अन्यथा धूमप्रसङ्गात् । मनोरोगस्य निर्धूमत्वं नाम मान्द्यं विहाय निरर्गलः प्रसरः । विधुतः चलितेन्धनः । तदानीं

१. 'मालती—कुसल' घ. च. ञ पाठः. २. 'दाणिं तस्स' ख. घ. च. छ. ज. झ. ञ. पाठः. ३. 'दुल्लहो' ज. छ. झ. ञ. पाठः. ४. '(सास्रं) विसेसदो अज्ज पिअसहि (संस्कृ', ५. 'मनोरागस्तीव्रं', ६. 'विसर्पत्यविरतं' क. झ. ञ. पाठः. ७. 'निर्धूमो' झ. ञ. पाठः.

१. 'पुरुषत्वात्' घ. पाठः. २. लोकानुग्राहकतयापि' च. पाठः. ३. 'भिनत्तीति' क. ज. पाठः. ४. 'विषं दुस्सहतया' क. ग. घ. पाठः. ५. 'सविशेषोपमान' ग. घ. च. पाठः. ६. 'निरर्गलं', ७. 'विधूतः' ग. घ. पाठः. ८. 'प्रज्वलितेन्धनः' ज. पाठः.

हिनस्ति प्रत्यङ्गं ज्वर इव गरीयानत इतो
न मां त्रातुं तातः प्रभवति नचाम्बा न भवती ॥ १ ॥

लवङ्गिका— एवं एदं। पच्चक्खसोक्खदाइणो परोक्खदुःक्ख-दूसहा सज्जणसमाअमा होन्ति। अवि अ, पिअसहि जस्स वादाअणन्त-रिदमुहुत्तदंसणेण समिद्धहुदवहाअन्तपुण्णचन्दोदआ णिक्करुणकामवा-

ज्वालाप्रसरस्यावसरलाभात्।

'ज्वलति चलितेन्धनोऽग्निः'

इति शाकुन्तलोक्तेः। हिनस्ति अन्तः प्रविश्य तुदति। प्रत्यङ्गं पृथक् पृथगङ्गानि। गरीयान् गुरुतरः। सान्निपातिकादिरसाध्यो ज्वर इव। उपमानैः क्रमान्मूर्च्छादिजनकत्वं वेदनासन्तानो महोष्मप्रसरश्च प्रकाश्यते। अतः यत एवमतिभूमिं गतस्तस्माद्। इतो मनोरोगाद्धेतोः। त्रातुं रक्षितुम्। 'भीत्रार्थानां भयहेतुः' (२-४-२५) इति पञ्चमी। तातः पिता। न प्रभवति न शक्नोति। अम्बा माता। भवती त्वं च। युष्मदतिशायिनो बन्धोरभावाद् युष्माभिरप्य-यमचिकित्स्यो व्याधिरित्यर्थः। अतो मम तु नास्त्येव जीवितप्रत्याशा। सोऽपि तावत् कुशली भवत्विति सम्बन्धः। उपमात्राकलङ्कारः ॥ १ ॥

अथ वृत्तवस्तुपरिज्ञानादनावेगा लवङ्गिका भङ्ग्या तद्गुणसङ्कीर्तनेन स्वयंग्रहाय प्रोत्साहयति

'प्रथमामिति शीलयोगादाख्यानाद्यैर्विशेषयेदेनाम्'

इति कामशास्त्रे दूतीकर्मोक्तेः। एवमेतत्। प्रत्यक्षसौख्यदायिनः परो-क्षदुःखदुस्सहा सज्जनसमागमा भवन्ति। सन्निधौ सुखकरा असन्निधौ दुःखकारिणश्च। अपि च प्रियसखि यस्य वातायनान्तरितमुहूर्त-दर्शनेन समिद्धहुतवहायमानपूर्णचन्द्रोदया निष्करुणकामव्यापारसंशयि-तजीविता ते शरीरावस्था, तस्यैव सम्प्राप्तसविशेषदर्शनादद्य सन्तप्यस इति किमत्र भणितव्यम्। समिद्धहुतवहायमानः प्रदीप्तवह्निवदाचरन्

१. 'गरीयानित इतो' क. छ. ज. झ. ञ. पाठः. २. 'एवं एव्व पच्चक्ख' च, 'एव्वं जेव्व' झ. ञ. पाठः. ३. 'परोक्खदूसहा' ख. घ. पाठः. ४. 'अवि अ सहि' घ, 'अवि अ जस्स' क. च. झ. ञ. पाठः. ५. 'वादाणन्तरमहुत्त' क. छ. ज. झ. ञ. पाठः. ६. 'ण सविसेससमिद्ध' क. झ. ञ., 'ण विसुससमिद्ध' ज. पाठः. ७. 'पुण्णिमाचन्दोदआ' क. झ. ञ. पाठः.

१. 'गुरुतमः' क. ग. ज. पाठः. २. 'प्रभवति शक्नोति' च. पाठः ३. 'दुस्सहाश्च सज्जन' क. पाठः.

  

वारसंसइदजीविदा दे सरीरावत्था, तस्स जेव्व[1] सम्पत्तसविसेसदंसणादो[2] अज्ज सन्तप्पसि त्ति किं एत्थ भणिदव्वं। ता पिअसहि सिलाहणिज्जो दुल्लहमणोरधफलं जीअलोअस्स[4] गरुआणुराअसरिसमहाभाअवल्लहसमा-अमो[5] त्ति एत्तिअं जाणीमो।

(एवमेतत्। प्रत्यक्षसौख्यदायिनः परोक्षदुःखदुस्सहाः सज्जनसमागमा भवन्ति। अपि च प्रियसखि यस्य वातायनान्तरितमुहूर्तदर्शनेन समिद्धहुतवहाय-मानपूर्णचन्द्रोदया निष्करुणकामव्यापारसंशयितजीविता ते शरीरावस्था, तस्यैव सम्प्राप्तसविशेषदर्शनादद्य सन्तप्यस इति किमत्र भणितव्यम्। तत् प्रियसखि,

देहदाहात्, पूर्णचन्द्रोदयो यस्याः अत्र किं भणितव्यम् अयमर्थो न वा-ग्गोचर इत्यर्थः। प्रियसखि श्लाघनीयो दुर्लभमनोरथफलं जीवलोकस्य गुर्वनु-रागसरसमहाभागवल्लभसमागम इति एतावज्जानीम इति। श्लाघनीयः पित्रादीनामप्यभिनन्दनीय इति तच्छङ्कां निवर्तयति[1]। दुर्लभमनोरथफलं दुष्प्रापं सङ्कल्पप्रयोजनम्। श्लाघ्यत्वादेर्हेतुमाह — गुर्वनुरागसरसमहा-भागवल्लभसमागम इति। स्वस्यामनुरागशालिनः कलाकौशलादिभिर्विदग्धस्य महाकुलीनत्वादिभिर्निरतिशयमहाभाग्यस्य[2] स्वप्रेमास्पदतया वल्लभस्य जनस्य समागमः संयोग इत्यर्थः। ता पिअसहि इत्यादिर्भेदः प्रोत्साहनात्[3]। ननु —

'गान्धर्वराक्षसौ राज्ञः'

इति स्मृतेः[4], ब्राह्मणयोः कथं गान्धर्वो विवाहः प्रतिपाद्यते। उच्यते। नात्र गान्धर्वो विवाहो विधीयते। 'मया च तुभ्यं दीयत'[5] इति, 'प्रेयो मित्रं बन्धुता वा समग्रा' इति, पितृबुद्ध्यनुसारेण गुरुभूतकामन्दकीमुखतः प्राजापत्यस्यैवोपरि वक्ष्यमाणत्वादत्र तु प्राजापत्याभिमुख्येन[6] परस्परानुकूल्यस्यैव विधीयमानत्वात्तस्य

१. 'वेअ' ख., 'चे अ' ग. घ. ङ. 'एव्व च स' छ. ज. पाठः. २. 'सम्पत्तविसेस' झ. पाठः. ३. 'दंसणेण अज्ज' छ., 'दंसणा भविअ अज्ज' झ. ञ. पाठः. ४. 'स्स जं गुरु' ज. पाठः. ५. 'सरिहो महाभाअ' छ. पाठः. ६. 'महाणुभाअ' क. झ. ञ. पाठः.

१. 'निवारयति' ग. पाठः. २. 'शयभाग्यस्य' ग. ज. पाठः. ३. 'इत्यादिभेदप्रोत्साहना' ज पाठः. ४. इति श्रुतेः' ज. पाठः. ५. 'नीयत' ग. घ. पाठः. ६. 'प्राजापत्यमिमुखेन' ज. पाठः.

श्लाघनीयो दुर्लभमनोरथफलं जीवलोकस्य गुर्वनुरागसरसमहाभागवल्लभसमागम इति एतावज्जानीमः ।)

मालती— सहि दइदमालदीजीविदे ! साहसोवण्णासिणि ! अवेहि । (सास्रम्) अघवा अहं जेव्व वारं वारं पलाअन्तववत्थाविदधीरत्तणावट्ठम्भेण अत्तणो हिअएण दूरीकिदलज्जा दुव्विणअलहुई एत्थ अवरज्झामि । तधा वि पिअसहि—

(सखि दयितमालतीजीविते ! साहसोपन्यासिनि ! अपेहि । (सास्रं) अथवा अहमेव वारं वारं पलायमानव्यवस्थापितधीरत्वावष्टम्भेन आत्मनो हृदयेन दूरीकृतलज्जा दुर्विनयलघ्वी अत्र अपराध्यामि । तथापि प्रियसखि — )

च सर्वविवाहेषु प्रशस्ततया साधारण्यात् । वक्ष्यते च 'इतरेतरानुरागो हि दारकर्मणि परार्ध्यं मङ्गलम्' इति । ततो न कश्चिद्विरोधः ।

अथ सखीहृदयं विज्ञाय अतिप्रश्रिततया कुलपालिकामौलिमालिका मालती साहसं प्रत्याचष्टे — सखि दयितमालतीजीविते ! साहसोपन्यासिन्यपेहि । दयितमालतीजीवित इति कारणविचारणासहम् । अथवा 'स्वं वीक्ष्य मन्मथोन्मथितम्' इति वचनाद् 'येन केनाप्युपायेन रक्षणीयाः सुहृदा सुहृदसवः' इति न्यायेन मद्दशाविशेषदर्शनात् प्रमादशङ्किन्यास्ते मत्प्राणा एव प्रिया न पुनर्धर्म इत्यर्थः । मालतीशब्देनार्थान्तरसंक्रमितवाच्येन सहजसौहृदार्द्रहृदयत्वं तस्याः प्रकाशयति । साहसोपन्यासिनि साहसं पित्रादिलङ्घनेन स्वाभिमतानुष्ठानं, तच्छंसिनि । कर्तव्यत्वेन तद्विदधासीति तद्धृदयप्रकाशनम् । अतोऽपेहि पुरतोऽपसरेत्यसूयया वचनम् । अथवा अहमेव वारं

१. 'सहसोवण्णासिणि' ख. पाठः. २. 'वारं विलोअअन्ती पला', ३. 'पडिट्ठाविद' ज. पाठः. ४. 'दूरं विलोअन्तलज्जत्तेणदुव्विअलहुअ' ज., 'दूरविज्जम्भमाणदुव्विणअलहुएण' झ., 'दूरविअलिदलज्जेण दुव्विणअलहुआ' ञ. पाठः.

१. 'प्रश्रितया' क. पाठः. २. 'प्रत्याचख्यौ', ३. 'सुहृदसवः' ज. पाठः, ४. 'शङ्किन्यास्ते' क., 'प्रमादशङ्किन्यास्ते' ग. पाठः. ५. 'तच्छङ्किनि' क. पाठः.

(भूयः संस्कृतमाश्रित्य)

ज्वलतु गगने रात्रौ रात्रावखण्डकलः शशी
दहतु मदनः, किं वा मृत्योः परेण विधास्यतः ।

वारं पलायमानव्यवस्थापितधीरत्वावष्टम्भेनात्मनो हृदयेन दूरीकृतलज्जा दुर्विनयलघ्वी अत्रापराध्यामीति । अथवेति — तव न कश्चिद्दोषो मत्स्नेहानुगुणं प्रवर्तनादिति तदुपालम्भं निवर्तयति । तर्हि कस्य दोष इत्यत्राह — वारं वारं क्षणे क्षणे । पलायमानमपसरद् व्यवस्थापितं हठात् प्रतिनिवर्तितं च धैर्यमेव अवष्टम्भ आश्रयो यस्य । अन्यथा स्फुटनादिप्रसङ्गात् । तेन स्वसा हृदयेन निरस्तकार्यभया। दुर्विनयलघ्वी अविनयेन अविजितेन्द्रियत्वात्मना प्राकृतप्रमदेव सज्जनबहुमानबाह्यभूता । अत्र अस्मिन् वस्तुनि । अपराध्यामि सदोषा भवामि । एतन्मूलत्वादीदृशानां भवादृशवचनानामवकाशस्येत्यर्थः ।

यदि साहसं न क्रियते कथं तर्हि जीवितं रक्ष्यत इत्याशङ्क्याह — ज्वलतु गगन इत्यादि । 'समिद्धहुदवहाअन्तपुण्णचन्दोदआ णिक्करुणकामवावारसंसइदजीविदा' इति तद्वचनमनूद्य परिहरति— ज्वलतु तपतु इति गूढव्यङ्ग्यलाक्षणिकशब्दप्रयोगेन दहनवद् दुस्सहत्वं शशिनः प्रकाश्यते । गगन इति पूर्वसागरादाविर्भावसमय एव तापजनकत्वं व्यज्यते । समीपगतत्वे हि मुसलस्य चूर्णीकरणत्वादि शक्यते । दूरस्थितस्य तु का प्रतिक्रियेत्यसूयापि । रात्रौ रात्रावखण्डकल इति प्रतिरजनि पूर्ण एवायम् , न पुनः पर्वण्येवेति नित्यदुर्विषहतयातिशयः प्रतिपाद्यते । शशीति पूर्वमेव कलङ्किनः स्त्रीवधादिषु का शङ्केति निष्करुणता व्यज्यते । मदनः मदयति परवशीकरोति जनमिति प्रसिद्धस्य तदुचितमेवेति भावः । मदन इत्यनेन तस्य मनसिजत्वस्वाभाव्यादान्तरत्वं च द्योत्यते । गगने शशी ज्वलतु मदनो दहत्विति बहिरन्तश्च विपदि विततायां

१. 'विधास्यति' क. ङ. च. पाठः.

१. 'तदुपालम्भनं' ज. पाठः. २. 'सरव्यवस्थापितं' ग. पाठः. ३. 'निरस्ताकार्यभयाद ' क., 'निरस्तलज्जाभयकार्या' ज. पाठः. ४. 'नाजितेन्द्रिय' ग. घ., 'नाजितेन्द्रियत्वान्नाप्राकृतप्रमदेव' ज. पाठः. ५. 'करणादि' ग. घ. पाठः.

मम तु दयितः श्लाघ्यस्तातो जनन्यमलान्वया
कुलममलिनं नत्वेवायं जनो न च जीवितम् ॥ २ ॥

का प्राणितव्यमत्याशेति व्यज्यते । कामचारकरणे लोटौ । तत्संरम्भप्रयोजनस्य फल्गुतां तस्य च स्वेष्टतया सिद्धसाधनत्वादनिष्टप्रसञ्जनाभावं चाह । परेणेति विभक्तिप्रतिरूपकमव्ययम् । मृत्योः मरणात् परमधिकम् । किं वा विधास्यतः करिष्यतः । एताविति द्विवचनसामर्थ्यादाक्षिप्यते ।

'तामेव शान्तमथवा किमतः परेण ।'

इति,

'आर्येणास्मिन् विरम विरमातःपरं न क्षमोऽस्मि ।'

इति चास्यैव कवेः प्रयोगात् । "पञ्चमी विभक्ते" (२-३-४२) इति पञ्चमी । सर्वोऽप्ययमनर्थः किञ्चित् स्वातन्त्र्यमवलम्ब्य प्रतिकर्तुर्भाषत्कर एवेति चेत्तत्राह — मम त्विति । तुर्विशेषे । तव भवतु नामैवं बुद्धिर्मम पुनस्तथा नेत्यर्थः । दयितः इष्टतमत्वेन रक्षणीय इत्यर्थः । श्लाघ्यः श्रुतशीलादिभिः पूज्यः । अमलान्वया इतः पूर्वं मलान्वयेन दोषसम्बन्धेन रहिता । जननी माता । दयितेति विपरिणामः । तयोर्गुणवत्त्वेऽपि वंश्येषु कश्चिन्मलिनिमा भविष्यतीत्याह — कुलं वंशम् । अविशेषेण मातुः पितुश्चेत्यायाति । अमलिनं वृत्तदोषरहितत्वेन प्रसिद्धमित्यर्थः ।

'न कुलं वृत्तहीनस्य प्रमाणमिति मे मतिः ।'

इति महाभारतोक्तेः । दयितमिति विपरिणामः । श्लाघ्यत्वादयो दयितत्वे हेतवः ॥

'मातुः कुलं पितृकुलं यत्र चैव प्रदीयते ।
कुलत्रयं संशयितं कुरुते कन्यकाऽसती ॥"

इति न्यासोपलम्भस्य नाहं भूमिरिति भावः । तर्हि त्वन्मूलं तस्य तन्निमित्तं च तव निस्संशयः प्राणापाय इति चेत्तत्राह— नत्वेवेति । अयं जनो माधवः । हृदयसन्निधानात् प्रस्तुतत्वाच्च इदमः परामर्शः । अयं जनस्तु न दयित एव ।

१. 'नन्वेवायं' छ. पाठः. २. 'तु' च. पाठः.

१. 'अमलान्वये दोष' क. पाठः. २. 'मलिमा' ख. ग. घ. पाठः.
३. 'न्यासः । उपालम्भस्य' ख. [illegible]

लवङ्गिका— (स्वगतं) एत्थ दाणिं को उवाओ ।
(अत्रेदानीं क उपायः ।)

अथ नैपथ्यार्धप्रविष्टा प्रदीहारी— एसा भअवदी कामन्दई ।
(एषा भगवती कामन्दकी ।)

उभे — (सकौतुकं) किं भअवदी । (किं भगवती ।)

---

न तत्र संशय इत्यर्थः । तर्हि कथमयं तद्विषयो लोकोत्तरानुराग इति चे-त्तत्राह — न च जीवितं दयितं रक्षणीयम् । प्राणपरित्यागेनैव चरितार्थता-त्तदनुरागायापि न किञ्चिदणं धारयामीत्यभिप्रायः । अतः स्वातन्त्र्यं नावल-म्ब्यते, जीवितं च परित्यज्यते इत्यनेन ।

'सतां केनापि कार्येण लोकस्याराधनं व्रतम् ।
तत्पूरितं हि तातेन मां च प्राणांश्च मुञ्चता ॥'

इत्युक्तक्रमेण 'कुलपालनोद्यतानां जीवितादपि कुलमेव रक्षणीयम् । अनुरागश्च कश्चिद्दृढः । प्राणपरित्यागेऽपि न चाल्यते' इत्युत्तमनायिकात्वं मालत्याः सहृ-दयचमत्कारकारिकविपरमेश्वरेण प्रकाशितं वेदितव्यम् । धैर्यं चात्र भावः प्रकाश्यते । अत्र च ज्वलत्वित्यादिभिरतिशयस्य प्रतिपादनात् साहसकरणस्य च कार्यस्य कारणमुखेन प्रकाशनादतिशयोक्तिरप्रस्तुतप्रशंसा चालङ्कारः । नत्वे-वायं जनो न च जीवितमितीष्टनिषेधात् , किं वा मृत्योः परेणेत्यनिष्टविषयस्य साहसेतरोपायगवेषणे नियोगरूपविशेषप्रतिपादनपर्यवसानेनाभासमानादाक्षेपाल-ङ्कारभेदद्वयमप्यंशे द्रष्टव्यम् ॥ २ ॥

अत्रेदानीं क उपायः । एवंविधे व्यसने कः प्रतीकारोपाय इत्यर्थः ।

नैपथ्यार्धप्रविष्टा नैपथ्यात् किञ्चित् प्रविष्टेति । समयापरिज्ञानात् सा-शङ्कत्वं प्रकाश्यते । प्रतीहारी दौवारिकी । एषा भगवती कामन्दकी । उपाय इति दैवात् सम्बध्यते ।

उभे मालतीलवङ्गिके । सकौतुकं श्रवणकुतूहलसहितम् । किं भगवती । किं करोतीति सामान्यतः प्रश्नः ।

---

१. 'नैपथ्यार्धं' छ. ज. झ. ञ. पाठः. २. (सकुतुकं) च., (सकुतूहलं) छ. पाठः

१. 'तदनुरागायापि', २. 'कारणेन प्रका' ख. पाठः, ३. 'द्वयमप्यंशे' द्र-ष्टव्यम् । ज. पाठः. ४. 'नैपथ्यार्धाद् प्र' ग. पाठः.

प्रतीहारी— भट्टीदारिअं दट्ठुकामा आअदा । (भर्तृदारिकां द्रष्टुकामा आगता ।)

उभे— किं ति विलंबीअदि । (किमिति विलम्ब्यते ।)

(प्रतीहारी निष्क्रान्ता)

(मालती चित्रं[1] छादयति)

लवङ्गिका— (स्वगतं) सुसंमाहिदं[2] क्खु जादम् । (सुसमाहितं खलु जातम् ।)

(ततः प्रविशति कामन्दक्यवलोकिता च ।)

कामन्दकी— साधु सखे ! भूरिवसो ! साधु, 'प्रभवति निजस्य कन्यकाजनस्य महाराज' इत्युभयलोकाविरुद्धमुत्तरमुपन्यस्तम्[3] ।

भगवतीतिशब्देनागतेति शिष्यां प्रेषितवतीत्येवमाहेत्यादिक्रियासामान्यान्वयस्य सम्भाव्यमानत्वाद् भर्तृदारिकां द्रष्टुकामा आगतेति विवक्षितोऽन्वयः । गन्धाख्यं चेदं प्रस्तावनाङ्गम् ।

'गण्डं प्रस्तुतसंम्बन्धभिन्नार्थं[1] सहसोदितम् ।'

इति लक्षितं कविना वैदग्ध्यात् सङ्घटितं वेदितव्यम् । किमिति विलम्ब्यते । त्वयेति शेषः । न खलु भगवत्यागमने अस्माकमपि समयः कदाचिदित्यर्थः ।

चित्रं छादयतीति चापलापरिज्ञानार्थम् ।

सुसमाहितं खलु जातं इत्युपायान्वेषणसमये तदागमनादिति लवङ्गिकामुखेन कविः स्वसंविधानचातुरीमनुस्मारयति ।

'पभवदि णिअस्स कण्णआजणस्से'ति प्रवेशकप्रस्तुतमर्थं[2] सङ्घटयति— साधु सखे ! इति । आकाशे तदाभिमुख्येनाह — सखे इति । सब्रह्मचारित्वादुक्तिः । साधु शोभनम् । वीप्सया चमत्कारातिशयः प्रकाश्यते । उभयलोका-

१. 'चित्रफलकमाच्छादयति' क., 'चित्रं प्रच्छादयति' ख. ग., 'चित्रमाच्छादयति' छ. पाठः. २. 'समीहिदं' क. ख. ग. पाठः. ३. 'रुद्धवचनमुपन्यस्तं' क. ख. ग. पाठः.

१. 'सम्बन्धिभि' क., 'सम्बन्धाद् भि' ख. पाठः, २. 'प्रवेशप्रस्तुतमर्थं' ख. पाठः.

अपि चाद्य मन्मथोद्यानवृत्तान्तेन भगवतो विधेरप्यनुकूलतामवग-च्छामि । बकुलावलीचित्रफलकव्यतिकरसंविधानकन्तु किमप्यद्भुतं प्रमोदमुल्लासयति । इतरेतरानुरागो हि दारकर्मणि परार्ध्यं मङ्गलं, गीत-श्चायमर्थोऽङ्गिरसा 'यस्यां मनश्चक्षुषोर्निबन्धः तस्यामृद्धिः' इति ।

अवलोकिता— एसा मालदी । (एषा मालती ।)

---

विरुद्धं अस्यामुष्य चोभयोर्लोकयोरप्रतिकूलं, वाच्यव्यङ्ग्याभ्यां प्रियसंख्योः प्रतिपादनात् । उत्तरं प्रतिवचनम् । राजवचनस्येत्यर्थात् । वृत्तान्तेन पर-स्परदर्शनादिना । किमप्यद्भुतं आनन्दश्यमाश्चर्यम् । बकुलावलीचित्रफलक-व्यतिकरसंविधानकं माधवग्रथितायाः मालाया मालतीहस्तगमनं, मालती-विलिखितस्य तत्प्रतिच्छन्दस्य माधवदृष्टिगोचरत्वं, तेन च तस्या लेखनं, तथा च तद्दर्शनमिति सम्मिश्रणरूपं कथासङ्घटनम् । प्रमोदं प्रकृष्टं हर्षं [उल्लासयति] उन्मीलयति । इतरेतरानुरागः परस्परप्रेमा दारकर्मणि विवाहे । परार्ध्यं प्रशस्तम् । मङ्गलम् अभ्युदयसाधनम् । परार्ध्यं मङ्गलमिति दिनगणमाहेन्द्रादीनां मङ्गलानां मध्ये मुख्यमिदमेवेति द्योतयति । अस्मिन्नर्थे भगवत आपस्तम्बस्य वचनं प्रमाणयति— गीतः उक्तः । यस्यां मनश्चक्षुषोर्निबन्धः तस्यामृद्धिः इति । यस्यां कन्यायां वरस्य चक्षुषस्तद्द्वारेण मनसश्च सक्तिः तस्यां धना-दिसंवर्धनेन सर्वं प्रतिष्ठितमितिवत् । तस्यामृद्धिरिति हेतावौपचारिकः प्रयोगः ।

एषा मालती ।

---

१. 'विधेरनुकूल' क. पाठः. २. 'नकन्तु कमप्यद्भुतं' ख. ज., 'नन्तु किमप्य-द्भुतं' घ. पाठः. ३. 'ततर प्रमोद' छ. 'ततम प्रमोद' ज. पाठः. ४. 'परस्परानुरागो' छ. पाठः. ५. 'विवाहकर्मणि' ज. पाठः. ६. 'वाद्यान' क. पाठः. ७. 'षोरनुबन्धः' क., 'षोरनुरागस्तस्यां' घ., 'षोर्निबन्धः' ज. पाठः. ८. 'एसा क्खु मालदी' छ. पाठः.

---

१. 'सख्ययोः' ख. पाठः. २. 'मालतीहस्तविलिखितस्य' ख. पाठः. ३. 'साम्मश्ररूपं' क. ग. ज. पाठः. ४. 'परस्परप्रमोदो दार' ग. घ. पाठः. ५. 'धनादिवर्धने सर्वं' ख. ग. घ., 'धनादिसम्बन्धेन सर्वं' ज. पाठः.

कामन्दकी — निर्वर्ण्य—

निकामं क्षामाङ्गी सरसकदलीगर्भसुभगा
कलाशेषा मूर्त्तिः शशिन इव नेत्रोत्सवकरी ।
अवस्थामापन्ना मदनदहनोद्दाहविधुरा-
मियं नः कल्याणी रमयति मनः कम्पयति च ॥ ३ ॥

अपि च—

परिपाण्डुपांसुलकपोलमाननं
दधती मनोहरतरत्वमागता ।

निर्वर्ण्य तदाकारं निरूप्य ।

निकाममित्यादि — निकामं भृशम् । क्षामाङ्गी कृशशरीरेति पञ्चमदशाप्रवेशोक्तिः । सरसकदलीगर्भसुभगा अम्लानरम्भास्तम्भवत् पाण्डरेण लावण्येन रमणीया । विशेषणत्रयं साधारणो धर्मः । कलाशेषा कलैव शेषः सुरपरिपीत्युपयुक्ताभ्यो अन्या यस्याः । मूर्त्तिः शरीरं कलामात्रस्यैव तदानीं मूर्त्तित्वात् । शशिनो मूर्त्तिरिति 'राहोः शिर' इतिवदौपचारिकः प्रयोगः । अथवा क्षयोदयशीलानां कलानां कूटस्थमधिष्ठानं चैतन्योपाधिमूर्त्तिरित्युच्यते । नेत्रोत्सवकरी उत्सवशब्देन प्रमोदो लक्ष्यते, नयनानां प्रमोदहेतुः । कृञो हेतुताच्छील्यानुलोम्येषु (३-२-२) इति हेतौ टः । नेत्रोत्सवकरीति प्रतिपद्भवत्वं प्रकाश्यते । 'विशेषः कालिकोवस्था' इत्यमरः । मदनदहनोद्दाहविधुरां अग्निवत्सुदुस्सहस्य कामस्यातिशयितेन तापेन परवशामवस्थां प्राप्ता । कल्याणी प्रशस्तगुणा । रमयति सुखयति । नेत्रोत्सवकरणात् स्वाभिमतानुकूल्याच्च । कम्पयति स्नेहपरवशात् पापशङ्कयोद्वेजयति च । मदनदाहविधुरत्वात् सौकुमार्यातिरेकाच्च । अत्र पूर्वस्मिन्नुपमालङ्कारः, उत्तरस्मिन्नर्धे विरोधः । हर्षावेगयोश्च भावयोः सन्धिः प्रकाश्यते ॥ ३ ॥

मदनवेदनापरिहारस्य स्वयं सुष्ठु संविधास्यमानत्वादावेगमपास्य पुनस्तस्याः शोभातिशयं चमत्करोति । परिपाण्ड्वित्यादि । पांसुलकपोलं ललाटि

१. 'कदलीगर्भमृदुला' क. छ. पाठः २. 'द्दामविधुरा' ज. च. ङ. पाठः.
३. 'मति कम्प' ख. ग. घ. ङ. च. पाठः.

१. 'इति टः' क. ख. ग. घ. ङ. पाठः. २. 'तिशयेन तापेन' ख. पाठः.

रमणीयजन्मनि जने परिभ्रमन्
ललितो विधिर्विजयते हि मान्मथः ॥ ४ ॥

नियतमनया सङ्कल्पनिर्मितः प्रियसमागमोऽनुभूयते । तथाह्यस्याः—

काचन्दनधूलिधूसरगण्डमण्डलम् । दुर्बलकपोलमित्यपि पाठः । क्षामतया मृदुतरकपोलमित्यर्थः । मनोहरतरत्वं पूर्वावस्थातोऽपि रमणीयतरत्वम् । 'द्विवचनविभज्योपपदे तरबीयसुनौ' (५-३-५७) इति विभज्योपपदे तरप् । 'बौद्धेऽपि प्रतियोगिन्यातिशायिनिका' इति वचनात् बुद्धिस्थः पूर्वावस्थाप्रतियोगिकोऽत्रातिशायनिकप्रयोगः । रमणीयजन्मनि शोभनस्वाभाविकरूपे । परिभ्रमन् सर्वाङ्गीणस्फुरन् । ललितः सुन्दरः । विधिः विधीयते क्रियते इति संस्कारः । मान्मथः मन्मथकर्तृत्वेन तस्यायमिति वा तत आगत इति वा अण् प्रत्ययः । विजयते सर्वस्मादुपरि वर्तते । हिशब्दः प्रसिद्धौ ।

'क्रिया हि वस्तूपहिता प्रसीदति'

इति न्यायान्मणेरिव शाणोत्तेजितस्य प्रकृतिरमणीयस्य रमणीयजनकस्य कन्दर्पकल्पितशिल्पविशेषो विकल्पपथमवतरतीति प्रसिद्धोऽयमर्थ इत्यर्थः । तथा कादम्बर्याम्—'यथा यथा चेयं मदनहुतभुजा दीप्यते तथा तथाग्निशौचमंशुकमिव नितरां निर्मलीभवति लावण्यम्' इति । कान्त्याख्यश्चालङ्कारोऽयम् ।

"मन्मथाप्यायितच्छाया शोभा कान्तिरिति स्मृता"

इति वचनात् । अत्र अर्थान्तरन्यासोऽलङ्कारः ॥ ४ ॥

अथ तदीयमाकारमालोक्य

"अन्तः सम्भोगसङ्कल्पस्तत्पथाशावलोकनम्"

इति वचनात् सम्भोगसंकल्पमुत्कण्ठाभावमनुमिमीते — नियतं निश्चितम् ।

१. 'तः प्रियतमसमागमो' घ., 'तः समागमो' छ. पाठः.

१. 'मृदुकपोलमित्यर्थः' क. पाठः. २. 'बौद्धेन प्रति' ज. पाठः. ३. 'ने स्वा' क. पाठः. ४. 'काम्पित' क. ख. पाठः. ५. 'यथा काद' क. पाठः.

नीवीबन्धोच्छ्वसनमधरस्पन्दनं दोर्निषादः
स्वेदश्चक्षुर्मसृणमधुराकेकरस्निग्धमुग्धम् ।
गात्रस्तम्भः स्तनमुकुलयोरुत्प्रबन्धः प्रकम्पो
गण्डाभोगे पुलकपटलं मूर्च्छना चेतना च ॥ ५ ॥

---

सङ्कल्पनिर्मितः चिन्ताविरचितः । प्रियसमागमः वल्लभसम्भोगः । तथाहीत्युपपादनारम्भः ।

नीवीबन्धोच्छ्वसनमित्यादि ।

"नीवी स्याद् प्रथनं नार्या जघनस्थस्य वाससः"

इत्यमरः । नीवीबन्धस्य उच्छ्वसनं शैथिल्यम्

'नीवी यत् स्खलति स्थितापि सुदृढं कामेङ्गितं योषिताम्'

इति रतिरहस्योक्तेः । अधरस्पन्दनं ओष्ठस्फुरणम् । अनेन चुम्बनोपक्रमः प्रतीयते । दोर्निषादः भुजयोर्नितरां सादः श्रमनिस्सहतया । स्वेदः स्विन्नशरीरता । मसृणमधुराकेकरस्निग्धमुग्धं

' मसृणं तदिति ख्यातमनुरागकषायितम् '

इति । मधुरमचपलम् । 'अनुल्बणत्वं माधुर्यम्' इति धानिकः ।

"आकुञ्चितपुटापाङ्गा सानन्दार्धनिमेषिणी ।
मुहुर्व्यावृत्ततारा च दृष्टिराकेकरा स्मृता ॥"

इति भावप्रकाशः । स्निग्धमरूक्षम् ।

'स्निग्धं तदस्य विषयस्तत्प्रभामिलितं भवेत्'

इत्युक्तं वा । 'स्वभावालोकितं मुग्धम्' इत्युक्तम् । गात्रस्तम्भः शरीरस्य निर्व्या-

---

१. 'दोर्विषादः' क. ज. ञ. ब. पाठः. २. 'मुकुलाके' ज. पाठः. ३. 'तारम' क. पाठः. ४. 'पटली' ख. च. क. पाठः.

---

१. 'प्रियतमसमागमः' ख. पाठः. २. 'नीविराप्रथनं नार्याः'; ३. 'ओष्ठस्पन्दनं' ज. पाठः. ४. 'संगतार्धनिमेषिणी' क. ज. पाठः.

(इत्युपसर्पति)

(लवङ्गिका मालतीं चालयति । उभे उत्तिष्ठतः)

मालती—भअवदि ! वन्दामि । (भगवति वन्दे ।)

कामन्दकी—महाभागे ! अभिमतफलभाजनं भूयात् ।

लवङ्गिका—पवित्तं आसणं (पवित्रमासनम्)

(सर्वा उपविशन्ति)

मालती—कुसलं भअवदीए । (कुशलं भगवत्याः ।)

कामन्दकी—(निश्वस्य) कुशलमिव ।

लवङ्गिका—(स्वगतं) पत्थावणा क्खु एसा कवटनाडअस्स । (प्रकाशम्) गरुवाहत्थंम्भमन्थरहिअअविलग्गणिग्गमं अण्णारिसं जेव्व

पारत्वम् । उत्प्रबन्धः उद्भूतसन्तानः । गण्डाभोगे कपोलविस्तारे । पुलकपटलं रोमाञ्चसञ्चयः । मूर्च्छना रसोत्कर्षान्मोहः । चेतना मोहविच्छेदे प्रबुद्धता च अस्या भवतीति शेषः । अत्र सूक्ष्ममलङ्कारः ॥ ५ ॥

मालतीं चालयति पाणिस्पर्शेन प्रेरयतीत्यन्यचित्ततां द्योतयति ।

भगवति वन्दे ।

गुणवद्भर्तृलाभस्य फलत्वमभिप्रेत्याशीः प्रयुज्यते—भूयादिति । आशिषि लिङ् ।

पवित्रमासनं । इदमिति शेषः ।

कुशलं भगवत्याः ।

निश्वस्येत्यहृदयपूर्वकत्वशङ्कापरिहाराय । इवेत्यपरमार्थे । स्वस्थवद्बहिर्व्यवह्रियते; न पुनर्मनसः स्वास्थ्यमित्यर्थः ।

स्वगतमिति वस्तुवृत्तपरिज्ञानात्तस्याः । प्रस्तावना खल्वेषा कपटनाटकस्य वञ्चनरूपस्य नाट्यस्य पूर्वरङ्गः । इतः प्रभृति तस्य प्रयोक्ष्यमाणत्वात्

१. 'महाभागजन्मतायाः फलस्य भाजनं' ख. ग. घ. ङ. च, 'महाभागधेयजन्मतायाः साफल्यस्य भाजनं' छ, 'महाभागधेयजन्मतायाः फलस्य भाजनं' ज. पाठः. २. 'समीहितफलभाजनं' झ. ञ. पाठः. ३. 'एदं आसणं' क, 'विवित्तमासणं' ख. च. छ, 'सुविहितमासणं' झ. ञ. पाठः. ४. 'णं एत्थ उववसिदु भअवदी' क. झ. ञ. पाठः. ५. 'गरुअबा' ख. ग. घ. ङ. च., 'गुरुअबा' क. ज. झ. ञ. पाठः. ६. 'त्थेवस' ब. पाठः. ७. 'मन्थरिअकण्ठविलग्ग' ख, 'मन्थरविलग्ग घ, 'मन्थरिदकण्ठप्पडिलग्गणिग्गमं' च. छ. ज., 'मन्थरिदकण्ठपडिलग्गणिग्गमं अ' क. झ. ञ. पाठः. ८. 'व्व अज्ज भअव' ङ. ज. ञ. पाठः.

* 'नाटकस्य' ज. पाठः.

ष्पअवदीए वअणं । ता किं दाणिं उव्वेअकारणं भविस्सदि ।

(प्रस्तावना खल्वेषा कपटनाटकस्य । (प्रकाशम्) गुरुबाष्पस्तम्भमन्थरहृदयवि-लम्बनिर्गममन्यादृशमेव भगवत्या वचनम् । तत् किमिदानीमुद्वेगकारणं भविष्यति ।)

कामन्दकी—नन्वयमेव चीरचीवरविरुद्धः परिचयः ।

लवङ्गिका—कहं विअ । (कथमिव ।)

कामन्दकी—अयि ! त्वमपि किं न जानासि ।

इदमिह मदनस्य जैत्रमस्त्रं

सहजविलासनिबन्धनं शरीरम् ।

प्रकाशमिति वैदग्ध्यात्तद्विवक्षितस्य द्वारं ददाति । गुरुबाष्पस्तम्भमन्थरहृदय-विलम्बनिर्गममन्यादृशमेव भगवत्या वचनम् । घनतराश्रुनिरोधमन्दहृदय-स्खलितप्रसरमपूर्वप्रकारम् । तत् किमिदानीमुद्वेगकारणं भविष्यति । अनिष्ट-श्रवणादेर्मनसो विकारविशेष उद्वेगः ।

ननु—संवादे । अयमिति मालत्युद्देशाभिनयेनोक्तिः । चीरं चेलखण्डः तत्कृतं चीवरं, बुद्धसन्यासिनां वस्त्रम् । "कार्दमिकचेलचीरिकानियमितोच्चचण्डा-तकम्" इति हर्षचरिते । तस्य विरुद्धः प्रतिकूलः ।

"यदहरेव विरजेत्तदहरेव प्रव्रजेत्"

इति श्रुतेः, विरक्तिमूलत्वान्मोक्षाश्रमस्य । तथा महाभारते—

'समयो यः स एवास्तु परतत्त्वे यथा तथा ।

विरक्तिर्विद्यते यस्य मोक्षस्तस्येति मे मतिः ॥'

इति । परिचयः अभ्यासः । स च लक्षणया ।

अत्र तत्कार्यं स्नेहमाह—कथमिव । केन प्रकारेणोद्वेगकारणत्वमस्येत्यर्थः ।

अयीत्यव्ययं संबोधने । त्वमपीति । अमात्यभवनसततसन्निहितत्वात् तद्वृत्तान्तसाकल्यवेदिनी त्वमपीत्यर्थः । इदं वस्त्विति शेषः ।

इदमिहेत्यादि । इदमित्यभिनयः पुरोवर्तिनः । इह लोके । सर्वस्मिन् लोके, नान्यज्जयसाधनमित्यर्थः । जैत्रं जयसाधनम् । सहजविलासनिबन्धनं

१. 'दाव उव्वेअ' ख. पाठः. २. 'पि ण वेत्सि ।' क, 'पि किं न जानीषे ।' ज. पाठः. ३. 'शस्त्रं' छ. पाठः. ४. 'निवास' ख. पाठः.

१. 'श्रुनिमग्नहृदय' ज. पाठः. २. 'विंदधे यस्य', ३. 'द्वेगकर-त्वमस्ये' ज. पाठः ४. 'न्तवेदिनी त्व' ग. घ. पाठः. ५. 'विलासिनिबन्धनं' ग. पाठः.

अनुचितवरसम्प्रयोगशोच्यं[1]
विफलगुणातिशयं भविष्यतीति ॥ ६ ॥

(मालती वैचित्र्यं[2] नाटयति)

लवङ्गिका— अत्थि एदं[3] णरिन्दवअणाणुरोधेण णन्दणस्स पडिवण्णा मालदीत्ति सअलो जणो अमच्चं जुगुच्छइ[4]।

(अस्त्येतन्नरेन्द्रवचनानुरोधेन नन्दनाय प्रतिपन्ना मालतीति सकलो-जनोऽमात्यं जुगुप्सते ।)

---

शरीरम् अकृत्रिमाः शृङ्गारचेष्टा एव यस्य निमित्तं ता उपादायैव निर्मितमि-त्यर्थः । अनुचितवरसंप्रयोगशोच्यं वैरूप्यवार्धकादिभिरत्यन्तमयोग्यस्य वरस्य भर्तुः संप्रयोगेन समागमेन शोच्यम्, रसिकानां दयाविषयः[1] । 'कहलो-प्यंत' (२. १. १२४) । [विफलगुणातिशयं] विफलो, रूपशीलादीनां गुणानां लोकोत्तरत्वम् अतिशयः स[2], निष्प्रयोजनो यस्येति । सदृशवरसमागम-फलत्वाचस्य । भविष्यति न पुनरभूदित्यथापि[3] न किञ्चिदतिक्रामति । प्रवृत्तौ तत्परिहारः शक्य एवेति मालत्या आशाच्छेदखेदं परिहरति । इति-शब्दः प्रकारे । अनेन शङ्काप्रकारेण परिचय उद्वेगकारणमित्येतत् त्वमपि किन्न जानासीति संबन्धः ॥ ६ ॥

'दासोऽपि तेन मुक्तः पतिरयमाः कष्टमित्याद्यैः ।
पतिदूषणगणवचनैर्वैराग्यं लम्भयेदेनाम् ॥'

इति रतिरहस्योक्तस्य दूतीकृत्यस्यानुचितवरेत्युपक्षिप्तस्य[4] फलं दर्शयति— वैचित्र्यं[5] नाटयतीति । विषण्णचित्ततामभिनयतीत्यर्थः ।

तदुक्तिं पल्लवयति— अस्त्येतन्नरेन्द्रवचनानुरोधेन नन्दनाय प्रतिपन्ना माल-तीति सकलो जनोऽमात्यं जुगुप्सते । एतद् भगवत्या कथितं वस्त्विति राज्ञः प्रार्थ-नावचनानुकूल्येन । नन्दनाय नन्दनार्थम् । प्रतिपन्ना अभ्युपगता । अथवा प्रतिपा-दिता दत्ता, वाग्दत्तत्वात् । अन्तर्भावितो ण्यर्थः । प्रतिपादनस्य दानार्थत्वात्

---

१. 'सम्प्रदानशोच्यं' ज. न. पाठः. २. 'वैचित्र्यं' ज. पाठः. ३. 'एदं जं णरिन्द' छ. ज. पाठः. ४. 'जुगुञ्छदि' क. घ. ङ. पाठः.

---

१. 'रसिकजनानां दयिताविषयः, क. ग. 'रसिकानन्दविषय' घ. पाठः २. 'त्तरमतिशयो', ३. 'सनिष्प्रयो ख. पाठः. ४. 'त्यथापि' क. ख. पाठः. ५. 'तदीकृतस्य' ज. पाठः. ६. 'वैचित्र्यं ज. पाठः.

मालती — (स्वगतं) कधं उवहारीकिदह्मि राइणो तादेण।
(कथमुपहारीकृतास्मि राज्ञे तातेन।)

कामन्दकी — आश्चर्यम्।

गुणापेक्षाशून्यं कथमिदमुपक्रान्तमथवा
कुतोऽपत्यस्नेहः कुटिलनयनिष्णातमनसाम्।

तेनेत्यर्थात्। सकल इति सर्वलोकप्रसिद्धोऽयमर्थः। इयं मालत्येकैव न जानातीति द्योतयति।

अथ शुल्काशनिपातेनैव तद्वचसा सोद्वेगायाः पितरि निरक्तिं प्रकाशयति — कथमुपहारीकृतास्मि राज्ञे तातेन। कथमित्याश्चर्यं। स्वप्नेऽप्ययमर्थो मया नोत्प्रेक्षित इत्यर्थः। उपहारः प्राभृतम्। फलकुसुमपल्लवादिवदुपहारीकृतास्मीति च्विना पूर्वमभूतत्वात्तद्भावस्येदंप्रथमत्वं स्नेहनिवृत्तेः प्रकाश्यते। राज्ञ इति अत्यन्तानौचित्यं व्यज्यते। क्वचित् कदाचित् राजाज्ञया दुहितृदानं न श्रुतपूर्वमित्यर्थः। तातेनेति तथाविधस्नेहद्रवार्द्रत्वं ध्वनता कथमित्याश्चर्य(त्वः वत्त्व)मुपपाद्यते।

तद्भावं ज्ञात्वा तमेवं पितरि द्वेषमुपोद्बलयति — गुणापेक्षाशून्यमित्यादि। रूपयौवनशीलमाधुर्यवैदग्ध्यादिषु वरगुणेष्वाकाङ्क्षया रहितमित्युपक्रमक्रियाविशेषणम्। इदम् अयोग्ये दुहितृदानरूपं वस्तु। कथमुपक्रान्तं केन प्रकारेणारब्धम्। चेतनस्य कस्यचिदप्ययमर्थो दुष्कर इति भावः। अथवेति — स्वचिन्तितमर्थमाक्षिपति। कुतः कस्माद्धेतोः। अपत्यस्नेहः पुत्रेषु पुत्रीषु वा वात्सल्यम्। कुटिलनयनिष्णातमनसां बन्धुजनेऽप्यतिसन्धानोपदेशादनार्जवयुक्ते नये कौटल्य[illegible]दिशास्त्रे शिक्षितचेतसाम्। 'निनदीभ्यां स्नातेः कौशले' (८. ३. ८९) इति षत्वम्। तथा कादम्बर्यां "किं वा तेषामसाम्प्रतं येषामतिनृशं[illegible]योपदेशमिति निर्घृणं कौटिल्यशास्त्रं प्रमाणम्"

१. 'कदाह्मि' ग. छ, 'कअंह्मि' घ. च. पाठः.

१. 'मर्थ इति इयं' ज. पाठः. २. 'उल्काशनि' क, 'शुष्काशनिः' ग, घ. ज पाठः. ३. 'पूर्वभूतत्वात्' ख. पाठः. ४. 'च निजे पितरि' क. पाठः. ५ 'अचेतनस्य', ६. 'पुत्रीषु च.बा', ७. 'युक्तेन नये' ज. पाठः ८. 'कौटिल्य', ९. 'कौटिल्य' क. ग. घ. ज. पाठः.

इदं त्वैदम्पर्यं यदुत नृपतेर्नर्मसचिवः
सुतादानान्मित्रं भवतु स भवान् नन्दन इति ॥ ७ ॥

मालती — (स्वगतं) राआराहणं क्खु तादस्स गुरु, ण उण मालदी। (राजाराधनं खलु तातस्य गुरु न पुनर्मालती।)

लवङ्गिका — जधा भअवदीए आणत्तं, अण्णहा तस्सिं वरे दुद्दस्सणे अदिक्कन्तजोव्वणे किं ति ण विआरिदं अमच्चेण।

(यथा भगवत्या आज्ञप्तम्, अन्यथा तस्मिन् वरे दुर्दर्शनेऽतिक्रान्तयौवने किमिति न विचारितममात्येन।)

---

इति। अपत्यस्नेहे सति ह्ययमस्माकं वितर्कः शोभते। स एवात्र नास्तीति भावः। कुटिलनयनिष्णातमनसामित्युक्तम्, अत्र पुनः कोऽयं नय इत्याशङ्क्याह— इदं त्विति। तुर्विशेषे। ऐदम्पर्यम् इदमिति कार्यं सामान्येन परामृश्यते। कार्यमेव परं प्रधानं यस्य स इदंपरः तस्य भावः ऐदंपर्यम्। यदुत यत् खलु। नृपतेर्नर्मसचिव इति राजद्वारा स्वयं चोपकर्तुं शक्त इति मित्रीकरणे हेतुः। मित्रं भवत्विति। यदुत इदं त्वैदंपर्यं न पुनः स्नेह इत्यर्थः ॥ ७ ॥

उपोद्बलनफलमाह — राजाराधनं खलु तातस्य गुरु, न पुनर्मालतीति। राजाराधनं राज्ञः प्रियानुष्ठानम्। गुरु महत्। बहुमानपात्रं वस्त्विति शेषः। मालती पुनर्न गुरुः तृणवल्लघ्वित्यर्थः। 'यस्मिन्नुद्विजते सा दोषे भूयस्तमेव पल्लवयेत्।' इत्युक्तेः।

प्रतिनायकदोषमुद्घोषयति— यथा भगवत्या आज्ञप्तम्, तथा तदिति शेषः। व्यतिरेकमुखेन तथात्वमेवोपपादयति — अन्यथा तस्मिन् वरे दुर्दर्शनेऽतिक्रान्तयौवने किमिति न विचारितममात्येन। अन्यथा नयपरत्वमात्रमन्तरेण स्नेहविशिष्टत्व इत्यर्थः। तस्मिन्नित्यनुभवं प्रसिद्धिं वा निर्गुणत्वेन तच्छब्दः

---

१. 'स हि मे नन्दन इति' क, 'स हि नो नन्दन इति' झ, ञ. पाठः. २. 'णं तु क्खु' च, 'णं क्खु गरुअं ण' छ. पाठः ३. 'गरुअं ण' ख. ग. घ. ङ. च. छ. पाठः. ४. 'जह दाणिं भअ' छ, 'एव्वं जधा' झ. ञ. पाठः. ५. 'आणवेदिं' ज पाठः. ६ 'तंतह एव्व अण्णहा' ज पाठः. ७. 'जोव्वणेत्ति किति' च. पाठः.

---

१. 'स्नेहस्य हानिरयमस्माकं' क. पाठः. २. 'षे इदमिति कार्यं' ख, 'षे ऐदम्पर्यमिति कार्यं' क. घ. पाठः. ३. 'मैत्रीकरणे' ख. पाठः. ४. 'मालती न पुनर्न गुरु' क. ग. पाठः. ५. 'लघ्वीत्यर्थः' ग. घ. पाठः.

**मालती** — (स्वगतं) हा! हदह्मि समुवत्थिदाणत्थवज्जपडणा मन्दभाइणी।

(हा! हतास्मि समुपस्थितानर्थवज्रपतना मन्दभागिनी।)

**लवङ्गिका** — ता पसीद भअवदि, परित्ताएहि[2] इमादो जीव[3]न्तमरणादो पिअसहीम्। एसा तुह वि दुहिदा एव्व[4]।

(तत् प्रसीद भगवति, परित्रायस्वैतस्माज्जीवन्मरणात् प्रियसखीम्। एषा तवापि दुहितैव।)

---

परामृशति। वरे जामातरि। अमात्यस्य वरत्वसङ्कल्पारोपाद् वर इत्युक्तिः। दुर्दर्शने वैरूप्यातिशयाद् दुःखभूतं दर्शनं यस्य। विरूपतापि सह्यते यद्युपभोगानुगुणं तारुण्यमित्यत्राह — अतिक्रान्तयौवने जरतीति विषयेषु विरक्तिरशक्तिश्च द्योत्यते। तस्मिन् विषये। अमात्येनेति मन्त्रितया विचारणसामर्थ्यं ध्वन्यते। किमिति किमर्थम्। न विचारितम् ईदृशोऽसाविति न निरूपितमित्यर्थः। तस्मान्न स्नेहस्य कापि कलापीति भावः।

नन्दने तस्यास्तदुक्तिमूलां विरक्तिमाह — हा! हतास्मीति। समुपस्थितानर्थवज्रपतना मन्दभागिनी। हेति विषादसूचकमव्ययम्। हतास्मि नाशितास्मि। दैवेन तातेन इति वा। अर्थात् समीपगतोऽनुचितवरसम्प्रयोगरूपोऽनर्थो विपत् तदेव वज्रपतनं यस्याः। मन्दोऽल्पो भागो भाग्यमस्या इति मन्दभागिनी। अहमित्यप्रयुज्यमानेऽप्युत्तमप्रयोगः।

मालतीहृदयं विज्ञाय लवङ्गिका प्रार्थयते— तत्प्रसीद भगवति परित्रायस्वैतस्माज्जीवन्मरणात् प्रियसखीम्। एषा तवापि दुहितैव। जीवतः प्राणविशिष्टस्यैव मरणं प्राणत्यागो जीवन्मरणम्। जीवन्मुक्तिवत्। जीवनफलस्य सुखानुभवस्याभावात् कुणपसादृश्यादुपचारः। तवापीति। यथा भूरिवसोस्तथा धर्मतस्तत्स्वसुः तवापि पुत्र्येव इत्यर्थः। अयं च त्रातव्यत्वे हेतुः।

---

१. 'संवद्दोणत्थ' ङ, 'उवाट्ठिआणत्थ' छ, 'समुत्थिदाणत्थ' झ. पाठः. २. 'परित्ताअह एत्तो जीव' ख, 'परित्ताअसु एत्तो जीव' घ, 'पारत्ताहि एदत्त जीव' च, 'परि क्काएंहि अतो जीव' छ, 'परित्ताहि एत्तो जीव' ज. पाठः; ३ 'जीवन्तमरणादो' झ, 'जीविद-मरणादो' छ. ज. ४. 'द एव्व' ख. घ. 'दव्व' ग. ङ. पाठः

---

१. 'वरत्वं सङ्कल्पा' ग. घ. पाठः. २. 'मूलत्वाद् विरक्ति'; ३ 'समुपस्थितानर्थ' ज. पाठ, ४. 'दैवतेन' ङ. पाठः, ५. 'न वा' ज. पाठः

**कामन्दकी** — अयि सरले! किमत्र भगवत्याऽशक्यम्। प्रभवति प्रायः कुमारीणां जनयिता दैवं च। यत् किल कौशिकी शकुन्तला दुष्यन्तं, अप्सराः पुरूरवसं चकमे इत्याख्यानविद आचक्षते, वासवदत्ता

---

**अयि सरले!** ऋजुबुद्धे!। यथादृष्टग्राहिणीत्यनेन अमात्यस्य बहिरस्मासु सगौरवं व्यवहारमेव पश्यसि। न तु तस्य स्वकार्यपरतामस्मद्‌तिलङ्घनेनापि वर्तमानां जानासीति बोत्यते। भगवत्या इति—न ममेत्युक्तिः भगवतीति तेषां वन्दनमात्रस्यैव पात्रमस्मादृशः, न पुनरीदृशेषु कर्मसु प्रभवन्तीति व्यञ्जयति। प्राय इति—'पिता पितामहो भ्राता' इत्यादिस्मृतेः, पितामहादीनामपि पितुरसन्निधावेव कन्यादानादिष्वधिकारात् प्रायग्रहणम्। **जनयिता** पिता। **दैवं चेति** तस्याः स्वातन्त्र्यादप्रतिकार्यत्वं द्योतयति। अथ—

'प्रथममैतिशीलयोगादाख्यानाद्यैर्विशेषयेदेनाम्।'

इत्युक्तमुपायं निषेधमुखेन प्रयुङ्क्ते। यत्किलेति। किलेत्यैतिह्ये। कौशिको विश्वामित्रः, तस्य मेनकायां सञ्जातत्वात् तदपत्यं कौशिकी। अपत्यार्थेऽणि ङीष्-प्रत्ययः। दुष्यन्तं पौरवं राजानम्। अप्सराः' उर्वशी। 'स्त्रियां बहुष्वप्सरसः' इति लिङ्गानुशासने समाम्नातोऽप्यप्सरःशब्द एकवचनान्तप्रयुक्तो महाकविप्रयोगात् साधुः। तथा शाकुन्तले 'सानुमती नामाप्सराः' इति लक्षणात्। प्रयोगस्य प्राबल्यात्। पुरूरवसं बुधसूनुमैलं राजानम्। चकमे कामितवती इति प्रेमवशात् स्वयमुपगमं सूचयति। आख्यानं महाभारतादि विदन्तीति **आख्यानविद** ऐतिहासिका उच्यन्ते। **वासवदत्ता** उज्जयिनीपतेः प्रद्योतस्य

---

१. 'त्या मया श' क. झ. ञ. "गा शक्यं' छ. ञ. पाठः. २. 'यच्च किल' ख. च. ब. झ. ञ. पाठः. ३. 'अप्सरा उर्वशी पु' छ. ञ. पाठः. ४. 'च कामयते इत्या' छ. पाठः. ५. 'इत्यागमविद' च. पाठः.

---

१. 'नातिवर्त' ख, 'न वर्त' ज. पाठः. २. 'इति — न मेत्युक्तिः' क. ग. पाठः. ३. 'भगवति भगवतीति तेषां' ख. ग. ज. पाठः: ४. 'तस्यापि स्वा' ज. पाठः. ५. 'मन्मतिशील' ग, 'मम्मत्तिशील' घ. पाठः. ६. 'मुपायनिषेध' ज. पाठः. ७. 'किलैतिह्ये' ख. ग. घ. ज. पाठः. ८. 'इति अमरः'। तथाहि अप्सरसशब्दो ह्येकवचनान्तः' ग. घ. पाठः. ९. 'शब्देन एकवचनान्तेन प्रयुक्ते महा' ज पाठः. १०. 'न्तीत्यैतिहासिका उच्यन्ते' ख. ग. घ. ज. पाठः.

च राज्ञे सञ्जयाय पित्रा प्रत्तमात्मानमुदयनाय प्रायच्छदित्यादि, तदपि साहसकल्पमित्यनुपदेष्टव्यमेव। सर्वथा —

राज्ञः प्रियाय सुहृदे सचिवाय कार्याद्
दत्त्वात्मजां भवतु निर्वृतिमानमात्यः।
दुर्दर्शनेन घटतामियमप्यनेन
धूमग्रहेण विमला शशिनः कलेव ॥ ८ ॥

---

पुत्री। प्रत्तं वाग्दत्ततया दातुमुपक्रान्तम्। 'अच उपसर्गात्तः' (७. ४. ४७)। पित्रा प्रत्तमात्मानं प्रायच्छदिति पूर्वाभ्यां स्वातन्त्र्यातिशयं दर्शयति। उदयनो वत्सराजः तस्मै। प्रायच्छत् दत्तवती। 'दाण् दान' इत्यस्य पाघ्रादिना यच्छादेशे लङ्। आदिशब्देन अहल्यादीनां वृत्तमासूच्यते। इति यत् किल तदपि वस्तु। साहसकल्पं मूर्खजनव्यापारः। ईषदसमा(सं? से) कल्पब्ग्रहणं साहसान्तरेभ्यो व्यावृत्तिं प्रकाशयति। उचितस्थलपातेन पित्राद्यभ्युपगमादिति हेतोः। अनुपदेष्टव्यम् अस्माभिः साहसनिवारणस्यैव कार्यत्वादिति भावः। अथ तां सर्वोपायविरहप्रदर्शनेन भीषयते — सर्वथेति। गत्यन्तराभावात् सर्वेणापि प्रकारेणेत्यर्थः।

राज्ञः प्रियायेत्यादि — कार्याद् धनलाभादिरूपान्निमित्तात्। आत्मजामिति स्वाधीने वस्तुनि तस्य कामचारं को निवारयिष्यतीति व्यज्यते।

"यद्विविक्ततया स्थानं क्लेशैर्नष्टैः शरीरिणाम्।
व्यवसायस्य बुद्धेश्च दीपनी सा तु निर्वृतिः ॥"

इति दिवाकरः। निर्वृतिमान् कृतकृत्यतया सुखित इत्यर्थः। भवत्विति 'कामचारकरणे लोट्'। अनेन सचिवेन। घटतां युज्यताम्। विधौ लोट्। इयमिति सर्वगुणरमणीयत्वाभिनयः। अनेनेत्यन्यथात्वाभिनयः।

---

१. 'सञ्जयाय' ख. घ. ङ. च. पाठः. २. 'दत्त' क. छ. ज. झ. ञ, 'प्रदत्त' ख. ग. च. पाठः. ३. 'साहासिक्यमित्यनु' क, 'साहसकल्पमनुपदेष्टव्यमेव' ग, 'साहसाभास इत्यनुपदेष्टव्य एवायमर्थः' झ. ञ. पाठः.

---

१. 'अवाग्दत्ततया', २. 'स्वातन्त्र्यं दर्श' ज. पाठः. ३. 'मूर्खव्यापार' ख., मूर्खव्यापारं ज. पाठः. ४. 'कल्पग्रहणं' ग. घ. पाठः. ५. 'स्थलेव पित्रा', ६. 'भ्युप- गमामिति हेतौ।' ज. पाठः. ७. 'धनलाभायेति रूपा' ख. पाठः

**मालती** — (सास्रं स्वगतं) हा ताद! तुमं पि णाम मम एव्वं ति सव्वहा जिदं भोअतिह्णाए।

(हा! तात! त्वमपि नाम ममैवमिति सर्वथा जितं भोगतृष्णया।)

**अवलोकिता** — चिराइदं भवदीए। णं भणामि अरसत्थ-सरीरो महाभाओ माहवो त्ति।

(चिरायितं भगवत्या। ननु भणामि अस्वस्थशरीरो महाभागो माधव इति।)

---

**धूमग्रहेण** धूमाकारेण ग्रहेण देवताविशेषेण। धूमकेतुरिति प्रसिद्धेनेत्यर्थः। **विमला** बालत्वादनङ्कुरितकुरङ्गतया कलङ्करहितेति प्रतिपदि स्फुरिता प्रतिपाद्यते। ततश्चोपमालङ्कारः। अथवा प्रसिद्धकलङ्ककलाव्यतिरेकेण विमलत्वोत्प्रेक्षया उत्प्रेक्षा। अत्र चानिष्टविध्याभासेन साहसानुष्ठानादप्यभिमतसाधनोपदेशपरेण जन्मसाफल्यरूपविशेषप्रतिपादनादाक्षेपालङ्कारः प्रतीयते॥ ८॥

अथ तदुक्तेः फलं दर्शयति — हा तात! त्वमपि नाम ममैवमिति सर्वथा जितं भोगतृष्णया। अपिर्विरोधे। तादृशस्नेहविवशतयानुभूतस्त्वमपीत्यर्थः। **ममेति**। सैवाहं मालतीत्यर्थः। **नाम** कुत्सने। धिग्धिगिदमित्यर्थः। **एवमिति** स्वकार्याभिनिवेशेन नृशंसत्वस्यानुष्ठितस्याभिनयः। ईदृशो जातोऽसीत्यर्थः। **भोगतृष्णया** — विषयोपभोगलिप्सया। जितं सर्वं जगदभिभूय स्थितमित्यर्थः। राज्ञो राजवल्लभस्य च प्रीत्या पूर्वसादभ्यधिकमैश्वर्यमेव भोगसाधनं प्राप्यते, न पुनर्धर्मो मोक्षो वेति भावः।

अथ —

'नायकगुणगणभणितिं कुर्यादेवं प्रसङ्गेन।'

इत्युक्तेर्नायकगुणप्रस्तावाय निसृष्टार्थत्वाद् विदग्धशिष्याभङ्ग्या द्वारमापादयति — चिरायितं भगवत्या। ननु भणामि अस्वस्थशरीरो महाभागो माधव इति। **चिरायितं** बहुकालं विलम्बितम्। **ननु** भणामीति विलम्बस्यानौचित्यं व्यज्यते। **अस्वस्थशरीरः** अप्रकृतिस्थितदेहः। ज्वरार्त इत्यर्थः। अयं विलम्बानौचित्ये हेतुः।

---

१. 'तुमं वि' छ. ज. झ. पाठः। २. 'सव्वं जिदं' ज. पाठः। ३ 'तह्णाए' ख. ग. घ. ङ. पाठः। ४. 'चिरो' ज. पाठः।

---

१. 'बाल्यादनंकुरित' क. पाठः। २. 'प्रतिपद्यते' ख. पाठः। ३ 'नुष्ठानस्याभिमत' क. पाठः। ४. 'साफल्ये रूप' ख पाठः। ५, 'भोगसाधनं', ६. 'बहुलं कालं' ख. पाठः।

कामन्दकी — इदं गम्यते । वत्से ! अनुजानीहि माम् ।

लवङ्गिका — (जनान्तिकम्) सहि ! मालदि ! संपदं भअवदीए सआसादो तस्स महाणुहाअस्स उग्गमं जाणीमो ।

(सखि ! मालति ! साम्प्रतं भगवत्याः सकाशात् तस्य महानुभावस्योद्गमं जानीमः ।)

मालती — सहि ! अत्थि मे कोदूहलम् ।

(सखि ! अस्ति मे कुतूहलम् ।)

लवङ्गिका — (प्रकाशम्) भअवदि ! को एसो माहवो णाम, जस्स भअवदी सिणेहगरुअं अत्ताणं धारेदि ।

(भगवति ! क एष माधवो नाम, यस्य भगवती स्नेहगुरुमात्मानं धारयति ।)

---

तद्वचनानुमोदनम् इदं गम्यत इति । त्वरया सावशेषं वचनं "प्रविश पिण्डीम्" इत्यादिवत् । इदमस्ति तन्मयापि स्मृतम्, अथ गम्यत इति शेषः । अनुजानीहि अनुमन्यस्व, गमनायेति शेषः ।

अवलोकितालब्धप्रभावकाशा लवङ्गिका हृदयज्ञतया मालतीं संवादयति— जनान्तिकमिति ।

'त्रिपताकाकरेणान्यानपवार्यान्तरा कथाम् ।
अन्योन्यामन्त्रणं यत् स्याज्जनान्ते तज्जनान्तिकम् ॥'

इति धनिकः । सखि ! मालति ! साम्प्रतं भगवत्याः सकाशात् तस्य महानुभावस्योद्गमं जानीमः । सकाशात् समीपात्, मुखादित्यर्थः । उद्गमं जन्म, रूपादीनां दृष्टत्वात् ।

सखि अस्ति मे कुतूहलमिति । अपरथा न तु प्रष्टुं शक्तासीत्यर्थः ।

भगवति ! क एष माधवो नाम, यस्य भगवती स्नेहगुरुमात्मानं धारयति । स्नेहभेराक्रान्तं हृदयं वहति ।

---

१. 'ति, अनु' क. पाठः. २. 'जाणामो' ख. ग ङ. छ. पाठः. ३. 'मालती— अत्थि' ख. क. ज, 'मालती— (अपवार्य) अत्थि' म. पाठः. ४. 'एसो महाणुभाओ माहवो' ख. ग. क. पाठः. ५. 'जस्सिं भ' ख. ङ. ज, 'जस्स किदे भ' च. पाठः. ६. 'दी एव्वं अत्ता' ख. च, 'दी एव्वं सिणेहगुरुअं' ङ. ज, 'दी सिणेहगुरुअं' क. ख. म. पाठः. ७. 'धारेसि' ङ. पाठः.

---

१. 'लब्धकृत्स्नावकाशा' ज. पाठः. २. 'कथाः' ग. ज. पाठः. ३. 'भारा-क्रान्तं' ख. ब. म. पाठः.

कामन्दकी — अप्रस्ताविकी महत्येषा कथा ।

लवङ्गिका — तह वि आचक्खदु, भअवदी पसादं करेदु ।
(तथाप्याचष्टां, भगवती प्रसादं करोतु ।)

कामन्दकी — श्रूयताम्, अस्ति विदर्भाधिपतेरमात्यः, समग्र-पुरुषप्रकाण्डचूडामणिर्देवरातो नाम, यमशेषभुवनमहनीयपुण्यमहिमान-मात्मनः सामर्थ्यात् पितैव ते जानाति योऽसौ यादृशश्चेति ।

---

आदरातिशयजननाय स्वाभिमतमप्यर्थं भङ्ग्या निषेधयति — [अप्र-स्ताविकीति ।] प्रस्तूयतेऽस्मिन्निति प्रस्तावः कथनकालः, स न विद्यतेऽस्य इत्यप्रस्ताविकी । अधुना तत्प्रसङ्गाय कालो न पर्याप्त इत्यर्थः । तत्र हेतुः— महती अनल्पप्रमेया । एषा कथा माधवविषयोक्तिः ।

उपजातादरातिशयात् प्रार्थयते — तथाप्याचष्टां, भगवती प्रसादं करोतु । तथापीत्यनेन संक्षिप्यापि वक्तव्यत्वमाह । प्रसादं अनुग्रहम् ।

श्रूयतामिति वक्ष्यमाणस्य पीठिकाबन्धः । अस्तीति वर्तमानत्वं तस्याह । विदर्भाधिपतेरमात्य इति ब्राह्मणसामान्येऽपि द्रोणादिवत् निरतिशयैश्वर्यत्वं प्रकाश्यते । समग्रपुरुषप्रकाण्डचूडामणिः सर्वपुरुषश्रेष्ठानां शिखारत्नमिति लक्षणया पूज्यत्वातिशयः प्रकाश्यते ।

'मतल्लिका मचर्चिका प्रकाण्डमुद्घतल्लजौ ।
प्रशस्तवाचकान्यमूनि ।'

इत्यमरः । नाम प्रसिद्धौ । [अशेषभुवनमहनीयपुण्यमहिमानं] अशेषेण भुवनेन महनीयः पूज्यः, पुण्यः पापहरश्च यस्य महिमा वृत्ताध्ययनसम्पत्त्या जनितं तेजः । आत्मनः सामर्थ्यात् स्वस्य तत्सदृशगुणविशिष्टत्वात् । पितैव नान्यः कश्चित्तादृशसामर्थ्याभावादित्यवधारयति । 'नागुणी गुणिनं वेत्ति' इति न्यायात् ।

---

१. 'अप्रस्तावनीया' छ, 'अप्रस्ताविनी' ज. पाठः. २. 'आअक्खिअ' च, 'आचक्खिअ' छ. पाठः. ३. 'करेदु' ख. पाठः. ४. 'र्भाधिपस्य नरपते' घ. च. झ, 'र्भाधिपतेर्नरपतेर्मन्त्री प्रकाण्ड' छ, 'र्भराजस्यामात्यः' ज. पाठः. ५. 'समग्रधुर्यप्रकाण्ड' झ. ञ. पाठः, ६. 'ण्डचक्रचूडा' ख. च. ज. झ. ञ. पाठः. ७. 'षमहनीय' च. पाठः. ८. 'सतीर्थ्यं पितैव' क. झ. ञ, 'सतीर्थ्यात् पितैव' ज. पाठः.

---

१. 'रातिशया प्रार्थ' ज. पाठः. २. 'ब्राह्मण्यसामर्थ्येऽपि' ख. ग. घ. ज पाठः. ३. 'न्यधून्यबरद्धभावद्दो विधिः' इत्यमरः ख. पाठः.

अपि च —

व्यतिकरितदिगन्ताः श्वेतमानैर्यशोभिः
सुकृतविलसितानां स्थानमूर्जस्वलानाम् ।
अकलितमहिमानः केतनं मङ्गलानां
कथमिव भुवनेऽस्मिन् तादृशाः सम्भवन्ति ॥ ९ ॥

'ब्राह्मणो ब्राह्मणं वेद भर्ता वेद स्त्रियं तथा ।'

इति महाभारतोक्तेः,

'विवाहश्च विवादश्च समैरेवेष्यते बुधैः ।'

इत्युक्तत्वात् समानसम्बन्धत्वं च द्योत्यते । ते इति लवङ्गिकाकृतस्यापि प्रश्नस्य फलतो मालतीप्रयुक्तत्वात् तदाभिमुख्येनोक्तिः । योऽसाविति यद्वंशजातः, जातेः प्रमाणप्रदत्वात् । यादृश इति यद् गुणविशिष्टः । लब्धसत्ताकं हि वस्तु गुणैर्विशेष्यते । स इति तादृशश्चेति जानातीत्यर्थः । यच्छब्दस्योत्तरवाक्योपादानात् पूर्ववाक्यगतस्य तच्छब्दस्य सामर्थ्यादाक्षेपः ।

पुनरपि तदीयं माहात्म्यं तत्प्ररोचनाय स्तौति — अपिचेति ।

व्यतिकरितदिगन्ताः व्यतिकरः मिश्रता[3], सञ्जातव्यतिकरा दिगन्ता येषाम् । श्वेतमानैः धवलीभवद्भिः । स्फटिकविशदसत्त्वकार्यत्वात् कविसमयाद्वा यशसः श्वैत्यम् । 'श्वित श्वैत्ये' इति धातुरात्मनेपदी । वर्तमाननिर्देशादद्यापि वर्तमानत्वं प्रकाश्यते । यशोभिः स्वापदानजनिताभिः ख्यातिभिः ।

'कुलक्रमागता सा चेत् कीर्तिनाम्ना प्रकाशते ।
स्वापदानप्रसूता चेद्यश इत्यभिधीयते ॥'

इति भावप्रकाशः । सुकृतविलसितानां पुण्यपरिणामानां जात्यायुर्भोगरूपाणाम् । स्थानं अधिकरणम् । ऊर्जस्वलानां उत्कर्षशालिनाम् । 'ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः' (५-२-११४) इति निपातनात् साधुः । [अकलितमहिमानः] अकलित असङ्ख्यातः इयत्तया महिमा प्रतिभाबलादिसामर्थ्यं येषाम् । 'कल सङ्ख्याने' इति धातुः । पूर्वं महिम्नः

१. 'अगणितमहिमानः' ज. पाठः. २. 'कथमपि नु' क. ग. ज. पाठः.

१. 'मुख्यत्वेनोक्तिः' क. ग. घ. पाठः. २. 'जातेः प्राणप्रदत्वात्' क. ग. घ. ज. पाठः. ३. 'मिश्रिता' ज. पाठः. ४. 'धातुरनुदात्तेत् ज्ञानचाद्यापि वर्तमानत्वं प्रका' ज. पाठः. ५. 'कीर्तिनाम्ना' ज. पाठः.

मालती — तं क्खु भअवदीए गहिदणामधेअं सव्वदा तादो सुमरदि ।

(तं खलु भगवत्या गृहीतनामधेयं सर्वदा तातः स्मरति ।)

लवङ्गिका — सहि! समं क्खु भअवदीए गुरुसआसादो विज्जाहिगमो किदो त्ति तक्कालवेदिणो मन्तअन्ति ।

पुण्यत्वम् । इदानीमपरिच्छेद्यत्वं प्रतिपाद्यते इति भेदः । केतनं ध्वजः । कुलस्य ब्रह्मणां च तत्प्राप्तेर्मङ्गलागमनसूचकत्वात् । अथवा निकेतनमेव केतनं गृहम् । अथवा, केतनं निमन्त्रणं,

'तथा देवलकश्चैव श्राद्धे नार्हति केतनम् ।

इति स्मृतेः । यूयमस्माकं पात्रभूता इति । मङ्गलैर्वृता इत्यर्थः । मङ्गलानाम् अभ्युदयानाम् । अस्मिन् भुवने मनुष्यसञ्चारयोग्ये भूलोके । स्वर्लोकादिषु तु सम्भाव्यते इति भावः । तादृशाः तत्तुल्याः । बहुवचनेनैतदाह — यत् स तावदेकः सुकृतैरस्माकं सम्भूतस्तत्सदृशश्च भूरिवसुः कश्चित् कदाचिदन्योऽपि कश्चित् प्रयत्नतोऽन्वेषणे लभ्यतां नाम । अतो द्वौ तादृशौ सम्भवतः, न पुनस्तृतीयस्तयोरिति द्योत्यते । कथं सम्भवन्ति बहूनामुपपत्तिरेव नास्तीत्यर्थः । अत्रोपमानानुपादाने वाक्यगोऽयमुपमालङ्कारः ॥ ९ ॥

पितेव ते जानातीत्युक्तस्यार्थस्य मालतीहृदयसंवादं दर्शयति — तं खलु भगवत्या गृहीतनामधेयं सर्वदा तातः स्मरति । पितृसखत्वात् श्वशुरत्वसङ्कल्पाच्च गृहीतनामधेयमिति स्वयं नामानुक्तिः । सर्वदेति प्रसङ्गे, प्रसङ्गे । 'एवं देवरातेनोक्तं, एवं कृतं, एवं हसितं, एवं [illegible]तम्' इति प्रसज्जतीत्यर्थः ।

सखि समं खलु भगवत्या गुरुसकाशाद् विद्याधिगमः कृत इति तत्कालवेदिनो मन्त्रयन्ते । [विद्याधिगमः] विद्यानां वेदादीनामधिगमः प्राप्तिः कृतः ।

१. 'ती—सहि तं क्खु' ख. ग. छ. झ. ञ, 'ती—(जनान्तिकं) सहि तं क्खु' झ. ञ, 'ती—(सहर्षं) सहि तं क्खु' ज. पाठः. २. 'का—सहि समं किल विज्जाहिगमो' ख. ग. छ. ज. झ. ञ, 'का—समं किल विज्जाहिगमो' च. पाठः. ३. 'विज्जागमो' ग. घ. ङ. छ. पाठः. ४. 'कओ त्ति' ख. ङ, 'कदत्ति' घ. पाठः.

१. 'कालस्य संम्राणां च', २. 'प्रयत्नान्वेषणे लब्धं नाम' ज. पाठः. ३. ॰रिति । कथं सम्भवन्ति' ख. ग. घ. ज. पाठः. ४. 'मुत्पत्तिरेव' ख. पाठः. ५. 'मुपादानवाक्येन उपमालङ्कारः' ख. पाठः. ६. 'सङ्कल्पत्वाच्च' क. ख. ग. घ. पाठः. ७. 'ज' ग. घ. ज. पाठः. ८. 'समं किल भग' ज. पाठः. ९. 'विद्यागमः' ख. ग. घ. ज. पाठः. १०. [illegible] पाठः.

(सखि ! समं खलु भगवत्या गुरुसकाशाद् विद्याधिगमः कृत इति तत्कालवेदिनो मन्त्रयन्ते ।)

कामन्दकी —

तत उदयगिरेरिवैक एव
स्फुरितगुणद्युतिसुन्दरः कलावान् ।
इह जगति महोत्सवस्य हेतु-
र्नयनवतामुदियाय बालचन्द्रः ॥ १० ॥

---

ताभ्यामिति शेषः । भगवत्यमात्यौ च सतीर्थ्यतया निरतिशयसौहृदौ इति दर्शितम् । [तत्कालवेदिनः] तं कालं जानाना जरन्तो जनाः । [मन्त्रयन्ते] कथयन्तीत्यर्थः ।

तत इत्यादि — ततः तस्मादेवराताद् । उदयगिरेरिवं पूर्वपर्वतादिवेत्यनेन तुङ्गत्वस्थिरत्वमहत्त्वमहीभारधारणक्षमत्वादयो गुणाः प्रदर्श्यन्ते । एक एव भ्रातृरहित इति पितृस्नेहसर्वस्वभूमित्वं समग्रैश्वर्यस्थानित्वं च द्योतयति । स्फुरितगुणद्युतिसुन्दरः तस्य एव प्रादुर्भूतरूपशीलादिगुणा एव द्युतयः प्रभाः ताभिः, यद्वा स्फुरितगुणया द्युत्या सुन्दरः हृदयङ्गमः । कलावान् तदवस्थायामेव पूर्वसंस्कारप्रादुर्भूतचतुष्षष्टिकलाकलापः द्वित्राभिः कलाभिः स्वभागैः विशिष्टश्च । महोत्सवस्य लक्षणयोत्सवकार्यस्य महतो हृदयाह्लादस्य । नयनवतां न पुनर्विशेषविदामेवेति चक्षुष्मतां सर्वेषामत्र वस्तुन्यैकमत्यं व्यञ्जयति । उदियाय उदितः । भूतत्वमात्रविवक्षया लिट्प्रयोगः,

'मन्दारशून्यानलकांश्चकार' ।

इतिवत् । बालचन्द्रः बालश्चासौ चन्द्रश्चेति । बालचन्द्र इत्यत्र स्थाने माधवेन्दुरिति प्रयोक्तुं शक्येऽपि रसातिशयोपपादनार्थं नामानुक्तिः । अत्र चोपमा रूपकमर्थश्लेषः शब्दश्लेषातिशयोक्तिश्च परस्परसापेक्षत्वेन वर्तन्त इति सङ्कराकङ्कारः ॥ १० ॥

---

१. 'एष' छ. ज. पाठः.

---

१. 'वेत्यर्थेन' ख. पाठः. २. 'प्रकाश्यन्ते' ख. ज. पाठः. ३. 'इत्यनेन पितृ' क. पाठः. ४ 'स्फुरितगुणद्युतीति इन्दुसुन्दरः' ग. घ. पाठः. ५. 'सुहृदयङ्गमः', ६. 'यापादनत्वं नाम' ज. पाठः. ७. 'श्लेषः श्लेषातिशयो' ग, घ 'श्लेषः अतिशयो' ख. पाठः.

लवङ्गिका — (जनान्तिकम्) अवि णाम माहवो भवे ।

(अपि नाम माधवो भवेत् ।)

कामन्दकी —

असौ विद्याशाभिः शिशुरपि विनिर्गत्य भवना-
दिहायातः संप्रत्यविकलशरच्चन्द्रमधुरः ।
यदालोकस्थाने भवति पुरमुन्मादतरलैः
कटाक्षैर्नारीणां कुवलयितवातायनमिव ॥ ११ ॥

---

अपि नाम माधवो भवेदित्याशंसया तदुक्तेः फलं दर्शयति ।

अथ तस्य विनयातिरेकं श्लाघ्ययौवनत्वं च प्रकाश्य विलोभयति— असावित्यादि । प्रकृतो बालचन्द्रः । विद्याशाभिः विद्यासु वेदादिष्वष्टादशसु विद्यास्थानेषु जिघृक्षया । आशाभिरिति बहुवचनं श्रोतव्यबाहुल्यात् । शिशुः बाल्येऽपीति सहजसत्त्वसम्पन्नत्वं व्यज्यते । भवनाद्विनिर्गत्य स्वगृहात् निष्क्रम्येति स्वगृहावस्थाने बन्धुजनोपलालनस्य विद्यार्जनविपक्षत्वमाशंक्येति ध्वन्यते ।

'सुखार्थी वा त्यजेद्विद्यां विद्यार्थी वा सुखं त्यजेत् ।
सुखार्थिनः कुतो विद्या कुतो विद्यार्थिनः सुखम् ॥'

इति व्यासोक्तेः । इह पद्मावत्याम् । आयात आगत इति प्रस्थापने पितुरनतिप्रयत्नो व्यज्यते । संप्रति अस्मिन् काले । अविकलशरच्चन्द्रमधुरः आरूढयौवनतया संपूर्णशरत्कालोर्जितचन्द्र इव मधुरः दर्शनीयः । मधुरत्वस्य फलं दर्शयति — यदालोकस्थाने यस्य दर्शनगोचरे स्थाने । पुरं पद्मावती । उन्मादतरलैः स्मरशरप्रहारजनितहृदयवैवश्यचञ्चलैः । उन्मादग्रहणात् झटित्येवा-

---

१. 'का — (अपवार्य) अवि णाम' ज. 'का — (जनान्तिकं) सहि अवि णाम' क. ख. ग. पाठः. २. 'शाली' ख. ज, 'भारः' क. ख. ग. पाठः. ३. 'वदनः' ग. ज. पाठः.

---

१. 'प्रकाशयति ।' क. ग. पाठः २. 'प्रकृतो' क. पाठः. ३. 'बाल्येऽपीति' ग. घ. पाठः. ४. 'केः । असौ पद्मावत्यां' क. पाठः. ५. 'पितुरतिप्रयत्नो' ६. जितश्चन्द्र इव' क. ख. ग. 'तेजितया चन्द्रा' ज. पाठः. ७. 'मधुरस्य फलं' ग. पाठः. ८. 'यस्य गोचरे' ग. पाठः. ९. 'स्थले' ज. पाठः.

अत्र बालसुहृदा मकरन्देन सह विद्यामान्वीक्षिकीमधीते स एष माधवो नामेति ।

मालती — (सानन्दं जनान्तिकं) सहि लवङ्गिए! सुदं तुए कधं महाकुलप्पभवो वि सो महाभाओ ।

(सखि! लवङ्गिके! श्रुतं त्वया कथं महाकुलप्रभवोऽपि स महाभागः ।)

---

ष्ममदशाप्रवेशहेतुत्वमालोकस्य द्योत्यते । कुवलयितवातायनं सञ्जाता नीले-न्दीवरमाला अस्येति । वातायनं गवाक्षम् । असितबहुलशीतलप्रभापटलसञ्छन्न-त्वात् । 'स्त्रियः कामितकामिन्यः' इति न्यायात् तदीयसौभाग्यातिशयश्च प्ररो-चनाय प्रकाशित इति मन्तव्यम् । अत्रोपमोत्प्रेक्षा चालङ्कारः ॥ ११ ॥

उपारूढयौवनत्वेऽपि शैशव इव विद्याग्रहणताच्छील्यमाह— अत्र अस्मिन् पुरे । बालसुहृदा बालभाव एव सुहृदा सहपांसुक्रीडादृढसौहृदेनेति परमविस्रम्भभूमित्वं प्रकाश्यते । आन्वीक्षिकीं आत्मस्वरूपनिरूपणपराम् । विद्याम् वेदान्तशास्त्रमित्यर्थः । अधीते अभ्यस्यति । आन्वीक्षिकीग्रहणं धीरप्र-शान्तस्य तत्प्राधान्यज्ञापनार्थम् । अभिजनादिगुणगणवर्णनया पूर्णकौतुकत्वमापाद्य तदाह्लादनायान्ते नायकस्य नाम प्रकाशयति — स एष माधवो नामेति । स एवं मया वर्णितः । एष इदानीं अवलोकितया प्रस्तुत इत्यर्थः । नाम प्रसिद्धौ । कस्तं जगति न जानातीत्यर्थः । 'अस्ति विदर्भाधिपतेरमात्यः' इत्यादि 'स एष माधवो नाम' इत्यन्तं विलोभनम् । मालत्या विलोभनात् ।

तन्नामश्रवणे सानन्दं पुलकाद्यनुभवप्रादुर्भावात् प्रकाशितपरमसुखानुभ-वमित्यर्थः । सखि! लवङ्गिके! श्रुतं त्वया । इदमिति शेषः । त्वया श्रुतमिति मदनुरागस्य स्थानपातित्वं तवैव प्रियमिति व्यञ्जयति । कथं

---

१. 'तदत्र' छ, 'तदत्र च बाल' ज. पाठः. २. 'अधिगच्छति स' क. झ. ञ. पाठः. ३. 'ङ्गिए किं सुअं' ख. च. पाठः. ४. 'महाणुभाओ' घ. च. पाठः

---

१. 'हेतुतामालो' क. ख. पाठः. २. 'सञ्जातनीले' ग. 'सञ्जातेन्दीवर' च. पाठः. ३. 'बहुल' क. पाठः. ४. 'त्रोपमा चोत्प्रेक्षा चालङ्कारः' ख. पाठः. ५. 'शैशवविद्याग्रहण' च. पाठः. ६. 'अभिजनादिगुणवर्णनया' ख. 'अभिज्ञानादिगुणगण' ज. पाठः. ७. 'तद। आह्लादनायान्त नाम' ८. 'समानपातित्वं' ग. च. पाठः

लवङ्गिका— (जनान्तिकम्) सहि कुदो वा महोदहिं वज्जिअ पारिजादस्स उग्गमो। (सखि! कुतो वा महोदधिं वर्जयित्वा पारिजातस्योद्गमः।)

(नेपथ्ये शङ्खध्वनिः।)

कामन्दकी— अहो! कालातिपातः। सम्प्रति हि—

क्षिपन्निद्रामुद्रां मदनकलहच्छेदसुलभा-
मपायोत्कम्पानां विहगमिथुनानां प्रथमतः।

महाकुलप्रभवोऽपि स महाभागः।[महाकुलप्रभवः]महत्कुलं वंशः प्रभवः उत्पत्तिस्थानं यस्य। अपिर्गुणान्तरैरस्य गुणं समुच्चिनोति।

भगवतीवचनात् पूर्वमेव तद्गुणदर्शनादेवमनुमितो मयायमर्थ इत्याह—सखि! कुतो वा महोदधिं वर्जयित्वा पारिजातस्य उद्गमः। कुतः कस्मादपादानात्। महोदधिं अमृताद्युत्पत्तिस्थानतया समुद्रान्तरेभ्यो विशिष्टमुदधिम्, क्षीराब्धिमित्यर्थः। पारिजातस्येत्यर्थान्तरसङ्क्रमितवाच्येन सकलभुवनप्रसिद्धप्रभावत्वं प्रतीयते। न खलु कलशजलधिमन्तरेण पारिजातं तरुरत्नमितरे तरव इव यतःकुतश्चित् सम्भवतीति जलानामप्ययमनुमेय एवार्थ इति भावः। अत्र च कथं महाकुलप्रभवोऽपि स महाभागः, कुतो वा महोदधिं वर्जयित्वा पारिजातस्योद्गम इति वाक्यद्वये सामान्यधर्मस्यैकस्य शब्दभेदेनावस्थानाद् वैधर्म्येणेयं प्रतिवस्तूपमा अलङ्कारः। 'सुदं पिअसहीए' इत्यादि प्राप्तिः। मालत्याः सुखागमात्।

अहो इति कथाप्रसङ्गव्याक्षेपादित्यर्थः। कालातिपातः कालस्यातिक्रमः।

क्षिपन्नित्यादि— क्षिपन् निरस्यन्। 'क्षिप निरसन' इति धातुः। निद्रामुद्रां निद्रया जनितं स्तैमित्यम्। मदनकलहच्छेदसुलभां सम्भोगावसानप्राप्याम्।

---

१. 'ओ त्ति' छ. झ पाठः २. 'पातः संवृत्तः। सं' ग. ङ. पाठः., ३. 'सुभगाम्' छ. ज. पाठः. ४. 'भवामोत्कण्ठानां' क. झ. ञ, 'भवामोत्कम्पानां' च, 'भपात्रोत्कम्पानां' छ. पाठः.

---

१. 'स्था उत्पत्ति', २. 'स्य शब्दस्य शब्दभेदेन' ख. पाठः ३. 'क्षिप निरसने' ज. पाठः. 'क्षिप प्रेरणे' इति मुद्रितकौमुदीपाठः. ४. 'जनितस्तैमित्यं', ५. 'वसानश्रमप्राप्यां' क. ग. क. 'वसानश्रमप्राप्तां' ज. पाठः.

दधानः सौधानामलघुषु निकुञ्जेषु घनता-
मसौ सन्ध्याशङ्खध्वनिरनिभृतः खे विचरति ॥ १२ ॥

वत्से ! सुखं स्थीयताम् ।

(इत्युत्तिष्ठन्ति ।)

मालती — (अपवार्य) कहं उवहारीकिदह्मि राइणो तादेण । राआराहणं क्खु तादस्स गरु, ण उण मालदी । (सास्रम्) हा ! ताद !

---

'प्रथममदनयुद्धे योषितः स्वल्पभावाः ।'

इति,

'निपीय स्वेदाम्बु स्मरसमरसम्भुक्तविभवम् ।'

इति सुरतस्य मदनयुद्धशब्देनोक्तेः । प्रथमतः आदितः । अशङ्कितमेव महतो घोषस्य श्रवणात् उपात्तोत्कम्पानां भयवशेन झटिति कम्पः स्वीकृतो यैः । विहगमिथुनानां पक्षिद्वन्द्वानाम् । सौधानां प्रासादानाम् । अलघुषु विपुलायतेषु । निकुञ्जेषु चन्द्रशालागह्वरेषु ।

'निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे ।'

इत्यमरसिंहोक्तावादिशब्देन भित्त्याद्यन्तरितप्रदेशानामपि ग्रहणात् । घनतां सान्द्रताम् । सन्ध्याशङ्खध्वनिः सायंसन्ध्याकालपूरितस्य मङ्गलशङ्खस्य घोषः । अनिभृतः अपर्याप्तावकाशत्वादमानित्यर्थः । चिरकालमनुवृत्तसंस्कारतया खे आकाशे विचरति बम्भ्रम्यते । अत्र स्वभावोक्तिरेकश्चालङ्कारः । सूक्ष्मतरविहगस्वभाववर्णनादाश्रयतो गगनादाश्रितस्य ध्वनेर्वैपुल्यकथनाच्च ॥ १२ ॥

सुखं स्थीयतामिति गमनसमये गुरुत्वादाशिषं प्रयुङ्क्ते ।

अपवार्येति । चिन्ताक्रान्ततया तदुक्तेरश्रवणमभिनीय स्वगतमाहेत्यर्थः ।

---

१. 'वत्से स्थीयतां' छ. पाठः. २. 'ताम् । तदुत्तिष्ठामः' भ. पाठः ३. 'गुरुअं णं' क. ख. भ. पाठः.

---

१. 'भावः' ग. घ. पाठः. २. 'भयवेगेन' ख. पाठः. ३. 'इत्यमरः । आदिशब्देन', ४. 'मङ्गलशब्दस्य' ज. पाठः. ५. 'बम्भ्राम्यते' ख. 'बभ्रम्यते' क. ख. पाठः. ६. 'वैपुल्याच्च' क. पाठः. ७. 'रश्रवणमनभिनीय' ज. पाठः.

तुमं पि णाम मम एव्वं ति सव्वहा जिदं भोअतिह्लाए । (सानन्दम्) कहं महाकुलप्पहवो वि सो महाभाओ । सुट्ठु भणिदं पिअसहीए कुदो महोदहिं वज्जिअ पारिजादस्स उग्गमो । अवि णाम तं पुणो वि पेक्खे ।

( कथं उपहारीकृताऽस्मि राज्ञे तातेन । राजाराधनं खलु तातस्य गुरु न पुनर्मालती । (सास्रम्) हा! तात! त्वमपि नाम ममैवमिति सर्वथा जितं भोगतृष्णया । (सानन्दम्) कथं महाकुलप्रभवोऽपि स महाभागः । सुष्ठु भणितं प्रियसख्या, कुतो महोदधिं वर्जयित्वा पारिजातस्य उद्गमः । अपि नाम तं पुनरपि पश्येयम् ।)

अवलोकिता—इदो एदिणा संजवणेण ओदरम्ह ।

(इत एतेन सञ्जवनेन अवतरामः ।)

कामन्दकी—(अपवार्य) साधु सम्प्रति मया तटस्थयैव मालतीं प्रति निसृष्टार्थदौत्यस्य लघूकृतो भारः ।

---

'कहं' इत्यादिना 'पारिजादस्स उग्गमो' इत्यन्तेन नन्दने विरक्तिः, पितरि विगर्हणा, नायके च बहुमानः पुनर्भाव्यंत इति दूतीकृत्यस्य दत्तफलत्वं प्रकाशयति । अपि नाम तं पुनरपि पश्येयमित्यौत्सुक्योद्भवनेनाङ्कं परिसमापयन्नभिलापशृङ्गारमङ्गिनमनुसन्दधान उत्तराङ्कार्थस्यावतरणिकामुपक्षिपति कविकुलपतिरिति वेदितव्यम् ।

इत एतेन सञ्जवनेनावतरामः । 'सञ्जवनं त्विदं चतुःशालं' इत्यमरः ।

अथानुष्ठितं-कामसूत्रार्थमनुकम्प्यानुष्ठेयांशकमनुसन्धत्ते । साध्विति–लघूकरणक्रियाविशेषणम् । तटस्थयैवेति । अविस्रम्भपरिहाराय कमपि पक्षमनाश्रयन्त्यैवेत्यर्थः । माधवपक्षपातिनी इयं भूरिवसुना वा प्रेरितेति परिज्ञाने शङ्कनीयतया तदीयहृदयाप्रकाशनात् । मालतीं प्रति मालतीं

---

१. 'प्पभवो वि' क. झ. ञ, 'प्पसूदो पि' छ. ज. पाठः. २. 'सुभणिअं' ख. ग. च. पाठः. ३. 'पेक्खिस्सं' क, 'पेक्खिस्सं' ज. झ. ञ. पाठः. ४. 'एवं—अवलोइदे इदो' क. ज. झ. ञ, 'अवः—भअवदि इदो' च. पाठः. ५ 'सोवाणेण' क. झ. ञ. पाठः. ६. 'ओदरामो' ख. च. पाठः. ७. 'साधु अवलोकिते साधु, सम्प्रति' छ. ज. पाठः. ८ 'मालतीं निसृ' ख. पाठः. ९. 'दूतीकृत्यस्य' क. ञ, 'दूत्यस्य' ख. झ. ज, 'दूतीव्रतस्य' झ. पाठः १०. 'भारः । तथा हि—वरेऽन्यस्मिन्' क. झ. ञ. 'भारः । वरेऽन्यस्मिन्' न. पाठः.

---

१. 'गर्हणा क' पाठः. २. 'यांशमनु' क. ज, 'यांगमनु' ख. पाठः ३. 'माधवपक्षपातिना भूरिवसुना' ज. पाठः.

कुतः—

वरेऽन्यस्मिन् द्वेषः[1] पितरि विचिकित्सा च जनिता

पुरावृत्तोद्घातैरपि[2] च कथिता कार्यपदवी ।

लक्ष्यीकृत्य । 'प्रतियोगेषु च दृश्यते' इति द्वितीया । निसृष्टार्थदौत्यस्य[1] निसृष्टार्थदूतीकल्पस्तन्त्रयितव्य इत्यङ्गीकृतस्य । भारः कर्तव्यगौरवम् । भार इत्युक्तिर्यथाशास्त्रं प्रवृत्तेर्दुर्वहत्वं ख्यापयितुम्[2] । लघूकृतः सुभरः कृतः । अल्पावशिष्टत्वादनुष्ठेयस्येति भावः ।

कुत इति चोद्यरूपेणोत्तरमवतारयितुम् । कस्माद्धेतोर्लघूकरणमिति चेदस्मादित्यायाति[3] ।

तमेव हेतुमाह—वरेऽन्यस्मिन्नित्यादि । [वरेऽन्यस्मिन्] प्रतिनायकभूते नन्दने । द्वेषः अप्रीतिः । पितरि भूरिवसौ । विचिकित्सा अकार्यकरणात् स्वविषये स्निग्धो न वेति संशयः । 'विचिकित्सा तु सन्देहः' इति वैजयन्ती[4] ।

'नियुक्तस्तत्प्रमाथाय लोगेन विचिकित्सते[5] ।'

इतिवत् । जनिता उत्पादिता[6] । द्वेषो जनित इति लिङ्गविपरिणामः[7] । पुरावृत्तोद्घातैः शाकुन्तलादितिहासप्रस्तावैः । 'उद्घातः प्रणवो यासाम्' इतिवत् । कार्यपदवी कर्तव्यस्य प्रकारः शकुन्तलादिवत् त्वयापि क्रियमाणे[8] न कश्चिद्दोष[9] इति सूचितवतीत्यर्थः[10] । स्तुतं प्रशंसितम् । माहाभाग्यं महाभागत्वम् । लोकोत्तरसुकृतशालित्वं तदित्यायाति । अभिजनतो जन्मतो यद् । गुणतः सौभाग्यादेः यच्च । जात्यायुर्भोगरूपत्वात्[11] सुकृतफलस्य[12] । प्रसङ्गाद् यदृच्छया । तत्कृतात् प्रस्तावादेव[13], न पुनरस्मिन् निर्बन्धेनेत्यशङ्काहेतुत्वं[14] प्रकाश्यते । इति हेतौ । अस्माद्धेतोरिति कुत इति प्रश्नस्योत्तरम् । अथेति अनन्तरम् ।

---

१. 'दोषः' ख. ज. पाठः. २. 'वृत्तोद्गारैः' क. ज. झ. ञ. पाठः.

---

१. 'र्थदूतस्य' ख. पाठः. २. 'स्वं प्रख्यापयितुं' ख. पाठः. ३. 'दित्यादिकमेव हेतुमाह' घ. पाठः. ४. 'यन्ती । विचिकित्सा तु संशयः इत्यमरः । नि' ग, 'यन्ती । विचिकित्सा तु सन्देहः' इत्यमरः । नि' घ. पाठः. ५. 'प्रमाणाय' ज. पाठः. ६. 'ता । जनित' ख. पाठः. ७. 'लिङ्गपरिणामः' ग. घ. पाठः. ८. 'वत् क्रियमाणे' ख. पाठः. ९. 'न कश्चिद्दोषित इति' ख. पाठः. १०. 'सूचितमित्यर्थः'. ११. 'रूपफलस्य' ज. पाठः. १२. 'सुकृतस्य फलस्य' क. ग. पाठः. १३. 'प्रस्तावादेः', १४. 'निर्बन्धेनेत्याशङ्का' ख. पाठः.

स्तुतं[1] माहाभाग्यं यदभिजनतो यच्च गुणतः
प्रसङ्गाद्वत्सस्येत्यथ[2] खलु विधेयः परिचयः ॥ १३ ॥
(इति निष्क्रान्ताः सर्वे ।)

इति मालतीमाधवे धवलगृहो नाम
॥ द्वितीयोऽङ्कः ॥

---

खल्ववधारणे । विधेयः अनुष्ठेयः । परिचयः पुनः पुनर्दर्शनेनैकान्तसङ्घट्टनेन सल्लापादिना चोभयानुरागस्य वासनैव परिपोषणीयेत्यर्थः ।

"उत्पाद्य सौमनस्यं ब्रूयात् सुभगे शृणुष्व यत्किञ्चित् ।
चित्रं किमपि व्यतिकरमसौ युवा कुसुमसुकुमारः ॥
दृष्टिभुजङ्गीदष्टस्तव सखि सन्देहमापतितः ।
इत्युक्ते यदि सहते पुनरपरेद्युः समेत्य संघटयेत् ॥
इति सुघटितसम्भावां व्यसनविवाहोत्सवप्राये ।
उद्यानपानयात्राजलावतारेषु हुतवहोत्पाते ॥
चिन्तितनिरत्यये वा वेश्मनि निज एव संयुञ्ज्यात् ॥"

इत्युक्तक्रमानुष्ठानमतः परं कर्तव्यमित्यर्थः । स्वयमभियोक्ष्यमाणस्त्वादावेव परिचयं कुर्यात् । 'परिचयकारणानि बाह्याभ्यन्तराण्युच्यन्त'[2] इत्यारभ्य,

'आदौ परिचयं कुर्यात्ततश्च परिभाषणम् ।
परिभाषणसम्मिश्रं पश्चादाकारवेदनम् ॥'

इत्यन्तेन वात्स्यायनवचनेन परिचयकारणस्योक्तत्वादित्यशेषमतिमङ्गलम् ।

मालतीमाधवस्येत्थं द्वितीयाङ्कार्थचर्चनम् ।
पूर्णज्योतिःप्रसादेन चक्रे पूर्णसरस्वती ॥

॥ इति द्वितीयोऽङ्कः ॥

---

१. ''तं तन्माहात्म्यं' क. छ. ञ. पाठः २. 'च विधिविधेयः' क. छ. पाठः

१. 'यः कर्तव्यः अनु' ज. पाठः. २. 'बाह्यान्तराण्यु' क. ख. ग. घ. पाठः.

# अथ तृतीयोऽङ्कः ।

(प्रविश्य)

बुद्धरक्षिता — अवलोइदे ! अवलोइदे ! अवि जाणासि कहिं भअवदी त्ति ।

(अवलोकिते ! अवलोकिते ! अपि जानासि क भगवतीति ।)

(प्रविश्य)

अवलोकिता—बुद्धरक्खिदे ! किं सि पसुमरिआ को वि आलो भअवदीए पिण्डवादवेळं विसज्जिअ माळदीं अणुवट्टमाणाए ।

(बुद्धरक्षिते ! किमसि प्रस्मृता कोऽपि कालो भगवत्याः पिण्डपातवेलां विसृज्य मालतीमनुवर्तमानायाः ।)

---

अथ प्रवेशकमारभते-प्रविश्य बुद्धरक्षितेति । 'नियुक्तैव तत्र सखी बुद्धरक्षिता' इति पूर्वं सूचिता । अवलोकिते इत्युक्तिभङ्गया पात्रान्तरं प्रवेशयति । वीप्सयाह्वानत्वरां सूचयति । अपि जानासि क भगवतीति । अपिः प्रश्ने ।

बुद्धरक्षिते किमसि प्रस्मृता कोऽपि कालो भगवत्याः पिण्डपातवेलां विसृज्य मालतीमनुवर्तमानायाः । प्रस्मृता विस्मृतवतीति कर्तरि निष्ठा । प्रस्मरतिर्विस्मरणार्थः । इममर्थमिति शेषः । [पिण्डपातवेलां] पिण्डपात इति सौगतानां भोजनस्य संज्ञा, तत्कालम् । विसृज्य अतिवाह्य । भोजनानन्तरमेवेत्यर्थः । अनुवर्तमानायाः सेवमानायाः । कोऽपि कालः महान्कालः । अतिक्रान्तः इति शेषः ।

---

१. 'बुद्ध—(परिक्रम्याकाशे) अव' क. ज. य. पाठः. २. 'इदे अवि' क. घ. घ. ङ. ज. झ. ञ. पाठः. ३. 'किं पमुट्ठासि' क. ज. झ. ञ, 'किं सि विह्मरिआ' ख, 'किं सि प्पमुट्ठा' ग. घ. च, 'किं सि विह्मुमरिआ' छ. पाठः. ४. 'जो को वि' ज. पाठः. ५. 'पिण्डपारणावेळें' ज. पाठः. ६. 'वाजिअ' क. ख. च. झ. ञ. पाठः.

---

१. 'इत्युक्तभङ्गया' ख. पाठः. २. 'किमपि' घ. पाठः. ३. 'इमामिति शेषः' घ. पाठः.

**बुद्धरक्षिता**—हुं, तुमं उण कहिं पत्थिदासि।

(हुं, त्वं पुनः क्व प्रस्थितासि।)

**अवलोकिता**—अहं क्खु भअवदीए माहवसआसं अणुप्पेसिदा। सन्दिट्ठं अ तस्स सङ्करउरसम्बद्धं कुसुमाअरुज्जाणं गदुअ कुञ्जणिउञ्जपेरन्तरत्तासोअगहणे चिट्ठेहि त्ति। गदो अ तत्थ माहवो।

(अहं खलु भगवत्या माधवसकाशमनुप्रेषिता। सन्दिष्टं च तस्मै शङ्करपुरसम्बद्धं कुसुमाकरोद्यानं गत्वा कुञ्जनिकुञ्जपर्यन्तरक्ताशोकगहने तिष्ठेति। गतश्च तत्र माधवः।)

**बुद्धरक्षिता**—अवलोइदे! किंणिमित्तम्।

(अवलोकिते! किंनिमित्तम्।)

---

हुं इति अनुवादेऽव्ययम्। त्वं पुनः क्व प्रस्थितासि। पुनः शब्दो विशेषे। भगवतीसहचर्यामनुज्झितपूर्वामुज्झित्वा क्व गतवतीत्यर्थः।

अहं खलु भगवत्या माधवसकाशमनुप्रेषितेति तदाज्ञापरिपालनमेव मया क्रियत इत्यर्थः। संदिष्टं च तस्मै शङ्करपुरसंबद्धं कुसुमाकरोद्यानं गत्वा कुञ्जनिकुञ्जपर्यन्तरक्ताशोकगहने तिष्ठेति। गतश्च तत्र माधवः। 'तस्स' इति 'चतुर्थ्या षष्ठी' इति प्राकृते षष्ठ्यादेशः। शङ्करपुरं नाम शिवायतनविशेषः। [कुसुमाकरोद्यानं] कुसुमाकरसंज्ञितमाक्रीडम्। [कुञ्जनिकुञ्जपर्यन्तरक्ताशोकगहने] कुञ्जो लतामण्डपः, निकुञ्जो लक्षणया, तदभ्यन्तरमाह।

'भक्तिप्रह्वाय दातुं मुकुलपुटकुटीकोटरक्रोडलीनाम्।'

इतिवत्। पर्यन्तः परिसरः। तद्गते रक्ताशोकस्य अरुणकुसुमस्याशोकविशेषस्य, गहने विटपपरिपाटीसंकटे। तिष्ठेति, सन्दिष्टं च भगवत्येति शेषः। गतश्चेति स्वमनीषितस्यैवोक्तत्वादाशु प्रवृत्तिः प्रतिपाद्यते।

अवलोकिते! किंनिमित्तमिति सन्देशस्य गमनस्य च को हेतुरित्यर्थः।

---

१. 'सम्बन्धि कु' ज. पाठः। २. 'कुसुमाअरं णाम उज्जाणं' क. घ. च. झ. ञ, 'कुसुमाउहोज्जाणं' छ. पाठः। ३. 'चिट्ठेदु त्ति' क, 'चिट्ठे त्ति' ज. झ. ञ. पाठः। ४. 'बुद्ध — किं त्ति तहिं माहवो अणुप्पेसिदो!' क. झ, 'बुद्ध — अवलोइदे किं त्ति माहवो तत्थ अणुप्पेसिदो।' छ. ज. पाठः।

---

१. 'पर्यन्ते रक्ता' ग. घ. पाठः। २. 'साद मुकुल' ग. घ. ज. पाठः। ३. 'विटपिपति' ख. ङ. पाठः। ४. 'तस्योक्तत्वात्' ग. पाठः।

अवलोकिता — अज्ज कसणचउद्दसि त्ति जणणिए समं मालदी संकरउरं गमिस्सदि । तदो एव्वं किल सोहग्गं वड्ढदि त्ति सहत्थकुसुमावचाअं उद्दिसिअ लवङ्गिआदुदीआ मालदी तं एव्व कुसुमाअरुज्जाणं आणइस्सदि, तदो अण्णोण्णदंसणं होदि त्ति । तुमं उण कहिं पत्थिदासि ?

(अद्य कृष्णचतुर्दशीति जनन्या समं मालती शङ्करपुरं गमिष्यति । तत एवं किल सौभाग्यं वर्धत इति स्वहस्तकुसुमापचायमुद्दिश्य लवङ्गिकाद्वितीया मालती तदेव कुसुमाकरोद्यानमानेष्यते, ततोऽन्योन्यदर्शनं भवतीति । त्वं पुनः क्व प्रस्थितासि ?)

---

तन्निमित्तमवलोकिता प्रकाशयति—अद्य कृष्णचतुर्दशीति जनन्या समं मालती शङ्करपुरं गमिष्यति । तत एवं किल सौभाग्यं वर्धत इति स्वहस्तकुसुमापचायमुद्दिश्य लवङ्गिकाद्वितीया मालती तदेव कुसुमाकरोद्यानमानेष्यते, ततोऽन्योन्यदर्शनं भवतीति । कृष्णचतुर्दशीति अपरपक्षचतुर्दश्या भूतदिनत्वेन परमेश्वराराधनसाधनत्वमुच्यते । ततस्तद्गमनानन्तरम् । एवं किल इत्थं कृते । किलेत्यैतिह्ये । आगमपुराणादिप्रसिद्धोऽयमर्थ इत्यर्थः । 'स्वयमभ्यर्चनं भक्त्या' इति पुराणवचनात् । सौभाग्यं वर्धते दयितवाल्लभ्यं तत्फलत्वात्सौन्दर्यस्य ।

"प्रियेषु सौभाग्यफला हि चारुता"

इत्युक्तेः । 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य' (७-३-१९) इति उभयपदवृद्धिः । वर्धत न तु भवतीति रूपशीलादिभिरेव निष्पादितस्य तस्य परमेश्वरप्रसादेनोदितोदितत्वं भवतीत्यर्थः । इति अनेन हेतुनेति स्वप्रतिपादनप्रकारकथनम् । स्वहस्तकुसुमापचायं प्रभुत्वातिशयेन भृत्यजनबाहुल्येऽपि स्वहस्तेन पुष्पादानस्य भक्तिविशेषसूचकत्वादेवमुक्तिः । 'हस्तादाने चेरस्तेये' (३-३-४०) इति घञ् । उद्दिश्य

---

१. 'त्ति भअवदीए समं' २. 'संकरघरं' क. झ. ञ. पाठः. ३. 'त्ति देवदाराहणणिमित्तं सहत्थ' क. ख. घ. ङ. च. छ. ज. झ. ञ. पाठः. ४. 'दुदीअं मालदिं भअवदी जेव्व कुसु', ५. 'होदु त्ति' क. झ. ञ पाठः.

---

१. 'चतुर्दश्यां भूत', २. 'नन्तर एवं किल' ग. घ, २. 'नन्तरं इत्थं किल एवं कृते', ३. 'दयितावाल्लभ्यम्', ४. 'नोदितत्वं' ज, पाठः.

बुद्धरक्षिता — अहं क्खु संकरउरं जेव्व पत्थिदाए पिअसहीए मदअन्तिआए आमन्तिदा। तदो भअवदीए पादवन्दणं कदुअ तहिं गच्छामि।

(अहं खलु शंकरपुरमेव प्रस्थितया प्रियसख्या मदयन्तिकया आमन्त्रिता। ततो भगवत्याः पादवन्दनं कृत्वा तत्र गच्छामि।)

अवलोकिता — तुमं क्खु भअवदीए जस्सिं पओअणे णिउत्ता तत्थ को वुत्तन्तो?

(त्वं खलु भगवत्या यस्मिन् प्रयोजने नियुक्ता तत्र को वृत्तान्तः?

---

वशीकृत्य। तदेवेति प्रागेव माधवेन यदधिष्ठितमित्यर्थः। आनेष्यते प्रापयिष्यते। भगवत्येति प्रकरणात्। अन्योन्यदर्शनं मालतीमाधवयोः परस्परदर्शनम्। भवतीति एतन्निमित्तमित्यर्थः। त्वं पुनः क्व प्रस्थितासि मत्प्रस्थानहेतुस्तावात्तुभ्यं निवेदितः, त्वत्प्रस्थानहेतुरपि कथ्यतामिति भावः।

अहं खलु शङ्करपुरमेव प्रस्थितया प्रियसख्या मदयन्तिकया आमन्त्रिता। ततो भगवत्याः पादवन्दनं कृत्वा तत्र गच्छामि। शङ्करपुरमेवेति तस्या अपि मालत्या इव कृष्णचतुर्दश्यां ईश्वरदर्शनौत्सुक्यं प्रकाश्यते। [मदयन्तिकया] मदयन्तिका नन्दनस्य भगिनीति पूर्वं सूचिता। आमन्त्रिता सहगमनायाहूता पादवन्दनं कृत्वेति पूज्यपूजाव्यतिक्रमस्य श्रेयःप्रतिबन्धकत्वात्।

त्वं खलु भगवत्या यस्मिन् प्रयोजने नियुक्ता तत्र को वृत्तान्त इति 'नियुक्तैव हि मया तत्र प्रियसखी बुद्धरक्षिते'ति सूचितम्। मकरन्दार्थे मदयन्तिकानुकूलनमुच्यते। को वृत्तान्तः का प्रवृत्तिरित्यर्थः।

---

१. 'संकरघरं' क. झ. ध. पाठः, २. 'अदो' ख. ञ. पाठः, ३. 'तहिं जेव्व गं' क. म. पाठः

---

१. 'कानुकूलमुच्यते' ख, 'कानुकूल्यमुच्यते' ग. पाठः।

बुद्धरक्षिता— मए वि भअवदीए समादेसेण तासु तासु वीसम्भकहासु ईरिसो तारिसो त्ति मअरन्दस्स उअरि पिअसहीए मदअन्तिआए परोक्खाणुराओ तह दूरं आरोविदो, जह असे मणोरहो अवि णाम तं पेक्खेअं त्ति ।

(मयापि भगवत्याः समादेशेन तासु तासु विस्रम्भकथासु ईदृशस्तादृश इति मकरन्दस्योपरि प्रियसख्याः मदयन्तिकायाः परोक्षानुरागस्तथा दूरमारोपितः, यथा अस्या मनोरथः अपि नाम तं पश्येयमिति ।)

अवलोकिता— साहु बुद्धरक्खिदे! साहु। (साधु बुद्धरक्षिते! साधु।)

बुद्धरक्षिता— एहि गच्छह्म । (एहि गच्छामः।)

(इति परिक्रम्य निष्क्रान्ते ।)

॥ प्रवेशकः ॥

---

मयापि भगवत्याः समादेशेन तासु तासु विस्रम्भकथासु ईदृशस्तादृश इति मकरन्दस्योपरि प्रियसख्याः मदयन्तिकायाः परोक्षानुरागस्तथा दूरमारोपितः, यथा अस्या मनोरथः अपि नाम तं पश्येयमिति । तासु तास्विति पौनःपुन्यं प्रकाश्यते । विस्रम्भकथास्वित्यनुवादेन तस्याः स्वस्यां विश्वासश्च दृढमुत्पन्न इति व्यञ्जयति । विस्रम्भकथासु विश्वासादशङ्कितं प्रयुक्तेषु सल्लापेषु । ईदृशस्तादृश इति स्वकृतस्य तद्वर्णनस्य प्रपञ्चरूपस्य सङ्ग्रहः । मकरन्दस्य उपरि विषय इत्यर्थः, 'सुरतसुखस्योपरि द्वेष इवासीत्' इति कादम्बर्युक्तवत् । [परोक्षानुरागः] परोक्षे अदर्शनेऽपि श्रवणमात्रे जनितो अनुरागः प्रेमबन्धः । तथा तेन प्रकारेण । दूरं [आरोपितः] परां काष्ठां प्रापितः । यथा येन प्रकारेण । मनोरथः मनसस्तृष्णा । अत्रौत्सुक्याख्यस्य भावस्योदयः प्रतीयत इति भावोदयोऽलङ्कारः ।

साधु बुद्धरक्षिते साध्विति तद्वैदग्ध्यचमत्कारे वीप्सा । कृतमिति हर्षवशादनुक्तिः ॥

एहि गच्छामः । आत्मनि बहुवचनम् । द्वयोर्वा ।

॥ इति प्रवेशकः ॥

---

१. 'मए क्खु अ' क. ख. घ. च. ज. ञ. पाठः ।

---

१. 'मुत्पन्न इति' ज. पाठः, २. कादम्बर्युक्तिवद्' क. पाठः, ३. 'दन्तक्षि' ज. पाठः,

(ततः प्रविशति कामन्दकी ।)

**कामन्दकी—**

तथा विनयनम्रापि मया मालत्युपायतः ।
नीता कतिपयाहोभिः सखीविस्रम्भसेव्यताम् ॥ १ ॥

संप्रति हि—

व्रजति विरहे वैचित्त्यं नः प्रसीदति सन्निधौ
रहसि रमते प्रीत्या दायं ददात्यनुवर्तते ।

---

अथ 'मालतीमनुवर्तमानायाः' इति सूचितायाः यथानिर्दिष्टायाः कामन्दक्याः प्रवेशं नायिकाप्रवेशपूर्वरङ्गमाह— ततः प्रविशतीति । स्वानुष्ठितस्य कामशास्त्रार्थस्याव्यभिचारेण स्वाभिमतार्थप्रावण्यं चमत्करोति— तथेति। तथेत्यनुभवपरामर्शः । विनयनम्रापि गुरुप्रतिपत्त्या प्रावण्यशीलापि । मयेति स्वस्याः शास्त्राभियोगं, मालतीति तस्या अत्युदारप्रकृतित्वात् कृच्छ्रसाध्यत्वं च द्योतयति । उपायतः पारदारिकोक्तदूतीकृत्यानुष्ठानेन । कतिपयाहोभिः परिमितैर्दिवसैः । सखीविस्रम्भसेव्यतां सखीषु लवङ्गिकादिषु यो विस्रम्भः तेन भजनीयताम् ।

'यद्यत्स्वचित्ते स्फुरति तत्तत् परिचितान् प्रति ।
निरशेषं बोधयन् भावो विस्रम्भ इति कीर्तितः ॥'

इति दिवाकरः । अत्र विरोधो निदर्शना चालङ्कारः ॥ १ ॥

अथ तस्या आकारेङ्गिताभ्यां स्वस्यां विस्रम्भमेवोपपादयति— संप्रति हीति ।

व्रजतीत्यादि — विरहे असन्निधौ । वैचित्त्यं विषण्णहृदयत्वम् । नः अस्माकमित्यात्मनि बहुवचनम् । प्रसीदति हृष्यति । सन्निधौ प्रत्यक्षभावे । रहसि अन्यजनैरहिते देशे । मद्द्वितीयै इत्यर्थः । रमते प्रीयते । स्वहृदयप्रकाशनावकाशलाभादित्यर्थः । दायं दीयत इति पारितोषिकमुच्यते । वसनकुसु-

---

१. 'कतिपयाहेन' च. झ. ञ. पाठः. २. 'वैचित्र्यं'. च. ज. पाठः. ३. 'प्रीत्या वाचं ददा' झ. ञ. ज. पाठः.

---

१. 'हृदयताम्' ख. ज. पाठः. २. 'जनविरहिते', ३. 'यत्वं च इत्यर्थः' ज. पाठः.

गमनसमये कण्ठे लग्ना निषिध्य निषिध्य मां
सपदि शपथैः प्रत्यावृत्तिं प्रणम्य च याचते ॥ २ ॥

अङ्गरागकर्पूरादिकम् । अनुवर्तते अङ्गसंवाहनादिभिः प्रियं करोति । गमनसमये कार्यवशादन्यतः प्रयाणकाले । कण्ठे लग्ना कण्ठमाश्लिष्यासुवर्न्तीति । निषिध्य निषिध्य 'इदानीमेवागतं युष्माभिः, किमर्थमद्यैव गम्यत' इति निवार्य । वीप्सया निवारणोपायबाहुल्यप्रयोगकौशल्यं व्यज्यते । अवश्यं गन्तव्ये शपथैः 'मम प्राणैः शापितासि तातस्याम्बायाश्च' इत्यादिभिर्बहुभिः प्रत्ययकरणैः । सपदि प्रत्यावृत्तिं अविलम्बेन प्रत्यागमनम् । प्रणम्य चेति शपथैरपर्याप्तिमाशङ्क्य पादग्रहणाञ्जलिबन्धनादिभिश्चेत्यर्थः । मां प्रत्यावृत्तिं याचत इति दुहादिपाठाद् द्विकर्मकता । अत्र नायिकागतस्याभिप्रायविशेषस्य कार्यमुखेन प्रकाशनादप्रस्तुतप्रशंसालङ्कारः । अत्र च —

"एवं प्रयुज्यमाने लक्षयितव्यस्तदीय आकारः ।
दृष्ट्वा ब्रवीति सस्मितमन्तिकमेवोपवेशयति ॥
पृच्छति भोजनशयने स्वाख्यातं दिशति रहसि वा मिलति ।
निश्वसिति जृम्भते वा स्वचित्तमस्मै ददाति किञ्चिद्वा ॥
यान्तीमेष्यसि पुनरिति वदति, कथं साधुवादिनी भवति ।
वक्ति किमप्यसमञ्जसमित्युक्त्वा तत्कथां भजते ।
इत्याकारप्रकटनमालोच्य प्राभृतं युञ्ज्यात् ॥"

इति कामतन्त्रार्थयोजनं कृतमिति वेदितव्यम् ॥ २ ॥

१. 'कण्ठालग्ना नि' ख. ज. च. पाठः. २. 'निरुध्य निरुध्य' क. ख. ग. घ. ङ. च. छ. ज. झ. ञ. पाठः. ३. 'ध्य सा' ख. च. पाठः.

१. 'कण्ठालग्ना', २. 'त्यादिबहुभिः' क. ग. घ, 'त्यादिभिः प्रत्ययकारणैः' ज. पाठः. ३. 'बन्धादिभिः' ख. पाठः. ४. 'त्वाख्यानं' ग. घ. पाठः. ५. 'भवसि' ग, 'भवती' ज. पाठः. ६. 'इति कामतन्त्रार्थं कृतमिति घ, 'इति मन्त्रार्थयो' ज. पाठः.

इदं च तत्र साधीयः[1] प्रत्याशानिबन्धनम् ।

शाकुन्तलादीनितिहासवादान्
प्रस्तावितानन्यपरैर्वचोभिः ।
श्रुत्वा मदुत्सङ्गनिवेशिताङ्गी
चिराय चिन्तास्तिमितत्वमेति ॥ ३ ॥

अन्यच्च स्वाभिमतार्थानुकूल्यव्यञ्जकं[1] तस्याश्चेष्टितमाह— इदं चेति। इदं वक्ष्यमाणम् । चकारः पूर्वोक्तसमुच्चये । तत्रेति सदा स्वहृदयसंनिहित-[2]तयां प्रस्तुतं वस्तु परामृश्यते, तस्मिन् विषये । साधीयः बाढतरम् । प्रत्याशानिबन्धनं कालेनाप्यनुकूला भविष्यतीति वाञ्छानुवृत्तेर्निमित्तम्[3] ।

'विरोधेऽपि[4] स्फुटे मह्यं कालेनैतद् भवेदिति ।
अनुपेक्षाक्षमत्वं यत् पुंसामाशां वदन्ति[5] ताम् ॥'

इति दिवाकरः ।

शाकुन्तलादीनिति — शाकुन्तलं शकुन्तलामधिकृत्य प्रवृत्तमित्यण्, तदादीन् । इतिहासवादान् महाभारतोक्तीः । अन्यपरैः अर्थान्तरतात्पर्ययुक्तैः कालक्षेपोपयुक्तकण्वादिपुण्यकथासक्तैः । वचोभिः वचनैः । प्रस्तावितान् भगवति कथं कण्वस्य शाश्वतब्रह्मचर्यस्य शकुन्तला दुहितासीदिति प्रसक्तानुप्रसक्तिकया प्रापितान् । स्वयेत्यर्थसामर्थ्यादायाति, अन्यथा शङ्कावहत्वात् । श्रुत्वेति मत्सकाशादित्यर्थः । मदुत्सङ्गनिवेशिताङ्गी मदङ्के स्वैरं मुक्तं शरीरं यस्याः । अनेन मदनजनितो ग्लान्याख्यो भावः प्रकाश्यते । चिराय बहुकालम् । चिन्तास्तिमितत्वं [6]अस्यामवस्थायां मयापि किं शकुन्तलादिवत् प्रतिपत्तव्यमथवा नेति ध्यानेन निश्चलत्वम् । अनेन 'मम तु दयितः श्लाघ्यस्तातः' इत्युक्त्या[7] व्यञ्जितस्य धैर्यस्य शिथिलीकारः प्रकाश्यते । त्रपाविगलनाख्यसप्तमदशाप्रवेशश्च । अत्र च सूक्ष्ममलङ्कारः । इङ्गिताकाराभ्यां संलक्षितसूक्ष्मार्थप्रकाशनात् ॥ ३ ॥

१. 'तत्रासाधीयः' घ. पाठः.

१. 'कूलस्य व्याञ्जितं त' ज. पाठः. २. 'सन्निहितया' ग. घ. पाठः. ३. 'वाञ्छानिमित्तं' ज. पाठः, ४. 'धेष्वस्फुटं मह्यं' ख. पाठः. ५. 'विदन्ति' क. पाठः, ६. 'अस्यामप्यवस्थायां' ख. पाठः. ७. 'इत्यादि व्याञ्जि' ज. पाठः.

तदद्य माधवसमक्षमुत्तरमुपक्रमिष्ये । (नेपथ्याभिमुखमवलोक्य) वत्से! इत इतः ।

(ततः प्रविशति मालती लवङ्गिका च ।)

मालती—(स्वगतम् :—'कथं उवहारीकृतासि' (पृ० १४५-६) इत्यादि पूर्वोक्तं पठति ।)

---

तदद्य माधवसमक्षं माधवस्य सन्निधौ समीप एव । तिरोभूतेन श्रूयमाणत्वात् । उत्तरं 'अथ खलु विधेयः परिचयः' इति पूर्वसूचितमनन्तरकरणीयम् । उपक्रमिष्ये इति पाठः, आरप्स्ये । "प्रोपाभ्यां समर्थाभ्याम्" (१-३-४२) इत्यात्मनेपदविधानात् । वत्से ! इत इत इत्यनेन प्राक्सूचितं शङ्करपुराय प्रस्थानं प्रकाशयति ।

अथाङ्गिनोऽभिलाषविप्रलम्भात्मनः शृङ्गारस्यानुसन्धानं रसदोषपरिहाराय क्रियते, 'अङ्गिनोऽननुसन्धानम्' इत्यादिरसदोषोक्तेः । 'कहं उवहारीकदह्मि' इत्यादिप्रकारान्तरपरिहारेण पूर्वोक्तस्यैव वचनप्रकारस्य कथनं प्रतिनायकद्वेषस्य पितृविचिकित्सायाः नायकानुरागस्य च तथात्वेन दृढत्वं व्यञ्जयितुमिति मन्तव्यम् । विषादेर्ष्याहर्षादिविशिष्टस्य वक्तुः कथितपदं न दोषः, प्रत्युत गुण एव ।

'अविशेषेण पूर्वोक्तं यदि भूयोऽपि गृह्यते ।
तदेकार्थं रसाक्षिप्तचेतसां तन्न दुष्यति ॥'

इति भोजोक्तेः ।

---

१. 'ष्यामि' छ, 'ष्यामः' ज. पाठः. २. 'नेपथ्या' क. छ. ज. झ. ञ. पाठः. ३. 'मुखं वत्से' क. झ. पाठः.

---

१. 'भूतत्वेन' ख. पाठः. २. 'नायकदोषस्य' ख. छ. पाठः. ३. 'विचिकित्सा नायका' ज. पाठः. ४. 'तथात्वे दृढ' ख. छ. पाठः. ५. 'दृढत्वाद् व्यञ्जयितुं' क. पाठः. ६. 'भूयोऽपि कथ्यते' क. पाठः.

लवङ्गिका—सहि! [1]एसो महुरमहुर[2]सोल्लोल्लमञ्जरीकवलणकेलीकलको[3]इलकलहाकुलिदसहआरसिहरुड्डीणचडुलचञ्चरीआणिअरवइअरुद्दलिअदलकरालचम्पआहिवासमणोहरो, [4]मरालजहणपरिणाहुव्वहणमन्थरोरुभर[5]विसण्ठुलुल्लसिदचलणसं[6]चलणोवणीदसेअसीअरसुहाविन्दु[7]जोज्जन्तमुद्धमुहचन्दचन्दणाअमाणसीअलप्फंसो तुमं परिस्सअदि कुसुमाअरुज्जाणमारुदो। [8]ता पविस्सह्म।

(सखि! एष मधुरमधुरसार्द्रार्द्रमञ्जरीकवलनकेलीकलकोकिलकलहाकुलितसहकारशिखरोड्डीनचटुलचञ्चरीकनिकरव्यतिकरोद्दलितदरकरालचम्पकाधिवासमनोहरो मरालजघनपरिणाहोद्वहनमन्थरोरुभरविसंस्थुलोल्लसितचरणसञ्चरणोपनीतस्वेदशीकरसुधाबिन्दुद्योत्यमानमुग्धमुखचन्द्रचन्दनायमानशीतलस्पर्शस्त्वां परिष्वजते कुसुमाकरोद्यानमारुतः। तत्प्रविशामः।)

(इति परिक्रम्य प्रविशतः।)

एसो। [1]एषः मधुरमधुरसार्द्रार्द्रमञ्जरीकवलनकेलिकलकोकिलकलहाकुलितसहकारशिखरोड्डीनचटुलचञ्चरीकनिकरव्यतिकरोद्दलितदरकरालचम्पकाधिवासमनोहरो मरालजघनपरिणाहोद्वहनमन्थरोरुभरविसंस्थुलोल्लसितचरणसञ्चरणोपनीतस्वेदशीकरसुधाबिन्दु[2]द्योत्यमानमुग्धमुखचन्द्रचन्दनायमानशीतलस्पर्शस्त्वां परिष्वजते कुसुमाकरोद्यानमारुतः। तत्प्रविशामः। स्वादुना मकरन्देन भृशसिक्तायाः कुसुमकलिकायाः खण्डनलीलया मधुराव्यक्तकूजितविशिष्टानां परभृतानामहं[3]पूर्विकाजनितेन युद्धेन क्षोभितादतिसौरभचूतवृक्षविशेषात्प्रादुत्पतितस्य चञ्चलस्य भ्रमरसमूहस्य सम्मर्दनविश्लिष्टदलतया ईषद्विशाले[4]र्विकृतेन वा चम्पककुसुमेन योऽधिवासः सुरभीकरणं, तेन हृदयङ्गमः। [5]मरालं समवृत्तमित्युपदेशः। अथवा

१. 'एसो क्खु महुर' क. ख. ग. घ. छ. ज. झ. ञ. पाठः २. 'रसोल्लोसिअमञ्जरी' छ, 'रसाद्दमञ्जरी' ज. पाठः. ३. 'कोइलउलकोलाहलाकुलिद' क. ज. झ. ञ. पाठः. ४. 'मरालमंसलजहण' क. झ. ञ. पाठः. ५. 'विसण्ठुलक्खलिदचलण' ञ. झ. ञ. पाठः. ६. 'सञ्चारमसिणगमणोवणीदसेअ' क. झ. ञ. पाठः. ७. 'बिन्दुलज्जन्तमुद्ध' क. झ. ञ, 'बिन्दूजलमुद्ध' छ. ज. पाठः. ८. 'ता एहि परिक्कमाम्हो'। ज. पाठः.

१. 'एष खलु मधुर' ज. पाठः. २. 'द्योतमान' घ. पाठः. ३. 'पूर्वकया जनितेन' ज. पाठः. ४. 'लेन तेन वा विकृतेन' छ. पाठः. ५. 'मरालसमवृत्तमित्युपदेशः' ग. पाठः.

(ततः प्रविशति माधवः ।)

माधवः—(सहर्षं) हन्त ! परागता भगवती । इयं हि मम—[1]

आविर्भवन्ती प्रथमं प्रियायाः
सोच्छ्वासमन्तःकरणं करोति ।

किञ्चित्पीतरक्तवर्णम् । 'मरालोऽल्पं पीतरक्तं' इति वैजयन्ती । समवृत्तस्य पीतरक्तस्य वा कटिपुरोभागस्य परिणाहो विशालता, तदुद्वहनेन मन्थरयोः अपट्वोः ऊर्वोर्भारेण स्खलितोच्चलितयोः पादयोर्विन्यासश्रमेण सम्भृताः स्वेदजलकणिका एव अमृतशीकराः, तैरलङ्क्रियमाणस्य कोमलस्य मुखचन्द्रस्य शीतलतया चन्दनद्रववदाचरन् स्पर्शो यस्य । अत्र ललिताख्यो भावः प्रकाश्यते ।

'सुकुमारोऽङ्गविक्षेपो मसृणो ललितं भवेत् ।'

इति वचनात् । मुखस्य चन्द्रत्वेन रूपणात् स्वेदशीकराणां सुधाबिन्दुत्वेन रूपणोपपत्तिः । परिष्वजतिना आलिङ्गतीति बन्धुसमाधिः । अत्रोदात्तं स्वभावोक्तिश्चालङ्कारः ।

ततः प्रविशति माधव इति—रक्ताशोकगहनावस्थानस्य सूचितत्वात्तथाभावेन प्रविष्ट इत्यर्थः । हन्तेति हर्षे । परागता प्राप्ता । तदागमनस्य हर्षहेतुत्वमेवोपपादयति—इयं हि ममेति । हिशब्दः संवादे ।

आविर्भवन्तीत्यादि । आविर्भवन्ती चक्षुर्गोचरं गच्छन्ती । प्रथमं अग्रे । सोछ्वासमिति सन्ततदुःखानुभवजनितमोहनिरुछ्वासं मनः सम्प्रति संजीवितं करोतीत्यर्थः । भगवत्याविर्भावस्य प्रियासमागमनसूचकत्वमात्रेण प्रियादर्शनस्यैव समप्रसादहेतुत्वात् सोछ्वासत्वोक्तिः ।

'पूर्वापराधभीतस्य कामस्योच्छ्वसितं मनः ।'

इति,

१. 'हि एवं मम' ङ. पाठः.

१. 'पीतरक्ते' ज. पाठः. २. 'मन्दयो' क. ज. पाठः. ३. 'मधुरो' क. पाठः. ४. 'जति आलिङ्गति' क. ख. घ. छ. ज. पाठः. ५. 'नावस्थस्य', ६. 'सजीवितं', ७. 'सोच्छ्वासोक्तिः' ज. पाठः.

सन्तापदग्धस्य शिखण्डियूनो-
र्वृष्टिः पुरस्तादचिरप्रभेव ॥ ४ ॥

दिष्ट्या लवङ्गिकाद्वितीया मालत्यपि —

आश्चर्यमुत्पलदृशो वदनामलेन्दु-
सान्निध्यतो मम मुहुर्जडिमानमेत्य ।

'अगणिअदहमुहदप्पंणिव्वूढभरं व तक्खणं ऊससिअम् ।'

इति च प्रयोगात् । सन्तापदग्धस्य स्मरशरज्वरमर्दितस्य । घर्मदुर्मदतरणिकिरणपरितप्तस्य चेति स्वस्य शिखण्डियूनश्च साधारणो धर्मः । शिखण्डियूनः तरुणमयूरस्येत्यदुःखार्हत्वं द्योत्यते । अचिरप्रभा विद्युत् । तत्स्फुरणस्य समनन्तरजलधारापातपिशुनकत्वाद् उपमानेन सन्तापस्यानन्योपायसाध्यत्वं, तत्प्राप्तौ निरतिशयसुखप्राप्तिरकृत्रिमप्रेमबन्धनत्वं च प्रकाश्यते । उपमालङ्कारः ॥ ४ ॥

दिष्ट्या दैवानुकूल्यात् । अपिः परागतेत्यनुकर्षणार्थः ।

अथ प्रियादर्शनात् पूर्वोत्तरक्षणयोरतिविलक्षणमवस्थाविशेषमनुसन्दधान आह — आश्चर्यमुत्पलदृश इत्यादि । वदनामलेन्दुसान्निध्यतः मुखमेव निष्कलङ्कश्चन्द्रः, तस्य सन्निधिरेव सान्निध्यं प्रत्यक्षत्वम् । चातुर्वर्ण्यादिवत् स्वार्थे तद्धितप्रत्ययः । 'पञ्चम्यास्तसिल्' (५-३-७) । मुहुः क्षणात् । 'मुहुः क्षणेऽनुक्षणे च' इति वैजयन्ती । जडिमानं सन्तापविरहाच्छैत्यम् । 'अप्रतिपत्तिर्जडते'त्यर्थः तत्र न घटते । सन्तापदग्धस्येति पूर्वप्रस्तुतसन्तापस्यैव शमनप्रतिपादनौचित्यात्, अनन्तरं द्रवत्वोक्तेश्च । जात्येन विशुद्धस्वजातिभवेन कलङ्कादिरहितेनेत्यर्थः । तस्यैव झटिति स्वकार्योत्पादनात् । चन्द्रमणिना चन्द्र-

१. '(हञ्जा) अये लवङ्गि' क. ग. पाठः.

१. 'शरमर्दितस्य' छ. पाठः. २. 'स्येत्यदुःखादरत्वं द्योत्यते' छ, 'स्येत्यदुःखावरत्वं द्योतयति' ज. पाठः. ३. 'समनन्तजलधारापिशुनत्वाद् उपमा यूनः सन्तापस्यानन्योपाय' ज. पाठः, ४. 'पिशुनत्वात्' क, ख. पाठः. ५. 'त्यनुकरणार्थः' ज. पाठः. ६. 'सन्तापविरहदेश्यम् । अप्र' ज. पाठः. ७. 'भावी कलङ्कादि' क. ख. पाठः. ८. 'स्वकार्योपादानात्' ख. पाठः.

जाल्येन चन्द्रमणिनेव महीधरस्य
सन्धार्यते द्रवमयो मनसा विकारः ॥ ५ ॥

सम्प्रति रमणीयतरा मालती —
ज्वलयति मनोभवाग्निं
मदयति हृदयं कृतार्थयति चक्षुः ।

कान्ताख्यरत्नेन । स्फटिकविशेषत्वेन चन्द्रकान्तस्य । रत्नशास्त्रे तस्यापि रत्नेष्वन्यतमत्वोक्तेः । महीधरस्य कैलासादेः पर्वतस्य । महीधरोपमानेन अतिस्थिरप्रकृतेरपि दृश्यमानवस्तुस्वभावमहिम्नैव जडत्वद्रवत्वोपपत्तिः प्रकाश्यते । सन्धार्यते सम्यग्गृह्यते । द्रवमयः आर्द्रतास्वरूपः । किमस्याः प्रियं करवाणीति बुद्धिजनकानुकूल्यविशेषरूपो विकारः क्षोभः ।

'यद्यदस्य प्रियं वेत्ति तस्य तस्याशुकारिकाम् ।
योग्यतामार्द्रतां प्राहुर्मनःकालुष्यनाशिनीम् ॥'

इति दिवाकरः । अथवा रसपरवशतामात्रम् ,

'यत्र सन्ति द्रवश्चित्ते प्रेमाश्रुपुलकोद्गमाः ।'

इतिवत् । मम मनसा इत्यनेनापीयं परमानन्दावस्थानुभूयत इति दिष्ट्या वर्धामह इत्यर्थः । चन्द्रमणिपक्षे तु जडिमा दिवातनोष्मसम्पत्तिशमनात् सहजशैत्याविर्भावः । द्रवत्वं सलिलबिन्दुनिष्यन्दः । उपमया सान्निध्ये जाड्यद्रवत्वानुभूतिः, असान्निध्ये यथापूर्वं सन्तापानुवृत्तिश्च द्योत्यते । अत्रावेगहर्षयोश्च भावयोः प्रशमोदयौ ज्ञेयौ । सङ्करोऽत्रालङ्कारः, रूपकोपमाश्लेषाणामन्योन्यानुग्राह्यानुग्राहकभावेनावस्थितेः ॥ ५ ॥

सम्प्रतीति—पूर्वावस्थातोऽपि । रमणीयतरा सौन्दर्यशालिनी । षोडशवर्णं सुवर्णमिव हिरण्यरेतसा कन्दर्पेण निर्भरमुपताप्यमानत्वादिति भावः ।

'न तु ग्रीष्मस्यैवं सुभगमपराद्धं युवतिषु ।'

इति शाकुन्तलोक्तेः ।

ज्वलयतीत्यादि । दर्शनाह्लादेन क्षणमुपशमात् अङ्गारावस्थं मदनानलं विभितद्दढोपगूहितर्षेण विप्रकर्षेण पुनः सन्धुक्षयतीत्यर्थः । मदयति वैर्य-

१. 'मनसो विकारः' क. ख. छ. ज. पाठः.

१. 'तस्याशुकारिता' ख पाठः. २. 'पुलकोत्सवाः' ख. ग. घ. छ. पाठः. ३. 'उपमाया' ग. घ. ज. पाठः. ४. 'गूढतर्षेण' ज. पाठः. ५. 'दमयति' क. पाठः.

परिम्लदितचम्पकावलि-
विलासलुलितालसैरङ्गैः ॥ ६ ॥

**मालती** — सहि ! इमस्सिं कुञ्जणिउञ्जे कुसुमाइं अवचिणुह्म ।
(सखि अस्मिन् कुञ्जनिकुञ्जे कुसुमान्यपचिनुवः ।)

**माधवः** —

प्रथमप्रियावचनसंश्रवस्फुरत्-
पुलकेन सम्प्रति मया विडम्ब्यते ।
घनराजिनूतनपयःसमुक्षण-
क्षणबद्धकुड्मलकदम्बडम्बरः ॥ ७ ॥

---

भूतमपि मनः परवशीकरोति । अथवा तद्दशाविशेषस्य स्वाभिलषितानुलोम्यात् सगर्वं करोतीत्यर्थः । **कृतार्थयति** द्रष्टव्यविषयमाधुर्यातिभूमेर्दृष्टत्वाद्दर्शनमात्रसाधनत्वाच्च चक्षुः पूर्णमनोरथं करोतीत्यर्थः । परिमृदितायाः करतलस्पर्शादिखेदितायाः चम्पकावल्याः चम्पककुसुममालाया इव विलासः शोभा येषां तैः । चम्पकावलिग्रहणं तत्सावर्ण्याल्लावण्यस्य मार्दवातिशयाच्चेति मन्तव्यम् ।

'कुवलयदलकान्तिः कापि चाम्पेयगौरी ।'

इति **मदनतन्त्रे** प्राशस्त्योक्तेश्च । तत्र हेतुः—**लुलितालसैः** सरग्लानतया क्रियास्वपटुभिः [अङ्गैः] करचरणादिभिः । अत्र दीपकमलङ्कारः । मालतीरूपस्यैकस्य कारकस्य ज्वलयतीत्यादिबहुक्रियाभिः सम्बन्धात् ॥ ६ ॥

सहि । सखि अस्मिन् कुञ्जनिकुञ्जे कुसुमान्यपचिनुवः ।

प्रथमेत्यादि । [प्रथमप्रियावचनसंश्रवस्फुरत्पुलकेन] प्रथमेन तत्पूर्वेण, स्वस्य प्रियावचनसंश्रवणेन दयिताभाषणाकर्णनेन, स्फुरन्तः प्ररोहन्तः पुलका रोमोद्भेदा यस्य तेन । घनराजेर्मेघमालायाः । नूतनेन प्रावृडारम्भे तत्प्रथमेन । पयःसमुक्षणेन जलधारावसेकेन । **क्षणबद्धकुड्मलकदम्बडम्बरः** क्षणात् बद्धकुड्मलस्य सर्वाङ्गीणप्ररूढकोरकस्य नीपवृक्षस्य, डम्बरः संरम्भः, लक्षणया तस्य विभ्रम इत्यर्थः ।

---

१. 'माइं ओइक्षह्म' ख. पाठः. २. 'प्रथमं प्रिया' छ. पाठः. ३. 'मयावलम्ब्यते' ख. छ. च. ज. पाठः. ४. 'क्षणलब्धकुड्मल' छ. पाठः.

---

१. 'दर्शनस्वाच' क. पाठः. २. 'श्रवणे दयिता' क. ख. पाठः. ३. 'वसेकेन तत्क्षणादुद्' ग. घ. पाठः.

लवङ्गिका—सहि ! एव्वं करेह्म। (सखि ! एवं कुर्वः ।)

(पुष्पापचायं नाटयतः ।)

माधवः— अपरिमेयाश्चर्यमाचार्यकं भगवत्याः ।

मालती—सहि! इदो वि अवराइं अवचिणुह्म । इदो इदो ।

(सखि ! इतोऽप्यपराण्यपचिनुवः । इत इतः ।)

कामन्दकी—(मालतीं परिष्वज्य) विरम निःसहासि जाता ।

'आडम्बरस्तु संरम्भे पटहे गजगर्जिते ।'

इति वैजयन्ती । अत्रोपमा यथासंख्यं निदर्शना चालङ्कारः । प्रियादीनां धनराज्यादिभिः उपमितत्वात्, क्रमसम्बन्धात्, डम्बरसदृशो डम्बर इत्युपमापरिकल्पनाच्च ॥ ७ ॥

सखि! एवं कुर्वः । पुष्पोपचायमिति पाठः ।

मालत्यानयनस्वहस्तपुष्पापचयादिरूपं स्वमनोरथानुरूपं कामन्दक्या नवप्रयोगं चमत्करोति माधवः—अपरिमेयाश्चर्यं अपरिच्छेद्याद्भुतप्रयोगम् । आचार्यकम् उपायोपदेशवैदग्ध्यम् ।

इतोऽप्यपराण्यपचिनुवः । इत इत इति प्रदेशान्तराभिनयः । अपिशब्देनाशक्तावप्यादरातिशयः प्रकाश्यते ।

सौकुमार्यातिशयजनितं पुष्पापचायखेदं ज्ञात्वा सानुनयमाह— परिष्वज्येति । देवताराधनादादरातिशयचमत्कारेणालिङ्गनसत्कारमनुष्ठायेत्यर्थः । विरम निवर्तस्व । असाद्व्यापारादिति शेषः । 'व्याङ्परिभ्यो रमः' (१-३-८३) इति परस्मैपदम् । निस्सहा सोढुमशक्ता । 'स्मरपरिभवनिस्सहातिदीर्घैः' इति मुरारियुक्तेः ।

१. 'करह्म' ख. ग. ङ. च. पाठः. २. 'माल—इदो' ग. घ, 'माल—सहि देण इदो' ज. पाठः. ३. 'अण्णाइं अव' क. ङ. ञ, 'एदाइं अव' छ, 'अवराइं अव' ज. पाठः. ४. 'इ ओइअह्म' ख. पाठः. ५. '(ज्य) अयि विरम' क. ग. ङ. झ, '(ज्य) अयि विरम विरम' ख. ज. ञ. पाठः. ६. 'जाता तथाहि—स्खल' क. झ. ञ. पाठः.

१. 'पुष्पापचयमिति', २. 'स्वकृष्णानयनप्रयोगं' ज. पाठः.

स्खलयति वचनं ते संसयत्यङ्गमङ्गं
जनयति मुखचन्द्रोद्भासिनः स्वेदबिन्दून् ।
मुकुलयति च नेत्रे सर्वथा सुभ्रु! खेद-
स्त्वयि विलसति तुल्यं वल्लभालोकनेन ॥ ८ ॥

(मालती लज्जां नाटयति ।)

निस्सहात्वमेवोपपादयन्ती तुल्यविशेषणेन पताकास्थानकेन प्रत्यासन्नं प्रियतमसन्दर्शनं सूचयति स्खलयति वचनमित्यादिना ।

"प्रस्तुतागन्तुभावस्य वस्तुनोऽन्योक्तिसूचनम् ।
पताकास्थानकं तुल्यसंविधानविशेषणम् ॥"

इति धनिकोक्तेः । वचनं स्खलयति वचःप्रसरं प्रतिहतं करोति । अङ्गमङ्गं प्रत्येकं हस्तपादादिकम् । संसयति स्रस्तं स्वव्यापाराक्षमं करोति । संश्रयतीति तु पाठे परस्परसंश्रितं करोतीति णिजर्थो ज्ञेयः । मुखचन्द्रोद्भासिनः मुखरूपे चन्द्रे उद्भासनशीलान् । तस्यामृतबिन्दुनिष्यन्दौचित्यात् स्वेदबिन्दूनां मुखसम्बन्धोक्तिः । प्रथमं ललाटतलगण्डमण्डलेषु तेषामाविर्भावात् । मुकुलयति कुड्मलं करोति । सादृश्यलक्षणया सम्मीलयतीत्यर्थः । सर्वथा सर्वेण प्रकारेण । सुभ्रु इति भ्रूलतयोरपि तदानीं स्रस्ततया सविशेषरमणीयत्वं सूचयति । खेदः श्रमः । विलसति उत्कटतया प्रतीयते । तुल्यं सदृशं यथेति क्रियाविशेषणम् । वल्लभालोकनेन प्रियतमस्य दर्शनेन । कर्मणि षष्ठ्याः कृदन्तेन समासः, न पुनः कर्तरि षष्ठ्याः । तथा व्याख्याते नायिकया तु अदृश्यमानेन नायकेन दृश्यमानायास्तस्या वचनस्खलनादीनामनुपपत्तेः । 'तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम्' (२-३-७२) इति तृतीया । अत्रार्थश्लेषोऽलङ्कारः, अर्थद्वारेणौपम्यप्रतीतेः । खेदजनितानां वचनस्खलनादीनां वस्तुतो भेदेऽपि वल्लभालोकनजनितैस्तैरभेदो अतिशयोक्त्याध्यवसीयते । कैशिकीवृत्त्यङ्गभूतं वचोहास्यनर्म चेदमनुसन्धेयम् ।

१. 'स्खलयसि वचनं' ख. पाठः. २. 'ते संश्रयत्यङ्ग' क. ज. पाठः । ३. 'खेदं त्वयि' ख. पाठः. ४. 'लज्जते)' क. झ. पाठः.

१. 'पपादयति तुल्य' ज. पाठः. २. 'स्थानप्रत्यासन्नं' ग. पाठः. ३. 'सूचकं' ख. पाठः. ४. 'स्रंसयति स्वव्यापाराक्षमत्वं करोति' ख. ज. पाठः. ५. 'शीलात् तस्या' क. ङ. ब. पाठः. ६. 'प्रियस्य दर्शनेन' ज. पाठः. ७. 'रभेदातिशयोक्त्या' ङ. पाठः.

लवङ्गिका—सोहणं[1] भअवदीए आणत्तं । (शोभनं भगवत्या आज्ञप्तम् ।)

माधवः—हृदयङ्गमः परिहासः ।

काम—तदास्यतां । किञ्चिदाख्येयमाख्यातुकामास्मि ।

(सर्वा उपविशन्ति ।)

---

'वैदग्ध्यक्रीडितं नर्म प्रियोपच्छन्दनात्मकम् ।'

इत्युक्तेः । मुखाङ्गं नर्म चेदं परिहासवचःप्रयोगात ॥ ८ ॥

लज्जां नाटयतीति ।

'दुराचारादिभिर्व्रीडाधार्ष्ट्याभावस्तमुन्नयेत् ।

साचीकृताङ्गावरणवैवर्ण्याधोमुखादिभिः ॥'

इति वचनात् साचीकृताङ्गत्वादिकं अभिनयतीत्यर्थः ।

शोभनं भगवत्या आज्ञप्तम् । सुष्ठु सखिन्नैवेयमित्यर्थः ।

हृदयङ्गमः मनोहरः । परिहासः क्रीडाभाविनः स्वसन्दर्शनस्य भ[illegible] प्रकाशनादिति भावः ।

तदिति— यस्मात् खेदस्त्वयि प्रकाशते तस्मात् । आस्यतां उपविश्यताम् । किञ्चिदिति 'प्रसृतसद्भावायां च कार्यशेषमित्थं वदेत्' इति कामसूत्रोक्तेः । 'व्रजति विरहे वैचित्यम्' इत्यादिभिः प्रकटीकृतसद्भावां नायिकां प्रति कार्यशेषकथनोपक्रमः । किञ्चिदिति सामान्यकथनम् । हृदयज्ञतयेदमियं विवक्षतीति सा विसंवदति न वेति परीक्षार्थमिति मन्तव्यम् ।

संवादं दर्शयति — उपविशन्तीति । 'देवताराधनमिदानीं कर्तव्यम् । अम्बा विलम्बं न सहते' इत्यादिप्रत्याख्यानप्रकारपरिहारेण तत्सम्मतिं द्योतयति । सर्वाः कामन्दकी मालती लवङ्गिका चेत्यर्थः ।

---

१. 'सोहणं क्खु भअ' ख. पाठः.

---

१. 'आमुखाङ्गं' क. पाठः. २. 'वचनप्रयोगात्' क. पाठः. ३. 'भावं तमुन्नयेत्' क. ख. पाठः. ४. '[illegible]त्वमभिनयती' क. पाठः. ५. 'सुष्ठु सखिन्नेयमित्यर्थः' क, 'सुष्ठु खिन्नैवेयमित्यर्थः' ज. पाठः. ६. 'प्रकाशयते' ख. पाठः. ७. 'प्रकटित' क. ख. ग, 'प्रकटीकृतसंभावां' ख. पाठः. ८. 'प्रत्याख्यानपरिहारेण' ज. पाठः. ९. 'ण तत्साक्षिकं' ख, 'ण सम्मतिं' छ. पाठः ।

**कामन्दकी**—(मालत्याश्चिबुकमुन्नमय्य[1]) शृणु विचित्रमिदं[2] सुभगे!

**मालती**—अवहिदह्मि । (अवहितास्मि ।)

**कामन्दकी**—अस्ति तावदेकदा प्रसङ्गतः कथित एव मया माधवाभिधानः[3] कुमारः, यस्त्वामिव मामकीयस्य[4] मनसो[5] द्वितीयं बन्धनम्[6]।

**लवङ्गिका**—सुमरामो । (स्मरामः ।)

---

चिबुकं मुखादधोभागम् । उन्नमय्य त्रपावनतिं प्रतिहन्तुं करेणोत्तम्भ्योपलाल्येत्यर्थः । शृण्वित्यादि कामसूत्रमेव स्मारयति । तदविसंवादं निश्चित्य कार्यकथनप्रकारः — सुभगे! इति । दिष्ट्या वर्धसे । स्वानुरूपवरप्रार्थनीयत्वादिति प्रोत्साहनम् । विचित्रमाश्चर्यम् । असम्भाव्यमिदं वस्तु दैवेनापतितमित्यर्थः[1] ।

प्रोत्साहनफलं दर्शयति — अवहितास्मि श्रोतुमेकाग्रतया स्थितास्मीत्यादरातिशयः प्रकाश्यते ।

प्रसङ्गतः 'अस्सत्थसरीरो माहवो त्ति' अवलोकितावचनप्रस्तावात् 'भअवदि को एसो माहवो त्ति' लवङ्गिकाप्रश्नेनेत्यनुस्मारयति । कथित एवेति अभिजनतो गुणतश्च निवेदित एव । न तु तत्सत्त्वादिकमद्य[2] कथनीयमित्यर्थः । अश्रुतस्यैव बुभुत्सिततया व्याख्येयत्वात् । मामकीयस्य मत्सम्बन्धिनः । (द्वितीयत्वं तावद्[3]?) बन्धनं निगलो विषयान्तरपरिभ्रमणनिवारणेन[4] दृढं धारितत्वात् । द्वितीयं त्वत्तोऽन्यदित्यर्थः । द्वितीयशब्दप्रयोगेऽपि त्वमिवेत्युक्तिः किञ्चिदप्यन्यूनत्वं प्रकाशयितुम् । कुमारस्तावदस्तीत्यन्वयः[5] ।

स्मरामः न त्विदानीं स्मृतमिति तस्य सदानुसन्धीयमानत्वं द्योतयति । अवहिदह्मीति मालत्या अवधानदाने सुमरामो इति लवङ्गिकायाः प्रतिवचनं तस्या व्रीडामुद्रितत्वात् तद्रूपेणावस्थिता सखी प्रतिवक्तीति सूत्रयति ।

---

१. 'श्चुबुकमुन्नमय्य' ज. झ. ञ. पाठः. २. 'चित्रमिदं' ज. पाठः. ३. 'एवं माधवा' ग. ङ. पाठः. ४. 'मामकीनस्य' ख. छ. झ. ञ, 'मामकस्य' ङ. पाठः. ५. 'हृद्य हृदयस्य द्वि' ख. झ. पाठः. ६. 'निबन्धनं' क. झ. ञ. पाठः.

---

१. 'दैवेनापातितम्' घ, 'दैवेनोपपादितं' ङ. पाठः. २. 'तत्सत्त्वाकमद्य'; ३. 'तावन्निबन्धनं निगलं विषया' ज. पाठः. ४. 'परिभ्रमनिवारणेन' ग. पाठः. ५. 'स्तावदित्यन्वयः' ग. घ. पाठः.

कामन्दकी — स खलु मन्मथोद्यानयात्रादिवसात् प्रभृति दुर्मनायमानः परवानिव शरीरोपतापेन ।

यदिन्दावानन्दं प्रणयिनि जने वा न भजते
व्यनक्त्यन्तस्तापं तदयमतिधीरोऽपि विषमम् ।

खलु प्रसिद्धौ । मया कथितो भवतीभ्यां विदितश्चेत्यर्थः । दुर्मनायमानः दुःखितहृदयो भवन् । 'कर्तुः क्यङ् सलोपश्च' (३-१-११) इति क्यङ् । परवानिव परवश इव । शरीरोपतापेन शारीरेण ज्वरेण हेतुना । अत्र च दुर्मनायमान इति मानसस्य, शरीरोपतापेन इति शरीरस्य दुःखस्य च सद्भाव उक्तः ।

तदन्वयव्यतिरेकाभ्यामुपपादयति — यदिन्दावित्यादि [इन्दौ] चन्द्रे । दृष्ट इति शेषः ।

'अग्नेः शीतेन तोयस्य तृषा भक्तस्य च क्षुधा ।
क्रियते सुखकर्तृत्वं तद्विलोमस्य चेतरैः ॥'

इति न्यायात् । देशकालदशाविशेषवशाद् अनैकान्तिकं चन्द्रस्य सुखावहत्वमाशङ्क्याह —वेति पूर्वोक्ताव्यावृत्तौ । प्रणयिनि जने प्रकृष्टप्रेमास्पदे मकरन्दादावित्यैकान्तिकं आनन्दहेतुत्वं द्योतयति । न भजते न प्राप्नोति । भजते न पुनरभजिष्टेति पूर्वावस्थातो व्यतिरेकं दर्शयति । यत् यस्मात् । तत् तस्मात् । व्यनक्ति प्रकाशयति । अन्तस्तापं मानसं दुःखम् । अतिधीरः अत्यन्तं गम्भीरः ।

'वेदनां यस्तु शक्नोति नियन्तुं बहुला अपि ।
उद्युक्तश्चेत् स्वबुद्ध्यैव नरोऽसौ धैर्यवान् मतः ॥'

इति दिवाकरः । अपिर्विरोधे । निह्नोतुं शक्यत्वे निह्नुत एव । तदशक्त्याभिव्यनक्तीति दशाया अतिभूमिगतत्वं द्योतयति । विषमं क्षणे क्षणे मोहादि-

१. 'मदनोद्यान' छ. ज. ञ. पाठः. २. 'पेन । तथाहि— यदिन्द' ज. ञ. पाठः. ३. 'विषमः' ङ. पाठः.

१ 'शारीरस्य' ख. छ, 'शारीरस्य च दुःखसद्भाव' ज. पाठः. २. 'पुनरभजिष्टेति' क. ग. घ. ङ. पाठः. ३. 'मनोदुःखं' क. 'मानसदुःखं' ग. घ. ङ. पाठः. ४. 'विषमः' ख. पाठः.

प्रियङ्गुश्यामाङ्गप्रकृतिरपि चापाण्डुमधुरं
वपुः क्षामक्षामं वहति रमणीयश्च भवति ॥ ९ ॥

---

कार्यभेदजननाद् बहुविधः । प्रियङ्गुश्यामाङ्गप्रकृतिः फलिनीलतावत् स्निग्ध-श्यामला अङ्गप्रकृतिः शरीरस्वभावो यस्य सः । अपिरत्रापि विरोधे । तस्मिन्नापाण्डुत्वविरोधात् । चकारो भिन्नक्रमः । वपुश्च वहति इत्यन्वयः । [आपाण्डुमधुरं]आपाण्डु ईषत्सितवर्णीभूतम् । मधुरं अनुल्बणं औद्धत्यविरहात् । क्षामक्षामं अतिकृशीभूतम् । वहतीति वर्तमाननिर्देशादत्रापि व्यतिरेकः । क्रमोक्त्या मनस्तापहेतुकत्वमितरस्य प्रकाश्यते ।

'मनःशरीरयोस्तापः परस्परमभिव्रजेत् ।
आधाराधेयभावेन तप्ताज्यघटयोरिव ॥'

इति वैद्यकोक्तेर्ज्वरादिहेतुकत्वमपि मनस्तापस्य किं न स्यादित्याशङ्कां निवारयितुम् । भवतु नाम मनस्तापहेतुकत्वमपरस्य । स पुनः पित्रादिदर्शनोत्कण्ठामूलः किं न स्यादित्याशङ्कां निवारयति— रमणीयश्च भवतीति । कारणान्तर-जन्यत्वे मनस्तापस्य विच्छाय्यत्वादिकमवश्यं भवत्येव । असौ तु निर्मल-लावण्यः क्षणे क्षणे भवतीत्यतः पारिशेष्यान्मन्मथोन्मादहेतुकत्वमेवेत्युपपत्त्या स्थापयति ।

'चिन्ताजागरणप्रतान्तनयनस्तेजोगुणादात्मनः
संस्कारोल्लिखितो महामणिरिव क्षीणोऽपि नालक्ष्यते ।'

इति शाकुन्तलादिप्रसिद्धेः । शोकात्मनः कारणस्य पित्रादिविरहजातस्य पुनः

'अश्रुपातो मुखे शोषः स्वरभेदो विवर्णता ।'

इत्यादिभिरनुभावै रमणीयत्वदर्शनात् । अत्रातिशयोक्तिरनुमानं तुल्ययोगिता चालङ्कारः ॥ ९ ॥

---

१. 'क्षामं क्षामं' क. ज. झ. ञ. पाठः. २. 'रमणीयं च' क पाठः.

---

१. वर्णभूतं' क, छ, पाठः. २. 'क्रमोक्त्याश्च मनस्ताप' ज. पाठः. ३. 'नाम हेतुकत्वमपि परस्य' छ पाठः. ४. 'स्य । पुनः पुत्रादर्शनोत्कण्ठामूलः' ज. पाठः. ५. 'शङ्कां निवर्तयति' क. ग. घ. छ. पाठः. ६. 'पारिशेषान्मन्म' क, 'पारि-शेष्यान्मन्म', घ. पाठः. ७. 'न्माथहेतुकत्व' ज. पाठः. ८. 'पुत्रादिविरहतापस्य' ज. पाठः, ९. 'भावैररमणीयत्ववचनात्' ग, 'भावैररमणीयत्वदर्शनात्' छ, 'भावै रमणीयत्ववचनात्' ज. पाठः.

**लवङ्गिका** — एदं पि तस्सिं अवसरे भअवदीं तुवराअन्तीए[1] अवलोइदाए उदीरिदं आसि जधा अस्सत्थसरीरो माहवो त्ति ।

(एतदपि तस्मिन्नवसरे भगवतीं त्वरयन्त्यावलोकितया उदीरितमासीत् यथा अस्वस्थशरीरो माधव इति ।)

**कामन्दकी** — यावदश्रृणवं[2], मालत्येवास्य[3] मन्मथोन्मादहेतु-रिति । ममापि स एव निश्चयः ।

---

एतदपि तस्मिन्नवसरे भगवतीं त्वरयन्त्यावलोकितया उदीरितमासीत् । एतद् माधवस्यास्वास्थ्यरूपं वस्तु । तस्मिन्नवसरे प्रसङ्गतः कथनारम्भकाले[1] । त्वरयन्त्या शीघ्रगमनाय प्रेरयन्त्या । उदीरितं कथितम् । 'चिराइदं भ-अवदीए । अस्सत्थसरीरो माहवो त्ति' इत्युक्तिमनुसन्धत्ते ।

अथ सामान्यतोऽवगतं मन्मथोन्मादं[2] कारणविशेषे नियच्छति —याव-दिति । यावच्छब्दोऽवधारणे ।

'यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे ।'

इति वैजयन्ती । मन्मथोन्मादः कामजनितं मनसः उन्मार्गगमनम् । 'उन्माथः' इति वा पाठः । उद्भूतः क्षोभः इत्यर्थः । मालत्येवास्य मन्मथोन्मादहेतु-रित्यश्रृणवं श्रुतवत्येवेत्यवधारणेन बहूनां वक्तृणामेकवाक्यत्वं द्योत्यते ।

'गतानुगतिको लोको न लोकः पारमार्थिकः ।'

इति न्यायात् । वक्तृणामनाप्तत्वे कल्पनान्तरहेतुकत्वस्यापि[3] सम्भावनादवधारणे[4] वैयर्थ्यमित्याशङ्कयाह— ममापीति । न केवलं वक्तृजनप्रत्ययादेव निश्चयः । किं तर्हि ? ममापि । अपिः समुच्चये । स एव यस्तेषां वक्तृणां निर्णयः स एव निर्णयो ममापीत्यर्थः ।

---

१. 'तोरावअन्तिए' ख. ग. ङ. पाठः. २. 'दहमश्रृणवं' छ. ज. पाठः. ३. 'त्येव स मन्मथो' छ. पाठः.

---

१. 'प्रसङ्गत्वकथनारम्भकाले' ग. घ. छ. पाठः. २. 'न्मादकं कारण' घ. पाठः. ३. 'हेतुकस्यापि' क. पाठः, ४. 'नावधारणे' ग. घ. पाठः. ५. 'धारणवैयर्थ्य' ङ. पाठः.

अनुभवं वदनेन्दुरुपागम-
नियतमेष यदस्य महात्मनः ।
क्षुभितमुत्कलिकातरलं मनः
पय इव स्तिमितस्य महोदधेः ॥ १० ॥

---

कुत इयमवधारणेत्यत्र प्रतिज्ञापूर्वकं हेतुमुपन्यस्यति— अनुभवमि-त्यादि । अनुभवशब्देनात्रानुभूतित्वा[1]वान्तरजातिः साक्षात्त्वापरपर्यायम् अपरोक्षत्वं विवक्ष्यते । वदनेन्दुः इन्दुरिव वदनम् । 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' (२-१-५६) इत्युपमासमासः । पय इवेत्युप[2]मानुगुण्यात् । नियतं निश्चितमिति क्रियाविशेषणम् । एष इति पुरोवर्तिनो मालतीवदनेन्दोरनुभवद्योतकेन अभिनयेनाशक्यवर्णनत्वनिर्देशः । अनुभवं नियतमुपागमत् प्राप्त इति प्रतिज्ञा । अस्य माधवस्य । महात्मनः महान् ईदृशैस्तादृशैर्विषयैरक्षोभ्यः आत्मा मनो यस्य । क्षुभितं उ[3]द्वेलविकारम् । उत्कलिकातरलम् उत्कण्ठया निजधैर्यं त्याजितं म[4]हद्भिस्तरङ्गैश्चञ्चलं च ।

'.... .... .... उत्कण्ठोत्कलिके समे ।'
'ऊर्मिः कल्लोल उल्लोललहर्युत्कलिकेति च ॥'

इति वैजयन्ती । स्तिमितस्य निवाततया पूर्वं निश्चलस्य । अत्र सङ्करोऽलङ्कारः । महात्मनोऽस्य मनः स्तिमितस्य महोदधेः पय इवेति बिम्बभावेन निर्देशाद्, दृष्टान्तस्य वदनेन्दुरित्युपमयानुगृहीतत्वाद्, उत्कलिकातरलमिति श्लिष्टं साधारणं विशेषणम् । अनुमानं चालङ्कारः, साध्यसाधनभावप्रतिपादनात् । यथाहीन्दुदर्शनादेव सिन्धुराजो विकुरुते, न पुनस्तारकादिदर्शनात् । एवमसावपि त्वन्मुखदर्शनादेव क्षुभितहृदयोऽभूत्, न पुनरन्यस्याः यस्याः कस्याश्चित् तत्क्षोभणसामर्थ्यमिति निरतिशयमुद्दीपनविभावत्वं नायिकामुखेन्दोः, लोकातिक्रान्तधीरत्वं च नायकस्यात्र प्रकाश्यते । १० ॥

---

१. 'त्वान्तरजातिः' छ. पाठः. २. 'पमानगुण्यात्' ख. ग. घ. छ. पाठः. ३. 'उद्वेलविरामं' ज. पाठः. ४. 'महद्भिरजैश्चचलं' ख. छ. ज, 'महद्भिरंशैश्चलं' ग, घ. पाठः.

माधवः — अहो उपन्यासविशुद्धिः । अहो महत्त्वारोपणे यत्नः ।

अथवा—

शास्त्रेषु निष्ठा सहजश्च बोधः

प्रागल्भ्यमभ्यस्तगुणा च वाणी ।

---

अहो इत्याश्चर्ये । ईदृशी वैदग्धी नान्यस्याः कस्याश्चिदिति भावः । 'उपन्यासस्तु वाङ्मुखम्' इत्यमरः । उपन्यासस्य विवक्षिताया नायकसमागमानुकूल्यप्रार्थनारूपाया वाचो द्वारस्य विशुद्धिः असिद्धत्वादिदोषपरिहाराद्धेतोः उत्तरानिराकार्यत्वम् । महत्वारोपणे—

'अवाप्तव्यानवाप्तानि यस्य सर्वाणि देहिनः ।
परोपकारव्यसनी स महानभिधीयते ॥'

इति लक्षितस्य महत्त्वस्य मालतीहृदयावर्जकस्य अस्मासु सम्पादने प्रवृत्तिरित्यनेन स्वस्मिन् स्वाभाविकानपि गुणांस्तयारोप्यन्त इति सम्भावयत । उत्तमनायकत्वादविकत्थनत्वमनहङ्कारत्वं च प्रकाश्यते ।

अथवेति अहो इति पूर्वोत्पन्नामाश्चर्यबुद्धिं निवर्तयति । शास्त्रेष्विति — एकप्रयोजनप्रतिबद्धानेकार्थप्रतिपादको ग्रन्थः शास्त्रम् । बहुवचनेन बाहुविध्यं प्रकाश्यते । भरतवात्स्यायननीतिशास्त्रादिष्वित्यर्थः । निष्ठा निरातिशया स्थितिः । निष्कर्ष इत्यर्थः । सहजो बोधः प्राग्भवीयपुण्यसंस्कारजनितो विवेकः, शास्त्रवासना यस्योपस्कुरुते । निस्साध्वसत्वं प्रागल्भ्यम् । अभ्यस्तगुणा —

'माधुर्यमक्षरव्यक्तिर्हेतुवादः प्रगल्भता ।
प्रकृतस्पर्शिता चेति पञ्चार्थं ब्रुवतो गुणाः ॥'

इत्युक्ता गुणाः शिक्षिता यस्याः सा । वाणी वाक् । प्रशस्तवक्त्रसंसर्गजन्यत्वाद्वक्तृत्वविशेषस्य ।

---

१. 'उपन्यासशुद्धिः' छ. ज. झ. य. पाठः. २. 'अहो मम च महत्वा' ज. पाठः. २. 'शास्त्रे प्रतिष्ठा' ज, 'शास्त्रेषु चिन्ता' च. पाठः.

---

१. 'विवक्षितनायकसमागमानुकूल्यस्य चार्थानुरूपाया वाचो' ज. पाठः. २. 'वचो' क. घ. पाठः. ३. 'असिद्धत्वादिपरिहारा' क. ग. छ. ज, 'असिद्धत्वपरिहारा' घ. पाठः ४. 'सम्पादनेन स्वस्मिन्' ग. घ. पाठः. ५. 'मनहङ्कारित्वं' ज. पाठः. ६. 'वासनया यस्योप' ख. पाठः. ७. 'विशेष्यस्य' ज. पाठः.

कालानुरोधः[१] प्रतिभानवत्त्वं-
श्चैते गुणाः कामदुघाः क्रियासु ॥ ११ ॥

कामन्दकी — यतस्तेन[३] जीवितादुद्विजमानेन[४] दुष्करमपि[५] न किञ्चिन्न क्रियते[६]। तथाहि —

'सत्यं रूपं श्रुतं विद्या कुलं शीलं बलं धनम् ।
शौर्यं विचित्रभाष्यं च दश संसर्गयोनयः ॥'

इति व्यासोक्तेः। कालानुरोधः अवसरस्योचितस्यानुसरणम् प्रतिभानवत्त्वम्।

'प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मता ।'

इति लक्षिता प्रतिभैव प्रतिभानम् । भावे ल्युट् । तद्वत्त्वं नित्ययोगे मतुप्। चैत इति पाठः । अत्र कथिते गुणषट्के द्वयोर्द्वयोरुपकार्योपकारकत्वेन मिथुनत्वं चकारैस्त्रिभिः प्रकाश्यते। तथा हि, सहजबोधस्य शास्त्रनिष्ठाविरहे बालमूकादिविज्ञानसहशत्वात्, प्रागल्भ्यस्यापि वाणीगुणवैधुर्ये जरठकरटरटितस्येव वैराग्यजनकत्वात्, प्रतिभानस्यापि कालानुरोधमन्तरेण शरदुपरचितशालिबीजवाप-वर्जनावमानहेतुत्वादनुपकारकत्वं प्रसिद्धमेव। अतो दहनपवनयोरिव द्वयो-र्द्वयोः सम्भूय कार्यकरणाच्चकारत्रयप्रयोग इति मन्तव्यम्। एते परिगणिता गुणाः आत्मधर्मविशेषाः । कामदुघाः प्रयोक्तृणामिष्टानर्थान् दुहन्तीति। 'दुहः कब्घश्च' (३-२-७०) इति कब्घश्च। क्रियासु कर्तव्यप्रवृत्तिषु। क्रिया-स्विति सामान्योक्ते न केवलं प्रियसमागमरूपे प्रस्तुतवस्तुन्ययं नियमः, किन्तु यत्र यत्र कार्ये प्रवर्त्यते तत्र तत्र साधारण एवायं साध्यसाधनोपाय इति द्योत-यति। अत एतद्गुणसामग्रीविशिष्टायाः भगवत्याः किमस्माभिर्वर्ण्यत इति भावः। अत्र दूतीगतस्य[२] वैदग्ध्यस्य कारणमुखेन प्रकाशनात् अप्रस्तुतप्रशंसालङ्कारः[३] ॥११॥

अस्य मनः क्षुभितमित्युक्तम्। तत् कथं ज्ञायत इत्यत्राह---यत इति। यतः यस्मात्। तेन माधवेन। जीवितात् प्राणसन्धारणात्। उद्विजमानेन बिभ्यता, वेदनानुभवाशक्ततयेत्यर्थः । 'भीत्रार्थानां भयहेतुः' (१-४-२५) इति पञ्चमी। दुष्करमिति सामर्थ्याद् विरहिभिः कर्तुमशक्यमपीत्यर्थः । किञ्चित् किमपि।

१. 'कायानुरोधः' ख, 'कालानुरोधि' छ. पाठः. २. 'त्वमेते' क. छ. ज. झ. ञ. पाठः. ३. 'अतस्तेन' क झ. ञ. पाठः. ४. 'दुद्विजमाने दु' ख. पाठः. ५. 'मपि किञ्च न क्रियते' छ. पाठः. ६. 'ते। तथाप्यसौ—' ग. ङ, 'ते। असौ हि' क. झ. ञ. पाठः.

१. 'शरदुपचित' ख. ग. ज. पाठः. २. 'अत्र मूर्तिगतस्य' ज. पाठः. ३. 'प्रशंसनालङ्कारः' ग. घ. पाठः.

धत्ते चक्षुर्मुकुलिनि रणत्कोकिले बालचूते
मार्गे गात्रं क्षिपति बकुलामोदगर्भस्य वायोः ।
दावप्रेम्णा सरसबिसिनीपत्रमात्रान्तराय-
स्ताम्यन्मूर्तिः श्रयति बहुशो मृत्यवे चन्द्रपादान् ॥ १२ ॥

न न क्रियते सर्वं क्रियत एवेत्यर्थः । 'द्वौ नञौ प्रकृतमर्थं सूचयतः' इत्युक्ते-र्नञोर्द्वयोर्विधायकत्वात् । न न क्रियत इति यतस्ततः कार्यतो मनःक्षोभोऽनुमित इति शेषः ।

किं तत् कार्यमित्याह—तथाहीति । धत्त इत्यादि—धत्ते न तु प्रेषयतीत्येव चिरमवस्थापयतीत्यर्थः । चक्षुरिति इन्द्रियत्वाभिप्रायेणैकवचनम् । मुकुलिनि कुड्मलबहुले न पुनः कुसुमितमात्रे । अनेनोपर्युपरि विकसत्पुष्पतयोद्दीपनविभावत्वातिशयः ख्याप्यते । रणत्कोकिले शब्दायमानपरभृते । अत्रापि वर्तमाननिर्देशादङ्कुरास्वादकषायकण्ठानां कलकण्ठानामकुण्ठकूजितसन्तानो व्यज्यते । विशेषणाभ्यां वसन्तसमयसन्निधानसम्पन्नसौन्दर्यत्वं प्रकाश्यते । बालचूत इति तरुणतया स्निग्धमुग्धबहलपल्लवोल्लसितस्य सहकारस्यान्यदापि दुःसहत्वं किं पुनस्तदानीमिति द्योत्यते । बालचूते औपश्लेषिकेऽधिकरणे इत्यर्थः । मार्गे अयमनेन पथा गमिष्यतीत्युत्प्रेक्ष्य तस्मिन् पथि । न पुनस्तस्यागमनसमय एवेत्यनेन पूर्वमेव तन्मार्गनिरोधे संरम्भो भामहत्वा पदात् पदमपि न चलितुमेनमनुमन्य इति सूच्यते । गात्रं शरीरम् । क्षिपति दुर्वहं भारमिव निर्दयं निरस्यति । बकुलामोदगर्भस्य केसरकुसुमपरिमलमागलमापीयागतस्य न पुनः किञ्चित्स्पृष्ट्वेति गर्भशब्देन द्योत्यते । विशेषणेन मन्दमन्दपरिस्पन्दिनश्चन्दनगिरिनन्दनस्य वसन्तबन्धोर्गन्धवाहनस्येति व्यज्यते । दावप्रेम्णा—'दवदावौ वनारण्यवह्नी' इति वैजयन्ती । दावे वनवह्नौ यत् प्रेम स्नेहः मुमूर्षूणां तत्सदृशस्य बन्धोरभावात्, तेन प्रेम्णा[3] तेषु बन्धेनेत्यर्थः । सरसबिसिनीपत्रमात्रान्तरायः शिशिरोपचारतया सुहृद्भिरुपरि-

१. 'दाहप्रेम्णा' क. छ. झ. ञ. पाठः. २. 'मात्रोत्तरीय' छ. ज. पाठः. ३. 'दान् ॥ १२ ॥ माध—अन्य एवाक्षुण्णः कथाप्रकारो भगवत्याः । माल—' क. झ. ञ, 'दान् ॥ १२ ॥ माध—अन्य एवायं अक्षुण्णः कथाप्रकारो भगवत्याः । माल—' छ. पाठः.

१. 'साधयत' ग. घ. पाठः. २. 'परिमलमभ्यागलमापीय' ज. पाठः. ३. 'प्रेम्णा मुमूर्षुबन्धेनेत्यर्थात्' क, 'प्रेम्णा तेषु बन्धेनेत्यर्थात्' घ, 'प्रेम्णा तेषु तेषु बन्धेन' ज. पाठः.

मालती — (स्वगतं) अदिदुक्खरं करेदि ।
(अतिदुष्करं करोति ।)

कामन्दकी — तदेवं प्रकृत्या सुकुमारः कुमारः कदाचिदप्यन्यत्रापरिक्लिष्टपूर्वस्तपस्वी, यतोऽधुना शक्यमनेन मरणमप्यनुभवितुम् ।

---

निहितानि कर्पूरचन्दनद्रवार्द्राणि नवाहृतानि पद्मिनीपत्राण्येवान्तरायो विघ्नः सद्यो मृत्युनिवारकाणि यस्येत्यर्थः । ताम्यन्मूर्त्तिः ज्वरातुरतयावसीदच्छरीर इति श्रयणाय गच्छतः स्खलनपतनादि सूच्यते । श्रयति उपसर्पति । बहुशः बहुवारमिति । अनेन मकरन्दादीनां बलात्कारेण निवर्तनं, पुनर्गमनं, पुनर्निवर्तनं च द्योत्यते । मृत्यवे मृत्युशब्देन मरणं लक्ष्यते । प्राणत्यागायेत्यर्थः । चन्द्रपादान् चन्द्ररश्मीन् । मृत्यवे इति वाक्यत्रयेऽपि सम्बध्यते । अत्रातिशयोक्तिरलङ्कारः । धत्ते चक्षुरित्यादि पुष्पं, वाक्यविशेषप्रयोगात् ॥ १२ ॥

अतिदुष्करं करोतीति स्वानुभूतिसंवादं दर्शयति ।

तत् तस्मात् । एवमित्युक्तप्रकारपरामर्शः । प्रकृत्या सुकुमारः स्वभावतो मृदुः । कुमार इत्यभिनवयौवनत्वोक्तिः । कदाचिदेकवारम् । अप्यर्थोऽनुसन्धेयः । अन्यत्रान्यस्मिन् विषये निमित्तभूते । अपरिक्लिष्टपूर्वः पूर्वमननुभूतदुःखः । पूर्वानुभूतत्वे हि दुःखस्य वासनावशात् सह्यत्वमिति भावः । तपस्वी दयाविषयः । एवं यत इत्यन्वयः । इत्थंभूतो यस्मादित्यर्थः । तत् तस्मादिति यच्छब्दस्य प्रतियोगी तच्छब्दः । अधुना अस्मिन् काले । अनेन माधवेन । मरणमपीति साधनसामग्र्यात् साध्यसम्पत्त्यवश्यंभावात् सुहृदाद्यसन्निधौ चन्द्रिकावगाहादिसाहसानुष्ठाने मरणमपि अनुभवितुं प्राप्तुम् । शक्यं सुकरम् । यतस्तेनेत्यादि तदेवं प्रकृत्येत्यादि च साक्षात् कामसूत्रमेव वैदग्ध्यात् कवीश्वरेण स्थाने योजितं वेदितव्यम् ।

---

१. 'माल'—(स्वगतं सविषादं) अदि' ख, 'माल—(सविषादं स्वगतं) अदि' ङ, 'माल—(स्वगतं) एव्वं अदि' ●. पाठः. २. 'करेदि सो ।' छ ज. पाठः. ३. 'सुकुमारकायः कुमारः' ग. ख, 'सुकुमारः कदाचि' छ. पाठः. ४. 'कदाचिदन्यत्र' ग. घ. ङ. पाठः. ५. 'स्तपस्वीति य' छ पाठः. ६. यदधुना' छ, 'यतश्शक्यं' ज. पाठः

---

१. 'भूतसंवादं' घ. पाठः २. 'सामान्यात् सा' छ. पाठः ३. 'वगाहे साधनानुष्ठानेन मरणं' ज. पाठः.

मालती — (जनान्तिकं) सहि अत्तणो कारणादो मच्चलोआलङ्कारभूदस्स किं पि आसङ्कन्तीए भीदावि ण जाणामि किं पडिवज्जिस्सं ति ।

(सखि आत्मनः कारणाद् मर्त्यलोकालङ्कारभूतस्य किमप्याशङ्कमाना भीतापि न जानामि किं प्रतिपत्स्य इति ।)

माधवः—दिष्ट्या अनुकम्पितोऽस्मि ।

---

जनान्तिकमिति — कामन्दक्या श्रवणस्यैव परिहारान्माधवेन तिरोहितेन यथावत् श्रूयमाणत्वमजानती मालत्याह — सखि आत्मनः कारणान्मर्त्यलोकालङ्कारभूतस्य किमप्याशङ्कमाना भीतापि न जानामि किं प्रतिपत्स्ये इति। आत्मनः कारणात् मम हेतोः । मर्त्यलोकालङ्कारभूतस्य पुरुषरत्नतया मनुष्यलोकस्य भूमण्डलस्यैव भूषणभूतः शोभातिशयजननाद् यस्तस्य । किमपीत्यमङ्गलतयानुक्तिः शरीरापायमित्यर्थः । भीतापि कम्पितहृदयापि । किं प्रतिपत्स्य इति धैर्यमवलम्ब्य साहसेनापि तं रक्षामि वा पितृस्नेहादधीरा तेन सह नश्यामि वेति द्वयोः पक्षयोः किमङ्गीकरोमि इति न जानामीत्यर्थः । अनया चोक्त्या दूतीकर्मणः फलं तद्विषयामनुकम्पां दर्शयति ।

तदेवाह तद्वचनं श्रुत्वा माधवः — दिष्ट्या दैवानुकूल्येन कारुण्यविषयत्वेन अङ्गीकृतोऽस्मीति । दिष्ट्येति दूतीप्रयत्नसाफल्यमालोच्य हर्षो व्यज्यते ।

---

१. 'माल—सहि' ज. पाठः. २. 'दो तस्स सव्वलोआ' क. झ. ञ. पाठः ३. 'किं वि किं पि आ' ग. पाठः. ४. 'आसङ्कन्तीए भअवदीए भूदाविट्ठा विअ ण' ङ, 'आसङ्कमाणा भअवदीए भूदाविट्ठा विअ ण' ज, 'आसङ्कन्तीए भअवदीए भीदाविदह्मि । ता किं दाणिं एत्थ पडिवज्जिस्सं' क. झ, 'आसङ्कन्तीए भगवदीए भीदाविदह्मि । ता दाणिं एत्थ पडिवज्जिस्सं ।' ग. पाठः. ५. 'स्मि भगवत्या' क. ज. झ. ञ. पाठः.

---

१. 'शङ्कमाना', २. 'प्रतिपत्स्येत इति', ३. 'साहसादपि तं', ४. 'दैवानुकूल्यात्' ज. पाठः

लवङ्गिका — भअवदी जेव्वं वादिणी त्ति ओअक्खीअदि। अह्माणं पि भट्टिदारिआ भवणासण्णरच्छामुहमुहुत्तमण्डणस्स तस्स ज्जेव्व बहुसो अणुभूददंसणा भविअ, रविअरपुट्ठमुद्धकमलिणीकन्दसुन्दरावअवसोहाविभाविआणङ्गवेअणावेअरमणीज्जा वि परिअणं दूणेदि।

---

अतः परं 'अथ खलु विधेयः परिचय' इति विधेयत्वेन चिन्तितस्य 'माधवसमक्षमुत्तरमुपक्रमिष्ये' इत्युपक्रान्तस्य परस्परानुरागप्रकटनादिरूपस्योभयभागनिष्ठस्य दूतीकर्मणः कामन्दकीमुखेन एकमंशं मालतीहृदयरसायनं प्रतिपाद्य लवङ्गिकामुखेन द्वितीयमंशं माधवश्रवणपीयूषं प्रकाशयितुमुपक्रमते कवीश्वरः— भअवदीत्यादि। भगवती एवंवादिनीत्यख्यायते। एवमिति 'शृणु विचित्रं' इत्यादि तदुक्तप्रकारपरामर्शः, इत्थम्। भगवतीत्यनेन हेतुना पूर्वं माधवहृदयापरिज्ञानात् भगवतीं प्रति लज्जया च अस्माभिरयमर्थो न प्रकाशितः। इदानीं भगवत्यैव तदवस्थाया निवेदितत्वात् अस्माभिरपि विस्रब्धं कथ्यते इत्यर्थः। अस्माकमपि भर्तृदारिका भवनासन्नरथ्यामुखमुहूर्तमण्डनस्य तस्यैव बहुशोऽनुभूतदर्शना भूत्वा रविकरस्पृष्टमुग्धकमलिनीकन्दसुन्दरावयवशोभाविभावितानङ्गवेदनावेगरमणीयापि परिजनं दुनोति। अस्माकमपीति। युष्माभिस्तावद्युष्मदीयस्य कुमारस्य दशानुभूता निवेदिता च। अस्माकं स्वामिदुहितुरपि तथैव किञ्चिदप्यन्यूनास्माभिरनुभूता निवेद्यत इत्यपिना सूच्यते। तस्यैवेति—यः खल्वस्या हेतोरित्थंभूतः तस्यैवेत्येवकारेण दिष्ट्या वर्धसे स्वाभिमतसम्पत्तेरित्यर्थः। भवनासन्नेत्यादिना "भूयो भूयः सविधनगरीरथ्यया" (१.१८, पृ० ४५) इत्यादि संघटयति। तस्य अनुभूतदर्शनेति गमकत्वात् समासः।

---

१. 'लव—(प्रकाशं) भअव' छ. पाठः. २. 'अक्खीअइ' ख. पाठः. ३. 'आ वसणासण्ण' ख. पाठः. ४. 'तस्स बहुसो' छ. पाठः. ५. 'रइअरालिद्धमुद्ध' ख. ग. घ ●, (व्याख्यानरीत्या च), 'रविअरासिलिट्ठमुद्ध' ज. 'रविकिरणासिलिट्ठमुद्ध' क. झ. ञ. पाठः. ६. 'वेअणाधिअदररमणीआ' क. झ. ञ, 'वेअणावइअररमणिज्जा' छ. ज. पाठः.

---

१. 'माधवे हृदयापरिज्ञानात्' क. ग. ●. पाठः. २. 'भगवत्यैतदवस्थाया ●. पाठः. ३. 'सूच्यते' ज. पाठः.

(भगवती एवंवादिनोत्याख्यायते — अस्माकमपि भर्तृदारिका भवनासन्नरथ्यामुखमुहूर्तमण्डनस्य तस्यैव बहुशोऽनुभूतदर्शना भूत्वा रविकर-स्पृष्टमुग्धकमलिनीकन्दसुन्दरावयवशोभाविभावितानङ्गवेदनावेगरमणीयापि परिजनं दुनोति ।)

णाभिणन्ददि[1] कलाकीळाओ । केवलं[2] मिलाअन्तकमलाअन्तहत्थ[3]-पल्लवपल्लत्थगण्डमण्डला दिअसा[4] गमेदि ।

(नाभिनन्दति कलाक्रीडाः । केवलं म्लायत्कमलायमानहस्तपल्लवपर्यस्त-गण्डमण्डला दिवसान् गमयति ।)

'वैमानिकानां मरुतामपश्य-
दाकुष्टलीलान्नरलोकपालान् ।'

इतिवत् सूर्यांशुस्पृष्टतया किञ्चित् म्लानं आक्लिष्टं स्पृष्टम् ।

'घणरोहविमुक्खदिणअरकराळिद्धम् ।'

इति सेतुकवत् । [मुग्धं] अपरिणतं कमलिनीकन्दं मृणालमिव सुन्दरा येऽवयवाः करचरणाद्यङ्गानि, तेषां शोभया कान्त्या प्रकाशिता, अनङ्गवेदना कामसन्तापस्तस्य वेग उज्जृम्भणं, तज्जनित आवेगो हृदयक्षोभो वा, तेन रमणीयापि । मदन-सन्तापस्य रामणीयकजनकत्वं पूर्वं[1] प्रतिपादितम् । परिजनं सख्यादिकं समीपवर्तिनं जनम् । [दुनोति] परितापयति, अपायशङ्कयेति भावः ।

नाभिनन्दति कलाक्रीडाः कलादिभिर्द्यूतादिभिर्विहारान् नाद्रियते । बहुवचनेन सर्वास्वविशेषेण विरक्तिः प्रतिपाद्यते । तर्हि कथं कालः क्षिप्यत इत्याह—केवलं म्लायत्कमलायमानहस्तपल्लवपर्यस्तगण्डमण्डला दिवसान् गमयति । ताम्यत्पद्म इवाचरन्, निस्सह इत्यर्थः, यो हस्तपल्लवस्तस्मिन् पर्यस्तं परवश-तया निक्षिप्तं, गण्डमण्डलं यस्याः सा । तथा भूत्वेति तत्कालविशेषणम् । चिन्तानुभावश्चायम् । गमयति कथंचिद् यापयति । न पुनः निर्विनोदतया दीर्घीभूतास्ते स्वयं गच्छन्तीत्यर्थः ।

१. 'केळिकळाओ' क. झ. ञ. पाठः. २. 'लं कमळाअन्तकन्तहत्थ' क. झ. ञ, 'लं मिळाअन्तकन्तहत्थ' छ. ज. पाठः. ३. 'हत्थपल्लत्थ' क. झ. ञ. पाठः. ४. 'दिअसाइं गमेदि' क, 'दिअसं गमेदि' झ. ञ. पाठः ।

१. 'पूर्वप्रतिपादितं' ग. घ. ङ. पाठः. २ 'दुःखव' ग. पाठः

अविअ, विअसिआरविन्दमअरन्दणीसन्दसुन्देरेण दळिअकुन्द-माअन्दमहुबिन्दुसन्दोहवाहिणा भवणुज्जाणपेरन्तमारुदेण उत्तम्मीअदि।

(अपि च विकसितारविन्दमकरन्दनिष्यन्दसुन्दरेण दलितकुन्दमाकन्द-मधुबिन्दुसन्दोहवाहिना भवनोद्यानपर्यन्तमारुतेनोत्ताम्यति।)

अण्णं च जं तस्सिं दिअहे णिअमहूसवाब्भुदअपडिवण्णरूवस्स भअवदो मअणस्स विअ कामकाणणालङ्कारिणो तस्स से अ विविहविब्भ-

अपि चेति प्रियतमचिन्ताव्याक्षिप्तचित्ततया दिवसान् गमयितुमिच्छन्त्या मध्ये मध्ये महाननर्थो व्याक्षेपमपि न सहत इत्याह—विकसितारविन्दमकरन्दनिष्यन्दसुन्दरेण दलितकुन्दमाकन्दमधुबिन्दुसन्दोहवाहिना भवनोद्यानपर्यन्तमारुतेनोत्ताम्यति। माकन्दः चूतः। सन्दोहः समूहः। गृहोपवनसमीपवायुनेति दुर्निवारत्वं द्योत्यते। 'विअसिआरविन्दमअरन्दणीसन्दसुन्देरेण' इत्यादिभिः 'अरतिकथनाद् विधूतम्। द्वादशैतानि मुखाङ्गानि बीजारम्भद्योतकानि योजितानि। एतेषामुद्देशनिर्देशवैषम्यं क्रियाक्रमस्याविवक्षितत्वात्।

अन्यच्च यत्तस्मिन् दिवसे निजमहोत्सवाभ्युदयप्रतिपन्नरूपस्य भगवतो मदनस्येव कामकाननालङ्कारिणस्तस्यास्याश्च विविधविभ्रमानुरागानुबन्धमहार्घीकृतयौवनारम्भमन्योन्यदृष्टिविनिपातवञ्चनावसरसन्तप्तचित्तोक्रियमाणकौतूहलोल्लसितसाध्वसं स्तम्भमन्थरावयवप्रतिक्षणस्वेदपुलकोत्कम्पानन्दितसखीजनं परस्परावलोकनसुखं समासादितम्। तस्मिन्नित्यनुभवः प्रसिद्धिर्वा परामृश्यते। निजमहोत्सवः निजशब्देन मदनः परामृश्यते। यः स्वसम्बन्धियात्रोत्सवः तस्याभ्युदयाय शोभनत्वाय अनङ्गत्वमप्रशस्तमपहाय स्वीकृतदेहस्य कामस्येवेत्युत्प्रेक्षा। तत्र हेतुः—कामकाननालङ्कारिणो मदनोद्यानं भूषयत इति। 'तस्स सेअ' इति

१. 'दरदळिअ' क. छ. ज. झ. ञ. पाठः. २. 'कन्द' ञ. पाठः. ३. 'मन्दारमहु' ञ. पाठः. ४. 'मअणुज्जाण' क. पाठः. ५. 'जं च तस्सिं' क. झ. ञ, 'अण्णं च जदा पहुदि तस्सिं' छ. ज. पाठः. ६. 'तस्सिं जत्तादिअहे' क. झ. ञ. पाठः. ७. 'दअदंसणपडि' क. छ. ज. झ. ञ. पाठः। ८. 'कामस्स', ९. 'लङ्कारआरिणो' क. झ. ञ. पाठः। १०. 'तस्स विविह' क. छ. झ. ञ, 'तस्स माहवस्स विविह' ञ. पाठः. ११. 'विब्भमाहिराअं अणुराआणुबन्ध' क. झ. ञ. पाठः.

राणुराआणुबद्धमहग्घीकिदजोव्वणारंभं अण्णोण्णदिट्ठिविणिवादवञ्चणावसरसन्तप्पचित्तुब्भरन्तकोदूहल्लुल्लसिदसज्झसं त्थंभमन्थरावअवपडिलग्गसेअपुलउक्कम्पाणन्दिअसहीअणं परप्फरावलोअणसुहं समासादिदम् ।

(अन्यच्च यदस्मिन् दिवसे निजमहोत्सवाभ्युदयप्रतिपन्नरूपस्य भगवतो मदनस्येव कामकाननालङ्कारिणः तस्य अस्याश्च विविधविभ्रमानुरागानुबन्धमहार्घीकृतयौवनारम्भमन्योन्यदृष्टिविनिपातवञ्चनावसरसन्तप्तचित्तोद्भ्रियमाणकौतूहलोल्लसितसाध्वसं स्तम्भमन्थरावयवप्रतिलग्नस्वेदपुलकोत्कम्पानन्दितसखीजनं परस्परावलोकनसुखं समासादितम् ।)

---

पाठः । तस्य माधवस्य अस्या मालत्याश्च यत् परस्परावलोकेन सुखं समासादितं इतरेतरस्य दर्शनेन यत् सुखं प्राप्तं ततः प्रभृतीत्यन्वयः । कीदृशं सुखमित्याह—विविधविलासेनानुरागबन्धेन परस्परप्रेमासङ्गेन महार्घीकृतः महता त्रैलोक्यादिना मूल्येन न क्रेतुं योग्यः, अथवा समस्तजनपूज्यः कृतः, यौवनारम्भः उभयोस्तारुण्यावतारो यस्मिन् । 'अर्घो पूजाप्रतिक्रियावि'ति वैजयन्ती । अन्योन्यदृष्टिविनिपातवञ्चनावसरः परस्परस्य दृष्टीनां समापत्तेः परिहारसमयः लज्जया झटिति व्यावर्तनकालः, तन्मात्रदर्शनाभावात् सह तया सन्तप्ते मनसि पूर्यमाणेन दर्शनकौतुकेन उल्लसित उद्भूतः साध्वसो हृदयोत्कम्पस्तज्जनितया स्तब्धतया निश्चेष्टतया मन्थरेषु मन्देषु अवयवेष्वङ्गेषु प्रतिलग्नैः प्रत्येकं प्रसृतैः, स्वेदपुलकोत्कम्पैः उत्कम्पः उत्कटशरीरवेपथुः । आनन्दितः अहो सदृशयोः परस्परानुरागेण कृतार्थास्मीति प्रमोदितः सखीसमूहो यस्मिन्, तत्तादृशमित्यर्थः ।

---

१. 'महग्घ विअ जोव्वणा' ख. ग. घ. ङ. पाठः । २. 'वसरज्जुराविदचित्तुब्बरन्त' क. छ. ज. झ. ञ. 'वसरदुरविआचित्त' ख. 'वसरजूराविअचित्तु' ग. घ. ङ. पाठः । ३. 'कोदूहलं समुल्लासिद' क. झ. ञ. पाठः । ४. 'पुळअउक्कम्पसुन्दरं आणन्दिअ' क. झ. ञ. 'पुळअकम्पाणन्दिअ' ज. पाठः. ५. 'पिअसहीअणं' ख. ग. घ. पाठः । ६. 'अणं पिअसहिए पर' क. झ. ञ. पाठः ।

---

१. 'रागानुबन्धेन' ग. घ. पाठः. २. 'प्रेमानुबन्धेन' क. पाठः. ३. 'महार्घीभूतः' ख. पाठः. ४. 'नामूल्येन क्रेतुं' क. ख. घ. छ. पाठः. ५. 'दर्शनभावात्' ६. 'सन्तापेन मनसि' क. पाठः. ७. 'मनसा पूर्ये' ग. पाठः

तदो पहुदि सविसेसदूसहमअणविअम्भणुद्दामदारुणं दसापरिणामं अणुहोन्ती मुहुत्तं सम्पत्तपुण्णचन्दोदआ विअ बालकमलिणी पव्वाअदि।

(ततःप्रभृति सविशेषदुस्सहमदनविजृम्भणोद्दामदारुणं दशापरिणाममनुभवन्ती मुहूर्तं सम्प्राप्तपूर्णचन्द्रोदयेव बालकमलिनी प्रशुष्यति।)

तह अ मुहुत्तमेत्तं हिअअविणिहित्तणिम्माअन्तवलहसमाअमाणिब्भरसलिलासारसिच्चमाणेव्व मेइणी सीदलाअदि त्ति जाणामि,

---

ततःप्रभृति सविशेषदुस्सहमदनविजृम्भणोद्दामदारुणं दशापरिणाममनुभवन्ती मुहूर्तं सम्प्राप्तपूर्णचन्द्रोदयेव बालकमलिनी प्रशुष्यति।

'पव्वाअइ सरसणहवअं इन्दहणुम्।'

इतिवत्। ततःप्रभृति तत्सुखानुभवकालादारभ्य। सविशेषदुस्सहेन वातायनदर्शनदशातोऽतिशययुक्तत्वात् असह्येन मदनस्य विजृम्भणेन स्वकार्यसर्वस्वप्रकाशनेन, उद्दामदारुणं विशृङ्खलतया क्रूरं, प्राणानपि जिघत्सन्तमित्यर्थः। दशापरिणामं अवस्थायाः परिपाकं, परां काष्ठामित्यर्थः। अनुभवन्तीति स्वयमेवोपभुङ्क्ते असंविभजनीयत्वात्। अस्माभिः पुनः साक्षित्वमेवोपलभ्यते। हा कष्टमिति करुणरसो ध्वन्यते। सम्प्राप्तपूर्णचन्द्रोदयेव बालकमलिनीत्युपमया यथा पूर्णचन्द्रोदयः सकलजनाह्लादकोऽपि कमलिनीं कदर्थयति तथा माधवस्य दर्शनमेनामिति द्योत्यते। बालेति सुकुमारत्वं प्रकाश्यते। मुहूर्तं प्रशुष्यतीत्युक्तिः मुहूर्तान्तरे दशान्तरस्य वक्ष्यमाणत्वात्।

---

१. 'दूसहाअसवि' क. ज. झ. ञ. पाठः. २. 'विअम्भमाणुद्दामवेहद्दारुणं' क. झ. ञ., 'विअम्भमाणुद्दामदारुणं' ज. पाठः. ३. 'उव्वहन्ती' ज. पाठः, ४. 'मुहुत्तमेत्तसम्पत्त' क. झ. ञ. पाठः. ५. 'पम्मलाअदि' क. झ. ञ. पाठः. 'मिलाअदि' ब. 'परिमिलाअदि' ज. पाठः ६. 'तहा विअ' क. झ. ञ. 'तह वि' छ. ज. पाठः. ७. मुहुत्तमत्तहिअअं' ख. छ., 'मुहुत्तमेत्तहिअअ' क. ग. ङ. ज. झ. ञ, 'मुहुत्तमेत्तहिअअ' घ. पाठः. ८. 'विणिहिदणिअवल्लह' क, 'विणिहिदणिम्माअन्त' छ. ज. झ. ञ. पाठः.

---

१. 'विजृम्भमाणोद्दाम' ख. पाठः. २. 'दारुणदशा' ज. पाठः ३. 'से बाल' क. पाठः. ४. 'सरणहवअं' ख, 'सरणपणहव' ज. पाठः. ५. 'इन्दहणं' ख. छ. पाठः. ६. 'सर्वप्रकाश' ७. 'पि जिघत्सन्त' घ. पाठः. ८. 'मेवोपालभ्यते' क. पाठः.

जेण पप्फुरन्तदसणच्छदुच्छलिअदन्तमुत्तिआवलिकन्तिसविसेससोहिद-णिरन्तरुल्लसिदपुलअपम्हलकवोलवोलन्तसन्ददाणन्दबाहरयेअं ईसिविसमणिप्फन्दमन्दतारुत्ताणमसिणमंसलमउलाअन्तणेत्तणीलुप्पलं अविरलुब्भिण्णसेअजलबिन्दुसुन्दरणिडालणवचन्दलेहामणोहरं मुद्धमुहपुण्डरीअमुव्वहन्ती णिअदइसंहअरीचित्तसंसइदकुमारीभावा होदि ।

(तथा च मुहूर्तमात्रं हृदयविनिहितनिर्मीयमाणवल्लभसमागमा निर्भरसलिलासारसिच्यमानेव मेदिनी शीतलायत इति जानामि, येन प्रस्फुरद्दशनच्छदोच्छल-

---

तथा च मुहूर्तमात्रं हृदयविनिहितनिर्मीयमाणवल्लभसमागमा निर्भरसलिलासारसिच्यमानेव मेदिनी शीतलायत इति जानामि । तथाचेति तद्वृत्तान्तश्च श्रूयतामिति शेषः । अथवा यथा शुष्यतीति तथा शीतलायत इति विरहयोर्द्वयोरवस्थयोर्झटिति व्यतिकरं दर्शयति । हृदयविनिहितत्वेन संकल्पोपस्थापितत्वेनानुष्ठीयमानः प्रियतमसम्भोगो यस्याः । निर्भरेण पूर्णेन, सलिलासारेण जलस्य शीघ्रवर्षेण, सिच्यमाना मेदिनीवेत्युपमया निदाघदेहशोषशोच्या यथा क्षणिकेनासारेण शिशिरीभवति तथेयमपि विरहतप्ता संकल्पसमागमेनेति द्योतयति । इति जानामीति चेष्टाविशेषैरनुमिनोमीत्यर्थः । तदेव विशदमुपपादयति -- येनेति प्रस्फुरद्दशनच्छदोच्छलद्दन्तमुक्तावलिकान्तिसविशेषशोभितनिरन्तरोल्लसितपुलकपक्ष्मलकपोलघूर्णमानसन्ततानन्दबाष्पभारम्, ईषद्विषमनिष्पन्दमन्दतारोत्तानमसृणमांसलमुकुलायमाननेत्रनीलोत्पलम्, अविरलोद्भिन्नस्वेदजलबिन्दु-

---

१. 'पप्फुरिदकन्तदसण' क. झ, 'पप्पुरिददसगरद' ञ, 'पप्पुरन्तकन्तदसण' अ. पाठः. २. 'च्छदुच्छलन्तदन्त' क. झ. ञ, 'च्छदुज्जलिअदन्त' छ. 'च्छदुज्जलन्तदन्त' ज. पाठः. ३. 'आवलिकन्ति' क. झ. पाठः. ४. 'सोहिदं णिर' क. झ, 'सोहिअ णिर' ख. ग. घ. ज, 'सोहिदं णिर' छ. ञ. पाठः. ५. 'पम्हलकन्तकवोल' झ. ञ. पाठः. ६. 'पोलन्त' छ. पाठः. ७. 'बाहत्थबाअं' क. छ. ज. झ. ञ. पाठः. ८. 'ईसिविअसिअणिप्पन्त' क. झ. ञ, 'ईसविसम' ज. पाठः. ९. 'मन्दताम्म-सण' ख. 'मन्थरतारुत्ताण' ज. पाठः. १०. 'मसिणमउलाअन्त' क. झ. 'मसिणमउ-लाअन्त' छ. ज. ञ. पाठः. ११. 'मुउलाअन्त' ख. पाठः. १२. 'सुन्दरललाडपट्ट णव' क. 'सुन्दरणिडिलचन्द' छ., 'सुन्दराणिउलचन्द' ज, 'सुन्दरललाडपट्टणवचन्द' झ. ञ. पाठः.

---

१. 'ने नवमेदिनी' छ. पाठः. २. 'तथैव' ज. पाठः. ३. 'व्यतिरेकं दर्श' ख. ग. घ. पाठः. ४. 'संकल्पावस्थापिता' क. पाठः. ५. 'येन स्फुरद्दशन' ज. पाठः

दन्तमुक्तापङ्क्तिकान्तिसविशेषशोभितनिरन्तरोल्लसितपुलकपक्ष्मलकपोलघूर्णमानसन्ततानन्दबाष्पधारम् ईषद्विषमनिष्पन्दमन्दतारोत्तानमसृणमांसलमुकुलायमाननेत्रनीलोत्पलम् अविरलोद्भिन्नस्वेदजलबिन्दुसुन्दरललाटनवचन्द्रलेखामनोहरं मुग्धमुखपुण्डरीकमुद्वहन्ती विदग्धसहचरीचित्तसंशयितकुमारीभावा भवति ।)

---

सुन्दरललाटनवचन्द्रलेखामनोहरं मुग्धमुखपुण्डरीकमुद्वहन्ती विदग्धसहचरीचित्तसंशयितकुमारीभावा भवति । दशनच्छदोऽधरः तस्य[1] प्रस्फुरणं चुम्बनसंकल्पात्, तस्मादुच्छलन्त्यो[2] दन्ता एव मुक्ता रत्नानि, तेषां पङ्क्त्योः[3] श्रेण्योः, कान्त्या प्रभया पुलकपक्ष्मले रोमाञ्चसान्द्रे कपोले घूर्णमाना प्रसरन्ती, सन्तता अविच्छिन्ना आनन्दबाष्पधारा यस्मिन् ।

'वाहत्थेवो बाप्पधारा वाहन्थेव वह ओसिअत मउहो'

इति सेतुप्रयोगात् । ईषद्विषमा किञ्चित् तिरश्चीना, निष्पन्दा स्वविषयान्निश्चला, मन्दा 'पर्यायेण चलत्तारं मन्दं' इत्युक्तक्रमेण चलन्ती विषयग्रहणापटुर्वी[4] वा, तारा कनीनिका यस्य तद् उत्तानं ऊर्ध्वीभूतम् मसृणम् अनुरागकषायितम्, मांसलं बहलप्रभापटलं, मुकुलायमानं निमीलन्नेत्रकुवलयं[5] यत्र तत् । एतैर्विशेषणैर्लज्जाविस्मयौत्सुक्यानुरागस्नेहोपचिता[6] रतावसानिकी[7] हर्षावस्था प्रकाश्यते । अविरलोद्भिन्नैः निरन्तरप्रादुर्भूतैः, स्वेदजलबिन्दुभिरभिरामया ललाटरूपया नवचन्द्रलेखया मनोहरमिति रतिश्रमोक्तिः । मुखस्य पुण्डरीकत्वेन रूपणं सरापाण्डुतयेति मन्तव्यम् । 'पुण्डरीकं सिताम्भोजं' इत्यभिधानात् । विदग्धानां दयितसमागमसुखानुभवविकारवेदिनीनां सहचरीणामिति सन्ततसविधसन्निधानादखण्डितचारित्रत्वं सुष्ठु जानतीनामपीति[8] द्योतयति । चित्तैर्मनोभिः संशयितः खण्डितत्वेन शङ्कितः, कुमारीभावः कन्यात्वं यस्याः ।

---

१ 'स्य स्फुरच्चुम्बनसङ्कल्पात्', २. 'लन्त्या दन्ता' ज. पाठः ३. 'पङ्क्त्याः श्रेण्या' क, ज, 'पङ्क्त्यः श्रेण्यः' ग. पाठः. ४. 'पटुवी तारा' ख. पाठः. ५. 'नेत्रे कुवलये यत्र' ग. घ. ङ. पाठः. ६. 'एभिर्विशेष' छ. पाठः. ७. 'रसावसानिकी' ज. पाठः. ८. 'सुष्ठुर जानतीनां' ग. घ. पाठः.

किञ्च उद्दामससिमऊहणिउरुम्बचुम्बिदपउत्तणीसन्दचन्दमणिहारधारिणी पउरकप्पूरसविसेससिसिरचन्दणरसच्छडासारसीअरणिअरदन्तुरिदबालकदलीदलसअणा संवाहणादिवावारतुवरन्तसहअरीसत्थविरइदोवणीदकमलिणीदलजलद्दा उण्णिद्दा एव्व रअणीओ गमेदि ।

(किञ्च उद्दामशशिमयूखनिकुरुम्बचुम्बितप्रवृत्तनिष्यन्दचन्द्रमणिहारधारिणी प्रचुरकर्पूरसविशेषशिशिरचन्दनरसच्छटासारशीकरनिकरदन्तुरितबालकदलीदलशयना संवाहनादिव्यापारत्वरमाणसहचरीसार्थविरचितोपनीतकमलिनीदलजलार्द्रा उन्निद्रैव रजनीर्गमयति ।)

किञ्चेति दिवसवृत्तान्तस्तावत् कथितः, रात्रिवृत्तान्तोऽपि श्रूयतामित्यर्थः । उद्दामशशिमयूखनिकुरुम्बचुम्बितप्रवृत्तनिष्यन्दचन्द्रमणिहारधारिणी प्रचुरकर्पूरसविशेषशिशिरचन्दनरसच्छटासारशीकरनिकरदन्तुरितबालकदलीदलशयना संवाहनादिव्यापारत्वरमाणसहचरीसार्थविरचितोपनीतकमलिनीदलजलार्द्रा उन्निद्रैव रजनीर्गमयति । मेघाद्यावरणविरहादुद्दामानामुच्छृङ्खलानां चन्द्रकिरणानां, निकुरुम्बेन समूहेन, चुम्बितं संस्पृष्टम्, अत एव प्रवृत्तनिष्यन्दं प्रारब्धजलबिन्दुक्षरणमित्यनेन चन्द्रदर्शनासहत्वादस्याः सखीभिरेव चन्द्रातपेऽवस्थाप्य प्रवृत्तनिष्यन्दत्वे तस्य समानयनं द्योत्यते । चन्द्रमणिहारं चन्द्रकान्तरत्नगुलिकावलिं, धारयितुं शीलं यस्याः । प्रचुरेण निर्भरेण कर्पूरेण मिलितत्वात् सविशेषं स्वभावशैत्यादाधिकं शीतलस्य चन्दनरसस्य चन्दनपङ्कस्य छटा समूहस्तस्यासारोऽवसेचनं तज्जनितैः शीकरैः बिन्दुभिर्दन्तुरितमुन्नतदन्तं कृतम्, विषमितमित्यर्थः । बालैरकठोरैः कदलीपत्रैः, कृतं शयनं तल्पकल्पनमित्यर्थः । संवाहनं हस्तपादादिमर्दनम् । आदिशब्देन

१. 'उद्दामासिसिरससिमउह' भ. पाठः. २. 'पउत्तिणीसन्द' क. पाठः ३. 'णी कप्पूरपूरसविसेस' क. 'णी पोरकप्पूर' ख. पाठः. ४. 'साराणिअर' क. ज. झ. ब. पाठः. ५. 'लीपत्तसंवाहणादि' क. झ. भ. 'लीपत्तसअणा' छ. ज. प. ऊ. ६. 'णसवाहणादि' घ. पाठः. ७. 'जलद्दा सअणीए उण्णिद्दा' क ङ. झ, 'जलद्दताळउन्ता उण्णिद्दा' ब. पाठः.

१. 'दुद्दामां' ख, ब, घ पाठः

कहं पि उवलद्धणिद्दा अवक्खरिदपादपल्लवुव्वमन्तपिण्डालत्तअरसा घरघराअन्तपीवरोरुमूलपासविसंवादिदणीवीबन्धणा उक्खुब्भन्तहिअअन्तरुत्तरङ्गणीसासाविसमूससन्तपुळअपम्हलपओहरोवरि णिहित्तवेवन्तभुअलदावेट्ठबन्धणं झत्ति पडिबुद्धदि । पडिबोहवेळाविसज्जिआवङ्गदिट्ठिविण्णादसुण्णसअणिज्जसंजादमोहमीलन्तलोअणा ससंभमसहीपउत्तिपडिवण्णमुच्छाविच्छेअसमअसंगळिददीहणीसाससंजाणिदजीविदासा

मृणालवलया[?]द्युपहारः । तत्प्रकारेषु व्यापारेषु कर्मसु त्वरमाणेन केन कृतेनास्याः अरत्युपशमो निद्रागमश्च भवेदिति सादरं प्रयतमानेन सखीसमूहेन विरचिता तथात्वेन निर्मिता, उपनीता समीपे प्रयुक्ता च, कमलिनीदलात्मिका जलार्द्रा यस्याः, हिमजलावसिक्तमम्बरखण्डं वीजनार्थं जलार्द्रा ।

'सचन्दनाम्भःकणकोमलैस्तथा वपुर्जलार्द्रा पवनैर्न निर्ववौ ।'

इति माघे । उन्निद्रा निद्रामुद्रम्य वर्तमाना । एवेति क्षणमप्यकम्पनिद्रात्वं प्रतीयते ।

'हिअअविणिहित्तणिम्माअन्तवल्लहसमाअमेत्ति' सङ्कल्पसमागमस्य प्रतिपादितत्वादिदानीं स्वप्नसमागमं वर्णयति — कथमपीत्यादि । कथमप्युपलब्धनिद्रा अवक्षरितपादपल्लवोद्भ्रमत्पिण्डालक्तकरसा घरघरायमाणपीवरोरुमूलपार्श्वविसंवादितनीवीबन्धना उत्क्षुभ्यद्धृदयान्तरोत्तरङ्गनिःश्वासविषमोच्छ्वसत्पुलकपक्ष्मलपयोधरोपरिनिहितवेपमानभुजलतावेष्टबन्धनं झटिति प्रतिबुध्यते । कथमपीति काकुस्वभावात् सखीप्रयत्नाच्चेत्यर्थः । अपक्षरितात् स्विन्नात्,

१. 'कहं बिअ' क. पाठः. २. 'णिद्दामुद्दा उअपप्फुरिदपाद' क, 'णिद्दा ओच्छुरिअपाअपादपल्लवुब्भन्तपिण्डा' ख. 'णिद्दामुद्दा अव' छ. ज. 'णिद्दामुद्दा सेअपज्झरिदपादपल्लवुब्भन्त' मु. पाठः. ३. 'विसंवादिद' ग. घ. झ. ञ. पाठः. ४. 'रंगदीहणीसास' ख. ग. घ. ङ. पाठः. ५. 'बिसमसमूससन्तपह्मल' क. पाठः. 'बिसमुच्छसन्तपह्मळ' झ. ञ. पाठः. ६. 'बन्धणा झत्ति' क. छ. ज. झ. ञ. पाठः. ७. 'विसज्जिदुब्भिण्णदिट्ठिविणिवादविण्णाद' क. झ. ञ. पाठः. ८. 'मीलन्तणअणा' ख, 'मिलिदलोअणा' ङ. पाठः. ९. 'सहीअणपउत्तपडि' क, 'सहीअणपअण्णपडि' छ. 'सहीअणपअत्तपडि' ज. झ. ञ. पाठः. १०. 'असदक्खमअ' ञ. पाठः. ११. 'संसेसजीविदा किं' क. झ. ञ. पाठः

१. 'केन हेतुनास्याः' ख. ग. पाठः. २. 'अश्रुखापक्षारित' ज. पाठः ३. 'दधूतयोत्तरङ्ग' क, 'दधूदयन्तरुत्तरङ्ग' ञ. पाठः

किंकादव्वमूढं पढमप्पत्थिदं णिअजीविदावसाणं दुव्वारदेव्वदुव्विलसिओवालंभमेत्तवावारं सहीअणं करेदि ।

(कथमप्युपलब्धनिद्रा अपक्षरितपादपल्लवोद्गमत्पिण्डालक्तकरसा घराघरायमाणपीवरोरुमूलपार्श्वविसंवादितनीवीबन्धना उत्क्षुभ्यद्धृदयान्तरोत्तरङ्गनिःश्वास-

---

पादपल्लवादुद्गमन्नार्द्रीकृततया स्रवत्, पिण्डालक्तकरसो लाक्षारसविशेषो यस्याः । वमिरकर्मकोऽपि प्रयुज्यते । तथा कादम्बर्यां — 'उद्गमदमलगङ्गाप्रवाहमिव जह्नुम्' इति, किरातार्जुनीये च — 'उद्गमन्नभिरराज समन्तात्' इति । घराघरायमाणेति स्मरजनितस्य स्फुरणस्याव्यक्तस्यानुकारः । डाचि वीप्सायां शानचौ । घराघरायमाणस्य पीवरस्य पीनस्योरुमूलस्य जघनमण्डलस्य पार्श्वे एकदेशे, न पुनः स्वस्थानभूत नाभिदेशे इत्यर्थः, विसंवादितं शिथिलत्वाद् अयथापूर्वं नीवीबन्धनं वाससः आग्रथनं यस्याः । उत्क्षुभ्यता हर्षतरलेन सम्भोगवेगक्षुभितेन वा हृदयेन, उत्तरङ्गैरुपर्युपरि प्रवृत्तैरुच्छ्वासैर्विषमसुभावचं यथा तथोच्छ्वसतः उत्कम्पमानस्य, पुलकैः पक्ष्मलस्य सान्द्रस्य पयोधरस्योपरिनिहितं वेपमानयोः प्रथमसाहसभयात् प्रियपरिष्वङ्गसुखविकाराद्वा कम्पमानयोर्भुजलतयोर्वेष्टेन वलयीकरणेन बन्धनं यथा तथेति क्रियाविशेषणेन परस्परालिङ्गनसुखे वर्तमान एवासमाप्ततृष्णायाः प्रबोधः प्रतीयते ।

'क नीलकण्ठ व्रजसीत्यलक्ष्यवागसत्यकण्ठार्पितबाहुबन्धना ।'

इत्युक्तवत् । झटिति प्रतिबुध्यत इति अरतिबलात् क्षणेन निद्राभङ्गः प्रकाश्यते । तथाविधस्य प्रतिबोधस्य दारुणदुःखहेतुत्वमाह — पडिबोहेत्यादि । प्रतिबोधवेलाविसर्जितापाङ्गदृष्टिविज्ञातशून्यशयनीयसञ्जात-

---

१. 'किंकादव्वदामूढदाए पढम' क. ञ. 'किंकादव्वदामूढं पढम' ञ, 'किंकादव्वमूढदाए पढम' ख. पाठः. २. 'रं अह्मारिसं जणं' क. झ. ञ. पाठः

---

१. 'मदमङ्गलगङ्गा' ग. घ. छ. पाठः २. 'घरायमाणमिति' ञ. पाठः ३. 'पूर्वं निबन्धनं' ख. ग. घ 'पूर्वनिबन्धं' घ, पूर्वनिबन्धनं ञ. पाठः ४. 'प्रबुध्यत' इति' ख. पाठः.

विषमोच्छ्वसत्पुलकपक्ष्मलपयोधरोपरिनिहितवेपमानभुजलतावेष्टबन्धनं झटिति प्रतिबुध्यते । प्रतिबोधवेलाविसर्जितापाङ्गदृष्टिविज्ञातशून्यशयनीयसञ्जातमोह-मीलल्लोचना ससंभ्रमसखीप्रवृत्तिप्रतिपन्नमूर्च्छाविच्छेदसमयसंगलितदीर्घनिःश्वास-संजनितजीविताशा किंकर्तव्यमूढं प्रथमप्रार्थितं निजजीवितावसानं दुर्वारदैव-दुर्विलसितोपालम्भमात्रव्यापारं सखीजनं करोति ।)

---

मोहमीलल्लोचना ससम्भ्रमसखीप्रवृत्तिप्रतिपन्नमूर्च्छाविच्छेदसमयसङ्कलितदीर्घ-निःश्वाससञ्जातजीविताशा किंकर्तव्यमूढं प्रथमप्रार्थितं निजजीवितावसानं दुर्वारदैवदुर्विलसितोपालम्भमात्रव्यापारं सखीजनं करोति । प्रतिबोधकाले **विसर्जितया** प्रेषितया, प्रियदर्शनायेत्यर्थात् , **अपाङ्गदृष्टया** कटाक्षदर्शनेन **विज्ञातात् शून्यशयनीयात् सञ्जातेन**, 'सविशेषणे विधिनिषेधौ विशेषण-मुपसंक्रामतः' इति न्यायाच्छयनीयस्य प्रियतमशून्यत्वं ज्ञात्वेत्यर्थः । **मोहेन** मूर्च्छया, सेन्द्रियस्य मनसो दुःखाभिघातात् प्रलीनतयेत्यर्थः । **मीलल्लोचना** मुकुलीभवन्नेत्रा । अत एव **ससम्भ्रमाणां** सखीस्नेहव्याकुलानां सखीनां **प्रवृत्त्या** हिमजलावसेकवीजनसंवाहनादिना प्रयत्नेन, **प्रतिपन्नः** प्राप्तो यो **मूर्च्छाया विच्छेदः** प्रशमः तत्काले **सङ्कलितेन** प्रवृत्तेन **दीर्घनिःश्वासेन सञ्जनिता** उत्पादिता **जीविते** स्वस्याः प्राणसन्धारणे **आशा** श्रद्धा यया। सखीनामित्यर्थात् । निश्चेष्टतयां पूर्वमुत्पन्नस्य मृतत्वभ्रमस्य जीवनचिह्नेन श्वास-निर्गमेण निरस्तत्वात् । **[किंकर्तव्यमूढं]** किं कर्तव्यमस्माभिरिति अप्रतिपत्तिविवशम् । **प्रथमं** मालतीप्राणावसादात् पूर्वं निजप्राणवियोगः प्रार्थि-तोऽभिलषितो येन । दुस्सहदुःखदर्शनपरिहारायेत्यर्थः । तत्र हेतुः — **दुर्वारस्य** प्रतिकर्तुमशक्यस्य **दैवदुर्विलसितस्य** विधिकर्तृकस्य दुष्टचेष्टितस्य, **उपालम्भो** विगर्हणं, तन्मात्रं तदेव **व्यापारः** प्रयत्नो यस्येति अपरिहार्यतया अवश्यं-भाविन्यर्थे साक्षिमात्रमपि मा भूदस्माकमिति भावः ।

---

१. 'सञ्जनित' क. पाठः. २. 'कर्तव्यमूढा', ३. 'ज्ञानदुर्वार' ४. 'विज्ञातशून्यशयनीया' ज. पाठः. ५. 'सखीनामित्यर्थः निश्चेष्ट' क. ज. पाठः ६. 'पूर्वमुत्पन्नमृतत्व' ज. पाठः, ७. 'जीवितचिह्नेन', ८. 'किं किं कर्तव्य' क पाठः, ९. 'अपरिवार्यतया' क. पाठः. १०. 'साक्षित्वमपि' क. पाठः.

पेक्ख[1] भअवदि ! इमेसु दाव लावण्णभूइट्ठणिम्माणपेरिपेलवेसु[2] अङ्गेसु दारुणं विअम्भिदस्स केच्चिरं कुसलावसाणदा मम्महस्स[3] । कहं च इमाइं रमणकेलिकलहकोवोवराअपल्लविअकेरलीकवोलकोमलुव्वेल्ल[4] विमलचन्दचन्दिउद्दामदलिदतिमिरावरणाइं[5] विहावरीमुहाइं ।

---

अथ विभीषिकामङ्गल्या झटिति साहसकरणाय मालतीं प्रोत्साहयति — पश्य भगवति ! एषु तावल्लावण्यभूयिष्ठनिर्माणपरिपेलवेष्वङ्गेषु दारुणं विजृम्भितस्य कियच्चिरं कुशलावसानता मन्मथस्य । पश्येति निरूपय, भगवत्या एवायं भार इति द्योतयति । एष्विित्यभिनयेन[1] अनुकम्पनीयतामाह । तत्र हेतुः — लावण्यभूयिष्ठनिर्माणपरिपेलवेष्विति । लावण्यबहुतरेण सर्गेण सर्वतो प्रदिष्टेषु भूतान्तराणि लेशतः संमेल्याबहुलं[2] तेज एवोपादाय निर्मितत्वात् । पार्थिवस्य काठिन्यस्य वायव्यस्य बलस्य चाल्पत्वमिति भावः ।

'भूयिष्ठं तेज एवाद्भिर्बहुलाभिर्मृदूकृतम् ।
चक्षुरानन्दजननं लावण्यमिति कथ्यते ॥'

इति दिवाकरः । दारुणं क्रूरतरं यथा तथा । विजृम्भितस्य स्वकार्यसामग्रीप्रकाशनेनोद्भूतस्येति परिपेलवत्वदारुणत्वयोः परस्परविरोधात्[3] सुलभापायत्वं ध्वन्यते । कियच्चिरं किं परिमाणं चिरं दीर्घकालमतीत्येति शेषः । अथवा चिरशब्दस्याव्ययत्वात् कियता चिरेणेत्यर्थः । चिराचिरयोः प्रतियोग्यपेक्षत्वात् कियद्ग्रहणम् । कुशलावसानता परस्परसमागमेन कुशलं मङ्गलमवसानं परिणामो यस्य तस्य भावः । अथ ऋतुविशेषरात्रिगुणैरुद्दीपितत्वाच्च मदनस्य दुर्निवारवीर्यत्वमाह—कथं च इमानि रमणकेलिकलहकोपोपरागपल्लवितकेरलीकपोलकोमलोद्वेलविमलचन्द्रचान्द्रिकोद्दामदलिततिमिरावरणानि विभावरीमुखानि ।

---

१. 'ता पेक्खदु भअवदी' क. ज. झ. ञ. 'ता पेक्ख भअवदी' छ. पाठः. २. 'परिपेसलेषु' ज. पाठः. ३. 'स्स भविस्सदि । कधं' क. झ. ञ. पाठः. ४. 'लुब्बेल्लन्त' क. झ. ञ, 'लुब्बेल्लचन्द' छ. पाठः. ५. 'चन्दिउद्दाम' ज. पाठः.

---

१. 'एष्वित्यनुनयेन' ख. पाठः. २. 'सम्मेल्य बहुलं' क. 'सम्मेल्या बहुलं' ग. पाठः. ३. 'विरोधत्वात्' क. पाठः.

(पश्य भगवति ! एषु तावल्लावण्यभूयिष्ठनिर्माणपरिपेलवेष्वङ्गेषु तरुणां विजृम्भितस्य कियच्चिरं कुशलावसानता मन्मथस्य । कथं च इमानि रमण-केलिकलहकोपोपरागपल्लवितकेरळीकपोलकोमलोद्वेलविमलचन्द्रचन्द्रिकोद्दामदलित-तिमिरावरणानि विभावरीमुखानि ।)

इमे अ उल्लासिदर्दुद्धरासिपूरधवलुज्जलजोह्नापक्खालिअणहङ्गणपरि-मिळिद्पाटलबउलणिग्गच्छन्तबहलपरिमलुप्पिळसअलसङ्कळणमांसला -

इमानि इमे इति च वसन्तस्य वर्तमानत्वात् प्रश्रितत्वाभिनयः । रमणैः प्रियतमैः सह यः केलिकलहः क्रीडाकृतो गोत्रस्खलनादिमूलः समरः, तेन यः कोपोपरागः क्रोधावलेपः, ततः पल्लवितः सञ्जातपल्लव इत्यरुणत्वं लक्ष्यते । केरळवरवर्णिनीनां सुवर्णवर्णानां कोपोपरागमण्डितैः सरापाण्डुभिर्गण्डमण्डले-रखण्डसाम्यलाभादुदयरागरूषितायाश्चान्द्रिकायाः केरळीग्रहणं । वक्ष्यते च—

'गाढोत्कण्ठकठोरकेरळवधूगण्डावपाण्डुच्छदैः' (VI.19.)

इति । केरळीकपोलवत् कोमला सुकुमारसुभगा, उद्वेला मर्यादामुल्लङ्घ्य वर्तमाना, सर्वपथीनेत्यर्थः । विमलस्य हिमव्यपायात् प्रसन्नस्य चन्द्रस्य चन्द्रिकया उद्दामदलितं विशृङ्खलं नाशितं, तिमिररूपमावरणं तिरोधानं येषां तानि । विभावरीमुखानि रात्रीणामारम्भाः । कथं नानर्थकारिणो भवन्ति प्रियसख्या इति उत्तरवाक्यगतेन विपरिणतलिङ्गेनान्वयः । अत्र नायकस्य सख्या झटित्यपनीतावकुण्ठननीलांशुकाया नायिकायाः समाधिरनुसन्धेयः ।

इमे चोल्लसितदुग्धराशिपूरधवलोज्ज्वलज्ज्योत्स्नाप्रक्षालितनभोङ्गणपरिमिलित-पाटलबकुलनिर्गच्छद्बहलपरिमलोत्पीडसकलसङ्कलनमांसलायमानमसृणमलयमारु-तोद्धूसरितदशदिशामुखा रजनीपरिणामा नानर्थकारिणो भवन्ति प्रिय-सख्याः । उल्लसितस्य चन्द्रोदयक्षुभितस्य, दुग्धराशेः क्षीरसागरस्य, पूरः प्रवाहः, तद्वद्धवलयोज्ज्वलया च ज्योत्स्नया प्रक्षालिते स्नपिते । निजस्य

१. 'दुग्धसिन्धुपूर' क. अ. न, 'दुग्धधारापूर' ख. ज. पाठः. २. 'जोह्नाजल-प्पक्खळिअणअणंगणा' क. अ. म. पाठः. ३. 'परिमळिअपाटल' ग. ब. ख. म. पाठः. ४. 'णिम्महणबहळ' क. म. अ. म, 'णिम्महन्तबहळ' ख. ग. घ. ब, 'णिम्मन्तबहळ' छ. पाठः. ५. 'परिमळुग्गारसंवलणमसिण' क. अ. म. पाठः.

१. 'क्रोधोपलेपः' क. ज. पाठः. २. 'नीनां कोपोप' ज. पाठः.

अन्तमसिणमलअमारुदुद्धूसरिअदसदिसामुहा रअणीपरिणामा ण अणत्थकारिणो होन्ति पिअसहीए।

(इमे चोल्लसितदुग्धराशिपूरधवलोज्ज्वलज्योत्स्नाप्रक्षालितनभोऽङ्गणपरिमिलितपाटलबकुलनिर्गच्छद्बहलपरिमलोत्पीडसकलसङ्कलनमांसलायमानमसृणमलयमारुतोद्धूसरितदशदिशामुखा रजनीपरिणामा नानर्थकारिणो भवन्ति प्रियसख्याः।)

नीलिम्नोऽत्यन्तपरित्यागेन धवलवर्णस्वीकारात् स्नपित इवेति द्योतकशून्योत्प्रेक्षा। तस्मिन्नभोऽङ्गणे गगनाजिर इति गगनस्याजिरस्याश्रयस्य संकोचः कथ्यते। परिमिलितस्य सम्मिश्रण्डितस्येत्याश्रितस्य वैपुल्यं प्रकाश्यते। ग्रीष्ममन्तरेण वसन्तेऽपि पाटलपुष्पसम्भवात् पाटलग्रहणम्। अथवा मधुरपरिपूर्णत्वात् पाटलवर्णेभ्यो बकुलेभ्यः केसरतरुकुसुमेभ्यो निर्गच्छतो, बहलस्य सान्द्रस्य परिमलोत्पीडस्य सौरभ्यसमूहस्य, सकलेन सम्पूर्णेन सङ्कलनेन संश्लेषेण मांसलायमानेन पीवरशरीरेणेव भवता, मसृणेन मन्देन, मलयमारुतेन उद्धूसरितानि कुसुमरजसा भृशं धूसलितानि वासितानि वा, दशानां दिशां मुखानि येषु। अनर्थकारिणः प्राणहरणरूपव्यसनहेतवो, न कथं भवन्ति। रजनीपरिणामाः रात्रीणां तृतीययामरूपाः परिपाकाः। मुख्यपरिणामग्रहणं प्रथमयामे प्रवर्धमानाया अरतेः सखीयत्नात् कालशैत्याच्च किञ्चिन्निद्रोपलम्भेन द्वितीययामेऽसत्त्वात् पश्चात् झटिति प्रबुद्धायास्तृतीययामे पुनरुद्वेलत्वं च प्रकाशयति। कथं नानर्थकारिणो भवन्तीत्युक्तेः तत्रोपायः सपदि विचिन्त्यतामिति प्रार्थनां सूचयति।

---

१. 'दुद्धूमाविददस' क. ख. ङ, 'दुद्धूसाविअदस' ख. ग. घ, 'दुद्धूसराविअदस' ब, 'दुद्धूददस' छ. पाठः. २. 'मुहा वसन्तरअणी', ३. 'परिणाहा' क. ख. ब. पाठः.

---

१. 'कणेन गगना' ख. छ. पाठः. २. 'मधुरसम्पूर्णत्वात्' क. ग. पाठः. ३. 'निर्गतो' ख. छ. पाठः. ४. 'धूलितानि' ज. पाठः. ५. 'रूपस्य व्यसन' ग. घ. पाठः.

**कामन्दकी—वत्से लवङ्गिके !**

यदि तद्विषयोऽनुरागबन्धः
स्फुटमेतद्धि फलं गुणज्ञतायाः ।
इति नन्दितमप्यवस्थयाऽस्या
हृदयं दारुणया विदार्यते मे ॥ १३ ॥

---

अथ कामन्दकी श्रुततद्वृत्तान्ता भङ्ग्या तदनुरागबन्धं स्थिरीकरोति यदीत्यादि । यदीति पूर्वमपरिज्ञातत्वमभिनीयोक्तिः । तद्विषयः माधवमालम्ब्य प्रवृत्तः । अनुरागबन्धः अनुरागात्मको बन्धः बन्धनं; अनुरागस्य वा बन्धः दृढीभावः ।

"सुखदुःखात्मकं भोग्यं सुखत्वेनाभिमन्यते ।
येन रागः स इत्युक्तो रञ्जनाद्विषयात्मनोः ॥"
"रागोऽनुवृत्तोऽविच्छिन्नमनुराग उदाहृतः ।"

इति भावप्रकाशः । स्फुटं निश्चितम् । फलं प्रयोजनम् । गुणज्ञतायाः कुलरूपशीलमाधुर्यकलाकौशलादिगुणविशिष्टपुरुषविशेषज्ञानस्य । एतत्तद्विषयानुरागबन्धरूपम् । हि प्रसिद्धौ, सर्वलोकसम्मतोऽयमर्थ इत्यर्थः । अन्यथा गुणविशिष्टं च जानाति अन्यस्मिंश्चानुरज्यत इति । केन सङ्गतमित्युन्मत्तपक्षे विचक्षणैर्निक्षिप्यत इति भावः । इति अनेन हेतुना । नन्दितं प्रहृष्टम् । अपीत्युक्त्या पितृदेशीयाया स्वस्या अभिनन्दनेन पित्रादीनामप्यनभिनन्दनीयत्वात् न तद्विषयाशङ्का कर्तव्येति व्यञ्जयति, गुणपक्षपातस्य सर्वजनश्लाघ्यत्वात् । विदार्यते विभिद्यते । दारुणयेत्यत्र हेतुः, कालान्तराक्षमत्वाद् अपायशङ्काजननेनेत्यर्थः । मे हृदयमिति निर्व्याजस्नेहनिगलितत्वं प्रकाश्यते । अत्र पूर्वार्धेऽतिशयोक्तिरुत्तरार्धे भावसन्धिश्चालङ्कारः । सदर्थोक्तौ कल्पनाद्धर्षविषादयोर्भावयोः स्पर्धीभावेन अवस्थानप्रतिपादनाच्च ॥ १३ ॥

---

१. 'काम—लवङ्गिके !' क. ख. छ. ज. झ. ञ. पाठः. २. 'वा स्याद्धृदयं' ख. पाठः. ३. 'विभाव्यते' ख, 'विदीर्यते' ज. झ. ञ. पाठः.

---

१. 'श्रुततत्तान्ता' ख. पाठः, २. 'बन्धनं' ख. पाठः. ३. 'यदिति पूर्वं' ग. घ, 'यदीतः पूर्वं' छ. पाठः. ४. 'धनमवलम्ब्य' ज. पाठः. ५. 'इति किं केन' क. पाठः ६. 'मप्यभिनन्दनीयत्वात्' ज. पाठः. ७. 'भिद्यते' क. ग. घ. छ. ज. पाठः. ८. 'भावसिद्धिश्चालङ्कारः' क. पाठः. ९. 'भावेन प्रति' क, 'भावेन अवस्था प्रति' ग. पाठः.

माधवः— स्थाने हुल्लासो भगवत्याः । अहो प्रमादः ।

प्रकृतिललितमेतत्सौकुमार्यैकसारं
वपुरयमपि सत्यं दारुणः पञ्चबाणः ।

स्थाने योग्येऽवसरे । स्वजिज्ञासितस्य तदभिप्रायस्य सर्वात्मना ज्ञातत्वादिति भावः । हिरवधारणे । स्थाने एवेत्यर्थः । उल्लासः हर्षः । उल्लासस्यवोक्तिः हर्षस्यैव सात्विकत्वादावेगस्य नाटितत्वाच्चेति मन्तव्यम् । हृल्लास इति तु पाठे हृल्लासो नाम हृद्रोगविशेषः ।

'सप्रसेको हृदयोत्क्लेशो हृल्लासः ।'

इति वैद्यके लक्षितत्वात् । अत्र तु लक्षणया हृदयदुःखमुच्यते हृदयं विदार्यत इत्युक्तेः । अथ तदवस्थाश्रवणादुद्विजमानोऽपायशङ्की कथयति—अहो इति अचिन्तितत्वाद्विस्मयः । स्वावस्थया एवानुभवगोचरस्य पूर्वमतिदारुणत्वसम्भावनादिदानीं ततोऽपि तदवस्थाया दारुणत्वमनुसन्धायाचिन्तितोऽयमर्थः कथं दैवेनोपनिपातित इत्याश्चर्यबुद्धिं द्योतयति । प्रमादः अवधाय परिहर्तव्योऽनर्थः ।

प्रमादत्वमेवोपपादयति—प्रकृतिललितमित्यादि । प्रकृत्या स्वभावतो, न पुनर्वेषविरचनया ललितं सुन्दरम् । एतदिति पुरोवर्तिनोऽनुभवाभिनयः । सौकुमार्यैकसारं मार्दवमेकमेव सारो बलं स्थिरांशो वा यस्य । वेणूनामिव त्वक् चन्दनानामिव गन्धः, यतस्ते त्वक्सारा गन्धसारा इति च कथ्यन्ते । अयमिति पुंस्त्वितशरस्य स्वसमीपे सन्ततसन्निहितस्य तस्यानुभूयमानत्वा-

१. 'माध — स्थान एव हृल्लासो' क. प. प. 'माध—स्थान एव अभ्युल्लासो' ङ. 'माध — अहो स्थान एव अभ्युल्लासो' ञ. 'माध—स्थान एव हृदयोद्वेगो भग' ङ. पाठः. २. 'त्याः । काम— अहो' क. ख. ज. झ. म. 'त्याः प्रकृतिललित' ख. पाठः.

१. 'नाटितत्वाच्चेति' ख. ग. पाठः. २. 'स्वावस्थाया' ङ. ज. पाठः. ३. 'नुभावगोचरस्य पूर्वमनुभाव्यत्वमिति दारुणत्वसम्भावना इदानीं'. ४. 'किं दैवेन च निपातित', ५. 'सारं वपुः मार्दवं', ६. 'गन्धाः' ज. पाठः.

चलितमलयवातोद्धूतचूतप्रसूतः
कथमयमपि कालश्चारुचन्द्रावतंसः ॥ १४ ॥

लवङ्गिका — अण्णं च जाणिदं होदु भअवदीए । एदम्माहवपडिच्छन्दसणाहं चित्तफलअं। (मालत्याः स्तनांशुकमपनीय) एसा वि तेस्स जेव्व सहत्थविरइद त्ति कण्ठावलम्बिदा बउलमाला सजीवणं पिअसहीए । (बकुलमालां दर्शयति ।)

(अन्यच्च ज्ञातं भवतु भगवत्या । एतन्माधवप्रतिच्छन्दसनाथं चित्रफलकम् । (मालत्याः स्तनांशुकमपनीय) एषापि तस्यैव स्वहस्तविरचितेति कण्ठावलम्बिता बकुलमाला सञ्जीवनं प्रियसख्याः ।)

मिनयः । सत्यमित्यनुभवसिद्धत्वादसन्दिग्धत्वम् । चारुचन्द्रावतंसः चारुः प्रसन्नश्चन्द्र एवावतंसः कुन्दस्तबकादिमयः कर्णपूरो यस्य । अयमिति वर्तमानत्वाद्वसन्तस्य परामर्शः । अपिभ्यां दारुणत्वं समुच्चीयते । अयं पञ्चबाणोऽपि दारुणः, अयं कालोऽपि दारुणः इति स्वहृदयसंवादात् प्रकृतिललितमेतद्वपुः सौकुमार्यैकसारम् ; एतौ च दारुणौ; अतः सुकुमारदारुणयोः श्लेषस्यातिवैषम्यात्, कथं कः प्रकारो भविष्यतीति शेषः । अत्र चिन्ताख्यो भावो व्यज्यते । विषमं चालङ्कारः ॥ १४ ॥

अन्यच्च ज्ञातं भवतु भगवत्या । उक्तादन्यच्च किञ्चिद्वस्तु भगवत्या ज्ञातं भवतु । "मतिबुद्धिपूजार्थेभ्यश्च" (३-२-१८८) इति निष्ठायां "क्तस्य च वर्तमाने" (२- ३- ६७-) इति कर्तरि षष्ठी । एतन्माधवप्रतिच्छन्दसनाथं चित्रफलकम् । एतदित्युक्तेः सदा स्वहस्तधृतत्वं तस्य प्रकाश्यते । स्तनांशुकमपनीयेति त्रपाच्छादितायाः बकुलमालायाः प्रकाशनाय तिरोहितस्य माधवस्य स्तनमुकुलप्रदर्शनेन नयनाह्लादसाम्राज्यं च सम्पादयितुमिति भावः । एषापि तस्यैव स्वहस्तविरचितेति कण्ठावलम्बिता बकुलमाला सञ्जीवनं प्रियसख्याः । सञ्जीवनं प्राणसन्धारणसाधनम् ।

१. 'एदं च माहव' ख, छ, ज, पाठः २. 'तस्स चेअ' ख- पाठः ३. 'माला जीवणं' क- झ, ञ, पाठः

१. 'हृदयसंबन्धात्' ज- पाठः, २. 'वैषम्यम् कथं' ख- पाठः ३. 'त्रपयाच्छादितायाः' ग, ञ, झ- पाठः

(बकुलमालां दर्शयति ।)

माधवः — (सस्पृहम्)

जितमिह[1] भुवने त्वया यदस्याः
सखि ! बकुलावलि! वल्लभासि जाता ।
परिणतबिसकाण्डपाण्डुमुग्ध-
स्तनपरिणाहविलासवैजयन्ती ॥ १५ ॥

स्तनांशुकापनयनस्य फलमाह — सस्पृहमिति । अहो इयं धन्या-नामस्माकमीदृशः सुकृतपरिणाम इति तस्य जन्मनि स्वयं सापेक्षमि-त्यर्थः ।[1]

जितमित्यादि । इह भुवने न पुनरस्मिन् प्रदेशे । जितं सर्वमभि-भूय स्थितमिति भावे निष्ठा । अस्याः मालत्याः । सखीति, न पुनर्वत्सेति सखीत्वस्य पुत्रीत्वादपि विस्रम्भभूमित्वादवसरे स्मारयितव्यस्त्वयायं जन इति प्रार्थना द्योत्यते । वल्लभा इष्टतमा । अत एव जातासि सफल-जन्मासि यदित्यर्थः । अन्यथा 'असि'पदप्रयोगात् 'जाता'शब्दस्यापुष्टा-र्थत्वप्रसङ्गात् ।[2] वल्लभात्वमेवोपपादयति — परिणतं किञ्चिज्जरठम्, बिस-काण्डं मृणालदण्डः, तद्वत् पाण्ड्वोर्गौरवर्णयोर्मुग्धयोर्नवप्ररूढत्वादप्रौढयोः स्तनयोः । परिणतबिसग्रहणं चम्पकदलवर्णयोः स्तनयोः प्रसक्तस्य स्मरपाण्डिम्नोऽ-स्फुटत्वात् कपिलशोभित्वं प्रकाशयितुम्

'बिम्बं कठोरबिसकाण्डकडारगौरै-
र्विष्णोः पदं प्रथममग्रकरैर्व्यनक्ति ।'

इत्युक्तत्वात् । परिणाहो विस्तारस्तस्य विलासः शोभा तदर्था वैजयन्ती त्रिभुवनविजयेनोत्थापितध्वजपताका,[3] भूत्वेति शेषः । अत्राचेतने वस्तुनि चेतन-वदभिमुखीकृत्य सम्भाषणानुपपत्तेः वाच्यस्यासम्भवेऽपि प्रकृते तात्पर्येणारोपे-प्रतीतेर्वैधर्म्येणायमप्रस्तुतप्रशंसालङ्कारः[4] । अस्माभिस्तु न जितमिति वैधर्म्येण[5]

१. 'जितमिव भुवने' क. पाठः.

१. 'साभिलाषमित्यर्थः', २. 'सखीत्वस्यापुत्रीत्वादविस्रम्भ', ३. 'विज-येोत्थापित', ४. 'रोपात् प्रतीतेः', ५. 'वैधर्म्यप्रतीते' ज. पाठः.

(नैपथ्ये[1] कलकलः । सर्वे आकर्णयन्ति ।)

पुनर्नैपथ्ये — अरे[2] अरे सङ्करउरवासिणो[3] जणवदा ! एसो क्खु जोव्वणा-

प्रस्तुतप्रतीतेरनुमानं च । साध्यसाधननिर्देशाद्वैजयन्तीत्यत्र[1] रूपकं च । 'तदास्यतां किञ्चिदाख्येय'मित्यारभ्य 'विलासवैजयन्ती'त्यन्तेन उत्तरोत्तरकथनात् प्रगमः[2] ।

अथैवं दूतीमुखेन प्रकटितपरस्परानुरागयोर्नायकयोरन्योन्यस्य दर्शनाय पताकानायकस्य मकरन्दस्य मदयन्तिकादर्शनाय चोपायभूतं शार्दूलावस्कन्दरूपं व्यसनमुपक्षिपति । गुणानुरक्ताया एव प्राणसंशये नायकेन परित्रातायाः कृतज्ञतयापि तस्मिन्ननुरागदार्ढ्यस्यावश्यंभावात् मदयन्तिकामकरन्दयोरनुरागदार्ढ्याय शार्दूलवृत्तान्तोऽधुना कथ्यते । मालतीमाधवयोस्तु कापालिकवृत्तान्तो[3] वक्ष्यते । एवं कृतपरस्परपरिग्रहयोश्च दूतीप्रत्ययात् समागमः । स तु "देवताभिगमने यात्रायामुद्यानगमने क्रीडायां जलावतरणे विवाहे यज्ञे व्यसनोत्सवेष्वग्न्युत्पाते चोरविभ्रमे जनपदस्य चक्रारोपणे प्रेक्षाव्यापारे[4] तेषु तेषु कार्येष्विति बाभ्रवीया' इति वात्स्यायनवचनात् ।

कलकलः कोलाहलः । अविज्ञायमानभेदो बहूनां महीयान् ध्वनिरित्यर्थः । आकर्णयन्ति समन्तात् तदाभिमुख्येन कर्णान् कुर्वन्ति, अवधानेन शृण्वन्तीत्यर्थः । 'प्रातिपदिकाद् धात्वर्थे' (ग.) इति णिच् ॥ १५ ॥

अरे अरे इत्यादि । अरे अरे शङ्करपुरवासिनो जनपदाः ! एष खलु यौवनारम्भभरितदुर्विषहामर्षरोषव्यतिकरबलात्कारविघटितोत्रुटितलोहपञ्जरप्रतिबन्धसङ्कलितो लीलाविलासोद्वेल्लद्बहलमतुङ्गलाङ्गूलविकटवैजयन्तिकविषमडामरशरीरसन्निवेशो मठादवक्रम्य तत्क्षणसतृष्णकवलितानेकदेहिदेहावयवमध्यस्थितनिष्ठुरास्थिखण्डनटङ्कारकटकटायमानकरपत्रकठिनदंष्ट्राकरालमुखकन्दरः प्रकट[5]विजृम्भणोद्दामदारुणचपेटबलात्कारप्रमथितानेकतुरङ्गजाङ्गलावगारभरितगलगुहागर्भगम्भीरगलगद्बोल्लसितरक्तिमाल्लक्षणशब्दसन्दर्भपूरितनभोभागो भीभितनष्टविद्राविताशेषजननिवहः कठोरनखरकर्परवज्रनिर्दयकृष्टकटकस्वैरितजन्तुगात्रापरो-

१. 'नेपथ्ये', २. 'रे रे' क. ग. छ. ज. झ. ञ. पाठः. ३. 'सङ्करधराधिवासिणो' क. झ, ञ. पाठः.

१. 'साधनभावनिर्देशा' ज. पाठः. २. 'प्रशमः' क. ज. पाठः. ३. 'कापालिकावृत्तान्तो' क. ज. पाठः. ४. 'प्रेक्ष्याव्यापारे' ज. पाठः. ५. 'प्रकटितविजृ' ख. पाठः. ६. 'नखकोपर' ख. 'नखकर्पर' [illegible] पाठः.

[1]ईसंभरिददुव्विसहामरिसरोसपसरभरबलामोडिदविहडि[2]दुक्खुडिअलोहपञ्जर[3]-पडिभङ्गसङ्कलिदो[4] लीलाविलासुव्वेल्लवल्लहतुङ्गलङ्गूलविअडवेजअन्ति[5]-आविसमडामरसरीरसण्णिवेसो[6] मठादो अवक्कमिअ तक्खणसतिह-

---

पर्युत्तरद्रक्तकर्दमितगतिपथो दुष्टशार्दूलः कृतान्तलीलायितं करोति । तत् परिरक्षत यथाशक्त्यात्मनो जीवितमिति । अरे अरे इति आभिमुख्यकरणद्योतकमव्ययम् । वीप्सया सम्भ्रमो द्योत्यते । जनपदाः जनाः । 'देशे जने जनपद' इति वैजयन्ती । बाल्य एव पूर्वं पञ्जरे निरुद्धत्वादिदानीं यौवनस्यारम्भेण पूर्णो दुर्विषहो मनस्यमानमर्षो[1] बन्धनयन्त्रणाक्षमा, तेन यो रोषो रोद्धृजनस्योपरि जिघांसया कोपः, तत्सम्बन्धेन बलात्कारो हठप्रवृत्तिः । स्वतो बलिनः क्रोधे सति द्विगुणबलत्वमिति भावः ।

'प्रायः स्वं महिमानं कोपात् प्रतिपद्यते हि जनः ।'

इति शाकुन्तलोक्तेः । तेन विघटितस्य विश्लेषितसन्धिबन्धस्यात एवोत्त्रुटितस्य स्वयं खण्डितावयवस्य लोहपञ्जरस्यायोमयबन्धनयन्त्रस्य, प्रतिभङ्गेन प्रत्यङ्गसम्मर्देनेन सङ्कलितः निर्वार्य निष्क्रान्तः । लीलाविलासेन क्रीडाप्रयुक्तेन सञ्चरणेनोद्वेल्लत् ऊर्ध्वं चलत् वल्लभमिष्टतमं तुङ्गं स्वत उन्नतं लाङ्गूलं बालधिरेव विकटा विस्तृता वैजयन्तिका ध्वजपटी । दूरत एव तरलोन्नतत्वेन दृश्यमानत्वात् तया विषमः निम्नोन्नतः डामरः भापणश्च शरीरसन्निवेशो देहसंस्थानं यस्य । मठाद्देवालयसमीपगतच्छात्रादिनिवासस्थानात् पञ्जरावस्थानस्थलात् । 'मठश्छात्रादिनिलयः' इत्यमरः । अवक्रम्य उत्प्लुत्य, तत्क्षण एवापक्रमसमनन्तरमेव सतृष्णं चिरकालप्रार्थितत्वात् साग्रहं यथा तथा कवलि-

---

१. 'रक्तगन्धसंभरिद' क. झ. ञ. पाठः २. 'विहुड्घाटिद' क. छ. झ. ञ. पाठः ३. 'पञ्जरपडिअड्डासिहुलाणिरोहपडिभङ्ग' क, 'पञ्जरपडिळग्गतत' ज, 'पञ्जरणिवद्धसिहुलणिरोहपडिभङ्ग' झ. ञ. पाठः ४. 'दो णिग्गलीला' क. झ. पाठः ५. 'विलासपेरन्तुद्देल्लन्तवहलुत्तङ्गलङ्गूल' क, 'विलासुव्वेल्लन्तबहलुत्तुङ्गलङ्गूल' झ. ञ. पाठः ६. 'आडम्बरुद्दामसरीर', क. झ. ञ, 'आविसमडामरुद्दामसरीर' ञ. पाठः

---

१. 'दुर्विषहो मनस्यमर्षो' ख, 'दुर्विषहोऽसह्यमानोऽमर्षः' ज. पाठः

कबलिदाणेअदेहिदेहावअवमंज्ञात्थिदणिट्ठुरत्थिखण्डणटङ्कारकडकडाअ-न्तकरपत्तकठिणदाढाकरालमुहअन्दरो पअडविअम्भणुद्दाममदारुणचवेडव-ळामोडिपमहिदाणेअतुरङ्गजङ्गलोवगारभरिदगळगुहागब्भगम्भीरगग्गरु-

तानां भक्षितानां अनेकेषां देहिनां देहावयवा मूर्धचक्राणि, तन्मध्यस्थितानां निष्ठुराणां कठिनानामस्थ्नां कपालादीनां खण्डने चर्वणे यष्टङ्कारः कठिन-द्रव्यखण्डनशब्दानुकारः ।

'दोर्दण्डाञ्चितचन्द्रशेखरधनुर्दण्डावभङ्गोद्यत-
टङ्कारध्वनिरार्यबालचरितप्रस्तावनाडिण्डिमः ।'

इति महावीरचरितोक्तेः । तेन कटकटायमानाभिः परस्पराभिघट्टनात् कट-कटेतिशब्दान् कुर्वाणाभिः ।

'निर्पीड्य पाणिना पाणिं दन्तान् कटकटाप्य च ।'

इति रामायणोक्तेः । करपत्रं क्रकचस्तद्वत् कर्कशाभिः दंष्ट्राभिः महद्भिः दशनैः कराला विकृता मुखरूपा कन्दरा गिरिदरी यस्य । प्रकटेन स्पष्टेन विजृम्भणेन विततीकरणेन उद्दामदारुणेन अत्यर्थं क्रूरेण, अन्यदा कोशनिक्षिप्तनखरस्य पाणिपादस्य सङ्कोचात्, चपेटस्य हस्ततलताडनस्य बलात्कारेण ।

'पाणौ चपेटप्रतलप्रहस्ता विस्तृताङ्गुलौ'

इत्यमरः । प्रमथितानामनेकेषां तुरङ्गाणामश्वानां जाङ्गलस्य मांसस्य अवगारेण भक्षणेन । अवपूर्वाद् गिरतेर्घञि रूपम् । 'ओदवापयोः' (प्रा.प्र.४.११०) इत्योकारः । भरिते पूरिते । गलगुहागर्भे कण्ठबिलकुहरे गम्भीरेण

१. 'मज्झणिट्ठुर' क. झ. ञ. पाठः. २. 'खण्डटङ्कार' क. छ. झ. ञ. पाठः. ३. 'पअण्डवज्जणिग्घाअदारुण' क. झ. ञ, 'विअडविअम्भ' छ. ज. पाठः. ४. 'चवेडामोडणपाडिदाणेअ' छ. झ. ञ, 'चपेडामोदिअसळामोडिअपमडि' छ. ज. पाठः. ५. 'णेअणरतुरङ्ग' क. छ. ज. झ. ञ. पाठः. ६. 'जङ्गलुग्गार' क. झ. ञ, 'जङ्गलोग्गार ग. छ, 'जङ्गलोदग्गार' ख. पाठः. ७. 'घग्घरोरालि' क. झ. ञ, 'घग्घरुल्लसिअ' ख, 'गग्गरोरलि' ज. पाठः.

१. 'दोस्तम्भाञ्चित' ञ. पाठः. २. 'विजृम्भितेन' ज. पाठः. ३. 'तुरङ्गमाणां' ख. ग. पाठः.

ल्लसिअरल्लिगल्लूरणसद्दसन्दब्भपूरिअणहोभाओ भेसाविअणट्ठविद्दाविदा-सेसजणणिवहो कठोरणहरकप्परोरप्फणिद्दअकड्ढिअकडप्पतुरिअजन्तुगत्ता-उवरोपरि उत्तरन्तरत्तकद्दमिअगइवहो दुट्ठसद्दूलो कदन्तलीलाइदं करेदि । तां परिरक्खध जधासत्ती अत्ताणं जीविदं ।

(अरे अरे शङ्करपुरवासिनो जनपदाः ! एष खलु यौवनारम्भ-भरितदुर्विषहामर्षरोषव्यतिकरबलात्कारविघटितोत्त्रुटितलोहपञ्जरप्रतिभञ्जसङ्कलितो लीलाविलासोद्वेल्लद्बहलभुजङ्गलाङ्गूलविकटवैजयन्तिकाविषमडामरशरीरसन्निवेशो मठादवक्रम्य तत्क्षणसतृष्णकवलितानेकदेहिदेहावयवमध्यस्थितनिष्ठुरास्थि-खण्डनटङ्कारकटकटायमानकरपत्रकठिनदंष्ट्राकरालमुखकन्दरः प्रकटविजृम्भणोद्दाम-

---

गरीयसा गद्गदेन उल्लासितेन रल्लिगल्लूरणशब्दसन्दर्भेण व्याघ्रादीनां हर्षो-त्कर्षहेतुकं गर्जितं रल्लिगल्लूरणम् । देशीशब्दश्चायम् । सन्दर्भः प्रथनं उपर्युपरि प्रवृत्तिरित्यर्थः । पूरितो नभोभागो येन । भीषिताः त्रासिता अत एव नष्टा अदर्शनं गमिता लताकुञ्जादिषु तिरोहिता इत्यर्थः । विद्रा-विता दिगन्तेषु विधाविताश्च जननिवहा येन । कठोरैर्नखरकर्परैर्नखकषा-त्मकैर्वज्रैर्निर्दयकृष्टानां पृष्ठतोऽनुसृत्येत्यर्थात् । 'णहकडम्बे'ति वा पाठः । नखसमूहेनेत्यर्थः । 'उरफ्फ' इति वज्रस्य देशीसंज्ञा । कटकत्वरितानां पुरं प्रवेष्टुं धावतां जन्तूनां, गात्रापरोपरि गात्रस्य शरीरस्यापरः पृष्ठभागः आकर्षणेनाधोमुखापातित्वात् तस्योपरि ऊर्ध्वभागे, उत्तरता उत्प्लवमानेन रक्तेन रुधिरेण कर्दमितः पङ्किलो गतिपथो यस्येति । गतिपथ इत्यनेन यतो यतो गम्यते स स पन्थास्तथेति व्यज्यते । शार्दूलशब्देनैव गतार्थत्वेऽपि

---

१. 'पडिरवाभोअभीसिअणट्ठ' क, 'पूरिअणअणअलो जीविअणट्ठ' ख, 'पूरि-अणहअलो णिहृदभेसिअनिद्दाविअ' छ, 'पूरिअणहअलो णिप्पेसिदणट्ठणिद्दाविदासेस' ज. 'पडिरवाभोअभीसाविदणट्ठ' झ. ञ. पाठः. २. 'णहरकप्परक्कमणणिद्दअ' क. झ. ञ. 'णहकप्परो' घ, 'णहरकप्परदलिआकड्ढजन्तु' ज. पाठः. ३. 'णिद्दअदारिदजन्तुगत्ता-प्पउत्तरन्त' क, 'णिद्दअदारिदजन्तुगत्तावअवप्पउत्तरन्त' झ. ञ. पाठः. ४. 'लो कुविअकदन्त' क. झ. ञ. पाठः. ५. 'कालायिअं' छ. पाठः. ६. 'ता रक्खध' क. झ. ञ. पाठः. ७. 'सत्तीए अप्पणोवदं ति' क, 'सत्ति अत्तणो जी' ख. घ. छ. ज, 'सत्तीए अप्पणो जी' ग. ड. पाठः.

---

१. 'हर्षहेतुकं' ग. घ. ङ. पाठः. २. 'नखकर्पर'. ३. 'णह कर्रेति वा' ज. पाठः ४. 'उरफं वज्रस्य' ख., 'उरफं इति' ज. पाठः. ५. 'शरीरोत्परः' ङ. पाठः ६. 'शब्देन गतार्थे' ख. पाठः.

दारुणचपेटचलात्कारप्रमाथितानेकतुरङ्गजाङ्गलावगाहरभसरितगलगुहागर्भगम्भीरगद्गदोच्छलितरल्लिगल्लूरणशब्दसन्दर्भसंपूरितनभोभागो भीषितनष्टविद्रावितशेषजननिवहः कठोरनखरकर्परवज्रनिर्दयकृष्टकटकत्वरितजन्तुगात्रापरोपर्युत्तरद्रक्तकर्दमितगतिपथो दुष्टशार्दूलः कृतान्तलीलायितं करोति । तत् परिरक्षत यथाशक्त्यात्मनो जीवितम् ।)

(प्रविश्य[1] सम्भ्रान्ता बुद्धरक्षिता[2])

परित्ताअध! परित्ताअध! एसा णो पिअसही अमच्चणन्दणस्स भइणी[3] मदअन्तिआ एदिणा[4] दुट्ठसद्दूलेण हदविद्दाविअपरिअणा[5] अभिद्दवीअदि[6]।

(परित्रायध्वं! परित्रायध्वं! एषा नः प्रियसखी अमात्यनन्दनस्य भगिनी मदयन्तिका एतेन दुष्टशार्दूलेन हतविद्रावितपरिजना अभिद्राव्यते।)

---

दुष्टशब्दस्य प्रयोगो भीतजनवचनत्वाद्दुष्टः। कृतान्तस्य यमस्य लीलेव लीलायितं, तत्करोति। सर्वजन्तुसंहारसंरम्भादित्यर्थः।

अत्र च कवलितानेकेति प्रमथितानेकतुरङ्गेति भीषितनष्टविद्रावितेति निर्दयकृष्टकटकत्वरितजन्तुगात्रेति च पौनरुक्त्यं नाशङ्कनीयम्। तत्र तत्र फलैक्येऽपि विध्वंसनप्रकारभेदप्रतिपादनस्य चमत्कारकारित्वादत्र रौद्ररसो ध्वन्यते। आरभटी च वृत्तिरनुसन्धेया। एवमन्यत्रापीदृशे स्थले।

" .... .... .... आरभटी पुनः
रसे रौद्रे सबीभत्से"

इति वचनात्। [तत्] तस्मात् परिरक्षत। यथाशक्ति स्वं स्वं सामर्थ्यमनतिक्रम्य। गर्भगृहप्रवेशवृक्षारोहणदूरधावनादिभिरित्यर्थः। आत्मनां स्वेषां जीवितं प्राणानित्यवश्यरक्षणीयत्वमाह।

सम्भ्रान्ता केशस्रंसनोत्तरीयस्खलनादिभिर्मनःक्षोभं[1] प्रकाशयन्तीत्यर्थः[2]। परित्रायध्वं परित्रायध्वं रक्षत रक्षतेति वीप्सया त्वरां द्योतयति। अविशेषेणोक्तिः यः कश्चित् समर्थस्तं प्रति प्रार्थनां[3] व्यञ्जयति। कुत इत्याह—एषा

---

१. '(प्रविश्य बुद्धरक्षिता सत्रासं)' क. झ. पाठः. २. 'ता—एसा' क. पाठः. ३. 'बाहणिआ' क. घ. ङ. झ. ञ. 'भइणिआ' ग पाठः ४. 'णिणिद्द' क. झ. ञ. 'णिहद' ङ. पाठः. ५. 'विआसिसपरिअणा' ज. झ. ञ. पाठः. ६. 'अभिभवीआदि' क. ज. झ. ञ. पाठः.

---

१. 'मनःक्षोभं' क. पाठः. २. 'संयोत्तरीय' क. पाठः. ३. 'प्रार्थनं' ज. पाठः.

मालती—अहो पमादो। (अहो प्रमादः।)

माधवः—(उत्थाय) बुद्धरक्षिते! क्वासौ क्वासौ?

मालती—(दृष्ट्वा सहर्षं ससाध्वसं सोत्कम्पं च आत्मगतम्) अम्महे एसो वि एत्थ ज्जेव्व। (अम्महे एषोऽप्यत्रैव।)

माधवः—(स्वगतं) हन्त पुण्यवानस्मि, यदहमतर्कितोपनतदर्शनोल्लसितयानया।

नः प्रियसखी अमात्यनन्दनस्य भगिनी मदयन्तिका एतेन दुष्टशार्दूलेन हतविद्रावितपरिजना अभिद्राव्यते। एषेति सामीप्यात् सुरक्षत्वं, नः प्रियसखीति बह्वीनां स्त्रीणामनुग्रहः। अमात्यनन्दनस्य स्वसेति महते प्रत्युपकाराय पर्याप्तेति ध्वन्यते। केचिद्धता केचिद्विद्राविताश्चानुचरा यस्याः सा। हतविद्रावितपरिजनेति रक्षकान्तराभावादापदि वर्तमानाया रक्षणं प्रति समीचीनोऽयमवसर इति ख्याप्यते। अभिद्राव्यते स्वोद्देशेनानुगम्यते।

अहो प्रमादः अचिन्तितोऽनर्थः।

उत्थाय रक्ताशोकगहनान्निष्क्रम्य प्रकाशीभूयेत्यर्थः। वीरत्वाद्दयालुत्वाच्च रहस्यभेदमपि कृतवानिति द्योतयति। क्वासौ क्वासौ कस्मिन् देशे मदयन्तिका। वीप्सया रक्षणत्वरां सूचयति।

सहर्षं प्रियतमस्य चिरमनोरथभूताद्दर्शनात् सम्मोदम्। ससाध्वसमतर्कितोपनतत्वात् स्त्रीस्वभावाच्च। सात्त्विकविकाराच्च सोत्कम्पम्। अम्महे इत्याश्चर्यद्योतकमव्ययम्। एषोऽप्यत्रैवेति स्वसल्लापश्रवणशङ्कया लज्जां द्योतयति। वयमिवायमप्यस्मिन्नेव किं स्थित इत्यर्थः।

शङ्करपुरोद्यानकुञ्जतिरोहितस्य मालतीवचनश्रवणात् झटित्यन्योन्यदर्शनाच्च समाधानं बीजस्य प्रकाशनात्। हन्तेति हर्षे। अतर्कितोपनतेन अचिन्तितप्राप्तेन मद्दर्शनेन। उल्लसितया प्रहृष्टया अनया मालत्या।

१. 'माल— लवङ्गिए अहो' क. प. छ. झ. ञ. 'माल—सहि लवङ्गिए अहो' ग. ङ. ज पाठः. २. 'अहो महन्तो पमादो' ज. ञ. पाठः. ३. 'माध—(ससंभ्रममुत्थाय)' क. झ. ञ. 'माध—बुद्ध' ज. पाठः. ४. 'ससाध्वसं च' ग. छ. ज. पाठः. ५. 'दर्शनोल्लसितलोचनयानया' क. झ. ञ. पाठः.

१. 'रक्षान्तराभावात्' ग. घ. 'रक्षकाभावात्' ज. पाठः. २. 'वेति सल्लाप', ३. 'वावस्थित' ज. पाठः. ४. 'न दर्शन' क. [illegible]

कवलित इव कृत्स्नश्चक्षुषा स्फारितेन
प्रसभममृतमेघेनेव सान्द्रेण सिक्तः ।
अविरलमिव दाम्ना पौण्डरीकेण नद्धः
स्नपित इव च दुग्धस्रोतसा निर्भरेण ॥ १६ ॥

कवलित इवेत्यादि । स्फारितेन प्रहर्षविस्तारितेन अत एव सितभागप्रभाबाहुल्यान्निमग्नकनीनिकानीलिमत्वं चक्षुषः प्रकाश्यते । कृत्स्नः कवलित इव साकल्येन निगीर्ण इवेत्यनेन तस्या दर्शनाग्रहः, प्रभापटलावच्छादितत्वं चात्मनः प्रतीयते । स्निग्धाख्यं चैतद् वीक्षितम् ।

'स्निग्धं तद्यस्य विषयस्तत्प्रभामिलितो भवेत् ।'

इति वचनात् । 'अस्नपयादिव धवलितदशदिशा दृशा' इति हर्षचरितोक्तवत् । ततश्चोत्प्रेक्षते । प्रसभं झटित्येवाचिन्तितमित्यर्थः । सान्द्रेण नीरन्ध्रेण अमृतमेघेन अमृतवर्षणशीलो मेघो अमृतमेघः, तेन । शाकपार्थिवादित्वात् समासः । 'कारणगुणप्रक्रमेण कार्यगुणारम्भः' इति न्यायात् तस्य धवलवर्णौचित्यात् तद्ग्रहणम् ।

शुभ्रैरभ्रैरवभ्ररुपरिपरिचितैर्भूरिपीयूषवर्षैः'

इति तेषामागमप्रसिद्धेः । सिक्तः अभिवृष्टः । अर्थादमृतेनेति सिध्यति । अविरलं सर्वाङ्गीणम् । पौण्डरीकेण दाम्ना धवलकमलसंबन्धिन्या मालया । नद्धः बद्ध इव । दुग्धस्रोतसा क्षीराब्धिप्रवाहेण निर्भरेण उद्रेकेन स्नपितः क्षालित इवेति । अत्र सकलसन्तापहरत्वं बहलोपभावत्वं स्वच्छमधुरप्रसरणं च दर्शनस्योत्प्रेक्षात्रयेण क्रमाद्व्यज्यते । यस्मादेवं तस्मात्पुण्यवानस्मि । अन्यथैवंविधस्य प्रियादर्शनस्य प्राप्त्यसम्भवादिति भावः । अस्य श्लोकस्य पूर्वोत्तरार्धयोः पाठव्यत्यासः प्रामादिकः । 'यदहमतर्किते'त्यादि वाक्यशेषस्यासम्बन्धादुत्प्रेक्षा-

१. 'अस्मिन् पद्ये पूर्वोत्तरार्धयोर्व्यत्ययो दृश्यते' क. छ. ज. झ. ञ. पाठेषु. २. 'कृत्स्नं चक्षुषा' घ. ङ. छ. पाठः. ३. 'ममृतवर्षेणेव' क. छ. पाठः.

१. 'विक्षिप्तं' क. पाठः. २. 'वर्षशीलो' ज. पाठः. ३. 'वर्णत्वौचित्यात्' ख. ङ., 'वर्णस्यौचित्यात्' ग. च. पाठः. ४. 'प्रभत्वं' ख. 'प्रभवत्वं' ख. ग. घ. ङ. पाठः. ५. 'प्रतरणं' ज. पाठः. ६. 'व्यज्यन्ते' ज. पाठः. ७. 'प्रियस्य दर्शनस्य' ज. पाठः.

बुद्ध—महाभाए । उज्जाणबाहिररच्छामुहे । (महाभाग उद्यानबाह्यरथ्यामुखे ।)

माधवः—(अग्रे दृष्ट्वा ससंभ्रमं) अहह !

संसक्तत्रुटितविवर्तितान्त्रजाल-
व्याकीर्णस्फुरदपवृत्तरुण्डखण्डः ।

---

निमित्तकथनपुरस्सरमेवोत्प्रेक्षणस्यौचित्यात् । अन्यथा तस्याकस्मिकत्वप्रसङ्गान्मध्यवर्तिनो हेतोः पुरतोऽनुकर्षणस्यासामञ्जस्यात् । क्षपित इव चेति चकारस्य सर्ववाक्यार्थसमुच्चायित्वस्वरमेवाक्य एव कविना तथा पाठचिह्नत्वेन प्रयुक्तत्वाद् वाक्यान्तरे त्वप्रयोगाच्च ॥ १६ ॥

'हन्त पुण्यवानि'त्यादेः स्वगतमेव मननात् प्रकाशमेवं 'कासौ' इति पूर्वोक्तस्य बुद्धरक्षितोत्तरमाह—महाभाग उद्यानबाह्यरथ्यामुखे कुसुमाकरोद्यानाद् बहिर्वर्तिन्या रथ्यायाः प्रारम्भस्थले ।

अहहेति रौद्रस्य रसस्यानुसन्धाभिनयः न तु बीभत्सस्य, प्राचण्ड्यमिति पर्यायेण रौद्रस्यैव प्रतिपादनात् ।

संसक्तेति—संसक्तैः प्रथमं चरणलग्नैरथाकर्षणे त्रुटितैः खण्डितैः, विवर्तितैः इतस्ततो विक्षिप्तैश्च आन्त्रजालैः पुरीतल्लतासमूहैः, व्याकीर्णाः सङ्कुलिताः स्फुरन्तोऽल्पावशिष्टप्राणतया लुठन्तः, अपवृत्ता अधोभूतवक्षसो रुण्डाः शिरोरहिताः कायास्तेषां खण्डाः शिरश्चादिशकला यस्मिन् । 'रुण्डोऽ-

---

१. 'अ एसो क्खु उज्जाण' ज. पाठः. २. 'मुहे । (माधवः साटोपं परिक्रामति ।) काम—वत्स अप्रमत्तो भूत्वा विक्रमस्व । माल—(जनान्तिकं) लवङ्गिए हद्धि हद्धि संसओ क्खु जादो । (सर्वास्त्वरितं परिक्रामन्ति ।) माध—' क. ङ. घ. पाठः. 'मुहे । माध—(साटोपं) अप्रमत्तोऽस्मि. माल—लवङ्गिए संसओ जादो. माध—' ज. पाठः. ३. '(सबीभत्सं)' क. घ. ङ. च. छ. ज. झ. ञ. पाठः

---

१. 'वोत्प्रेक्षमाणस्यौचित्यात्' ख. पाठः २. 'मध्यमवर्तिनो' ग. ङ. पाठः. ३. 'सर्वसमुच्चायि' ज. पाठः. ४. 'वाक्यार्थ एव' क. पाठः. ५. 'स्यानुसन्धाभिनयः' ख. पाठः. ६. 'कर्षणैस्त्रुटितैः' ज. पाठः

कीलालव्यतिकरगुल्फदघ्नपङ्कः
प्राचण्डयं वहति नखायुधस्य मार्गः ॥ १७ ॥

वयं बत विदूरतः क्रमगता पशोः कन्यका

---

शिराः कबन्धोऽस्त्री' इति वैजयन्ती । कीलालस्य रुधिरस्य व्यतिकरेण सम्बन्धेन गुल्फदघ्नः गुल्फप्रमाणः कर्दमो यस्मिन् । 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः' (५-२-३७) । 'कीलालो रुधिरे तोये' इति वैजयन्ती । गुल्फः पादजङ्घास्थिसन्ध्यस्थि । प्राचण्ड्यं प्रकृष्टं भीषणं भावम् । नखायुधस्य नखाः करजा एव प्रहरणानि यस्येत्ययुतसिद्धकरणतया निसर्गसाहसरसिकत्वं तस्य स्वयं वीरतया चमत्करोति । मार्गः न तु रथ्येत्यनेन यतो धावति ततस्ततस्तथाविधत्वं सरणेर्द्योत्यते । अत्र रौद्ररसो व्यङ्ग्यः । भाविकमलङ्कारः ॥ १७ ॥

अथ पुरोऽवलोक्य सानुशयमाह—वयमित्यादि । वयमित्यात्मनि बहुवचनम् । अथवा स्वपार्श्ववर्तिनाम् उपसङ्ग्रहणार्थम् । बतेति खेदे । रक्षणाक्षमत्वादात्मनो दैन्यं व्यञ्जयति । तत्र हेतुमाह — विदूरतः विप्रकृष्टतः दूरदेशे वर्तामहे इति शेषः । सामर्थ्ये सत्यपि दूरतोऽनुपकारकत्वमिति भावः । क्रमगता क्रमः करणं पदविक्षेपः तं गता प्राप्ता एकोत्प्लवनप्राप्येत्यर्थः । पशोः 'पशवो वै द्विपादश्चतुष्पादश्च' इति वचनाच्च चतुष्पात्त्वाद्व्याघ्रः पशुरित्युच्यते, तस्य । कन्यकेति स्त्रीत्वात् मौग्ध्याच्च तस्या अतिभीरुत्वं दयाविषयत्वं चाह । पशोः कन्यकेत्यनेनात्यन्तनीरसः सकलजनादरणीयां प्रति किं किं करिष्यतीति करुणरसो व्यज्यते ।

---

१. 'मार्गः । अहो प्रमादः । वयं बत' क. ङ. ज. झ. ञ. पाठः.

---

१. 'गुल्फदघ्नाः गुल्फप्रमाणाः' अ. पाठः. २. 'सिद्धस्निग्धकरण' ब. पाठः. ३. 'मार्गः रथ्या । न तु' ज. पाठः. ४. 'सरणे र्द्योत्यते' क. ख. ग. घ, 'सरलेन द्योत्यते' ञ. पाठः. ५. 'सङ्ग्रहार्थं' ख. ग. घ. ङ. पाठः. ६. 'विप्रकृष्टः दूर' क. ग. घ. ङ. ब. पाठः. ७. 'एकोत्प्लवन' ज. पाठः. ८. 'प्राप्तेत्यर्थः' ब. पाठः. ९. 'पशवोऽपि द्विपाद' ख. पाठः. १०. 'त्यनेनानीरसः' ज. पाठः.

**सर्वाः**—हा मदयन्तिए! (हा मदयन्तिके!)

**कामन्दकीमाधवौ**—(सहर्षाकूतं)

कथं तदवपातितादधिगतायुधो लोकतः।

कुतोऽपि मकरन्द एत्य सहसैव मध्ये स्थितः

**इतराः**—साहु महाभाअ! साहु। (साधु महाभाग साधु।)

**माधवः**—दृढश्च पशुनाहतो व्यसुरसौ कृतश्चामुना ॥ १८ ॥

---

सर्वाः मालत्यादयः। हा मदयन्तिके। हेति विषादव्यञ्जकमव्ययम्। धिक्कष्टमित्यर्थः। मदयन्तिके इति नामग्राहं क्रन्दनं प्रकाश्यते। 'हा तातेति क्रन्दित'मितिवत्। विषादोऽत्र भावः प्रतीयते।

सहर्षाकूतं हर्षेणाकूतेन च सहितम्। तद्रक्षणोपायलाभेन हर्षः, तत्प्रेमास्पदस्य मकरन्दस्यैव दैवेनोपनीतत्वादभिप्रायः।

कथमित्यचिन्तितोऽयमर्थः केन प्रकारेण संविहित इत्याश्चर्यं द्योतयति। तदवपातितात् तेन व्याघ्रेण मारितात्। लोकतो जनात्। अधिगतायुधः प्राप्तखड्ग इत्यनायासेन साधनमपि सम्पन्नमिति व्यज्यते। कुतोऽपि कस्मादपि देशात् कारणाद्वा। कुतोऽपीत्युक्तिर्देशकारणयोः पूर्वमनिरूपणात्।

केनापि कामेन तपश्चचार

इतिवत्। एत्यागत्य। सहसैव यावन्न क्षमते तावदेव। मध्ये स्थित इत्याश्चर्यहेतुः।

साधु महाभाग साध्विति समयोपनिपातात् परमोपकारिणो मकरन्दस्य चमत्कारः। अत्र हर्षो ध्वन्यते।

दृढं गाढम्। आहतश्चपेटेन वक्षसि ताडितः। व्यसुः विगतप्राणः। असौ पशुः। अमुना मकरन्देन। दृढं पशुनाहत इति सौहार्दात् जीविष्यति न वेति चिन्ता द्योत्यते। व्यसुः कृत इति हर्षः। चकाराभ्यां तुल्यकालत्वमाह-

---

१. 'तदभिपातिता' क. ख. ज. पाठः। २. 'युधः पुरस्ताद्' क. ख. ग, 'युधः' ... 'पुरस्तात्' ख. ज. पाठः। ३. 'तः (प्रकटितपूरुषरसेन) कुतोऽपि' ख. पाठः। ४. ... ६. 'कामन्दकीमाधवौ—इतरा' 'मालती—साहु' ख. पाठः। ५. 'महाभुअ' घ. पाठः। ७. 'दृढश्च' ख. ङ. पाठः। ८. 'हतः। इतराः—' क. ख. ग. घ. ङ. ज. झ. ञ. पाठः। ... अव्वाहिदं अव्वाहिदम्। कामन्दकीमाधवौ—(सहर्षं) प्रमथितश्च दंष्ट्रायुधः। इतराः—(सानन्दम्) दिट्ठिआ परिहरं दुज्जादम्। काम'—क. ग. ङ. पाठः।

---

१. 'नामग्रहणं क्रन्द' ख. ज, 'नामग्राहाक्रन्दनं' ग. पाठः। २. 'तत्र क्षणोपाये' ख, ग, घ, ङ, पाठः। ३. 'सम्पन्नमपि व्यज्यते' ङ. पाठः।

इतरा:—अच्चाहिदं । (अत्याहितम् ।)

कामन्दकी — (साकूतं) कथं व्यालनखरप्रहारनिस्सृतरक्तनिवाहः क्षितितलविषक्तखड्गलतावष्टम्भनिश्चलः सम्भ्रान्तमदयन्तिकावलम्बितस्ताम्यतीव मे वत्सो मकरन्दः ।

इतरा:—हद्धि हद्धि ! गाढप्पहारदाए किलम्मदि महाभाओ ।
(हा धिक् हा धिक् ! गाढप्रहारतया क्लाम्यति महाभागः ।)

---

ननव्यसङ्करणयोः स्याप्यते । वीररसश्चोभयोः प्रकाश्यते । अत्र श्लोकस्य खण्डशः पाठो मध्ये मध्ये वक्त्रन्तरवाक्यानुप्रवेशश्च अभिनेयार्थत्वात् प्रबन्धस्य, रसभाववैविध्यनिबन्धनत्वाच्चाभिनयस्येति मन्तव्यम् । अत्र मदयन्तिकानुरागरक्षणयोः कार्ययोः कारणभूतमकरन्दवृत्तान्तेनाप्रस्तुतेन सूचनादप्रस्तुतप्रशंसा चालङ्कारः ॥ १८ ॥

अत्याहितं महत्यापत् । अस्माकमापतितमिति शेषः । शङ्कात्र व्यज्यते । साकूतमिति जीवितसंशयाशङ्कया विशिष्टमित्यर्थः । व्यालनखरप्रहारः दुष्टमृगनखप्रहारस्थानम् । ततोऽतिक्षरितरुधिरसङ्घातः । क्षितितलविषक्ता अधोऽग्रे निहिता खड्गलतैवावष्टम्भः आधारः तेन निश्चलो भुवि अपतत । सम्भ्रान्तया विषादव्याकुलया मदयन्तिकया धारितः । ताम्यति मोहेन ग्लायति ।

गाढप्रहारतया क्लाम्यति महाभागः ।

---

१. 'इतरा:—अहो अच्चाहिदं' ग. पाठः. २. 'माधवः—(साकूतं) कथं' ङ. पाठः ३. 'प्रवाहः' क. पाठः. ४. 'भुवि विषक्त' ग. पाठः. ५. 'निषक्त' क. ख. ङ.. ज. पाठः. ६. 'तीव वत्सो' क, 'ति मे वत्सो' ख, 'ति वत्सो' ग. छ. पाठः. ७. 'इतरा:—गाढ' ख. घ. पाठः.

---

१. 'करणं चाख्याप्यते' ज. पाठः २. 'पात्रान्तर' क, 'वक्त्रान्तर' ख. ग. घ. पाठः. ३. 'प्रवेशाभिनेयार्थस्य प्रबन्धत्वात् प्रबन्धस्य' क. पाठः. ४. 'वैविध्यबन्धन' ख. पाठः, ५. 'नाप्रस्तुतेनासूचना' ज. पाठः ६. 'पतितमिति विषादो व्यज्यते ।' ख, 'पतितमिति विषादो व्यज्यते इति शेषः । शङ्कात्र' ज. पाठः. ७. 'प्रहर' ज. पाठः. ८. 'रः स्थानं' क. ख. ज. पाठः. ९. 'अधोऽग्रसहिता' ज. पाठः. १०. 'ताम्यति' क. पाठः.

माधवः— कथं प्रमुग्ध एव । (कामन्दकीं प्रति) भगवति! परित्रायस्व माम् ।

कामन्दकी— अतिकातरोऽसि । वत्स! नन्वेहि तावत् । पश्यामः ।

(इति परिक्रम्य निष्क्रान्ताः सर्वे ।)

इति मालतीमाधवे शार्दूलविद्रावणो नाम

॥ तृतीयोऽङ्कः ॥

---

प्रमुग्धः मूर्च्छितः । एवेति शङ्कितमेव वस्तु किमापतितमिति विषादो व्यज्यते । प्रतिकारान्तरमपश्यन्नाह— परित्रायस्व मामिति । तस्य स्वाव्यतिरेकात् परित्राणं स्वपरित्राणमेवेति भावः ।

तमाश्वासयति— अतिकातरोऽसि । सुहृन्मरणशङ्कया तस्य मोहमात्रे अत्यर्थं किं भीरुर्भवसि । को त्वामेवं भूस्तस्यदानीमेव प्रत्यापत्स्यमानत्वमदोति द्योत्यते । तत्र हेतुः— नन्वेहि । मम तु दर्शने निर्णयो भविष्यति । न पुनर्दूरस्य इत्यर्थः । तदाह— एहि आगच्छ । पश्यामस्तावत् । तमिति शेषः । दर्शनानन्तरमेव सर्वात्मना जीवयिष्यामीति भङ्ग्या स्वसामर्थ्यं समानस्नेहत्वं च व्यनक्ति । अत्र परित्रायस्व मामिति, न पुनरेनमिति, उपरि च 'प्रमुग्धौ मकरन्दमाधवौ' 'इत्यादिभिः सौहार्दहृद्यानि विचेष्टितानि' इति प्रतिज्ञातस्य प्रतिपादनं कविकुलचक्रवर्तिना निर्वर्तितं वेदितव्यमित्यशेषमतिमङ्गलम् ।

मालतीमाधवस्येत्थं तृतीयाङ्कार्थचर्वणम् ।
पूर्णज्योतिःप्रसादेन चक्रे पूर्णसरस्वती ॥

॥ तृतीयोऽङ्कः ॥

---

१. 'सि । तदेहि तावत्' क., 'सि वत्स । तदेहि तावत्' ख. पाठः. २. 'पश्यावः' क. ख. पाठः.

---

१. 'वस्तुकमापतित'. २. 'भवसि' ख. पाठः. ३. 'शङ्का मैव' क. ख, 'का त्वा मेवं' ग. घ. पाठः. ४. 'त्वं द्योत्यते' क. पाठः. ५. 'मम त्वद्दर्शने' ज. पाठः. ६. 'निश्चयो' क. पाठः. ७. 'पश्यावस्तावत्' क. ग. घ. पाठः. ८. 'शेषमिति' ग, 'शेषं मङ्गलं' ख. पाठः. ९. 'स्येदं तृती' ख. पाठः.

## अथ चतुर्थोऽङ्कः ।

(ततः प्रविशतो मदयन्तिकामालतीभ्यामवलम्बितौ प्रमुग्धौ मकरन्दमाधवौ सम्भ्रान्ताश्च कामन्दकीलवङ्गिकाबुद्धरक्षिताः । )

**मदयन्तिका** — पसीद भअवदि ! परित्ताआहि परित्ताआहि मदअन्तिआणिमित्तं संसइदजीविदं विपण्णाणुकम्पिणं महाभाअं ।

अथ पूर्वाङ्कप्रविष्टैरेव कामन्दक्यादिपात्रैः सूचितस्य मदयन्तिकावलम्बितस्य मकरन्दस्य तत्स्नेहमोहितस्य च माधवस्य कामन्दक्यादीनां च प्रवेशं प्रतिपादयन् प्रवेशविष्कम्भादिवर्जमविभागेन चतुर्थमङ्कमवतारयति ।

"अङ्कावतारस्त्वङ्कान्ते पातोऽङ्कस्य विभागतः ।"

इति धनिकोक्तेः । ततः प्रविशत इति । मदयन्तिकामालतीभ्यामवलम्बिताविति यथासंख्यं मदयन्तिकया मकरन्दो मालत्या च माधवोऽवधारितावित्यर्थः । प्रमुग्धौ शार्दूलप्रहारेण मूर्च्छितः एकः, सुहृत्स्नेहेन चान्यः । सम्भ्रान्तास्तयोर्व्यसनेन व्याकुलाः । कामन्दकीलवङ्गिकाबुद्धरक्षिता इति द्वन्द्वः । चकारः प्रविशन्तीत्यनुकर्षणार्थः ।

प्रसीद भगवति परित्रायस्व परित्रायस्व मदयन्तिकानिमित्तं संशयितजीवितं विपन्नानुकम्पिनं महाभागं[परित्रायस्व] अनुग्रहं कुरु । मदयन्तिकानिमित्तं मत्प्राणत्राणहेतोः । मदयन्तिकानिमित्तं न पुनर्मन्निमित्तमित्युक्तिः अर्थान्तरसंक्रमितवाच्येन मदयन्तिकाशब्देन स्वस्या अधन्यत्वात्तादृशस्य पुरुषरत्नस्याप्रा-

१. 'प्रविशति' क. छ. पाठः. २. 'कावलङ्गिकाभ्याम्' क. च. झ. ब. पाठः ३. 'मवलम्ब्यमानौ मुग्धौ' ज. पाठः. ४. 'तौ मकरन्द' घ. छ. पाठः ५. 'ग्धौ माधवमकरन्दौ' क. झ. अ. पाठः. ६. 'न्ता कामन्दकी मालती बुद्धरक्षिता च' क. झ. अ, 'न्ताश्च कामन्दकीमालतीबुद्धरक्षिताः च, 'न्ता कामन्दकी बुद्धरक्षिता लवङ्गिका च' ज. पाठः. ७. 'परित्ताअसु' ग. ङ, 'परित्ताआहिस्स' घ, 'परित्ताहि मद' अ. पाठः. ८. 'दं बावण्णजणाणुकम्पिणम्' क. 'दं विवण्णजणाणुकम्पिणम्' झ. ग. पाठः.

१. 'वर्णनमविभागेन' क. पाठः. २. 'प्रविशति' क. ग. पाठः. ३. 'माधवः [illegible]रितौ', ४. 'व्यसनेन व्याकुला' अ. पाठः. ५. 'इव मदयन्ति' क. अ. पाठः. ६. 'मम प्राण' ग. घ. ज. पाठः. ७. '[illegible]' क. ज. पाठः. ८. '[illegible]प्राप्तः' क. 'ख' पाठः

(प्रसीद भगवति ! परित्रायस्व परित्रायस्व मदयन्तिकानिमित्तं संशयितजीवितं विपन्नानुकम्पिनं महाभागम् ।)

इतराः — हद्धि हद्धि किं दाणिं एत्थ पेक्खिदव्वं अम्हेहिं ।

(हा धिक् हा धिक् किमिदानीमत्र प्रेक्षितव्यमस्माभिः ।)

कामन्दकी — (उभौ कमण्डलूदकेन सिक्त्वा) ननु भवत्यः पटाञ्चलैर्वीजयध्वम् ।

(मालत्यादयस्तथा कुर्वन्ति ।)

---

पत् सम्भाव्यत इति तस्याजीवने स्वजीवनमपि निष्प्रयोजनमिति शङ्का निर्वेदश्च प्रकाश्यते । अनेन च व्यसनसमागमरूपशोकार्थानुष्ठानयोजनेन कृतज्ञतयाप्यनुरागदार्ढ्यं संजातमिति द्योत्यते । संशयितजीवितमिति न क्षणितत्वमात्रम् अपि तु प्राणा एव मदर्थे जिहासिता इति दुष्करपरमोपकारकरणं व्यज्यते । विपन्नानुकम्पिनं विपन्नान् विपदं प्राप्ताननुकम्पितुं दयितुं शीलमस्येति प्राक्तनं परिचयमुपकारं वा कमप्यनपेक्ष्य तस्य वृत्तिः प्रकाश्यते । तत्र हेतुः — महाभागमिति । पुण्यशालिनामियमेव शैली । जीमूतवाहनादिषु तथा दर्शनादिति भावः ।

इतराः लवङ्गिका बुद्धरक्षिता मालती च । हा धिक् हा धिक् । हेति विषादद्योतकमव्ययम् । धिगिति निन्दाद्योतकम् । अचिन्तितं कष्टमिदं कथमापतितमित्यर्थः । किमिदानीं अत्र प्रेक्षितव्यमस्माभिः । अत्र व्यसने । अस्माभिर्भाग्यहीनाभिः । इदानीमस्मिन् क्षणे । प्रेक्षितव्यं किं किं वस्तु द्रक्ष्यते । मोहावस्था तावद् अनुभूता, किमनयोर्मरणेऽपि साक्षित्वमनुभविष्यत इत्यर्थः । शङ्का चात्र व्यङ्ग्या ।

कमण्डलूदकेन कुण्डिकाजलेनेत्यनेन मन्त्रपूतत्वादनेकतीर्थोपहृतत्वाच्च तस्य महाप्रभावत्वं द्योत्यते । नन्वित्याक्षेपे । वृथा विषादं मा कुरुध्वम्, किमनेन प्रयोजनमित्यर्थः । हे भवत्यः ! पटाञ्चलैरुत्तरीयवस्त्रदशाभिरिति तेषां सान्निध्येन सौकर्याद्ग्रहणम् ।

---

१. 'केनाप्यसिच्य' ग. ङ. 'केन परिषिच्य' छ. पाठः. २. 'पटाञ्चलेन वत्सौ वीजयन्तु ।' क. घ. झ. ञ. 'पटाञ्चलैर्वीजयध्वं वत्सौ' च, 'पटाञ्चलेन वीजयध्वं ।' ङ. पाठः.

---

१. 'शास्त्रानुष्ठान' ग. घ. पाठः. २. 'कृतज्ञतया अनु' ज. पाठः. ३. 'क्षणितमात्र' क. पाठः. ४. 'तस्य प्रवृत्तिः' ज. पाठः.

मकरन्दः—(समाश्वस्यावलोक्य) वयस्य ! अतिकातर ! किमेतत्, ननु स्वस्थ एवास्मि ।

मदयन्तिका—अम्हहे पडिबुद्धं दाव मअरन्दपुण्णचन्देण ।
(अहो प्रतिबुद्धं तावत् मकरन्दपूर्णचन्द्रेण ।)

मालती—(माधवस्य ललाटे हस्तं दत्वा) दिट्ठिआ वड्ढसि । णं भणामि पडिवण्णचेअणो महाभाओ त्ति ।

(दिष्ट्या वर्धसे । ननु भणामि प्रतिपन्नचेतनो महाभाग इति)

---

मालत्यादयः आदिशब्देन मदयन्तिकालवङ्गिकाबुद्धरक्षिता गृह्यन्ते। तथा यथादिष्टम् । तथा कुर्वन्ति वीजयन्तीत्यर्थः ।

समाश्वस्य चेतनां लब्ध्वा । अवलोक्य पूर्वं मोहमीलिते नयने उन्मील्य निरीक्ष्येत्यर्थः । अतिकातर स्नेहेनातिमृदुहृदय । किमेतत् अद्याप्यप्रतिबोधरूपमेतद्वस्तु किमयुक्तमित्यर्थः । किंशब्दः क्षेपे । ननु संवादे । स्वस्थः स्वभावे स्थितः । एवेति व्रणवेदनाया वासनापि न विद्यत इति भगवतीप्रभावचमत्कारः ।

अम्हहे इति हर्षाश्चर्यद्योतकमव्ययम् । प्रतिबुद्धं तावत् मकरन्दपूर्णचन्द्रेण । नयनहृदयाह्लादजनकत्वात् पूर्णचन्द्रेणेव मकरन्देन प्रतिबुद्धम् । भावे निष्ठा । प्रतिबोधः प्राप्त इत्यर्थः । तावच्छब्दः प्राथम्ये । अयं तावत् प्रबुद्धः । नो शङ्कितव्यसनोपनिपातः । एतन्मोहमूलत्वात् माधवमोहस्य, निमित्ताभावात् नैमित्तिकस्याप्यभावः इति भावः ।

ललाट इति— हृदयाभिघाते झटिति शिरोवेदनासंभवात् तदपनोदाय शिरो निष्पीड्येत्यर्थः । दिष्ट्या वर्धसे । ननु भणामि प्रतिपन्नचेतनो महाभाग इति । [प्रतिपन्नचेतनः] प्रतिपन्ना प्राप्ता चेतना ज्ञप्तिर्येन ।

---

१. 'लोक्य च)' क. च. छ. ज. झ. ञ. पाठः. २. 'स्य कातरोऽसि किमेतत्' । क. छ. ज. झ. ञ. पाठः ३. 'मेतत् स्वस्थ' घ. ञ, 'मेतत् । माधवः— ननु' ख. पाठः. ४. 'मद — (सहर्षं) अह्मेहे' क. झ. ञ. पाठः. ५. 'दाणिं मअ' क. ग. च. छ. ज. झ. ञ. पाठः. ६. 'दत्वा) सहि लवंगिए दिट्ठिआ' क, 'दत्वा) महाभाअ दिट्ठिआ' ग. पाठः. ७. 'मि पडिबुद्धो जेव्व दे पिअवअस्सो पडि' क. झ. ञ. पाठः.

---

१. 'समाश्वास्य' ख. घ. ज. पाठः. २. 'किंशब्द आक्षेपे' ख. पाठः ३. 'प्राणवेदनाया', ४. 'प्रबोधः' ख. पाठः. ५. 'मोहमीलितात्' ग. घ. ङ. पाठः ६. 'ललाटे हृदया' ख. ग. घ. ङ. पाठः

माधवः — (आश्वस्य) वयस्य साहसिक! एह्येहि ।

(इत्यालिङ्गति ।)

कामन्दकी — (उभौ शिरस्याघ्राय) दिष्ट्या जीवद्वत्साऽस्मि ।

इतराः— पिअं णो संवुत्तम् । (प्रियं नः संवृत्तम् ।)

(सर्वे हर्षं नाटयन्ति ।)

---

"प्रेक्षोपलब्धिश्चित्संविज्ज्ञप्तिप्रतिपत्तिश्चेतनाः"

इत्यमरः । महाभागो मकरन्द । इति ननु वदामि तथापि न शृणोषीत्यर्थः ।

अङ्गस्पर्शवचनामृतयोः फलमाह— आश्वस्येति । साहसिक अवि-चारितकारिन्निति । मद्व्यसने असौ न जीविष्यति, ततश्चास्मदीयो जनः सर्वोऽपि विनङ्क्ष्यतीति ननु त्वया विचारणीयमिति द्योतयति ।

आलिङ्गतीति । मृतस्येव पुनरागमान्मोहावस्थया क्षणमदृष्टत्वाच्च सन्तप्तस्य शरीरस्य निर्वापणाय दृढतरमाश्लिष्यतीत्यर्थः ।

उभौ माधवमकरन्दौ । शिरस्याघ्राय

"अपि वर्षशतायुस्त्वं बाल इव मतोऽसि मे"

इति न्यायात् पुत्रस्नेहपरवशतया शिशुवत् मूर्ध्नि चुम्बित्वेत्यर्थः । जीवद्वत्सास्मि जीवन्तौ प्राणवन्तौ वत्सौ पुत्रौ यस्याः सास्मि ।

प्रियं नः संवृत्तम् ।

सर्वे कामन्दक्यादयः संभूय हर्षं नाटयन्ति रोमाञ्चानन्दबाष्पा-दीन् हर्षानुभावानभिनयन्तीत्यर्थः ।

---

१. '(समाश्वस्य)' ज. छ. पाठः. २. '(स्व) वयस्य साहस!' ए. ख. '(स्व) अतिसाहसिक' ग, '(स्व) वयस्य अतिसाहसिक' छ. न. पाठः. ३. 'जीवितवत्सास्मि' क. ख घ पाठः. ४. 'पिअं पिअं णो' क. च. ख. म. पाठः.

---

१. 'मृतस्येव' ख. ज. पाठः. २. 'मोहावस्थाया क्षण' ग. घ. श. ज. पाठः. ३ 'आलिङ्गतीत्यर्थः' ग घ. पाठः. ४. 'प्राणन्तौ' ख. ग. घ. छ. पाठः.

बुद्धरक्षिता — (जनान्तिकं) सहि मदअन्तिए! एसो ज्जेव्व सो।
(सखि मदयन्तिके एष एव सः।)

मदयन्तिका — सहि जाणिदं एव्व मए जधा एसो माहवो, अअंपि सो जणो त्ति।
(सखि ज्ञातमेव मया यथा एष माधवः, अयमपि स जन इति।)

बुद्धरक्षिता — अवि सच्चवादिणी अहम्?
(अपि सत्यवादिनी अहम्?)

मदयन्तिका — णहि अण्णारिसेसु तुह्मारिसीओ पक्खवादिणीओ होन्ति। (माधवमवलोक्य) सहि मालदीए वि इमस्सिं रमणिज्जो क्खु अणुराअप्पवादो।

---

जनान्तिकम् अन्यैरश्रुतम्। सखि मदयन्तिके! एष एव सः, मद्वचनात् यस्ते निरतिशयपरोक्षानुरागभूमिः। अनेन 'तासु तासु विस्रम्भकथासु' इत्याद्युक्तिमनुस्मारयति। स एषः। एवकारेण यः प्राणदानमपि कृतवानिति द्योतयति। कन्दकन्दर्पादिसदृशावित्यादित्वन्निर्दिष्टलक्षणविशिष्टतया हृदयेन सदानुसन्धीयमानयोर्दर्शनमात्रेणोपमानप्रमाणात् प्रत्यभिज्ञा।

मम त्वद्वचनात्पूर्वमेव ज्ञातत्याह — सखि! ज्ञातमेव मया यथा एष माधवः, अयमपि स जन इति। लज्जया स्वप्रेमविषयस्य नामानुक्तिः। इति यथा तथा ज्ञातमेवेत्यन्वयः।

स्वस्य प्रामाण्यं तन्मुखेन स्थापयितुं सपरिहासं पृच्छति — अपि सत्यवादिनी अहम्? अपिः प्रश्ने। एतद्रूपशौर्यादिवर्णनमुखरत्वं मम किं मृषोद्यमेवेत्यर्थः।

---

१. 'हला' झ. ञ. पाठः. २. 'मद — तदैव जाणिदं' क. 'मद— (जनान्तिकं) जाणिदं' घ,. 'मद— जाणिदं' ख. च. झ. ञ. पाठः. ३. 'ण क्खु अ' क. झ. ञ. पाठः ४. 'अण्णारिसेसु' ख. च, 'असारिसेसु' छ. पाठः. ५ 'वि रमणिओ इमस्सिं महाणुहावे अणु' क. ग. घ ङ. च. छ. ज. झ. ञ. 'वि रमणीओ क्खु इमस्सिं महाणुहावे अणु' ख. पाठः.

---

१. 'जनैरश्रुतं' ङ. पाठः २ 'विस्रम्भकथासु' ज. पाठः ३. 'कन्दकन्दर्पादि' ग घ, पाठः. ४. 'मात्रोपमानप्रमाणो' ज. पाठः.

(नन्वन्यादृशेषु युष्मादृश्यः पक्षपातिन्यो भवन्ति । (माधवमवलोक्य) सखि मालत्या अप्यस्मिन् रमणीयः खल्वनुरागप्रवादः ।)

(इति मकरन्दमेव सस्नेहं पश्यति ।)

कामन्दकी — (स्वगतं) रमणीयोर्जितं हि मदयन्तिकामक-

---

व्यतिरेकभङ्ग्या तस्या आसक्त्यभ्युपगमं प्रकाशयति — नन्वन्यादृशेषु युष्मादृश्यः पक्षपातिन्यो भवन्ति । युष्मादृश्यः युष्मत्तुल्या इति लिङ्गि-नीत्वात् निस्पृहतया गुणैकपक्षपातिनीत्वं प्रकाश्यते ।

'वीतस्पृहाणामपि मुक्तिभाजां भवन्ति भावेषु हि पक्षपातः ।'

इत्युक्तेः । अन्यादृशेषु एवंगुणविशिष्टादस्मादन्यथाभूतेषु गुणशून्येष्वित्यर्थः । पक्षपातः स्वत्वबुद्ध्या तदधीनत्वं, तच्छीलाः पक्षपातिन्यः । सखि ! मालत्या अप्यस्मिन् रमणीयः खल्वनुरागप्रवादः । अस्मिन्निति पुरोवर्तिनो गुणसामग्र्याभिनयः । अनुरागप्रवादः अनुरागो महानिति लोकवार्ता । गुण-विषयो दोषविषयोऽपि लोकप्रवादो भवति । अयं तु गुणविषय एव अभि-नवयौवनादिविशिष्टे पुरुषरत्ने दिष्ट्या मालत्या अनुरागबन्ध इत्येवंरूपत्वाद् इत्यर्थः । अपिशब्देन न केवलं मम मकरन्द इति समुच्चीयते । मालत्या अप्यस्मिन्ननुरागप्रवाद इत्यनेन 'अनुरागप्रवादस्तु वत्सयोः सार्वलौकिकः' इति स्वाभिकल्पितराजनन्दनप्रतारणोपायस्य कामन्दकीचिन्तितस्य नन्दनभगिन्यापि ज्ञातत्वात् सम्पन्नत्वं प्रकाश्यते ।

इति एवमुक्त्वा । मकरन्दमेवेति स्वप्रेमास्पदत्वात् तमेव । सस्नेहं पश्यति दर्शनेनैवान्तर्गतं स्नेहं प्रकाशयतीत्यर्थः ।

कामन्दकीमुखेन स्वसंविहितं शास्त्रार्थं चमत्कुर्वन्ननुस्मारयति कविः — रमणीयोर्जितं रमणीयमन्योन्यानुरागजनकत्वाच्छोभनम्, ऊर्जितम् उत्साह-

---

1. '(पुनर्मकरन्द' क. म. ञ. पाठः २. 'सस्पृहमवलोकयति' क. ज. छ, ब. पाठः.

---

१. 'नन्वन्य इत्येवं' क. छ. पाठः २. 'शब्देन केवलं न मकरन्द' क, शब्देन केवलं मम मकरन्द' ख. पाठः ३. 'वत्सयोः सार्व' क. पाठः ४. 'भगिन्या विज्ञात' ख. घ. छ. पाठः ५. 'सर्वोहितं' ख. पाठः

रन्दयोर्दैवादत्र सन्दर्शनम् । (प्रकाशं) वत्स मकरन्द, कथं पुनरमुष्मिन्नस्मिन्नवसरे मदयन्तिकाजीवितत्राणहेतोर्भगवता दैवेन इह त्वं सन्निधापितः ।

मकरन्दः — अद्याहमन्तर्नगर एव काञ्चिद्वार्तामुपश्रुत्य माधवस्य चित्तोद्वेगमधिकमाशङ्कमानस्त्वरिततरमवलोकितानिवेदितकुसुमाकरोद्यानवृत्तान्तः परापतन्नेव शार्दूलावस्कन्दगोचरमिमामभिजातकन्यकामभ्यवपन्नवान् ।

---

सारेण वीरेण परिबृंहितरसत्वादुज्ज्वलं च । नेतरजनवत् श्रोदिष्ठकुसुमोपहारादुपार्जितत्वाद् श्रीमत्यमित्यर्थः । 'ऊर्जावुत्साहकार्तिको' इति वैजयन्ती । 'उत्साहवर्धनो वीरः' इति भरते,

"यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।"

इति भगवद्वचनाच्च । दैवादचिन्तितमेवेत्यर्थः । कथं पुनरिति—पुनःशब्दो व्यावृत्तौ । इदमन्यदवश्यं श्रोतव्यमित्यर्थः । अस्मिन्नवसर इति मृत्युमुखप्रवेशकाले । भगवता दैवेनेति अचिन्त्यमहिमत्वादीश्वरस्य किन्नाम दुर्घटमिति द्योत्यते । इह अस्मिन् देशे । त्वम् । सन्निधापितः सन्निहितः कृतः ।

अन्तर्नगरे नगरस्यान्तः, मध्ये इत्यर्थः । अन्तर्गृह इतिवत् । एवेत्यत्रागमनस्याचिन्तितत्वं प्रकाशयति । काञ्चिदिति तस्य चित्तखेदपरिहाराय विशेषानाख्यानं लोकतः शनैः श्रोष्यतीति । अधिकमिति अभिलाषमूलस्य तस्य पूर्वमेवानुवृत्तेरिदानीं चित्तोद्वेगस्याधिक्यमाशङ्कमान इत्यर्थः । इतोऽमुत्रागमनस्य हेतुमाह— अवलोकितानिवेदितकुसुमाकरोद्यानवृत्तान्तः

---

१. 'दर्शनं' क. ख. घ. ज. झ. ञ. पाठः । २. 'पुनरस्मिन्नवसर' ग. छ. ङ. ज. झ. ञ. पाठः । ३. 'हेतुर्भगवता' ज. झ. ञ. पाठः । ४. 'न सन्निधापितः' क. घ. च. 'न सान्निध्यापितः' ख. पाठः । ५. 'नगरमेव' ग. ज. पाठः । ६. 'स्त्वरितमवलो' क. च. ज. झ. ञ. पाठः । ७. 'गोचरगतामिमामार्य' क. झ. ञ. 'गोचरामिमा' ख. ग. घ. ङ. छ. ज. 'गोचरगतामिमामार्य' ख. पाठः । ८. 'मभ्युपपन्न' क. ग. ज. झ. ञ. पाठः । ९. 'मानसम्' क. छ. ज. झ. ञ. पाठः ।

---

१. 'शक्यमित्यर्थः' । २. 'दैवादविचिन्तित' ज. पाठः । ३. 'दर्शितवानिति' क. पाठः । ४. 'कस्य' ख. पाठः । ५. 'मूलस्य पूर्व' ख. पाठः ।

(मालतीमाधवौ विमृशतः ।)

**कामन्दकी** — (स्वगतं) वृत्तेन खलु मालतीप्रदानेन भवितव्यम् । (प्रकाशम्) वत्स ! माधव ! दिष्ट्या वर्धितोऽसि । मालत्याः सोऽयमवसरः प्रीतिदायस्य ।

---

अवलोकितया ज्ञापितः कुसुमाकरोद्याने यो वृत्तान्तः 'अज्ज कसणचउद्दसि त्ति' इत्यादिसूचितो मालतीमाधवगमनरूपो यस्य सः । त्वरिततरमिति संपदि सन्निधगतत्वे समाश्वासनस्य शक्यत्वादतिशीघ्रमित्यर्थः । प्रपन्नन् आगच्छन् । एवकारेण यादृच्छिकत्वाद् दैवसङ्घटितत्वं द्योत्यते । शार्दूलावस्कन्दगोचरं व्याघ्रावपातस्य विषयभूतामिति महाव्यसनमग्नत्वं, अभिजातकन्यकामिति रूपवेषविनयादिभिर्महति कुले जाता कुमारी चेत्यनुमितामिति दैन्यनीयत्वं अनभिसन्धिपूर्वकत्वं च तत्पूर्वदृष्टत्वात् स्वप्रयत्नस्य व्यञ्जयति । गोचरं कन्यकामिति नियतलिङ्गत्वात् सामानाधिकरण्यम् । अभ्युपपन्नवान् अनुगृहीतवान् ।

विमृशतः काञ्चिदिति व्यादिता कासौ वार्तेति निरूपयत इत्यर्थः ।

तां वार्तां वैदग्ध्यात् कामन्दकीमुखेन प्रकाशयति कविः । स्वगतम् । वृत्तेन निष्पन्नेन,

'वृत्तम्स नो सङ्गतयोर्वेनान्ते'

इतिवत् । भवितव्यमिति मकरन्दस्य वचनादनुमीयमानत्वं व्यञ्जयति । पूर्वमेवामात्येन सहैवं कर्तव्यमिति स्वयंकृतसङ्केतत्वात् तयोर्विमर्शनं ज्ञात्वा वैमनस्यपरिहारायाह — प्रकाशम् । दिष्ट्या दैवसम्पदा । वर्धितोऽसि

---

१. 'प्रवृत्तेन' क. 'वृत्तान्तेन' ज. पाठः. २. 'प्रवादेन' क. पाठः ३. 'दिष्ट्या सुहृद्बुद्ध्या वर्धितोऽसि' क. ख. ज. 'दिष्ट्या वर्धसे' ज. ड. पाठः ४. 'तदयमवसरः' क. ख. ज. पाठः. ५. 'दानस्य' क. ज. पाठः

---

१. 'त्वादेव सह' ज. पाठः. २. 'व्याघ्रोत्पातस्य' ख. पाठः. ३. 'दर्शनीयत्वं' ज. पाठः. ४. 'त्वं अभिसन्धि' ज. पाठः ५. 'नियतनपुंसकलिङ्गत्वात्'. ६. 'काञ्चित्कादिता कासौ' ज. पाठः ७. 'दिष्ट्या' क. पाठः ८. 'वर्तितोऽसि' ज. पाठः

माधवः — भगवति !

यद्व्यालव्रणितसुहृत्प्रमोहमुग्धं
सौजन्याद्विहितवती गतव्यथं माम् ।
तत्कामं प्रभवति पूर्णपात्रवृत्त्या
स्वीकर्तुं मम हृदयं च जीवितं च ॥ १ ॥

---

आनन्दितोऽसि 'दिट्ठिआ वड्ढसि णं भणामि' इत्यादिना । सोऽयमिति मकरन्दस्य चेतनोपलम्भेन योऽस्माकं हर्षहेतुः सोऽयं कालः । प्रीतिदायस्य पारितोषिकदानस्य । यदा दिष्ट्या वर्धते तदानीमेव तस्यौचित्यादिति भावः ।

तथाविधेन भगवतीवचसा निरस्ताशङ्क आह — यद्व्यालेत्यादि । यद्व्यालव्रणितसुहृत्प्रमोहमुग्धं दुष्टमृगेण व्रणितस्य जनितक्षतस्य सुहृदः प्रमोहेन मूर्च्छया मुग्धं मोहितम् । सौजन्यात् शोभनहृदयो जनः सुजनः, तस्येव परदुःखेषु दुःखितत्वमिति भावः । तस्य भावः सौजन्यं, तस्माद्धेतोरिति हेत्वन्तराभावं सूचयन् मदयन्तिकादिभ्यः त्रपया परस्परानुरागमूलत्वं छादयति । विहितवती कृतवती । 'विपूर्वो धाञ् करोत्यर्थे' इति वचनात् विपूर्वस्य धाञो निष्ठा । गतव्यथं शमितहृदयदुःखं, विहितवती । यत् यस्मात् तत् तस्मात् । काममित्यवधारणे,

'कामं कर्णान्तविश्रान्ते विशाले तस्य लोचने ।'

इतिवत् । पूर्णपात्रवृत्त्या पारितोषिकप्रकारेण ।

'उत्सवेषु सुहृद्भिर्यद् बलादाकृष्य गृह्यते ।
वस्त्रमाल्यादि तत्पूर्णपात्रं पूर्णानकं च तत् ॥'

इति वैजयन्ती । स्वीकर्तुं स्वमनन्याधीनं कर्तुम् । हृदयं मनः । जीवितं प्राणांश्च । यतो मोहेन गतं हृदयं प्रस्थितं जीवितं चानयैव प्रकृतौ स्थापितं,

---

१. 'माध — यद्व्याल' च. छ. पाठः. २. 'ति । इयं हि — यद्व्याल' क. ज. च. 'वति । इयं मालती — यद्व्याल' ज. पाठः. ३. 'कारुण्याद्विहित' छ. ज. पाठः

---

१. 'प्रीतिदानस्य', २. 'वर्धते', ३. 'निरस्ताशङ्क' ज. पाठः. ४. 'दुःखेन दुःखित' ज. पाठः. ५. 'स्वधाने' क. पाठः. ६. 'स्वमनन्याधीनं' ज. पाठः.

लवङ्गिका — पडिछिदो क्खु णो पिअसहीए अअं पसादो ।

(प्रतीष्टः खलु नः प्रियसख्या अयं प्रसादः ।)

मदयन्तिका — (स्वगतं) जाणादि महाभाअधेओ जणो रमणिज्जं मन्तिदुं ।

(जानाति महाभागधेयो जनो रमणीयं मन्त्रयितुम् ।)

---

अतस्तद्द्वयं पूर्णपात्रं स्वीकर्तुं प्रभवत्येवेति बहिरुपचारशब्दत्वेन प्रतिपाद्यान्तर्मम हृदयेश्वरी जीवितेश्वरी चेयमेव, ततोऽधिकं किमन्यद् दीयतामिति व्यञ्जयति । बकुलावलमणितेति सामदानोक्तेः सङ्ग्रहः ॥ १ ॥

तदुभयं जानाना विदग्धा तन्मुखभूता सखी तदनुगुणमेवोत्तरमाह — प्रतीष्टः खलु नः प्रियसख्या अयं प्रसादः । प्रतीष्टः स्वीकृतः । खल्विति निर्णये । न इति तत्र सन्निहितानां मदयन्तिकादीनां ग्रहणम्, अस्माकम् । प्रियसख्या, अयं हृदयजीवितप्रदानरूपः, प्रसादः अनुग्रहः । अनुग्रहे खल्वेवमुपचारः प्रयुज्यते इति वाच्योऽर्थः । व्यङ्ग्यस्तु प्रतीष्टः, न तु प्रतीष्यत इति चिरनिवृत्तत्वं सूचयति । नः प्रियसख्येति सततपार्श्ववर्तिनीभिरस्माभिरयमर्थो विदितचर एव । अयं प्रसादः हृदयजीवितयोस्त्वदीययोरियमीश्वरी इत्येवंरूप इति ।

तथोक्तं विदित्वा चमत्करोति— जानाति महाभागधेयो जनो रमणीयं मन्त्रयितुम् । [महाभागधेयः] महद् भागधेयं सुकृतं यस्य, रूपादिभिस्तस्यानुमितत्वात् स तथाविधो, लोके जनो रमणीयं मुग्धविदग्धसाधारणतया वाच्यव्यङ्ग्यभङ्ग्यालिङ्गितत्वेन सुन्दरम् । [मन्त्रयितुं] भणितुमित्यर्थः ।

---

१. 'क्खु पिअ' ख. पाठः. २. 'महाणुभाओ' ख. घ. छ. ज. झ. ञ. पाठः. ३ 'जणो अवसरे रम' क. झ. ञ. पाठः.

---

१. 'पार्श्व । प्रस' क. 'पार्श्व स्वीकृतम् । प्रस' ख. पाठः. २. 'विदित एव' ग. घ. छ. ज. पाठः. ३. 'अविदग्धविदग्ध' ज. पाठः.

मालती — (स्वगतं) किं णाम मअरन्देण उव्वेअकाळणं सुदं भवे ।

(किं नाम मकरन्देनोद्वेगकारणं श्रुतं भवेत् ।)

(प्रविश्य)

पुरुषः — वत्से मदयन्तिके ! भ्राता ते ज्यायानमात्यनन्दनः समादिशति, अद्य परमेश्वरेणास्मद्भवनमागत्य भूरिवसोरुपरि परं विश्वासमस्मासु च अनुग्रहमाविष्कुर्वता स्वयमेव मालती प्रतिपादिता । तदेहि सम्भावयामः प्रसादमिति ।

---

पूर्वविमर्शनमेवानुवर्तमानं मालत्याः स्त्रीस्वभावकातरतया पितृविचिकित्सया च शङ्कितहृदयायाः प्रकाशयति— स्वगतम् । किं नाम मकरन्देनोद्वेगकारणं श्रुतं भवेत् । उद्वेगकारणम् माधवस्येत्यर्थात् । भवेदिति संभावनायां लिङ् ।

तद्विमर्शं भङ्क्त्वाछिनत्ति कविः— प्रविश्य पुरुष इति । सामान्योक्तिर्विशेषे तात्पर्याभावात्, तद्वार्तामात्र एव तात्पर्यात् । मध्यमपात्रमिति च प्रतीयते, प्रभुपुत्र्यां ब्राह्मण्यां च कृत्येनाधमस्यागन्तुमयुक्तत्वाद् उत्तमस्य च प्रेष्यत्वानुपपत्तेः । अतश्च संस्कृतव्यवहारः । ज्यायान् अग्रजो, भ्राता । परमेश्वरेण राज्ञा । परं विश्वासम् अधिकं विस्रम्भम् । अस्माभिः कृतं तस्यानुमतमेवेति निश्चयात् । आविष्कुर्वता लोके प्रकाशयता । स्वयमेव भूरिवसोरप्रार्थितावित्यर्थः । प्रतिपादिता दत्ता ।

"विश्राणनं वितरणं स्पर्शनं प्रतिपादनम्" ।

इत्यमरः । सम्भावयामः महोत्सवकारणेन पूजयामः । प्रसादं राज्ञ इति । अर्थात् काश्चिदिति छादितां प्रकाशयति ।

---

१. 'भविस्सदि । माध- वयस्स का पुनर्यमाभिकोद्वेगहेतुर्वार्ता । (प्रविश्य) क. ख. ग., 'भविस्सदि । (प्रविश्य)' च. छ. ज. पाठः. २. 'णास्मद्गृहमागत्य' छ. पाठः. ३. 'च प्रसादमावि' क. ख. ङ. ज. झ. ञ. पाठः. ४ 'सम्भावयावः' ख. छ. ज. पाठः. ५. 'प्रमोदमिति' क. झ. ञ. पाठः.

---

१. 'निर्विकल्पतया' ग. पाठः २. 'तद्विमर्शभङ्क्त्वा' ख. पाठः ३. 'तात्पर्यार्थे । मध्य' ग. पाठः. ४. 'प्रभुपुत्र्या' ख. ग. झ. ज. पाठः. ५ 'माध्यस्थ्या' ख. ज. पाठः. ६. [illegible]

मकरन्दः — वयस्य ! इयं सा वार्ता ।

(मालतीमाधवौ [1]वैवर्ण्यं नाटयतः ।)

मदयन्तिका — ([2]सहर्षं मालतीं [3]परिष्वज्य) [4]सहि ! तुमं क्खु एक्क[5]णअराहिवासेण [6]पंसुकीलणादो [7]पहुदि पिअसही [8]बहिणी अ । सम्पदं [9]पुण अह्माणं घरस्स मण्डणं जादासि ।

(सखि ! त्वं खल्वेकनगराधिवासेन पांसुक्रीडनात् प्रभृति प्रियसखी भगिनी च । साम्प्रतं पुनरस्माकं गृहस्य मण्डनं जातासि ।)

---

इयं सा या मयान्तर्नगरे श्रुतेति सूचिता, सा । इयमनेन पुरुषेण प्रकाशितेत्यर्थः ।

वैवर्ण्यं भिन्नमुखवर्णतास् । 'प्रविश्य पुरुषः' इत्यादि 'वैवर्ण्यं नाटयतः' इत्यन्तं निरोधनं, पुरुषवचसा समागमाशानिरोधनात् ।

सखि ! त्वं खल्वेकनगराधिवासेन पांसुक्रीडनात् प्रभृति प्रियसखी भगिनी च । सांप्रतं पुनरस्माकं गृहस्य मण्डनं जातासि । [एकनगराधिवासेन] समानदेशवासाद् विस्रम्भस्नेहभूमितया, [1]प्रियसखी [2]भगिनी च । समासीदिति शेषः । खलु प्रसिद्धौ । पांसु[3]क्रीडनात् प्रभृति सिकताभिर्वेदिकादिकं कृत्वा यत् क्रीडनं विहारः, तत आरभ्येति शैशवोपलक्षणम् । 'एकदे[4]शनिवासो वा [5]सहपांसुक्रीडापरिचयपेशलः सखीजनः' इति हर्ष-स्नेहस्य हेतवः' इति, 'सहपांसुक्रीडापरिचयपेशलः सखीजनः' इति हर्षचरितोक्तेः । साम्प्रतमद्य पुनर्विशेषोऽप्यस्मीत्यर्थः । ज्येष्ठभार्यात्वेन सन्ततसान्निधानादस्मद्गृहस्य भूषणमपि जातासीत्यर्थः ।

---

१. 'वैचित्र्यं' क. पाठः. २. '(मालतीं सहर्षमालिङ्ग्य)' क. झ. ञ. पाठः. ३. 'आश्लिष्य)' ख. घ. छ. ज. पाठः. ४. 'सहि मालदि तुमं' क. ग. घ. ङ. च, छ. ज. झ. ञ. पाठः. ५. 'णअराणिवासेण', ६. 'ण सहपंसु', ७. 'हुदि मे पिअ', ८. 'सही आसि, बहि' क. झ. ञ. पाठः. ९. 'बाहिणिआ अ' क. झ. ञ. 'भट्टाणिआ अ' ग. घ. ङ. पाठः. १०. 'उण णो घरस्स' क. पाठः.

---

१. 'सा मया', २. , 'भूरितया' ख. पाठः. ३. 'भगिनीव मम' ख. पाठः. ४. 'क्रीडनतः' क. पाठः. ५. 'देशाधिवासो' ज. पाठः. ६. 'क्रीडनपरिचय' ख. पाठः. ७. 'त्वेन तत्सन्निधा' ख, 'त्वेन सततसान्निधा' ग. घ. छ. पाठः.

कामन्दकी— वत्से! मदयन्तिके! वर्धसे भ्रातुर्मालतीलाभेन।

मदयन्तिका — तुह्माणं आसिसो पसादेण। सहि लवङ्गिए! भरिदा णो मणोरहा तुह्माणं लाहेण।

(युष्माकमाशिषः प्रसादेन। सखि लवङ्गिके! भरिता नो मनोरथाः युष्माकं लाभेन।)

लवङ्गिका — सहि! अह्माणं ति मन्तिदव्वम्।

(सखि! अस्माकमिति मन्त्रयितव्यम्।)

मदयन्तिका— सहि! बुद्धरक्खिदे! एहि महूसवं संभावेह्म।

भ्रातुरिति। मकरन्दस्य प्रियत्वादसा माधवो धर्मतो भ्रातैवेति तत्त्वकथनम्, नन्दनस्येति प्रतिभासाच्छलप्रयोगः।

मौग्ध्यात् तदजानाना प्रतिवक्ति— युष्माकमाशिषः प्रसादेन। [युष्माकं] गुरुत्वाद् बहुवचनम्। [आशिषः] युष्माभिरस्मासु या स्वस्तिगीः प्रयुक्ता तस्याः, प्रसादेन अनुग्रहेण। वर्धामह इति विपरिणामेन योजना। सखि लवङ्गिके! भरिता नो मनोरथाः युष्माकं लाभेन। भरिताः पूर्णाः। मनोरथाः यदा नन्दनस्य मालतीविवाहार्थं प्रयत्न आरब्धः तदाप्रभृति कदा मालती लवङ्गिकादिभिः सहास्माकं गृहमलङ्करिष्यतीत्यादयः सङ्कल्पाः कृताः।

पूर्ववच्छलेनाह— सखि अस्माकमिति मन्त्रयितव्यम्। अस्माकं मनोरथाः युष्माकं नन्दनादीनां लाभात् पूर्णा इति वक्तव्यमिति बाह्योऽर्थः। माध-

१. 'काम— मदय' छ. पाठः. २. 'के दिट्ठिआ वर्धसे' क. झ. ञ. पाठः. ३. 'मद— भअवदि तुह्माणं' क. पाठः. ४ 'आसिसाप्पहावेण' क., 'आसिसं पसादेण' छ, 'आसिसाण पसादेण' ज, 'असिसं पहावेण' झ, 'आसिसाणं पहावेण' ञ. पाठः. ५. 'कलिदा' क. झ. ञ. पाठः. ६. 'लव — अह्माणं' छ. पाठः. ७. 'सहि किं अह्माणं' क. ञ. पाठः. ८. 'णं पि अत्थि मन्तिद' क. झ, 'णं पि एदं मन्तिद' ज. ञ. पाठः. ९. 'मद— एहि बुद्ध' क. 'बुद्ध— सहि मदअन्तिए एहि' च. पाठः. १०. 'दे दाणिं विवाहमहू' क. झ. ञ. पाठः. ११. 'एहि दाव महू' ख. ग. छ. ज., 'एदि दाणिं महू' ग. ङ. पाठः. १२. 'सम्भावेदं' ङ. पाठः. १३. 'ह्म। बुद्ध— सहि गच्छह्म। (इत्यु' क., 'ह्म। बुद्ध— सहि एहि गच्छ। (इत्यु' झ. ञ. पाठः.

१. 'प्रियात्वादस्य माध' ख. ग. घ. ङ. पाठः. २. 'यथा नन्द' घ. पाठः. ३. 'पूर्वच्छलेनाह' ग. घ. ङ. पाठः.

(सखि बुद्धरक्षिते! एहि महोत्सवं सम्भावयामः ।)

(इत्युत्तिष्ठतः ।)

लवङ्गिका—(जनान्तिकम्) भअवदि ! जधा हिअअभरिदुव्वहन्तविह्मआणन्दसुन्दराघोळाइदधीरपेरन्तमणोहरा पल्हत्थन्ति मदअन्तिआमअरन्दाणं दलिदकन्दोट्टमंसलच्छविओ दिट्ठिसंभेआ, तधा मण्णे मणोरहणिव्वुत्तसमाअमा एद त्ति ।

(भगवति ! यथा हृदयभरितोद्वहविस्मयानन्दसुन्दराघूर्णितधीरपर्यन्तमनोहराः पर्यस्यन्ते मदयन्तिकामकरन्दयोर्दलितेन्दीवरमांसलच्छवयो दृष्टिसंभेदास्तथा मन्ये मनोरथनिर्वृत्तसमागमावेताविति ।)

---

वाय मालतीप्रदाननिश्चयादस्माकं मनोरथाः पूर्णाः, न तु युष्माकमित्यन्तरः ।

सखि बुद्धरक्षिते! एहि महोत्सवं सम्भावयामः ।

'रमणीयोर्जितं दैवादद्य दर्शनम्' इत्युक्तस्य दर्शनस्य फलं भङ्ग्या प्रकाशयति— भगवति यथा हृदयभरितोद्वहविस्मयानन्दसुन्दराघूर्णितधीरपर्यन्तमनोहराः पर्यस्यन्ते मदयन्तिकामकरन्दयोर्दलितेन्दीवरमांसलच्छवयो दृष्टिसम्भेदास्तथा मन्ये मनोरथनिर्वृत्तसमागमावेताविति । [हृदयभरितोद्वहविस्मयानन्दसुन्दराघूर्णितधीरपर्यन्तमनोहराः] मनसि पूर्णः, तत्रामान् बहिः कार्यरूपेण स्फुरद्भिस्मय आनन्दश्च, ताभ्यां सुन्दरैराघूर्णितैर्लोलैर्धीरैः स्तिमितैश्च पर्यन्तैः कटाक्षैर्मनोहराः । पर्यस्यन्ते परस्परं विक्षिप्यन्ते । यथा(?) 'मदअंतिआमअरन्दाणं' इति 'द्विवचनस्य बहुवचनम्' इति प्राकृतन्यायाद् द्विवचनस्य बहुवचनादेशः । 'नीलोत्पलं तु कन्दोट्टम्' इति वैजयन्ती । [दलितेन्दीवरमांसलच्छवयः] विकसितेन्दीवरवत् स्निग्धनीलबहुलप्रभाः । दृष्टिसंभेदाः दृष्टीनां

---

१. 'जधा एदे हिअअ', २. 'भरिदुव्वित्तविह्म' क. ख. ग. पाठः ३. 'रं अन्दोळाअन्तधीर' ख. 'रा आन्दोलाअन्तधीर' ग. पाठः, ४. 'धीरत्तणमण' क. ख. ग. पाठः. ५. 'दरदळिद' क. पाठः. ६. 'वणोप्पलदामसरिच्छा कडक्खविक्खेवा तधा' क, 'दकन्दोट्टदामसरिच्छा कडक्खविक्खेवा तहा' ख. ग. पाठः. ७. 'तहा तक्केमि मणो', ८. 'सम्बन्धा एदे त्ति' क. ख. ग. पाठः

---

१. 'हृदयान्तरितोद्वेगविस्मय', २. 'घूर्णितधीर' ग. पाठः. ३. 'धीरमनो' ख. पाठः. ४. 'निवृत्त' ग. घ. पाठः. ५. 'स्निग्धबहुल' क. पाठः.

कामन्दकी— (विहस्य) नन्विमौ[1] मानसं[2] मोहनं अनुभवतः। तथाहि—

ईषत्तिर्यग्वलनविषमं[3] कूणितप्रान्तमेतत्[4]
प्रेमोद्भेदस्तिमितलुलितं[5] किञ्चिदाकुञ्चितभ्रु[6]।

---

साम्भिश्रणानि। [मनोरथनिर्वृत्तसमागमौ] सङ्कल्पनिर्मितसम्भोगौ, एताविति[1] मन्ये।

नन्विति सम्मतौ, तथैवेत्यर्थः। मानसं मनसा निर्मितम्, मोहनं सुरतम्। 'सुरतं मोहनं प्रोक्तम्' इति हलायुधः।

तथात्वमुपपादयति— तथाहीति।

ईषत्तिर्यगित्यादि[2]— [तिर्यग्वलनविषमम्] 'वल तिर्यग्गतौ' इति धातोस्तिर्यग्गतिवाचकमपि। वलनमत्र[3] चलनमात्रपरम्। तिर्यग्वलनेन तिरश्चीनेन वलनेन किञ्चिद्वक्रम्। कूणितप्रान्तं पुरस्तृतीयांशसम्मीलनविशिष्टापाङ्गम्।

'पुरस्त्रिभागसङ्कोचे प्रेम्णा तत् कूणितं भवेत्।'

इति वचनात्। [प्रेमोद्भेदस्तिमितलुलितम्] प्रेमोद्भेदेन[4] स्नेहस्यौत्कण्ठ्येन स्तिमितं परस्परास्मिन्निश्चलं[5], लुलितं त्रपया किञ्चिद् म्लानम्।

'परिक्लिष्टपुटं म्लायत्तारं विलुलितं भवेत्।'

इत्युक्तेः। किञ्चिदाकुञ्चितभ्रु ईषत् कुटिलितचिल्लिकम्[6]। अन्तर्मोदानुभवमसृणम् अन्तर्गतसुखानुभूत्या विषयान्तरग्रहणाशक्तम्। स्रस्तनिष्कम्पपक्ष्म गलितमत एव निमेषरहितं च पक्ष्म नेत्रपाली रोमावली यत्र। आकेकराक्षम्

'आकुञ्चितपुटापाङ्गा सङ्गतार्धनिमेषिणी[7]।
मुहुर्व्यावृत्ततारा च दृष्टिराकेकरा स्मृता॥'

इति वचनात् तथाविधमाक्षि यस्मिन्। "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्

---

१. 'मौ विलोकनेन मानसं' क. ञ. म., 'मौ परस्परं मानसं' ग. ङ. छ. झ. पाठः. २. 'सं मुहुर्मुहुः प्रमोदमनुभवतः' क., 'सं मुहुर्मुहुर्मोहनमनुभवतः' झ. म. पाठः. ३. 'स्खलितविषमं' क. च. पाठः. ४. 'कुञ्चितप्रान्त' क. पाठः. ५. 'स्खलितं' छ. ञ. पाठः. ६. 'दारंचितभ्रु' क. पाठः.

---

१. 'भोगावेगावेताविति' ग, 'भोगाविति' ज. पाठः. २. 'त्यादि तिर्यग्गता' ज. पाठः. ३. 'वलनमात्रचलन' ४. 'प्रेम्णोद्भेदेन' ज. पाठः. ५. 'परस्परमस्मिन्निश्चलं' ग. [illegible] 'परमास्मिन्निश्चलं' ज. पाठः. ६. 'कुटिलचिल्लिकं' ज. पाठः. ७. 'सानन्दार्धं' ग. घ. पाठः.

अन्तर्मोदानुभवमसृणं [1]स्तब्धनिष्कम्पपक्ष्म
व्यक्तं शंसत्यचिरमनयो[2]र्दृष्टमाकेकराक्षम् ॥ २ ॥

[3]पुरुषः— वत्से इत इतः ।

[4]मदयन्तिका— सहि बुद्धरक्खिदे [5]अवि [6]उणो दीसइ एस जीविद[7]प्पदाई पुण्डरीअलोअणो ।

(सखि बुद्धरक्षिते ! अपि पुनर्दृश्यत एष जीवितप्रदायी पुण्डरीकलोचनः ।)

---

च्" (५. ४. ११३) अत्र विशेषणैर्लज्जाशङ्काविस्मयग्लानिचिन्ताश्रमधैर्यमोहानां भावानां हर्षजनिता शबलता सुखपर्यवसायिनी द्योत्यते । किलिकिञ्चिताख्यश्च भावः ।

'स्मित[1]रुदितहसितभयरोषहर्[2]षदुःखश्रमाभिलाषाणाम् ।
यत् सङ्करणं हर्षादसकृत् किलिकिञ्चितं ज्ञेयम् ॥'

इति दिवाकरः । अचिरं मुहुर्मुहुश्चलनेना[3]स्थिरं, अथवा अचिरं व्यापारावपातसमय एव दर्शनानातिदीर्घकालभवत्वेऽपि स्नेहस्यातिभूमिगमनं व्यज्यते दृष्टं दर्शनम् । भावे निष्ठा । व्यक्तं शंसति स्फुटं कथयति । मोहनमनुभवत इति व्यक्तं शंसतीति दृष्टस्याचेतनस्य शंसनानुपपत्तेः लिङ्गतया स्फुटमनुमापयतीत्यर्थसिद्धेः गूढव्यङ्ग्यलाक्षणिकशब्दप्रयोगः । अत्र सूक्ष्ममलङ्कारः, संलक्षितसूक्ष्मार्थप्रकाशनात् ॥ २ ॥

इत इत इति प्रसुत्वान्मार्गकथनं गमनत्वरणं च ।

सखि बुद्धरक्षिते ! अपि पुनर्दृश्यत एष जीवितदायी पुण्डरीकलोचनः । अपिः प्रश्ने । जीवितप्रदायीत्युपकारस्मरणम् । अपि पुनर्दृश्यत इत्यौत्सुक्यं च उपरि तत्[4]सङ्गमानुरूपं रसमनुसन्दधानेन कविमुकुन्देन सन्दर्शितं बोधितव्यम् । पुण्डरीकलोचन इति दर्शनीयत्वोपलक्षणम् ।

---

१. 'स्तम्भनिष्कम्प' क. झ. ञ. पाठः. २. 'र्वृत्तमन्योन्यभावं' च. पाठः. ३. 'बुद्ध— वच्छे इदो इदो' छ. पाठः. ४. 'मद— (अपवार्य) सहि' छ. ञ. पाठः. ५. 'अवि णाम पुणो वि दाव दीसइ' क. पाठः. ६. 'पुणो वि दीसइ' झ. ञ. पाठः, ७. 'प्पदो पुण्ड' क. पाठः.

---

१. 'रुदितभय' ञ. पाठः. २. 'भयरोषतोषदुःख' ख. ङ, 'भयतोषदुःख' ग, 'भयहर्षरोमहर्षदुःख' ज. पाठः. ३. 'नावस्थितं' ज. पाठः. ४. 'सङ्गमानुकूलं रस' ख, 'सङ्गमनानुकूलं रस' छ, 'सङ्गमनानुकूलरस' ज. पाठः.

बुद्धरक्षिता— जदि दैवमणुऊळइस्सदि ।
(यदि दैवमनुकूलयिष्यति ।)
(निष्क्रामति ।)

माधवः— (अपवार्य)

चिरादाशातन्तुस्त्रुटतु बिसिनीतन्तुभिदुरो
महानाधिव्याधिर्निरवधिरिदानीं प्रसरतु ।

---

यदि दैवमनुकूलयिष्यति अनुकूलवदाचरिष्यतीति दैवानुकूल्यमन्तरेण कथमीदृशां दर्शनं भविष्यतीत्यौत्सुक्यमेव द्रढयति ।

अथ तदुदन्तश्रवणे विवर्णो निराशो माधवः स्वजीवितत्यागमभिसन्धायाह— अपवार्य स्वगतम् ।

चिरादित्यादि । चिराद् बहोः कालात् । एतावन्तं कालम् कथमपि मनोरथैस्तस्य रक्षितत्वात्,

'त्वं वत्सलेति कथमप्यवलम्बितात्मा
सत्यं जनोऽयमियतो दिवसाननैषीत् ।' (Vi· 14)

इति वक्ष्यमाणत्वात् । आशातन्तुः

'विरोधेऽपि स्फुटे मह्यं कालेनैतद् भवेदिति ।
अनुपेक्षाक्षमत्वं यत् पुंसामाशां वदन्ति ताम् ॥'

इति लक्षिताशैव तन्तुः सूत्रम्, परस्परबन्धहेतुत्वात् । त्रुटतु छिद्यताम् । 'वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः' (३-१-७०) इति विकल्पेन श्यनो विधानाच्छप् । बिसिनीतन्तुभिदुरः प्रागेव मृणालसूत्रवत् झटिति खण्डनशीलः, अन्तरान्तरापायशङ्कयेत्यर्थः । 'विदिभिदिच्छिदेः कुरच्' (३-२-१६२) ।

---

१. 'ऊळं भविस्सदि । (पुरुषेण सह निष्क्रान्ते ।) क. झ. ञ. पाठः. २. 'निष्क्रान्ता' घ. 'निष्क्रामतः' ङ. पाठः. ३. 'स्फुटतु' क. पाठः. ४. 'नलिनी तन्तु' ग. पाठः. ५ 'सूत्रभिदुरो' क. छ. ज. झ. ञ, 'पत्रभिदुरो' ब. पाठः.

---

१. 'अनुकूलमाचरिष्यतीति' छ., 'अनुकूलवदाचरतीति' ज. पाठः. २. 'मीदृशं' क., 'मीदृशानां' ख. पाठ.. ३. 'भवतीत्यौत्सुक्य' ज. पाठ. ४. 'कालं मनो' ज. पाठः. ५. 'स्फुटं' ख. पाठः. ६. 'लक्षिता सैव तन्तुः' क. ङ. पाठः. ७. 'विधानात् । बिसिनी... [illegible] ...भिदुरः', ८. 'तन्तुवत्' ब. पाठः

प्रतिष्ठामव्याजं व्रजतु मयि पारिप्लवधुरा
विधिः स्वास्थ्यं धत्तां भवतु कृतकृत्यश्च मदनः ॥ ३ ॥

अथवा—

कर्मकर्तरि चात्र प्रयोगः । महान् पूर्वस्मादतिशयितः । आधिव्याधिः निरवधिरिदानीमद्य शरीरपातं यावदनुवृत्त इति कल्पितः, पूर्वं समागमावसानत्वेन सावधिरिति चिन्तितत्वात् । प्रसरतु प्रवर्तताम् । प्रतिष्ठां दृढावस्थितिम् । अव्याजं साक्षादेव पूर्वमुत्कण्ठाव्याजेन लब्धास्पदत्वात् तदपाये निमित्ताभावात् स्वयमियं न भविष्यतीति सुहृद्भिश्चिन्तितत्वाद्, इदानीमुन्मादत्वेन साक्षात् स्वयं साम्राज्यमनुभवत्वित्यर्थः । पारिप्लवधुरा चैपलानां भारः पारिप्लवः चञ्चलः ।

'पारिप्लवाः स्रोतसि निम्नगायाः'

इत्यादिदर्शनात् । धूर्भारः । 'ऋक्पूरब्धूःपथामानक्षे' (५-४-७४) इति समासान्तोऽच्प्रत्ययः । लोट्त्रयं कामचारकरणे । विधिर्दैवम्, स्वास्थ्यमव्याकुलत्वम्, धत्तां धारयतु । कृतकृत्यः साधितसाध्यः, उभयोरपि महता प्रयासेनैतावत एव कार्यस्य सिसाधयिषितत्वात् तस्य च सिद्धत्वादिति भावः । असुलभसमागमयोरावयोस्तत्र तत्र दर्शनं विधिना यदृच्छया सम्पादितं, मदनेन तु परस्परानुरागः समुत्तेजितः । द्वयस्यापि विरसावसानत्वं द्वाभ्यामेव कृतमिदानीमित्यर्थः । एतौ लोटौ विधिपरौ । अनिष्टविध्याभासरूप आक्षेपोऽत्रालङ्कारः । प्राणत्यागमन्तरेण विरहदुःखस्य दुःसहत्वरूपविशेषविवक्षयानिष्टविधानात् ॥ ३ ॥

विधिः स्वास्थ्यं धत्ताम्, मदनश्च कृतकृत्यो भवत्वित्युक्त्या तयोः स्वविषये ऽनुचितप्रवृत्तिः प्रकाशिता । तदविचारिताभिधानमित्युपपत्त्या पूर्वोक्तमाक्षिपति — [अथवेति] । अथवेति पक्षव्यावृत्तौ ।

१. 'मव्याजां', २. 'धुरां' छ. पाठः. ३. 'स्थैर्यं' ज. पाठः.

१. 'पूर्वमतिशयितः', २. 'दनुवर्तत इति', ३. 'अव्याजां' ज. पाठः. ४. 'मिव न' ग. घ. पाठः. ५. 'चञ्चलानां' ज. पाठः. ६. 'चपलः' ज पाठः. ७. 'कामचारणे' ख. ज. पाठः. ८. 'प्रयासेन नैता' छ, 'प्रयासेन नैतावद् कार्यं', ९. 'सापत्नत्वं', १०. 'मन्तरा विरह', ११. 'अनुचितवृत्तिः' ज. पाठः,

समानप्रेमाणं जनमसुलभं प्रार्थितवतो
विधौ वामारम्भे मम समुचितैषा परिणतिः ।

---

**समानप्रेमाणमित्यादि**—तुल्यानुरागमिति निरूप्येत्यर्थः । एतावदेव निरूपितम्, न तु मौलभ्यादीस्यात्मनः प्रेक्षावत्त्वं प्रतिक्षिपति । जनमित्येक-नगराधिवाससहपांसुक्रीडनादिपरिचयरूपस्नेहहेत्वभावात् तटस्थं स्त्रीजातिमात्र-मिति द्योत्यते । तदा त्वदृष्टेऽपि घटत एव प्रार्थना । यदि सुलभत्वबुद्धिः सापि नास्तीत्याह—असुलभं अकृच्छ्रेण[3] लभ्यं न भवतीति पूर्वमेव निर्णीत-मित्यर्थः ।

"आसक्तमेतदनवेक्षितहेतु चेतः"

इति पूर्वमेवालोचितत्वात् ।

"आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः ।"

इति न्यायादसुलभमपि विध्यानुकूल्ये कदाचित् सुलभं भवतीत्याशङ्क्याह—**वामारम्भे** प्रतिकूलप्रवृत्तौ । ममेत्यर्थान्तरसंक्रमितवाच्येन ध्वनिना विवेकशून्य-स्य प्रतिलोमदैवस्येति च द्योत्यते । एषेति प्रार्थितस्य जनस्य स्वपुरत एवा-न्यहस्तगमनम् मनोदुःखानुभूतिः सहृदयहास्यत्वम् इत्येवंरूपेण वर्तमानेत्यर्थः । **परिणतिः** फलं समुचिता सम्यगुपपन्नैव ।

'केषां न स्युः परिभवफला निष्फलारम्भयत्नाः ।'

इति वचनादित्यर्थः । अतो विधिमदनयोरुपालम्भो मोहारम्भ एवेत्यर्थः । तत् किमिदानीं विच्छिन्नाशापाशेन विलम्ब्यते । तूष्णीमेव गत्वा

'सहतां हतजीवितं मम प्रबलामात्मकृतेन वेदनाम् ।'

---

१. 'एतावदेवं निरू' ख. पाठः. २. 'मात्रहेतुमिति' ख. पाठः. ३. 'अ कृच्छ्रेण' ग. घ. पाठः. ४ 'मेवावलोकितत्वात्' ग. पाठः. ५. 'प्रज्ञापत्वम्' ग. पाठः. ६. 'गुपपन्नेव' ख. ग. पाठः. ७. 'मोपारम्भ' ग. घ. पाठः.

तथाप्यस्मिन् दानश्रवणसमयेऽस्याः प्रविगल-
त्प्रभं प्रातश्चन्द्रद्युति वदनमन्तर्दहति माम् ॥ ४ ॥

कामन्दकी — (जनान्तिकम्) एवं दुर्मनायमानः पीडयति मां वत्सः, वत्सा च दुष्करं निराशा प्राणिति । पृच्छामि तावदायुष्मन्तम् । (प्रकाशं) अपि भवानमंस्त यथा भूरिवसुरेवं मालतीमस्मभ्यं दास्यतीति ।

इत्युक्तक्रमेण स्वैरेव दुश्चेष्टितैरुपपादितं दुःखमनुभूयतामित्याशङ्क्य गत्यन्तराभावात् तथैव क्रियते । तदापि मदवस्थादोऽस्यतोऽप्यस्या अवस्था मां विवशयतीत्याह — तथापीति । मम नैराश्ये प्राप्तेऽपीत्यर्थः । अस्मिन्निति वर्तमानत्वात् । दानश्रवणसमये स्वयमेव मालती प्रतिपादितेति पुरुषवचनाकर्णनकाले । प्रविगलत्प्रभं प्रकर्षेण अद्यच्छायं । शत्रा गच्छन्त्योपर्युपरि वर्तमानत्वं प्रकाश्यते । तत एव प्रातश्चन्द्रद्युति दिनमुखवर्तिनः सूर्यकिरणविसरणधूसरिततेजसश्चन्द्रस्य द्युतिरिव द्युतिर्दीप्तिर्यस्येति उक्तिभङ्ग्या द्युतिहीनमिति कथ्यते । वदनं मुखम् । अन्तर्मनसि । मां दहति । अतो नैराश्यमपि दृढमवलम्बितुं न शक्यते । यैतत्त्वद्धस्तं वासौ गमिष्यति कृतान्तहस्तं वा न पुनरन्यस्य हस्ते पतिष्यतीति एतद्वदनं स्पष्टमाचष्ट इत्यर्थः । अत्र पूर्वार्धे मत्याख्यो व्यभिचारी व्यज्यते । उत्तरार्धे दैन्याख्यः । उपमा चालङ्कारः ॥ ४ ॥

जनान्तिकं त्वङ्गिकया श्रुतमित्यर्थः । एवमिति वैवश्याद्यभिनयः । दुर्मनायमानः दुःखितमना भवन्, क्यङ् । पीडयति दुःखितां करोति । वत्सो माधवः । वत्सा चेति चकारः पीडयतीत्यनुकर्षणार्थः । तत्रापि सौकुमार्यातिशयात् मालतीं प्रत्याह — दुष्करं कर्तुमशक्यं यथा तथा । प्राणिति जीवति । अति-

१. '(स्वगतम्)' क. ज. झ. ञ. पाठः. २. 'एवमतिदुर्म' क. ग. घ. ङ, च. छ. झ. ञ. पाठः. ३. 'वत्सो माधवो वत्सा मालती च' क. ज. झ. ञ, 'वत्सो, वत्सा च मालती दुष्करं' ग. घ. ङ. च. छ. पाठः. ४. 'ति । (प्रकाशं) पृच्छामि' क. झ. ञ, 'ति । (प्रकाशं) वत्स माधव ! पृच्छामि' ज. पाठः. ५. 'युष्मन्तं । अपि' क. झ. ञ, 'युष्मन् त्वाम् अ' ज. पाठः. ६. 'अथ किं भवान्' छ. ज. पाठः. ७. 'यदस्मभ्यं भूरिवसुरेव मालतीं दास्यतीति' ग. ङ. पाठः.

१. 'तथापि' क. पाठः. २. 'विवशतीत्याह' ख. ग. घ. छ. पाठः. ३. 'वर्णनाकर्ण' ग. पाठः. ४. 'अत एव' ज. पाठः. ५. 'त्वत्स्वहस्तं' ग. घ. छ. पाठः. ६. 'द्वचनं' क. ज. पाठः. ७. 'वैवर्ण्याद्यभिनयः' क. ज. पाठः. ८. 'वेति पीड', ९. 'ति । कृच्छ्रेण' ज. पाठः.

माधवः — (सलज्जं) नहि नहि ।

कामन्दकी — न तर्हि प्रागवस्थायाः परिहीयसे ।

कृच्छ्रेणेदानीं जीवतीत्यर्थः । तत्र हेतुः — निराशा निरस्ता आशा यस्याः । एतावन्तं कालमाशयैव धारितजीवितत्वादिति भावः । आश्वासनं भङ्ग्या कर्तुमाह — पृच्छामीति । आयुष्मन्तं माधवम् । तत्प्रश्नोत्तरेणैव मालत्या अप्याश्वासनसिद्धेस्तं प्रति प्रश्नः । अपिः प्रश्ने । अमंस्त मतिं कृतवान्, मन्यतेर्लुङि रूपम् । अनुदात्तेत्त्वादात्मनेपदम् । इट्प्रतिषेधश्च "एकाच उपदेशेऽनुदात्तात्" (७-२-१०) इत्यनेन । 'तदादिग्रहणं स्यादिनुमर्थम्' इति सिजन्तस्याङ्गसंज्ञायां सत्यां 'अनिदिताम्' इति अनुनासिकलोपाभावः । तथेत्यायाति । भूरिवसुरेवेति पितृत्वाद्धानेऽधिकृतत्वमाह । अस्मभ्यमिति चतुर्थ्या सम्प्रदानत्वेन सत्कृत्य दास्यतीति द्योत्यते । इति यथा तथा भवानप्यमंस्तेत्यर्थः ।

तत्प्रश्नस्य सोपालम्भत्वं ज्ञात्वाह — सलज्जमिति । नहि अमंसिषीति विपरिणामेन अर्थादायाति । वीप्सया तथात्वस्य स्वप्नेऽप्यशङ्कितत्वं प्रकाशयति ।

तत्संवादेनैव तं समाश्वासयति — न तर्हीति । तर्हि तस्माद् यतो भूरिवसुहृदयसंवादमन्तरेण परस्परानुरागाद्भसत्प्रयत्नेन च युवां साहसिक्येनैव प्रवृत्तावत इत्यर्थः । प्रागवस्थायाः दानश्रवणात् पूर्वं या अवस्था मनसः प्राप्त्याद्यविशिष्टत्वेन सुखावस्थानं अतः परमपि तस्या अवस्थायाः । न परिहीयसे न न्यूनो भवसि । परिहीयत इति पाठे एतत्कार्यमित्यर्थः । अद्यापि न किञ्चिदतिक्रान्तम्; सैवावस्था वर्तत इत्यर्थः । 'चिरादाशातन्तुस्त्रुटतु' इति विच्छिन्नस्याच्छेदकारणम् । 'न तर्हि प्रागवस्थायाः परिहीयसे', 'कथं न्व वत्स! मामनवधानां मन्यसे' इत्यादि बिन्दुः ।

---

१. 'याः भूरिवसुः परि' ज. पाठः. २. 'परिहीयते' छ. ज. पाठः

---

१. 'अत्र हेतुः' ज. पाठः. २. 'प्रश्नेन च' ज. पाठः ३. 'प्रागवस्था दान' ज. पाठः. ४. 'पूर्वावस्थायां मनसः' च, 'पूर्वया अवस्थया मनसः' छ. पाठः. ५. 'मानसं' ज. पाठः. ६. 'आप्याया' छ. पाठः ७. 'नान्यमना भवति' ज. पाठः. ८. 'त्रुटत्वित्यादि विच्छिन्न' च. पाठः.

मकरन्दः— दत्तपूर्वेत्याशङ्क्यते ।

कामन्दकी — जानामि तां खलु वार्ताम् । इदन्तु तावत् सुप्रसिद्धमेव, यथा नन्दनाय मालतीं प्रार्थयमानं भूरिवसुर्नृपतिमुक्तवान् 'प्रभवति निजस्य कन्यकाजनस्य महाराजः' इति ।

---

अपामुद्रितस्य तस्य आशयं मकरन्दः प्रकाशयति—दत्तपूर्वा अन्यस्मै पूर्वं दत्ता, इत्याशङ्क्यते राज्ञोदकपूर्वं दत्तत्वाद्, भूरिवसुनापि 'प्रभवति निजस्य कन्यकाजनस्य महाराजः' इति वाचानुमोदितत्वात् । अतश्चाशाच्छेद इत्यभिप्रायः ।

'सकृदंशो निपतति सकृत् कन्या प्रदीयते ।
सकृदाह ददानीति त्रीण्येतानि सकृत् सकृत् ॥' इति,

'न दत्वा कस्यचित् कन्यां पुनर्दद्याद्विचक्षणः ।
दत्वा पुनः प्रयच्छन् हि प्राप्नोति पुरुषोऽनृतम् ॥' इति,

'नान्योत्पन्ना प्रजास्तीह न चान्यस्य परिग्रहे ।
न द्वितीयश्च साध्वीनां क्वचिद् भर्तोपदिश्यते ॥' इति,

'पतिं हित्वापकृष्टं स्वमुत्कृष्टं याऽवसेवते ।
निन्द्यैव लोके भवति परपूर्वेति चोच्यते ॥'

इति मनुवचनाद् धर्मलोपशङ्केत्यर्थः ।

अथ 'अनधिकारिणा कृतमकृतम्' इति न्यायाद्राज्ञो दानस्य नैरर्थक्यं भूरिवसोश्चाननुमोदनं व्याख्यानेनोपपाद्य तदाशङ्काया निरवकाशत्वमाह — जानामि मयात्रापरिज्ञातस्य कस्यचिदभावादिति भावः । तां या भवतामाशङ्कामङ्कुरितवती तामित्यर्थः । वार्तां 'अन्तर्निगर एव' इति त्वया सूचितां लोकोक्तिम् । खल्विति निस्सन्देहत्वम् । कथं निस्सन्देहत्वं ज्ञायत इत्यत्राह— तुल्यावृत्तौ । यथाश्रुतग्राही

---

१. 'मक — भगवति! दत्त' क. ग. घ. ङ. छ. ब. पाठः. २. 'जानासि' क. पाठः. ३. 'इदन्तु प्रसिद्ध' क. ख. 'इदं तावत् सुप्र' छ. पाठः. ४. 'यथा खलु नन्दनाय' ग. घ. ङ. पाठः. ५. 'नं नृपति' छ. पाठः.

---

१ 'पूर्वदत्ता', २. 'राज्ञोदपूर्वं' ज. पाठः. ३. 'नैतश्च' ग घ. पाठः. ४. 'हित्वैव लोके' क. 'निन्द्या च लोके' ज. पाठः. ५. 'अलंकृतवती तामि' ख. पाठः. ६. 'न्देहत्वं अज्ञाय तमन्यग्राह' ख. छ. 'न्देहत्वं अज्ञाय तमित्यत्राह' ग, 'न्देहत्वात् कथं' ज. पाठः. [illegible] ज्ञायते' क पाठः.

मकरन्दः — अस्त्येतत् ।

कामन्दकी — अद्य च स्वयं राज्ञा मालती दत्तेति सम्प्रत्येव पुरुषेणावेदितम् । तद्धत्से वाक्प्रतिष्ठानि देहिनां व्यवहारतन्त्राणि । वाचि पुण्यापुण्यहेतवो व्यवस्थाः सर्वथा जनानामायतन्ते । सा च

लोकः, कतिपये पुनः तत्त्वं जानन्तीत्यर्थः । इदं वस्तु तावत् प्रथमम् । सुप्रसिद्धं सर्वलोकविदितम् । नन्दनाय नन्दनस्यार्थे । तादर्थ्ये चतुर्थी ।

अस्त्येतद्, वस्त्विति शेषः ।

अद्य चेति । अद्य परमेश्वरेणेत्युक्तस्यानुवादः । स्वयमिति पित्रनेपक्षत्वम् । संप्रत्येवेति युष्माभिरपि तच्छ्रुतमित्यर्थः । पुरुषेण मदयन्तिकाहायकेन । तदपि श्रुतम्, किमतोऽस्माकं प्राप्तमित्यत्राह—तत् तस्मात् । भूरिवसोर्वागनृणात्मिकैवेत्यन्वयः । वत्सेति बालत्वाद् भवतां बोद्धव्यत्वमस्मिन्नर्थे इति व्यञ्जयति । वाक्प्रतिष्ठानि वाचि वाक्ये प्रतिष्ठा निर्णयो येषाम् । देहिनामित्यविशेषेण म्लेच्छादीनामपि, तथा किं पुनर्वैदिकानामिति द्योतयति । व्यवहारतन्त्राणि प्रवृत्तिनिवृत्तिलक्षणव्यवहारप्रयोगाः ।

"न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥"

इत्याप्तवचनात् ।

'पदमभ्यधिकाभावात् स्मारकान्न विशिष्यते ।'

इति वचनात् स्मारकत्वमेव शब्दानामिति चेत्, तत्राह—वाचि शब्दे पुण्यापुण्यहेतवः सुखदुःखप्राप्तिफलयोः सुकृतदुष्कृतयोः कारणभूताः । व्यव-

१. 'अद्यैव स्वयं' क. पाठः. २. 'स्वयमेव रा' ध. छ. ञ. पाठः ३. 'राज्ञैव दत्ता मालती' ख. झ. पाठः ४. 'ति पुरुषेण' क. झ. ञ. पाठः. ५. 'त्स हृदि प्रतिष्ठानि वचनानि देहि' क. पाठः. ६. 'व्यवस्थिताः स' क. छ. ञ. पाठः. ७. 'सर्वं च वचनानामायत्तम् । सा च' क. ञ, 'सर्वेषां जनानां' झ. पाठः. ८. 'नां यतन्ते' ख. पाठः. ९. 'यतन्त इति । सा' ख. पाठः.

१. 'पित्रानपेक्षत्वं' २. 'काहायकेन' ज. पाठः. ३. 'गनृणात्मिकै' ज. पाठः. ४. 'भवता बोद्ध' ज. पाठः. ५. 'णि व्यवहार' ज. पाठः. ६. 'स्मारके नातिरिच्यते' ज. पाठः.

भूरिवसोर्वागनृणात्मिकैव । न खलु महाराजस्य निजा कन्यका मालती । कन्याप्रदाने च नृपतयः प्रमाणमिति नैवंविधो धर्माचार्यसमयः । तस्मादव्यवस्थितमेतत् । कथं च वत्स ! मामनवधानां मन्यसे ।

---

स्था नियमाः । सर्वथा सर्वप्रकारेण श्रुतिस्मृतिभ्यां सदाचाराच्चेत्यर्थः । वाच्या-यतन्ते तदधीनतया वर्तन्ते,

'धनुर्वेदसंस्कारस्तावदस्मास्वायतते ।'

इति मुरार्युक्तवत् । 'एकः शब्दः सम्यग्ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके कामधुग् भवति' इति वाक्याद्,

'नास्ति सत्यात् परो धर्मो नानृतात् पातकं परम् ।
स्थितिश्च लोकधर्मश्च तस्मात् सत्यं विशिष्यते ॥

वाच्यार्था नियताः सर्वे वाङ्मूला वाग्विनिःसृताः ।
तां तु यः स्तेनयेद्वाचं स सर्वस्तेयकृन्नरः ॥'

इति मनुवचनात्, दशरथप्रह्लादादीनां पुत्रेभ्यः प्राणेभ्यश्च सत्यस्याङ्गी-कारेण स्वर्गप्राप्तिश्रवणाद्, युधिष्ठिरस्य छलेनाप्यसत्यं प्रयुक्तवतो निरयदर्शनाक-र्णनाच्चेत्यर्थः । सा चेति या एवंविधानुभावा सा । भूरिवसोरिति विदितवेदित-व्यत्वमधीताशेषशास्त्रत्वं च व्यञ्जयन्ती कदाचिदपि सन्मार्गादस्खलनमाह । अनृणात्मिकैव कदाचिदप्यननुमोदनाद् दानस्य नन्दनं प्रति अनृणं ऋणसंब-न्धरहितं आत्मा तत्त्वं यस्याः । आत्मग्रहणेन बहिरन्यथा प्रतिभातु नाम क्षुद्रधियाम्, तथापि कुशाग्रधियां निरूपणे अनृणैवेत्यवधारयति । तथात्वमेव व्याचष्टे— खलु प्रसिद्धौ । 'प्रभवति निजस्य कन्यकाजनस्य' इति भूरिवसुवचने

---

१. 'वानृतात्मिकैव' क. झ. ञ. पाठः. २. 'कन्यकाप्र' छ. झ., 'कन्यादाने' झ. पाठः ३. 'चारसमयः' क. ज. झ. ञ. पाठः. ४. 'तस्माद्विसारीतव्य-मेतद्' क. 'तस्माद्विसारीतव्यमेतद्' झ. पाठः ५. 'मेवैतद्' छ. ज. पाठः. ६. 'च मामनव' ग. ज. पाठः ७. 'से । वत्स — मा वां' क. झ. ञ. पाठः.

---

१. 'सदाचाराच्चे' ज. पाठः. २. 'सम्यग् विधि' ग. ब. पाठः. ३. 'एवं विधानुभावा' ख. पाठः ४. 'अनृण ऋणसंबन्धरहित आत्मा' क. ख. पाठः. ५. 'कुशाग्रीयधियां' घ. छ. पाठः. ६. 'व्याचष्टे' ज. पाठः.

निजशब्दः साक्षात् नृपतिसंबन्धमेव वक्ति । अतस्तत्प्रसूतिर्यः कन्याजनस्तमेव स्पृशति, न पुनर्मालतीं कटाक्षेणापि वीक्षितुं क्षमत इति भूरिवसुवाक्स्वात्मशङ्का निवर्तिता । अथ राज्ञा दत्तत्वाशङ्कां निवारयति—प्रमाणं निर्णयहेतुः । इत्येवंविधः, इतिस्समासौ, इत्युक्तं यद्, एवंप्रकारः, [धर्माचार्यसमयः] धर्माचार्याणां स्मर्तॄणां मन्वादीनां समयः सङ्केतः सिद्धान्तो वा ।

"समयस्तु क्रियाकारे सङ्केते चरिते सताम् ।
सिद्धान्ते शपथे काले"

इति वैजयन्ती ।

"यस्मै दद्यात् पिता त्वेनां भ्राता वानुमतः पितुः ।
तं शुश्रूषेत जीवन्तं संस्थितं च न लङ्घयेत् ॥" इति,

"तां तु कन्यां पिता माता भ्राता मातुल एव वा ।
पितृव्यश्चेति पञ्चैते दातुं प्रभवतां गताः ॥"

इति देवीवचनाच्च पितुरेव दाने साक्षादधिकृतत्वोक्तेः,

"कालेऽदाता पिता याप्यो याप्यश्चानुपयन् पतिः ।
मृते भर्तरि याप्यस्तु पुत्रो मातुररक्षिता ॥"

इति पितुरेव कालप्रदाने निन्दास्मरणात्,

"बलाद्दत्तं बलाद्भुक्तं बलाच्चापि लेखितम् ।
सर्वान् बलकृतानर्थानकृतान्मनुरब्रवीत् ॥"

इति बलकृतस्याकृतत्वस्मरणाच्च मन्वादीनामियमनुमतिर्न भवतीत्यर्थः । तस्मादवस्थितमेतत् अनृणात्मिकैवेत्यवधारणेन यदुक्तं तदनुवादमेवेत्यर्थः । 'सा च भूरिवसोर्वागनृणात्मिकैव' इत्यादिकामन्दकीवचनात् लक्ष्यस्यैव मालतीविवाहोत्सवारम्भादलक्ष्यस्यैव मन्त्रिप्रतिज्ञारूपस्य बीजस्य प्रतिपादनात् प्रतिमुखमिदम् । एवमदृष्टशङ्कया नैराश्यं न कर्त्तव्यमित्याद्दवास्यं दृष्टे प्रबलसहायसम्पत्त्यापि भवदभीष्टसिद्धेर्न व्यभिचारः शङ्कनीय इत्याह—चकारः उपपत्त्यन्तरसमुच्चयार्थः । अनवशानामस्मिन्नर्थे प्रमाद्यन्तीम् । मामिति त्वन्मयजीवितत्वं सूरिव-

१. 'सानु', २. 'शुश्रूषयेत जीवन्तं' ग, घ, पाठः ३. 'प्रदातुं प्रभुतां गताः' क पाठः ४. 'चापि लिखितं' ख, 'च्चापि लेखितं' छ, पाठः. ५. 'स्य प्रबल', ६. 'इ... किमिति चकारः', ८. 'तन्मय' ज, पाठः

(विहस्य)

मा वां सपत्नेष्वपि नाम तद्भू-
त्पापं यदस्यां त्वयि वा विशङ्क्यम् ।
तत्सर्वथा सङ्गमनाय यत्नः
प्राणव्ययेनापि मया विधेयः ॥ ५ ॥

मकरन्दः — सुष्ठु युज्यमानमादिश्यते युष्माभिः ।

सुहृदयनिर्विशेषत्वमुपायप्रयोगकौशलमित्याद्यपरिमितं गुणजातं स्वस्या ध्वन्यते । कथं मन्यस इति केन प्रकारेण तवेयं बुद्धिरुत्पन्नेत्युपालम्भः ।

विहस्य अहो भवतो मौग्ध्यं यन्मय्यपि धुरंधरायां एवं चिन्त्यत इति स्मितं कृत्वेत्यर्थः ।

मा वामित्यादि — वां युवयोः सपत्नेषु शत्रुषु, अपि नाम सम्भाव्ये । तत् पापं मा भूत् तादृशं पापफलमनिष्टं मा भवतु । यस्यां मालत्यां, त्वयि वा यद्विशङ्क्यं एतच्छारीरं मानसं वा दुःखमनयोरापतिष्य-तीति यच्छङ्कास्पदं तत्पापं वां सपत्नेष्वपि मा भूदित्येतदुक्तं भवति । लोके हि स्वबन्धूनां ये शत्रवस्तेषामनिष्टमाशंसन्ते जनाः । मम तु मतिस्तथा न वर्तते । यतो युवयोः शत्रवः इति विरोधरूपोऽपि कोऽपि सम्बन्धो युवाभ्यां सह सपत्नानां विद्यते, अतस्तत्सम्बन्धवशात् तेषामप्यनिष्टं मा भूदिति भवति धीः । किं पुनर्युवयोर्माभूदित्यत्रापिना द्योत्यते । लोकोक्त्यनुसारश्चायम् , तदितीदानीं शङ्कितस्यानिष्टस्य परिहर्तव्यत्वादित्यर्थः । सङ्गमनाय संश्लेषणार्थम्, सर्वथा पितृबुद्ध्यनुसारेण वा तद्व्यतिरेकेण वा सर्वप्रकारेण यत्सङ्गमनं तदर्थम् । 'तुमर्थाच्च भाववचनात् '(२-३-१५) इति चतुर्थी । प्राणव्ययेन प्राणानां परित्यागेन । अपिशब्देन किं पुनरस्मिन्नर्थे बुद्धिव्यापारमात्रसाध्य इति सौकर्यप्रतिपादनात् मनसः स्थिरीकरणं क्रियते । विधेयः कर्तव्यः । अत्रातिशयोक्तिरलङ्कारः ॥ ५ ॥

अथ तदुक्तिमनूद्य पुरुषकारस्तावदविकलो युष्माकं, दैवगतिः कथमिति न ज्ञायते इत्याह—सुष्ठु सम्यक् । युज्यमानं उपपद्यमानम् , आदिश्यते उपदिश्यते, युष्माभिरिति तथादेशे हेतुः 'आसेषु निष्ठा' (III. ii.) इत्यादिगुणविशिष्टाभिरित्यर्थः ।

१. 'मा वा सप' क. झ. ज. पाठः. २. 'भिः । दया वां' ग. ङ. पाठः.

१. 'तवैवं बुद्धि' ज. पाठः. २. 'मौढ्यं' क. पाठः. ३. 'यत्रेत्यपिना' ख. ज, 'यापिना' ग. घ, 'यत्रत्यापिना' ङ. पाठः.

अपि च —

दया वा स्नेहो वा भगवति! निजेऽस्मिन् शिशुजने
भवत्याः संसाराद्विरतमपि चित्तं द्रवयति।
अतश्च प्रव्रज्यासुलभसमयाचारविमुखः
प्रसक्तस्ते यत्नः प्रभवति पुनर्दैवमपरम् ॥ ६ ॥

"प्राणव्ययेनापि मया विधेयः' इत्यादि तस्य च प्रयत्नस्य ग्राह्योपाधिवैधुर्यमाह — दया वेत्यादि।

"अनुकम्पा तु सा ज्ञेया दुःखितान् प्रति देहिनः।
उपकारपरत्वं या कुरुते चित्तविक्रिया ॥"

इति लक्षितानुकम्पापर्यायो दयाशब्दः,

'मनसो यद्द्रवार्द्रत्वं विषयेषु ममत्वतः।
भयशङ्कावसानात्मा स एव स्नेह उच्यते ॥'

इति लक्षितः स्नेहो वा। निज इति ममत्वेन स्नेहो वा, शिशुजन इति स्वहितसाधनापरिज्ञानाद् दुःखितत्वाच्च दया वा। संसाराद्विरतं संसारधर्मेभ्यो रागादिभ्यो निवृत्तमपि। 'जुगुप्साविरामप्रमादार्थानामुपसङ्ख्यानम्' (वा० २ ३-२८) इति पञ्चमी। द्रवयति अधीरं करोति। अतश्चित्तद्रवणात्। प्रव्रज्यासुलभसमयाचारविमुखः सन्यासे, सुलभाः, सुप्रापाः समयाचारास्तत्तत्सिद्धान्तानुगुणाः आचाराः अनुष्ठानानि चैत्यवन्दनशास्त्रश्रवणयोगाभ्यासादयः, तेषु विमुखः तेभ्यो व्यावृत्तः। एतदर्थमेव कालक्षेपात् तेषामवसरालाभादित्यर्थः। प्रसक्तः प्रारब्धः। पुनः पक्षव्यावृत्तौ। अपरं परमतिशयितं अस्मान्न विद्यत इति अपरं, अनुत्तममित्यादिवत्। अथवा अपरमन्यैर्विलक्षणमित्यर्थः, सर्वसादुर्लङ्घ्यम्। दैवं पुनः प्रभवति स्वतन्त्रतया प्रभुत्वं वहति। कर्तुमकर्तुमन्यथा कर्तुं वा प्रगल्भते।

१. 'संसारोद्विरत' ख. पाठः. २. 'अचिन्त्यप्रव्रज्या' ख, च, 'ततश्च' ज. पाठः· ३. 'ज्यासमयसुलभाचारविमुखः' क, ज. पाठः·

१. 'यद्द्रवार्द्रत्वं' ज. पाठः. २. 'साधनाविज्ञानात्' ज. पाठः. ३. 'तमिति। ज ख. ग. पाठः. ४. 'वसरलाभा' ख. ग. छ. ज. पाठः. ५. 'मन्याद्विलक्षण' क. ख. ग. पाठः.

(नेपथ्ये) भअवदि भट्टिणी विण्णवेदि मालदिं घेत्तूण तुरिदमिह आअच्छेत्ति ।

(भगवति ! भट्टिनी विज्ञापयति मालतीं गृहीत्वा त्वरितमिहागच्छेति ।)

कामन्दकी — वत्से उत्तिष्ठ ।

(सर्वा उत्थाय परिक्रामन्ति ।)

(मालतीमाधवौ सकरुणानुरागमवलोकयतः ।)

---

"अनुकूले तटस्थे वा दैवे न तु विरोधिनि ।
पौरुषं साधयेदर्थं दैवं तु स्ववशं सदा ॥"

इति वचनात् । अतस्तद्विषयाशङ्कैवास्माकं वर्तते नान्येत्यर्थः । अत्र शङ्काख्यो भावः प्रकाश्यते । अप्रस्तुतप्रशंसालङ्कारः, दैववैलोम्याद् भगवत्या अप्यसाध्योऽयमर्थः प्रसङ्गस्यातिक्रमादिति कार्यस्य कारणमुखेन प्रकाशनात् ॥ ६ ॥

भगवति ! भट्टिनी विज्ञापयति मालतीं गृहीत्वा त्वरितमिहागच्छेति ।

'देवी कृताभिषेकायामितरासु तु भट्टिनी ।'

इति नाट्यव्यवहाराद्राजतुल्यस्य भार्या मालतीमाता भट्टिनीत्युच्यते । विज्ञापयतीति गुरुविषये विनयोक्तिः ।

सर्वाः कामन्दकी मालती लवङ्गिका च ।

सकरुणानुरागं शोकस्थायिभावो रसः करुणः, अनुरागः रागस्यानुवृत्तिः, ताभ्यां सहितं यथेति । शोकानुभावैरश्रुपातादिभिः अनुरागानुभावैः स्तिमितविकसितत्वादिभिः शबलमन्योन्यमवलोकयत इत्यर्थः ।

---

१. 'नेपथ्ये' क. ग. छ. ज. झ. ञ. पाठः. २. 'वदि कामन्दइ! एसा भट्टिणी क. ग. घ. ङ. च छ. ज. झ. ञ. पाठः. ३. 'दि जधा माल' क. छ. ज. झ. ञ पाठः. ४. 'तुरिदमाअच्छ' क. ख. ग. ङ छ. ज. झ. ञ. पाठः. ५. 'च्छदु' त्ति' क. छ. ज. झ. ञ. पाठः. ६. 'उत्तिष्ठोत्तिष्ठ' ज. पाठः. ७. 'सर्वे उत्तिष्ठन्ति', ८. 'रागमन्योन्यमवलो' क. झ. ञ. पाठः.

---

१. 'यदा', २. 'नान्ययेत्यर्थः' ज. पाठः. ३. 'दैववैषम्याद्', ४. 'कार्यकारणमुखेन', ५. 'त्वरिततरमिहा' ज. पाठः. ६. 'स्यामात्यस्य भार्या' क. ज. पाठः.

माधवः — कष्टमेतावती माधवस्य मालत्या समं लोकयात्रा। अहो नु खलु भोः—

सुहृदिव प्रकटय्य सुखप्रदां
प्रथममेकरसामनुकूलताम् ।

---

कष्टं इदमिति शेषः, महद्व्यसनम् । 'स्यात् कष्टं कृच्छ्रमाभीलम्' इत्यमरः । एतावती एतत्परिमाणा । एतदा तात्कालिकमवलोकनं परामृश्यते । माधवस्य मालत्या सममिति च ध्वनिना अहो धन्यौ मालतीमाधवौ, ययोरनुरूपः प्रणय इति लोके प्रसिद्धं, तत् प्रेम ईदृशीं दशां गतमिति द्योत्यते । लोकयात्रा लौकिको व्यवहारः । अपुनर्दर्शनाय विमुज्यमानयोः पराधीनयोर्द्वयोः लोके परस्परानुकूल्यद्योतकं तदात्वदर्शनमात्रमेवोपचारो वर्तते तदेवेदमित्यर्थः । अहो इत्यव्यवस्थितिमचिन्तितामालोच्याश्चर्यबुद्धिद्योतकम् । नुः प्रश्ने ।

"प्रश्ने विकल्पे नु स्विच्च"

इति वैजयन्ती । खल्वित्यवधारणे । भो इत्याकाशे लोकमभिमुखीकरोति । हे लोकाः! इदमाश्चर्यमेव । किमर्थं भावेन मया तु न ज्ञातमित्यर्थः ।

तत् किमित्याह—सुहृदिवेत्यादि । शोभनहृदयो मकरन्दादिरिव । इवशब्देन नैसर्गिकं दुर्हृत्त्वम् । सुहृत्त्वं तु नाटितमिति व्यज्यते । प्रकटय्य प्रकाश्येति । आमुखे तडित इव स्फुरणमात्रमनिर्वाहा(द्) द्योत्यते । सुखप्रदां निर्वृतिं ददातीति । "प्रे दाज्ञः" (३-२-६) इति कः । प्रथममादौ । एकरसां एकप्रकारामिति लक्षणाप्रयोगः । उपर्युपरि तत्फलानुभवात् । एको मुख्यो रसो रागो यस्यामिति वा । 'मुख्यान्यकेवलेष्वेक' इति, 'रसो रागे विषे वीर्ये' इति च

---

१. 'माध — (स्वगतं) कष्टं' क. ङ. झ. ञ. पाठः. २. 'तौ हि माध' ख. घ. ज. पाठः. ३. 'अहो नु खलु' ख. ङ. ञ. पाठः. ४. 'प्रकटोऽप्यसुख' क. पाठः. ५. 'प्रदः' क. झ. ञ. पाठः.

---

१. 'कं स्वदर्शन' क, 'कं तदाप्तदर्शन' ज. पाठः. २. 'मेवोपचारे वर्तते' क. ग, 'मेवापचारो' ज. पाठः. ३. 'श्चर्यद्योतकं' ख. पाठः. ४. 'माधवादि' रिव' ज. पाठः.

पुनरकाण्डविवर्त्तनदारुणः
परिशिनष्टि विधिर्मनसो रुजम् ॥ ७ ॥

मालती — (अपवार्य) महाभाअ! लोअणाणंद! एत्तिअं दिट्ठोसि ।
(महाभाग! लोचनानन्द! एतावद् दृष्टोऽसि ।)

---

वैजयन्ती । अनुकूलतां अभिमतसम्पादनाभिमुखताम् । पुनः पश्चात् अकाण्डविवर्तनदारुणः अस्थान एव विरुद्धेन वर्तनेन क्रूरः । परिशिनष्टि परिशेषं करोति । 'नेति नेति व्युदस्तेभ्योऽन्योऽवस्थास्तुरर्थः परिशेषः । मनसो रुजं हृदयस्य रोगं, दुःखमित्यर्थः । सुहृदिवानुकूलतां प्रकटय्य पश्चाद्दारुणः शत्रुत्वेन रुजं परिशिनष्टीत्यनेन बुद्धिपूर्वमेव प्रतारणे प्रवृत्तिर्द्योत्यते । यथा मात्स्यको बलिशगर्भेण पिशितखण्डेनाण्डजशिशुमादौ विलोभ्य पश्चात् प्राणानेव त्याजयति तथायमपीति । ल्यपा लटा च 'स्नात्वा भुङ्क्ते' इतिवत् पूर्वकालक्रियाया उत्तरकालक्रियाङ्गत्वात्तत्र विश्रान्तिः प्रकाश्यते । अत्र विधिं प्रत्यसूया ध्वन्यते । विरोधोऽलङ्कारः ॥ ७ ॥

अपवार्य स्वगतम् । महाभाग लोचनानन्द एतावद् दृष्टोऽसि । [लोचनानन्द !] मम लोचनयोरानन्द आह्लादरूप, अन्यत्र चन्द्रादावप्यनिर्वापणात् । एतावद् एतदेव दर्शनस्य परिमाणमवसानं यथा तथा । दृष्टोऽसीत्यनेनातः परं जीवन्त एव त्वां द्रक्ष्यन्ति, न पुनरहमिदानीं त्यक्ष्यमाणजीवितेति द्योत्यते । अन्यथा एतदन्तो नस्समागमः इति वक्तव्यम्, दर्शनस्य पूर्ववद् वातायनादिगतत्वेनापि सम्भवात् ।

---

१. 'विधिरहो विशिनष्टि मनसो रुजं' क. 'प्रविशनष्टि' ङ. भ. पाठः. २. माल — (स्वगतं) महा' क. ङ., 'माल —(जनान्तिकं) महा' ङ. पाठः. ३. 'चन्दसुन्दर एत्तिअं' ख. च, 'चन्दउर एत्तिअं' ज. पाठः.

---

१. 'संपादनादभिमुख' क ज. पाठः. २. 'मुखतां' ङ. पाठः. ३. 'पूर्ववातायनसम्भावगतत्वेनापि' ज. पाठः. ४. 'सम्भावनात्' ग. ब. पाठः

लवङ्गिका — हद्धि ! हद्धि ! शरीरसंसअं जेव्व णो पिअसही आरोविदा अमच्चेण ।

(हा धिक् ! हा धिक् ! शरीरसंशयमेव नः प्रियसखी आरोपिता अमात्येन ।)

मालती — परिणदं दाणिं मे जीविदतह्णाए फलं । णिव्वूढं च णिक्करुणदाए काबालिअत्तणं तादस्स । परिणिट्ठिदो दैवस्स दारुणसमारम्भसरिसो परिणामो । ता कं उवालम्भामि मन्दभाइणी । कं वा असरणा सरणंपडिवज्जामि ।

---

तदाशयज्ञा सखी तस्याः पितृद्वेषवर्धनाय आह—हा धिक् ! हा धिक् । शरीरसंशयमेवं नः प्रियसखी आरोपिता अमात्येन । शरीरसंशयं शरीरं कंचित्कालं स्थास्यति वा न वेति सन्देहम् । आरोपिता प्रापिता । नः प्रियसखी इत्यनेन सर्वा एव वयमारोपिता इति ध्वन्यते ।

पूर्वोक्तस्याशयं विवृणोति । परिणतमिदानीं मे जीविततृष्णायाः फलम् । [जीविततृष्णायाः] एतावतो दिवसानाशावशेन या जीविते तृष्णा काङ्क्षा मम जाता तस्याः । फलमनिष्टस्थले दानप्रसङ्गरूपं प्रयोजनम् । [परिणतं] पक्वम् । एतदर्थं हि मया जीवितं धारितम् । यदि पूर्वमेव मया जीवितममोक्ष्यत तदा जुगुप्सितमेतन्न निरवर्तिष्यतेति जीवितं प्रत्यसूया व्यज्यते । अत इदानीमपि जीवितत्याग एव श्रेयानित्यभिप्रायः । निर्व्यूढं च निष्करुणतया कापालिकत्वं तातस्य । [कापालिकत्वं]विविधजीवोपहारनिर्दयाः पाषण्डविशेषाः कापालिकाः तद्भावः कापालिकत्वम् । तातस्य कापालिकत्वं निर्व्यूढं यथोपक्रममुपसंहृतम् ।

---

१. 'फलं (साअं) णि' ङ. पाठः. २. 'ढं दाणि णिक्करुण' ध. पाठः. ३. 'तादस्स वि' । क. घ. पाठः. ४. 'पडिट्ठिदो' क. झ. पाठः. ५. 'दो दुट्ठदेव्वस्स' क. घ. च. पाठः. ६. 'देव्वहदअस्स दाळुण' ज. पाठः. ७. 'भो । कं' झ. पाठः. ८. 'किं एत्थ उवा' क., 'कं एत्थ उवा' झ. ञ. पाठः. ९. 'मन्दभाआ' ङ. पाठः. १०. 'किं वा' ग. ङ. च. पाठः.

---

१. 'मेव प्रियसखी' ख, 'मेव नः सखी' ग. घ. ङ. पाठः, २. 'किञ्चित् स्था' ण. पाठः.

(परिणतमिदानीं मे जीविततृष्णायाः फलम् । निर्व्यूढं च निष्करुणतया कापालिकत्वं तातस्य । परिनिष्ठितो दैवस्य दारुणसमारम्भसदृशः परिणामः । तत् कमुपालभे मन्दभाग्या, कं वा अशरणा शरणं प्रतिपद्ये । )

लवङ्गिका — सहि ! इदो इदो ।

(सखि ! इत इतः) ।

(परिक्रामन्ति ।)

माधवः — (स्वगतं) नूनमाश्वासनमात्रमेतत् सहजस्नेहार्द्र-हृदया माधवस्य करोति भगवती । (सोद्वेगं) हन्त सर्वथा संशयितजन्म-

---

कुतः ? निष्करुणतया इयं मम दुहिता वराकी यावज्जीवं दुःखमनुभोक्ष्यत इत्यनालोच्य स्वकार्यकरणात्तातः साक्षात्कापालिक एव जात इत्यर्थः । परिनिष्ठितो दैवस्य दारुणसमारम्भसदृशः परिणामः । परिनिष्ठितः सम्पूर्णः परिणामः प्रयोजनम् । तत् कमुपालभे मन्दभाग्या, कं वा अशरणा शरणं प्रतिपद्ये । तदिति पितरि दैवे चैवंभूतयोरित्यर्थः । [कं उपालभे] किमेवमनुचितं त्वया क्रियत इति कमधिक्षिपामि । उपालम्भयोग्ये पितरि क्रौर्यदर्शनात् । कं वा [अशरणा] अरक्षितृका अहं, [शरणं प्रतिपद्ये] रक्षकत्वेनाश्रये । आश्रयणीयस्य दैवस्यात्यन्तवैलोम्यादित्यर्थः । अत्र 'निर्व्यूढं' इत्यादिमिरुत्तराङ्के प्रस्तोष्यमाणस्य कापालिकवृत्तान्तस्य सूचनं कृतमिति मन्तव्यम् ।

सखि ! इत इतः ।

परिशिनष्टि विधिर्मनसोरुजं इति किमिति शङ्क्यते ? 'जानामि तां खलु वार्ताम्' इत्यारभ्य 'प्राणव्ययेनापि मया विधेयः' इत्यन्तस्य भगवती-वचनस्य प्रत्येयत्वादित्याशङ्क्यापायशङ्कया प्रतिक्षिपति— आश्वासनमात्रं मनःपर्य-वस्थापनमात्रम् । मात्रशब्दोऽवधारणे । तेन तावदेव, न परमार्थतस्तादित्यर्थः । तत्र

---

१ 'सहि भाळइ इदो' घ. पाठः. २. '(इति निष्क्रामन्ति)' क. '(निष्क्रान्ता) घ, '(परिक्रामति)' छ. ज, '(इति कामन्दक्या सह निष्क्रान्ते ।)' झ. म. पाठः. ३, 'मेवैतद्' क. पाठः. ४. 'स्नेहार्द्रहृदयकातरा करोति' ख, 'स्नेहकातरा करोति' क. घ. छ. ज. झ. म. पाठः.

---

१. 'क्षुपालम्भे' क. पाठः. २. 'किं वा' घ. छ. पाठः. ३. 'क्रोधदर्शनात्' छ. पाठः. ४. 'इति शङ्क्यते क, ख. पाठः.

साफल्यः[1] संवर्तोऽस्मि । तत्[2] किं कर्तव्यं (विचिन्त्य) न खलु महामांसविक्रयादन्यदुपायान्तरं[3] पश्यामि । (प्रकाशं) वयस्य मकरन्द अपि[4] भवानुत्कण्ठते मदयन्तिकायाः ?

---

हेतुः सहजस्नेहार्द्रहृदया[4] अकृत्रिमवात्सल्यद्रवीभूतमना इति । माधवस्येति भ्रातृपुत्रत्वस्वसंवर्धितत्वशिक्षितत्वादिहेतुभिर्गाढस्नेहास्पदत्वं प्रतीयते । अन्यथा वैक्लव्यादनिष्टं किमप्याचरिष्यतीति तत्परिहारायेति भावः । तद्वचनस्यापि स्वयमेवाश्वासनमात्रमिति प्रतिक्षिप्तत्वान्निरवलम्बनत्वमालोच्याह—सोद्वेगं उद्वेगः दुःखातिशयजनितो मनःक्षोभः तत्सहितम् । हन्तेति विषादे । संशयितजन्मसाफल्यः जन्मन्येकः स एव महोत्सव इति मालतीप्राप्तेरेव[3] जन्मफलत्वेन स्वयमध्यवसितत्वात् तद्रूपजन्मसफलत्वं संशयितं सन्दिग्धं यस्य । संशयितेत्यनेन कामिस्वभावादाशायाः किञ्चिदुच्छेदः प्रकाश्यते । संवर्तः[6] प्रणष्टः । निष्फलजन्मनः प्रणष्टकल्पत्वादिति भावः । 'संवर्तः प्रलयः कल्पः' इत्यमरः । तत् किं कर्तव्यमिति चिन्तारम्भः । विचिन्त्येति चिन्तासमाप्तिः । चिन्तया निर्णीतमर्थमाह[7]— न खल्विति । खलुरवधारणे । महामांसविक्रयात् महामांसमिति नरमांसस्य भैरवतन्त्रसिद्धा संज्ञा । तथा प्रबोधचन्द्रोदये—

'मस्तिष्कान्त्रवसाभिघारितमहामांसाहुतिर्जुह्वताम् ।'

इत्यादि । तस्य विक्रयो नाम । "कल्पोक्तक्रमेण दीक्षितस्य वश्याकर्षणादिष्वन्यतमफलापेक्षिणः पुरुषस्य कृष्णचतुर्दशीरजन्यां महाश्मशानं गत्वा स्वशस्त्रकृत्तेन निर्दोषेण नरमांसेन भूतवेतालादिभ्यो निष्क्रयतया दत्तेन स्वाभिमत-

---

१. 'संवृत्तोऽस्मि' क. ख. ग. घ. ङ. च. छ. ज. झ. ञ. पाठः. २. 'किमिदानीं कर्तं' क. ख. झ. पाठः. ३. 'दन्यदुपायं पश्यामि' ज. पाठः. ४. 'अयि भवान्' क. पाठः.

---

१ 'प्रक्षिप्त', २. 'जीवितसाफल्यं', ३. 'रेव तज्जन्म' ज. पाठः. ४. 'सार्द्रहृदया' क. पाठः. ५. 'किञ्चिदुच्छेदः' ज. पाठः. ६. 'संवृत्तः' ग. ङ. पाठः. ७. 'निर्णीतमर्थं' ज. पाठः.

मकरन्दः — अथ किम् ।

तन्मे मनः क्षिपति यत्सरसप्रहार-
मालोक्य मामगणितस्खलदुत्तरीया ।
त्रस्तैकहायनकुरङ्गविलोलदृष्टि-
स्साश्लिष्टवत्यमृतसंवलितैरिवाङ्गैः ॥ ८ ॥

---

स्वीकरणम् । ततश्च झटिति फलसिद्धिः" इत्यागमात्, साहसिकानां तथानुभव-श्रवणाच्च तत्र संजातप्रत्यय आह—महामांसविक्रयात् । अन्यदुपायान्तरं विशिष्टमुपायं सुखसाधनहेतुम् । प्रियासमागमरूपस्य स्वकार्यस्येत्यर्थात् । 'न खलु महामांसविक्रयादन्यद्' इत्यादि नियताप्त्यवस्था । प्रकाशमिति महामांसविक्रयं कर्त्तव्यत्वेन निर्णीय स्वमाकूतमपह्नुवानो, मदयन्तिकामकरन्दयोराकारेङ्गिताभ्यां दृष्टमनुरागं प्रश्नव्याजेन प्रकाशयति मकरन्दं वञ्चयित्वैकाकिनः स्वस्य निशि श्मशानप्रवेशाय तमन्यतो व्याक्षेप्तुम् । अपि मदयन्तिकाया उत्कण्ठते तां सरागं स्मरति किम् । "अधीगर्थदयेशां कर्मणि" (२-३-५२) इति षष्ठी ॥

'उत्कण्ठमानो भरतो गुरूणाम् ।'

इति भर्तृकाव्यप्रयोगात् ।

व्याक्षिप्तत्वमाह—अथ किं तथैव । उत्कण्ठे एव ।

तत्र हेतुमाह—तन्मे इत्यादि । तदिति वाक्यार्थपरामर्शः । मे मनः क्षिपतीति मदपेक्षमेव हृदयं प्रेरयति चपलं करोतीत्यर्थः । सरसप्रहारं नवतया क्षरद्रुधिरो व्याघ्रनखरप्रहारदेशो यस्य । अगणितस्खलदुत्तरीया स्खलत् स्तनतटाद् विगलद् उपरिवासो न गणितं ना निरूपितं ययेति स्नेहसंभ्रमानुभावः । त्रस्तैकहायनकुरङ्गविलोलदृष्टिः यतः कुतश्चिद् भीतस्य, एकवर्षजातस्य सारङ्गस्येव विलोका चञ्चला दृष्टिर्यस्याः । उपमानेन स्निग्धासितविपुलायतत्वं दृष्टेः प्रकाश्यते ।

'धर्मयोरेकतरनिर्देशे अन्यसंवित् साहचर्यात् ।'

---

१. 'रुधिरादिक' क. ख. च. छ. ज. झ. ञ. पाठः.

---

१. 'तथारम्भश्रवा' ख. पाठः. २. 'ताप्यवस्था' ख ग छ. 'ताव्यवस्था' क. पाठः. ३. 'उत्कण्ठत एव' ख पाठः. ४. 'निर्देशेऽन्यस्यापि ग्राह' क, 'निर्देशस्य संवित् ग्राह' क. पाठः.

माधवः — न दुर्लभा बुद्धरक्षिताप्रियसखी । अपि च—

प्रमथ्य क्रव्यादं मरणसमये रक्षितवतः
परिष्वङ्गं लब्ध्वा तव कथमिवान्यत्र रमताम् ।

---

इति वामनोक्तेः । "हश्च व्रीहिकालयोः" (३-१-१४८) इति ल्युट् ।

'एकहायनसारङ्गगती रघुकुलोत्तमौ' ।

इति भर्तृकाव्ये प्रयोगात् । एतेन पूर्वं व्याघ्रदर्शनात् पश्चादस्या अपायचिन्तया च भयानुभावः प्रकाश्यते । अमृतसंवलितैरिव अमृतपङ्के निमज्जितैरिवेति तत्स्पर्शमात्रेण व्रणवेदनायाः शान्तत्वं द्योत्यते । सा आश्लिष्टवती यत् आलिङ्गितवती यत् तन्मे मनः क्षिपतीत्यन्वयः ॥ ८ ॥

उपपत्त्या समाश्वासयति—बुद्धरक्षिताप्रियसखीति । बुद्धरक्षितेति स्वविस्रंभभूमित्वं तस्याः, प्रियसखीति तस्यां मदयन्तिकाया विस्रम्भश्च प्रतीयते । अतो न दुर्लभा । उपपत्त्यन्तरमप्यस्तीत्याह—अपि चेति ।

प्रमथ्य क्रव्यादमिति — प्रमथ्य हत्वा । क्रव्यादमिति निर्दयत्वोक्तिः । मरणसमये प्राणत्यागकाले इत्युपकारस्य गरीयस्त्वम् । परिष्वङ्गम् आलिङ्गनम् । तवेति सर्वोत्कृष्टत्वं प्रकाश्यते । अन्यत्र अपरस्मिन् पुरुषे । कथमिव रमतां केन प्रकारेण सा क्रीडतु । बुद्धरक्षिताप्रियसखीति पूर्ववाक्यात् सम्बध्यते । यतो बुद्धरक्षिताप्रियसखीत्येव सौलभ्यहेतुः, ततोऽपि त्वया दत्तजीवितेति, ततोऽप्यधिकं त्वचामृतायमानं स्पर्शं लब्धवतीति हेतुत्रयमनुमापकम् । सौलभ्यस्य न केवलमनुमानं प्रत्यक्षमपि प्रमाणेषु ज्येष्ठं प्रमाण-

---

१. 'माध— सुलभैव बुद्ध' क. माध— 'सुलभैव बुद्ध' ख. ग. पाठः. २. 'रक्षितायाः प्रिय' ग. पाठः.

---

१. 'स्या समाश्वासयति' क. पाठः. २. 'खीति मद' ख. ज. पाठः. ३. 'ततोऽप्यधिकं' ज. पाठः.

तथा च व्यापारः कमलनयनाया नयनयो-
स्त्वयि व्यक्तस्नेहः स्तिमितरमणीयश्चिरमभूत् ॥ ९ ॥

तदुत्तिष्ठ । पारासिन्धुसम्भेदमवगाह्य नगरीमेव प्रविशावः ।

(उत्थाय परिक्रामतः ।)

मकरन्दः — अयमसौ महानद्योर्व्यतिकरः ।

य एषः —

जलनिबिडितवस्त्रव्यक्तनिम्नोन्नताभिः
परिगततटभूमिः स्नातमात्रोत्थिताभिः ।

मित्याह । तथा यथानुमानं तथा । नयनयोर्व्यापारः निरीक्षणप्रकारः । व्यक्तस्नेहः स्पष्टस्नेहः । स्तिमितरमणीयः स्तिमिततया त्वयि निश्चलनिबद्धतया शोभनः, अलसवलितत्वादिभङ्गितरङ्गितः । चिरं न क्षणमात्रम् । अभूदिति अस्माभिर्निस्संशयं दृष्टमित्याह । अत्र सुहृद्विषयो भावः प्रकाश्यते । अनुमानमलङ्कारः ॥ ९ ॥

पारासिन्धुसम्भेदः पारासंज्ञायाः सिन्धुसंज्ञायाश्च महानद्योः सङ्गमः । अवगाह्येति तव व्याघ्रप्रहारखेदितत्वादाश्वासनार्थं आवयोः सूर्योपस्थानाय चेत्यर्थः । नगरीमेवेत्यन्यतो गमनाशङ्कां परिहरति ।

परिक्रामतः तदभिमुखं गमनमभिनयतः ।

अयमसौ असावित्यत्र तच्छब्दार्थमाह, इदमा साहचर्याद् यः पूर्वं प्रस्तुतः सोऽयमित्यर्थः । महानद्योः पावनत्वाद् यावत्समुद्रं प्रवृत्तेश्च महत्योर्नद्योः पारासिन्ध्वोः । व्यतिकरः सङ्गमः ।

मध्यन्दिनसन्तापशान्तये जलक्रीडारागिणीभिस्तरुणीभिरसावुपभुज्यते इत्याह — य एषः जलनिबिडितेत्यादि । जलेन निबिडितैः गाढं गात्रे

१. 'मक — तदुत्तिष्ठ' क. झ. ञ. पाठः. २. 'वरदासिन्धु' छ. ज. पाठः. ३. 'माध — अय' क. ख. झ. ञ. पाठः. ४. 'नद्योस्सम्भेदः' क. झ पाठः. ५. 'स्नानमात्रो' क. छ. झ. ञ. पाठः.

१. 'अस्माकं निस्स्वं', २. 'समागमः ।' ज. पाठः. ३. 'य द्वयोः सूर्यो' ख. ग. घ. छ. ज. पाठः. ४. 'त्रुपयुज्यते' ज. पाठः.

रुचिरकनककुम्भश्रीमदाभोगतुङ्ग-
स्तनविनिहितहस्तस्वस्तिकाभिर्वधूभिः ॥ १० ॥

(इति निष्क्रान्ताः सर्वे ।)

इति मालतीमाधवे शार्दूलविक्रमो नाम
चतुर्थोऽङ्कः ॥

---

सन्दष्टैः, वस्त्रैरर्थतः स्वच्छैर्व्यक्तानि स्पष्टदृष्टानि निम्नानि गम्भीराणि नाभिरन्ध्रादीनि, उन्नतानि उत्तुङ्गानि नितम्बादीनि स्थानानि यासाम् । परिगततटभूमिः सर्वतः प्राप्ततीरप्रदेशः । स्नातमात्रोत्थिताभिः स्नातमात्रे कृतमज्जनत्व एव जलादुत्थिताभिरित्यनिष्पीडितवस्त्रतया जलनिबिडितवस्त्रत्वोपपत्तेः । स्नानफलं सन्तापशमनमाह— रुचिराश्चतुरशिल्पिनिर्मितत्वेन निरवद्या ये कनककुम्भाः सुवर्णकलशास्त इव श्रीमदाभोगाः शोभनविस्तारास्तुङ्गा उन्नताश्च ये स्तनाः तेषु विनिहितानि हस्तस्वस्तिकानि स्वस्तिकाकारेण व्यत्यस्तबद्धा हस्ता याभिः। आर्द्रशरीरतया शिशिरतरतरङ्गमारुतस्पर्शशैत्यातिशयवारणार्थं हस्तविहितस्वस्तिकबद्धाभिरित्यर्थः । वधूभिः स्त्रीभिः । 'योषा सीमन्तिनी वधूः' इत्यमरः । य एष परिगततटभूमिरयमसौ महानद्योः व्यतिकर इत्यन्वयः । अत्र स्वभावोक्तिरलङ्कारः । इत्यशेषमतिमङ्गलम् ॥ १० ॥

मालतीमाधवस्येत्थं चतुर्थाङ्कार्थचर्चनम् ।
पूर्णज्योतिःप्रसादेन चक्रे पूर्णसरस्वती ॥

॥ इति चतुर्थोऽङ्कः ॥

---

१. 'शार्दूलविक्रमो नाम' ङ. अ. पाठः.

---

१. 'रित्यनुत्पीडित' छ. पाठः. २. 'स्तत एव' ज. पाठः. ३. 'श्लथस्तना' ख. पाठः.

# अथ पञ्चमोऽङ्कः ।

(ततः प्रविशत्याकाशयानेन भीषणोज्ज्वलवेषा कपालकुण्डला ।)

**कपालकुण्डला** —

षडधिकदशनाडीचक्रमध्यस्थितात्मा
हृदि विनिहितरूपः सिद्धिदस्तद्विदां यः ।

---

अथ वृत्तवर्तिष्यमाणकथांशप्रदर्शनेनोत्तराङ्कमवतारयितुं विष्कम्भमारभते । आकाशयानेन आकाशगमनाभिनयेन, भीषणोज्ज्वलवेषा [भीषणः] भयङ्करः शूलकपालादिविशिष्टतया, उज्ज्वलः दीप्तः कपिलजटाजूटकनककिङ्किण्यादिसङ्कलनाद्, वेष आकल्पकल्पना यस्याः । कपालकुण्डलेति प्रथमाङ्के 'तं क्खु सिरिपव्वदादो आअदस्स' इत्यादि 'अणुसंझं समाअच्छदि' इत्यन्तेन सूचिता प्रकरीपात्रं अघोरघण्टशिष्या कापालिकी इत्यर्थः ।

स्वाभ्युपगतसोमसिद्धान्तानुरोधेन स्वानुभवगोचरं परमेश्वरमात्मना परामृशति— षडधिकेत्यादि । [षडधिकदशनाडीचक्रमध्यस्थितात्मा] षट्सङ्ख्योत्तरदशसङ्ख्याविशिष्टानां नाडीचक्राणां मध्ये स्थितः कर्णिकासु सदा सन्निहितः आत्मा स्फुरत्तारूपं तत्त्वं यस्य । अत्र नाडीशब्देन देहमध्यवर्तिनी सुषुम्नाख्या ब्रह्मनाडी विवक्ष्यते ।

"तस्याः पर्वविशेषाश्चक्राण्याधाराः ।"

इति च आगमेषु कथ्यन्ते । तानि चक्राणि षोडशेत्यागमेषु पठितानि । तद्यथा — महाबिन्दुपीठस्थानमतीतस्थानमागतस्थानं शान्तातीतं सूर्यचक्रं

---

१. 'लम्बरयानेन' ग. घ. ङ. च. पाठः. २. 'ज्ज्वला कपा' क. पाठः.

---

१. 'भीषणा उज्ज्वल' ज. पाठः. २. 'क्रूरशूल' ख. छ. ज. पाठः. ३. 'उज्जलदीप्त' ग. घ. ङ. पाठः. ४. 'स्थितकर्णिकासु' ज. पाठः. ५. 'आत्मना स्फुर' क. ग. घ. ङ. पाठः. ६. 'त्सारूपं' ग. पाठः. ७. 'पीठमतीतस्थानं' ख. ज. पाठः.

व्योमाम्भोजं प्रेतभूमिरर्धचन्द्रमारम्भं सेतुबन्धमाज्ञा विशुद्धिरनाहतं मणिपूरकं स्वाधिष्ठानं मूलाधार इति । तेष्वाद्यं व्योमरूपावस्थात्मकानिष्कलाकाशः, द्वितीयं व्यापिन्यवस्था, तृतीयमुन्मनावस्था, चतुर्थं समावस्था, पञ्चमं विसर्गाख्यपराशक्तिस्थानं, षष्ठं विसर्गावस्थितशान्ताख्यं ब्रह्मरन्ध्रं, सप्तमं ब्रह्मरन्ध्रावस्थितकर्णिकास्थानगतशक्त्याख्यसदाशिवस्थानं, अष्टमं सहस्रारपद्मस्य षोडशकलात्मककेसरस्थानं, नवमं नादात्मकसहस्रदलस्थानं, दशमं बिन्द्वात्मकललाटमध्यव्योम, एकादशं भ्रुवोर्मध्यं, द्वादशमीश्वरस्थानं कण्ठस्थानं, त्रयोदशं रुद्रालयं हृदयस्थानं, चतुर्दशं विष्णुस्थानं नाभिरन्ध्रं, पञ्चदशं ब्रह्मणः स्थानं लिङ्गमूलं, षोडशं कुण्डलिनी देहमध्यमिति विभागः । एतेषामाधारपद्मानां मध्यस्थितात्मेत्यर्थः । अथवा —

"इडा पिङ्गला सुषुम्ना च गान्धारी हस्तिजिह्विका[3] ।
सुयशालम्बुसा पूषा कुहूश्चैव च शङ्खिनी ॥
विमला घोषिणी[4] पृथ्वी ततश्चाप्यायनी मता ।
तेजोवती वायवी च नाड्यः षोडश कीर्तिताः ॥"

इति योगशास्त्रोक्तानां नाडीनां समूहस्य मध्यचक्रे हृदयकमल इत्यर्थः । हृदि विनिहितरूपः हृदये विशेषेण निहितं, न तु निधीयमानमित्यनेन साक्षात्कृतत्वं[5] ध्वन्यते, विनिष्पन्नसमाधित्वं चोच्यते । सिद्धिदः मुक्तिप्रदः । अथवा अणिमाद्यष्टसिद्धिप्रदः । यद्वा पातालगुलिकाञ्जनखड्गमुद्राख्या अधिकारमन्त्रयोगात्मज्ञानाख्या वा पञ्चसिद्धिं ददातीति । तद्विदां तत् षडधिकदशनाडीचक्रमध्यस्थितात्मत्वं गुरुमुखेन ज्ञातवतां लब्धवतां वा, विदेर्ज्ञानार्थीलाभार्थाद्वा क्विबन्तव्युत्पत्त्या । अविचालितमनोभिः

"आलस्यं व्याधयस्तीव्राः प्रमादोऽस्थानसंशयः ।
अनवस्थितचित्तत्वमश्रद्धा भ्रान्तिदर्शनम् ॥
दुःखानि दौर्मनस्यं च विषयेषु च लोलता ।
दशैते युञ्जतां पुंसामन्तरायाः प्रकीर्तिताः ॥" इति,

१. 'रर्धमारम्भं' क. ग. घ. छ. पाठः. २. 'दात्मकं सहस्र' क. पाठः. ३. 'जिह्विका' क. ग. छ. पाठः. ४. 'घोषणी' ख. छ. पाठः. ५. 'साक्षात्कृतं ध्वन्यते' ख. ग. पाठः.

अविचलितमनोभिः साधकैर्मृग्यमाणः
स जयति परिणद्धः शक्तिभिः शक्तिनाथः ॥ १ ॥

---

"उपसर्गाः प्रवर्तन्ते दिव्याः षट् सिद्धिसूचकाः ।
प्रतिभा श्रवणं वार्ता दर्शनास्वादवेदनाः ॥"

इति च योगशास्त्रोक्तैरन्तरायैरुपसर्गैश्चाविघ्नितैकाग्र्यं मनो येषाम् । **साधकैः** मन्त्रयोगसाधनप्रवृत्तैः, न तु सिद्धैरि[3]ति युक्तं प्रकाश्यते । **मृग्यमाणः** अन्विष्यमाणः । तत्त्वजिज्ञासुभिर्दीर्घकालनैरन्तर्यसत्कारैरनुसन्धीयमान इत्यर्थः । **शक्तिभिः परिणद्धः** सर्गस्थितिसंहारादिविशेषैर्मूलशक्तिव्यापारभेदैर्यत्र यत्र मिलिता मरीचयः तत्र तत्र विसुरेव जृम्भत इति अभियुक्तोक्तैस्तरणिरिव किरणजालैर्जगद्व्यासः । 'परिणाहो विशालता' इत्यमरः ।

'तत्त्वं वस्तुत एकं शिवसंज्ञं चित्रशक्तिशतखचितम् ।
शक्तिव्यापृतिभेदात्तस्यैते कल्पिता भेदाः ॥'

इति भोजोक्तेः । अथवा —

'वामा ज्येष्ठा शिवा रौद्री चिन्तोन्मादकरी सुखा ।
काली कलेबरा भूतदमनी चेशशक्तयः ॥'

इति श्रुत्यागमसिद्धाभिर्नवभिः शक्तिभिः समन्ताद् बद्धः सेवितः । **शक्तिनाथः**

'चिदचिदनुग्रहहेतोस्तस्य सिसृक्षोर्य आद्य उन्मेषः ।
तच्छक्तितत्त्वमभिहितमविभागापन्नमस्यैव ॥'

इति लक्षितायाः स्वाव्यतिरिक्तायाः सर्वकर्त्र्याः पृथिव्यादिसदाशिवान्तानां [10]चतुस्त्रिंशत्तत्त्वानामुदयविलयस्थानभूतायाः पञ्चत्रिंश्याः शक्तेः स्वामी षट्[11]त्रिंशकः शिव इति ।

---

१. 'शास्त्रोक्तैः अन्त' ख. पाठः. २. 'श्चाविनिघ्नितै' क. ग. घ. छ. पाठः. ३. 'रिति लोकयुक्तं', ४. 'रादिसामर्थ्यविदो' ज. पाठः. ५. 'चयः, ते तत्र' क. पाठः. ६. 'इति युक्तोक्तेः' ग. घ. पाठः. ७. 'भेदास्तस्यैते' क. ग. घ. छ. पाठः. ८. 'दमनी भूवशक्तयः', ९. 'याः सर्वज्ञायाः सर्व' ज. पाठः. १०. 'स्त्रिंशतस्तत्त्वानां' छ. ज. पाठः. ११. 'त्रिंशतिकः शिव' ज. पाठः.

इयमिदानीमहं —

[2] नित्यन्यस्तषडङ्गचक्रनिहितं हृत्पद्ममध्योदितं
पश्यन्ती शिवरूपिणं लयवशादात्मानमभ्यागता ।

'अकुलं शिव इत्युक्तं कुलं शक्तिः प्रकीर्तितम् ।
कौलं तेजोविकारः स्यादिति त्रितयनिर्णयः ॥'

इति श्रीरुद्रतन्त्रोक्तेः, शिवः शक्तिस्तत्कार्यजातं चेति समस्ततत्त्वानां शिवागमे त्रिधा सङ्गृहीतत्वात् स तादृशः । जयति सर्वोत्कर्षेण वर्तत इति तद्विमर्शसुखस्य समग्रान्यसुखातिशयितत्वमनुसन्धत्ते । अत्र नाडीचक्रादीनां शास्त्रमात्रप्रयुक्तानां प्रयोगादप्रतीतत्वेऽपि तद्विदः स्वयंपरामर्शत्वाददोषः । अत्र परमेश्वरविषयो भावो व्यज्यते । भाविकमलङ्कारः ॥ १ ॥

ताटस्थ्येन परमेश्वरस्य महिमानं परामृश्येदानीमात्मनस्तद्विषयमनुभवं तत्फलमणिमादिसिद्धिं च प्रकाशयति — इयमिदानीमहं या खल्वेवम्भूतमीश्वरं गुरुप्रसादाज्जानामि इयमीदृशी अहमित्यर्थः । इदानीमित्यभ्यागतेति श्लोकगतेन सम्बन्धः ।

नित्यन्यस्तेत्यादि । नित्यन्यस्ते सदा तत्तत् स्थानेषु स्थापिते, नित्यग्रहणात्सदैकाग्र्यं प्रकाश्यते, षडङ्गचक्रे हृदयाद्यङ्गषट्कचक्रे, निहितं[3] तन्न्यासस्य सान्निध्यहेतुत्वात् ।

'सर्वज्ञता तृप्तिरनादिबोधः
स्वतन्त्रता नित्यमलुप्तशक्तिः ।
अनन्तशक्तिश्च विभोर्विधिज्ञा
षडाहुरङ्गानि महेश्वरस्य ॥'

इत्युक्तानां स्वजातियुक्तानां षण्णामङ्गानां हृदयशिरःशिखाकवचनेत्रास्त्रस्थानन्यस्तानां समुदाये स्फुरितमित्यर्थः । अथवा षट्सु अङ्गचक्रेषु शारीरेष्वाधार-

१, 'इयमिदानीं — नित्य' ख. पाठः. २. 'नित्यं न्यस्त' क. ज. झ. ञ. पाठः.

१, 'ता ।', २. 'तद्विधस्य स्वयं' ख, 'तद्विदां स्वयं' ज. पाठः. ३. 'तं सुनिहितं तन्न्या' ख. पाठः.

पद्मेषु मूलाधारस्वाधिष्ठानमणिपूरकानाहतविशुद्धयाज्ञासंज्ञेषु नित्यन्यस्तेषु क्रमाच्चतुष्षड्दशद्वादशषोडशद्विदलेषु वादिसान्तैर्बादिलान्तैर्डादिफान्तैः कादिठान्तैरादिविसर्गान्तैर्हक्षाभ्यां च नित्यं कृतन्यासेषु सन्निहितमित्यर्थः। प(श्वा ? ज्ञा)नासुपदेशगम्यत्वाद्धृदयकमलस्फुरणस्य तु सर्वलोकानुभवगोचरतया हृत्पद्ममध्ये उदितं विशेषतः प्रकाशमानमित्यर्थः। नहि कश्चिद् मम शिरसि हस्ते पादे वा ज्ञानमिति मन्यते, सर्वोऽपि मम हृद्येवं प्रतिभातीति हृदयदर्पणप्रतिबिम्बितत्वेन चैतन्यं प्रतिपाद्यते। आत्मानं अङ्गुष्ठमात्रं ज्योतिर्मयं जीवात्मानम्। लयवशाच्छिवरूपिणं सुषुम्नारन्ध्रोद्गतया नीवारशूकवत् तनीयस्या स्वभासा द्वादशान्तस्थपरमशिवेनैक्यमावनया लीनद्रुतत्वात् कटकमिव कनकपिण्डेन, तद्रूपं शिवरूपिणं शिवत्वमापन्नम्। पश्यन्ती न तु चिन्तयन्तीति साक्षात्कारं द्योतयति। इदं च साकारनिराकारयोर्निराकारं ध्यानम्। यथाह गुरुदेवः—

"साकारं ध्यानमुद्दिष्टं निराकारमथोच्यते।
हृत्पद्मे वा भ्रुवोर्मध्ये बिन्दौ वा द्वादशान्तके॥

लैङ्गिकं परमं ज्योतिर्ध्यायेदङ्गुष्ठमात्रकम्।
तस्मान्नीवारशूकाभं ज्योतिरूर्ध्वं सुषुम्नया॥

निर्गतं द्वादशान्तस्थशिवेनाप्येकतां गतम्।
विश्वमावृत्य तद् व्याप्तं ध्यायेन्निश्चलमानसः॥

ध्यानानामुत्तमस्त्वेतद्योगश्चायं परो मतः।
एवं सततयुक्तात्मा योगी निर्धूतबन्धनः॥

अणिमादिगुणैश्वर्यं प्राप्य निर्वाणमृच्छति॥"

इति। लयो सामान्यानुप्रवेशात् स्वरूपभेदानुपलम्भः। 'लीये परब्रह्मणि', 'लीनं परे ब्रह्मणि यस्य चेतः' इति, 'स्थितमेतत्। यस्य यतो नोत्पत्तिस्तस्य

१. 'मूलाधिष्ठानस्वाधि' क. छ. पाठः. २. 'न्तैर्लक्षाभ्यां' क. ख. छ. पाठः. ३. 'जीवं आत्मानं' ख. पाठः. ४. 'शूकवत्तनीयस्या' क. ख. पाठः. ५. 'नैक्यंभावनया' क. पाठः. ६. 'साक्षात्करणं' ख. पाठः. ७. 'साक्षात्कार' क. पाठः. ८. 'साक्षात्कारसमुद्दिष्टं' ज. पाठः.

**नाडीनामुदयक्रमेण जगतः पञ्चामृताकर्षणा-**
**दवाप्तोत्पतनश्रमा विघटयन्त्यग्रेनभोऽम्भोमुचः ॥ २ ॥**

---

तस्मिन् वृत्तिः प्रलयो, न स्वरूपलयः' इत्याद्याचार्यप्रयोगात् । नाडीनां इडादीनामित्याश्रयाश्रयिणोरभेदोपचारो बहुवचनं च । नाडीद्वयद्वारभूतयोर्नासापुटयोरप्यभिव्यज्यमानानां महाभूतानामित्यर्थः । उदयः प्रादुर्भावः ।

"पुटयोरुभयोश्च दण्डसंस्था
पृथिवी तोयमधः कृशानुरूर्ध्वम् ।
पवनस्तिर्यङ्नसोऽथ मध्ये
गगनं भूतगतिस्तनूद्भवेयम् ॥"

इत्याचार्योपदिष्टेनाभिव्यक्तिप्रकारेण तत्तद्भूतोदयः, तत्तत्स्वीकरणस्य सौकर्यमित्यर्थः । जगतः प्राणिनां, प्राणिभ्यो वा । पञ्चामृताकर्षणात् पञ्चविधस्य अमृतस्य स्वीकरणात्, शब्दस्पर्शरसरूपगन्धानां सारो यः सञ्जीवनत्वादमृताख्यस्तस्यामृताकर्षण्याख्यया विद्यया समाकृष्यासादनेनाप्यायितत्वात् । अथवा कौलिकतन्त्रपरिभाषितस्य —

'विट् च मूत्रमसृङ् मज्जा शुक्लं पञ्चामृतं स्मृतम् ।'

इत्यमृतपञ्चकस्य, तस्यापि शरीरावस्थात्मकत्वादमृतत्वोक्तिः । अस्मिन्नर्थे तत्तद्वाहिनीनां नाडीनाम् उत्पत्तिक्रमेणेत्यर्थः ।

'अमृताकर्षिणी चैव शब्दाकर्षणरूपिणी ।'

इत्याद्यागमप्रतिपादितत्वाद् अमृताकर्षिण्यादिविद्यानाम् । अवाप्तोत्पतनश्रमा गगनशिखरोड्डयनखेदमनुपगतवती । विघटयन्ती सम्मिलितावेगपवनेन तूलजालवद् दिक्षु विक्षिपन्ती । अग्रेनभः नभसोऽग्रे, आकाशस्योपरिभागे ।

---

१. 'मुचः ॥ उद्वृत्त' ख. ग. घ. च. ज. पाठः.

---

१. 'यः । तत्स्वकरणस्य' क, 'ये तत्त्व' ख. ज. पाठः. २. 'णात् शब्दस्पर्श' क. ख. ग. घ. छ. पाठः. ३. 'कर्षणाख्यया' क. ग. घ. छ. पाठः. ४. 'खेदमवगत' क. पाठः.

अपि च—

उद्वृत्तस्खलितकपालकण्ठमाला-
सङ्घट्टक्वणितकरालकिङ्किणीकः ।
पर्याप्तं मयि रमणीयडामरत्वं
सन्धत्ते गगनतलप्रयाणवेगः ॥ ३ ॥

---

'सर्वे योगविभागेन समासाः स्युरलक्षिताः ।'

इति अलुक् । अम्भोमुचः मेघान् । अथवा अग्रे पुरोभागे, नभोम्भोमुचः गगनतलान्मेघानित्यर्थः । इदानीमहमभ्यागता 'सिरिपव्वदादो अणुसंझं आअच्छइ' इति पूर्वप्रस्तावादिदानीमेव श्रीपर्वतान्निर्गता । इदानीमेवाभ्यागतेत्याश्चर्यत्वं वेगस्याह । अभिलषितदेशस्य झटिति प्राप्त्या हर्षो व्यज्यते । अतिशयोक्तिः स्वभावोक्तिश्चालङ्कारः ॥ २ ॥

अथ गमनवेगमुपकारत्वेन चमत्करोति — उद्वृत्तेत्यादि । उद्वृत्ता उत्पतनवेगेन स्थानादुच्चलिता, स्खलिता पुनर्निवृत्ता च या कपालकण्ठमाला शिरःकर्परमयी कण्ठभूषणार्थी माला, तस्याः सङ्घट्टनेनास्फालनेन क्वणिताः शब्दिताः करालाः विकृताः, नानाप्रकारत्वात् , किङ्किण्यः क्षुद्रघण्टिकास्ताः अपि अर्थात् कण्ठमालात्वेन स्थिता यत्र । पर्याप्तं सम्पूर्णम् । रमणीयडामरत्वं उज्ज्वलत्वं भयङ्करत्वं च ।

'प्रसृमरस्समरोड्डामरौजा बिडौजाः ।'

इति मुरार्युक्तम् । मयि सन्धत्ते संश्लेषयति । [गगनतलप्रयाणवेगः] गगनतले यत् प्रयाणं तस्य वेगः रयः ॥ ३ ॥

---

१. 'उल्लोलस्खलित' क. झ. ञ. पाठः. २. 'गगनतले प्रयाण' छ. पाठः.

---

१. 'सर्वयोगविभा' क. ग. घ, 'सर्वयोगे विभा' छ. पाठः. २. 'इदानीमिदाम्भ्युपगता' क. पाठः. ३. 'अथागमन' ग. घ. पाठः. ४. 'उत्पतनादुच्चलि' क. ग. घ. छ. पाठः. ५. 'कृताननाप्र' ख. ग. घ. झ. ज. पाठः. ६. 'त्वेन अर्पिता यत्र' ख. पाठः.

तथा हि—

विष्वग्वृत्तिर्जटानां प्रचलति निबिडग्रन्थिबन्धोऽपि भारः
संस्कारक्वाणदीर्घं पटु रटति कृतावृत्ति खट्वाङ्गघण्टा ।
ऊर्ध्वं धूनोति वायुर्विवृतशवशिरःश्रेणिकुञ्जेषु गुञ्ज-
न्नुत्तालं किङ्किणीनामनवरतरणत्कारहेतुः पताकाम् ॥ ४ ॥

तत्सन्धानमेवोपपादयति—विष्वग्वृत्तिरित्यादि । सर्वतो वृत्तिर्यस्येति तत्कालविशेषणम् । प्रचलति प्रकर्षेण कम्पते । निबिडग्रन्थिबन्धः दृढग्रथनो बन्धः बन्धसाधनं पट्टांशुकादि यस्य । भारः समूहः ।

'निबिडं निबिरीसञ्च दृढं सान्द्रं निरन्तरम् ।'

इति वैजयन्ती । 'नेर्बिडज्बिरीसचौ' (५-२-३२) इति बिडच्प्रत्ययः । संस्कारक्वाणदीर्घं वीचीतरङ्गन्यायेन प्रथमशब्दोत्पादितैः शब्दसन्तानैरनुरणनापरपर्यायैश्चिरकालावस्थायि यथा तथेत्यर्थः । पटु स्वत एव स्पष्टं यथा तथा । रटति शब्दायते । कृतावृत्ति पुनःपुनर्जिह्वाघट्टनेन कृता आवृत्तिः पौनःपुन्यं यथा तथेति त्रयं रटनक्रियाविशेषणम् । खट्वाङ्गघण्टा खट्वाङ्गं नाम खट्वापादसदृश आयुधविशेषः,

'महोक्षः खट्वाङ्गं परशुरजिनं भस्म फणिनः ।'

इत्याद्याचार्यवचनात्, तस्य शिरसि बद्धा घण्टा । ऊर्ध्वम् उपरि, धूनोति कम्पयति । धुञ् धूञिति च कम्पनार्थौ धातू । धूञि इदं रूपम् । विवृतशवशिरःश्रेणिकुञ्जेषु व्यात्तमुखानां कपालानां श्रेणिर्माला, तस्या रन्ध्रेषु प्रवेशाद् गुञ्जन् शब्दायमानः । 'गुञ्जि अव्यक्ते शब्दे' इति धातुः । उत्तालम् उद्धतम्, स्वस्कन्धवर्तित्वाच्च । किङ्किणीनां भूषणबद्धक्षुद्रघण्टिकानाम् । 'किङ्किण्यः क्षुद्रघण्टिकाः' इत्यमरः । अनवरतरणत्कारहेतुः

१. 'विविधग्रन्थि' ङ. पाठः. २. 'ग्रन्थिनद्धोऽपि' क, 'ग्रन्थिबद्धोऽपि' झ. ञ. पाठः. ३. 'मुत्तालः किङ्कि' क. ग. घ. ङ. छ. ज. ञ. पाठः. ४. 'पताकाः' झ. ञ. पाठः.

१. 'जिह्वोपघट्टनेन' ज. पाठः. २. 'धुनोति' ञ. पाठः. ३. 'धूञ इदं' झ. ज. पाठः. ४. 'स्वाश्र [illegible] किङ्किणी' ज. पाठः.

(विलोक्य) इदं च तत् पुराणनिम्बतैलाभ्यक्तपरिभर्ज्यमानरसोनरसगन्धिभिश्चिताधूमैः अधस्तात् विभावितस्य महतः श्मशानवाटस्य

---

अनवरतस्य अविश्रान्तस्य रणत्कारस्य हेतुः । पताकां ध्वजांशुकम्, खट्वाङ्गस्येति प्रकरणात् । अधोलम्बनस्वभावादूर्ध्वं धूनोति । खट्वाङ्गे स्वप्रान्ते च यथा समं वर्तते तथा चलयतीत्यर्थः,

'यस्त्वग्रे च समं स्थितो ध्वजपटः प्रान्ते च वेगानिलात् ।'

इत्युक्तवत् । अत्र काव्यलिङ्गमलङ्कारः, रमणीयडामरत्वसन्धानस्य हेतोर्वाक्यार्थतयोपादानात् स्वभावोक्तिश्च ॥ ४ ॥

विलोक्य अथ इत्यर्थात् । पुराणेन चिरकालातिक्रान्तेनेति कटुतरगन्धत्वमाह । निम्बतैलेन पिचुमन्दस्नेहेन ।

'अरिष्टः सर्वतोभद्रहिङ्गुनिर्यासमालकाः ।
पिचुमन्दश्च निम्बः'

इत्यमरः । अभ्यक्तस्य सिक्तस्य, परिभर्ज्यमानस्य परितः पच्यमानस्य, रसोनस्य लशुनस्य रसो द्रवः, तस्य गन्धो येषाम् ।

'लशुने गृञ्जनारिष्टमहाकन्दरसोनकाः ।'

इत्यमरः । 'निम्बे तिक्तकः' इति दुर्गन्धप्रकरणे वैजयन्ती । अतो निम्बतैलस्य तिक्तगन्धतया, तत्सदृशगन्धस्य रसोनस्य तदवसेकेन भर्ज्यमानस्य तिक्तकटुगन्धविरसत्वात्तत्तुल्यगन्धत्वं चिताधूमानामपि दह्यमानशवगतलोमकेशादिगन्धगर्भतयेत्यवगन्तव्यम् । चिता शवदाहार्थः काष्ठसञ्चयः । 'चिता चित्या चितिः स्त्रियां' इति वैजयन्ती । तत्सम्बन्धिभिर्धूमैः वियति प्रसरद्भिर्लिङ्गत्वेनाधस्ताद्वर्तितया विभावितस्य प्रकाशितस्य, महतः महानगरसम्बन्धाद्विस्तीर्णस्योल्बनेन

---

१. '(परिक्रम्यावलोक्य च गन्धमाघ्राय)' क. झ. ञ, '(अधो विलोक्य)' छ, '(परिक्रम्यावलोक्य च)' ज. पाठः २. 'इदं तावत् पुराण' क. झ. ञ, 'इदं च पुराण' ज. पाठः ३. 'तैलाक्तपरिभृज्यमानरसोनगन्धिभि' क. झ. ञ. पाठः. ४. 'धूमैः पुरस्ताद्विभावितस्य' क. झ. ञ, 'धूमैः विभावितस्य' ख. छ. पाठः.

---

१. 'धुनोति' क. ग. घ. पाठः. २. 'खट्वाङ्गाग्रे स्व' ख, 'खट्वाङ्गस्याग्रे स्व' ज. पाठः. ३. 'चलतीत्यर्थः' ज. पाठः ४. 'रसनदन' क. खे. ग. छ. पाठः. ५. 'धूमस्यापि' ज. पाठः

नेदीयः करालायतनं, यत्र पर्यवसितमन्त्रसाधनस्यास्मद्गुरोरघोर-घण्टस्याज्ञया सविशेषमद्य पूजासम्भारो मया सन्निधापनीयः । कथितं हि मे गुरुणा, 'वत्से! कपालकुण्डले[2]! करालायाः[3] यत्तन्मया प्रागुप-याचितं स्त्रीरत्नमुपहर्तव्यम् । तदत्रैव नगरे विदितमास्ते'[4] इति[5] ।

जनबाहुल्याज्जायमानानामिव क्रियमाणानामप्यसंख्यत्वाच्छवबाहुल्यं प्रकाश्यते । वक्ष्यति च 'भूयसीर्व्यक्षिताभ्यः' (V. 17) इति । श्मशानवाटस्य पितृवन-प्रदेशस्य, नेदीयः अन्तिकतमम्, करालायतनं करालसंज्ञितायाश्चामुण्डाया[2] आलयः । 'अत्थि एत्थ णअरीए' इत्यादि पूर्वप्रस्तुतं संघटयति । पर्यवसितम-न्त्रसाधनस्य समाप्तमन्त्रस्य[3], महाभैरवविधादेः । साधनं कल्पोक्तं पुरश्चरणं यस्य समवसितेत्यनेनामङ्गलं च भावि सूच्यते । एतावत्येव[4] तस्य मन्त्रसाधनं सम्पूर्ण-मतः परं परेष्यत्वादिति सूचनात् । आज्ञया[5] नियोगात् । अद्य सविशेषमिति पुरश्चरणारम्भदिवसादारभ्य तद्दिनपर्यन्तं सामान्यपूजाया[6] निवृत्तत्वात् 'अणुसंझं आअच्छइ' इत्यनेनार्थस्य प्रागेव सूचितत्वात् । पूजासम्भारः अर्चनार्थस्य मधुमांसादेर्द्रव्यस्य सामग्री, सन्निधापनीयः सन्निहितः कर्तव्यः । यत्र तदिदमित्यन्वयः । सविशेषमिति सूचितं विशेषं भङ्ग्या प्रकाशयति— कथितं हीति उक्तं यस्मात् । मे गुरुणेति तस्य स्वस्यां विस्रम्भः, स्वस्याश्च तदुक्त्या सन्तोषः प्रकाश्यते । प्राङ् मन्त्रसाधनारम्भदिवसे । उपयाचितं दास्यामीति प्रतिश्रुतम् ।

'त्वया पुरस्तादुपयाचितो यः ।'

इति रघुवंशोक्तेः । स्त्रीरत्नमिति उपयाचनप्रकारं सूचयति, उभयकुल-शुद्धत्वाद्रूपलक्षणादिसम्पन्नत्वाच्च स्त्रीजातेः श्रेष्ठां कन्यां मन्त्रसाधनावसाने

१. 'तं च मे', २. 'ले अद्य भगवत्याः करा' क. ख. ज, 'ले भगवत्याः करा' ख. ज. पाठः. ३. 'याः प्रागुप' क. ख. ज, 'याः यत्तत् प्रागुप' ख, 'याः यन्मया प्रागुप' छ. ज. पाठः. ४. 'विदित इति' । छ. पाठः. ५. 'इति । तद्विचि-नोमि । (सक्री' क. ख. ज. पाठः.

१. 'नानां क्रिय' ज. पाठः. २. 'संज्ञायाः' ख. ज. पाठः. ३. 'समाप्तं मन्त्रस्य' क. ग. घ. पाठः. ४. 'अस्य' क. पाठः. ५. 'आज्ञाया' ज. पाठः. ६. 'पूजया' ख. ग. घ. पाठः. ७. 'याचितप्रका' ज. पाठः.

(सकौतुकमवलोक्य)

तत्र कोऽप्ययमतिगम्भीरमधुराकृतिः उत्तम्भितकुटिलकुन्तलः कृपाणपाणिः श्मशानमवतरति । य एषः—

पूर्णाहुतित्वेनोपहरिष्यामीति प्रतिश्रुतमित्यर्थः । रत्नशब्दः स्वजातिश्रेष्ठमाह । अश्वरत्नं गजरत्नं मणिरत्नमित्यादिप्रयोगदर्शनात् । उपहर्तव्यमित्यावश्यके कृत्यप्रत्ययः । अत्रैवेति करालाधिष्ठितायां पद्मावत्यामेवेत्यास(क्ते?त्ते)राकर्षणसौकर्यं द्योतयति । विदितं 'अस्मिन् गृहे वर्तते' इति पूर्वमेवान्विष्य ज्ञातमित्यर्थः । आस्ते वर्तते इति अस्मात् कथितम् । अतः सविशेषमिति तदाकर्षणमपि कर्तव्यमित्यर्थः ।

'न खलु महामांसविक्रयादन्यमुपायान्तरम्' इत्युपक्षिप्ताय महामांसविक्रयाय मकरन्दं वञ्चयित्वा आत्मनैव श्मशानं प्रविशतो नायकस्य प्रवेशनं सूचयति — तदिति । यन्ममापि कौतुकं जनयति तस्मान्निरूपणीय एवायमित्यर्थः । अतिगम्भीरमधुराकृतिः अत्यन्तमपरिच्छेद्या मनोहरानुल्बणा वा आकृतिः शरीरसंस्थानं यस्य । अनेनैतन्निमित्तेयमस्य प्रवृत्तिरित्याकारेङ्गिताभ्यामशक्यज्ञानत्वं प्रकाश्यते ।

'यस्य प्रभावादाकारे क्रोधहर्षभयादयः ।
सन्तोऽपि नोपलक्ष्यन्ते गाम्भीर्यं तत् प्रचक्षते ॥'

इति दिवाकरः । उत्तम्भितकुटिलकुन्तलः ऊर्ध्वंबद्धा वक्रा अलका यस्य । अनेन निर्भयत्वेन वेतालादिभिरपि पक्षे समराय सन्नद्धत्वं द्योत्यते । कृपाणपाणिः हस्ते अर्थाद्दक्षिणे खड्गो यस्य । 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ' (वा० २-२-३७) भवत इति वक्तव्यमिति समासः । अनेन प्रियाविरहमहापस्तीकारधिया महामांसविक्रयोद्युक्तस्य शस्त्रधारणं द्रोणादीनामिव न दोष इति

१. 'मग्रेऽवलोक्य)' क. ख, 'मालोक्य)' ग. पाठः. २. 'श्मशानवाटमव' क. ङ. छ. ख, 'श्मशानवाटीमवतरति' ढ. पाठः.

१. 'कथितस्सविशेष', २. 'वर्जयित्वा' ज. पाठः ३. 'प्रभावादाकारे' ... ज. पाठः. ४. 'बन्धा' ... पाठः

कुवलयदलश्यामोऽप्यङ्गं दधत् परिधूसरं
ललितविकटन्यासः श्रीमान् मृगाङ्कनिभाननः ।
हरति विनयं वामो यस्य प्रकाशितसाहसः
प्रविगलदसृक्पङ्कः पाणिर्ललत्वरजाङ्गलः ॥ ५ ॥

---

सूचयति कविः । आपदि ब्राह्मणस्य क्षत्रियधर्मस्य शस्त्रधारणादीनामनिषिद्धत्वात् ।

'अजीवंस्तु यथोक्तेन ब्राह्मणः स्वेन कर्मणा ।
जीवेत् क्षत्रियधर्मेण स ह्यस्य प्रत्यगन्तरः ॥'

इति मनुवचनात् ।

कुवलयदलेत्यादि । नीलोत्पलपत्रवत् स्निग्धश्यामलः । प्रकृत्या परिधूसरं सर्वतोऽस्निग्धवर्णम् असंस्कारात् । ललितविकटन्यासः प्रकृत्या सगर्वत्वाद् रमणीयः त्वरया विकटः पूर्वस्माद् विरूपः, 'विकटं तु विरूपं स्याद्' इति वैजयन्ती, न्यासो अर्थात् पदयोः निक्षेपो यस्य । श्रीमान् एकाक्यपि बहुजनपरिवृत इव तेजोविशेषानुमितलक्ष्मीक इत्यर्थः । मृगाङ्कनिभाननः चन्द्रवद् प्रसन्नमुखः । मृगाङ्केत्यनेन विषादमलिनिमापि किञ्चिद्विद्यत इति द्योत्यते । उभाभ्यां भाविनं विज मासूत्रयति । अन्यथा —

'उद्यतानां हि युद्धाय येषां भवति लक्षणम् ।
निष्प्रभं वदनं तेषां भवत्यायुःपरिक्षये ॥'

इति रामायणोक्तेः । कोऽयमिति सम्बध्यते । हरति तिरस्करोति । विनयं शास्त्रनिश्चयजनितं मनःपरिपाकम् । हरतीत्यनेन तस्य वस्तुतो विद्यमानत्वमाह, अविद्यमानस्य हरणानुपपत्तेः । तत्र हेतुः—प्रकाशितसाहसः साहसमविवेकित्वं प्रकाशितं येन । प्रविगलदसृक्पङ्कः तत्क्षणच्छेदात् मांसस्य प्रकर्षेण क्षरद्रुधिरकर्दमो यस्मिन् । ललत्वरजाङ्गलः विलसन्नरमांसः । 'लल विलास' इति धातुः ।

---

१. 'परिपाण्डुरं' ख. पाठः. २ 'ललितचरणन्यासः' क. छ. ञ. पाठः.

---

१. 'सम्भाव्यत्वात्' ञ. पाठः. २ 'विभाविनं', ३. 'सूचयति' ख. पाठः ४. 'निवृत्ता' ञ. पाठः ५. 'परिक्षरणा' ञ. पाठः.

(निरूप्य) — स एष कामन्दकीसुहृत्पुत्रो महामांसस्य पणिता माधवः । तत् किमनेन । भवतु यथासमीहितं सम्पादयामि । विगलितप्रायश्च पश्चिमसन्ध्यासमयः ।

---

'पयसा मुद्गयूषेण जाङ्गलानां रसेन वा ।'

इति वाहटोक्तेः । अत्र नरग्रहणेनोपपत्तेर्यपि नृमांसपणनायेति नृग्रहणात् स्वमांसविक्रयबुद्धिर्न कार्या, महामांसविक्रय इति प्रकारभेदेन पुरुषोपहारस्यैव कथनात् पुरुषाङ्गोपकल्पितमिति वक्ष्यमाणत्वाच्च । अन्यथा 'ललन्निजजाङ्गलः' इति भ्राम्यन् स्वमांसपणनायेति च वक्तव्यम् । जाङ्गलग्रहणेन कृपाणखण्डितात् पुरुषदेहादुपहारयोग्यत्वेन कल्पकथितं मांसं वपादिवद् गृहीतमिति दर्शयति । अयमेव चास्य पुरुषोपहाराद् भेदः । अत्र रौद्ररसो व्यज्यते । भाविकमलङ्कारः, तद्भावस्य स्फुटप्रतीतेः । अप्रस्तुतप्रशंसा च, कार्यमुखेन कारणस्योद्वेगस्य प्रतिपादनात् ॥ ५ ॥

निरूप्य निपुणं विचार्य । क्षणैः प्रत्यभिज्ञायेत्यर्थः । कामन्दकीसुहृदः देवरातस्य पुत्रः । अनेन तस्याः स्नेहभूमित्वं द्योत्यते । अस्याश्च तत्सम्बन्धपरिज्ञानकथनं वक्ष्यमाणस्य सौदामिनीमुखेन मालतीरक्षणस्य घटनार्थम् । महामांसस्य पणिता विक्रेता । 'व्यवहृपणोः समर्थयोः' (२-३-५७) इति विक्रयार्थस्य पणेः प्रयोगे कर्मणि षष्ठी । पणितैष स माधवः इत्यन्वयः । तत् किमनेन तस्मात् पूर्वदृष्टत्वात् किमिदानीमस्मिन्नपूर्ववत् कौतुकं क्रियत इत्यर्थः । यथासमीहितम् उपक्रान्तमनतिक्रम्य कार्यं निर्वर्तयामि । अथवा यथा यथावदिति पृथक्पदम् । समीहितं इष्टार्थम् इत्यर्थः । विगलितप्रायः बाहुल्येनापक्रान्तः । किञ्चिच्छेष इत्यर्थः ।

---

१. 'एष) अये स' क. ख. ज. पाठः. २. 'पणयिता' क. ग. ङ. छ. 'पणायिता' झ. ज. पाठः. ३. 'प्रायश्चायं पश्चिम' ख, 'प्रायः पश्चिम' झ. ञ. पाठः.

---

१. 'च' ख. पाठः.

तथा हि[1] —

व्योम्नस्तापिञ्छगुच्छावलिभिरिव तमोवल्लरीभिर्म्रियन्ते[2]
पर्यन्ताः प्रान्तवृत्त्या पयसि वसुमती नूतने मज्जतीव ।
वात्यासंवेगविष्वग्वि[3]ततवलयितस्फीतधूम्या प्रकाशं
प्रारम्भेऽपि त्रियामा तरुणयति निजं नीलिमानं वनेषु ॥ ६ ॥

([4]निष्क्रान्ताः ।)

॥ इति विष्कम्भकः[5] ॥

तदुपपादनं तथाहीति ।

व्योम्न इत्यादि — व्योम्नः आकाशस्य । तापिञ्छगुच्छावलिभिः काकतुण्डिकास्तबकानां श्रेणिभिः । 'तापिञ्छः काकतुण्डिका' इति हलायुधः । 'गुच्छो गुलुच्छस्तबकः' इति वैजयन्ती । अथवा तमालः । 'कालस्कन्धस्तमालः स्यात्तापिञ्छोऽपि' इत्यमरः । तमोवल्लरीभिः तत इतः साभिभूयोद्गमात् तिमिरमञ्जरीभिरि[1]त्युक्तिः । 'वल्लरी मञ्जरी स्त्रियाम्' इत्यमरः । अथवा

'दीर्घजटावल्लरी[2]' इति, 'गजभग्ने पतनाय वल्लरी ।'

इत्यादिप्रयोगैः प्रततायतत्वात्तमोलताभिरित्यर्थः । म्रियन्ते च्छाद्यन्ते । पर्यन्ताः समीपदेशाः, दिङ्मुखानीत्यर्थः । उपर्यवम् । अथवा तु प्रान्तवृत्त्या प्रान्तानां जलधिवेलाप्रदेशानां वृतिर्वरणं छादनं तया तमोनिमित्तया हेतुभूतया । अथवा वृत्तिः क्रमः, प्रा[3]न्तक्रमेणेत्यर्थः । पयसि जले । नूतने नवे । कर्दमकलुषतया नीलपाटले वर्षवारिपूर इत्यर्थः ।

'पर्याविलानीव नवोदकानि ।'

इत्युक्तवत् । अनेन सन्ध्यानुबन्धशबलत्वं तमसः प्रकाश्यते । 'सन्ध्यानुबन्धताम्रे परिणततालफलत्विषि मेदिनी निमीलयति नवपयसि तमसि' इति हर्षचरितोक्तेः । वसुमती भूमिः । मज्जति अवगाढा भवति । वर्तमाननिर्देशात्

१. 'हि सम्प्रति — व्योम्न' क. ख. घ, ङ. च. पाठः. २. 'ध्रियन्ते' ङ. च. पाठः. ३. 'सम्भेदविष्वग्वि' ख. पाठः ४. '(परिक्रम्य निष्क्रान्ता)' क. ङ. च. पाठः. ५. 'इति शुद्धविष्कम्भः' ज. पाठः.

१. 'रित्यर्थः' ख. पाठः. २. 'दीर्घ जटा' ख. ग. घ. पाठः. ३. 'प्रान्तान्तक्रमेण' ख. पाठः. ४. 'बद्ध' ख. पाठः.

क्रमो मज्जनस्य प्रकाश्यते। मध्ये पुनः वात्यायाः संवेगेन महता जवेन विप्लवित्तायाः सर्वतो विस्तारितायाः वलयितायास्तेनैव वर्तुलीकृतायाः स्फीतायाः सान्द्रायाः धूम्यायाः धूमसंहतेः प्रकाशः शोभेव शोभा यस्य । 'वात्या वातस्तु मण्डली', 'धूम्या वात्या वन्या' इति, 'तत्तद्वृन्दे सर्वम्' इति च वैजयन्ती । गगनमण्डलस्य तमसा सङ्कुचितवर्तुलाकृतित्वेन प्रतीतेर्वलयितोपमानग्रहणम् । प्रारम्भे स्वाविर्भावमात्रे । अपिर्विरोधे । त्रियामा रात्रिः । तरुणयति तरुणं युवानं करोति । 'तत् करोति' इति णिच् । निजं स्वतःसिद्धं नीलिमानं श्यामवर्णत्वम्। 'पृथ्वादिभ्य इमनिज्वा' (५-१-१२२) इति इमनिच् । वनेष्विति पत्रपल्लवादिबहलतया दिवाप्यप्रविष्टसूर्यकिरणत्वात् तदानीं पल्वलोत्तीर्णवराहयूथत्वादिभिश्च विशेषतः श्यामायमानत्वं प्रकाश्यते । अत्र तमोवल्लरीभिर्हेतुनोत्प्रेक्ष्यते — व्योम्नः पर्यन्तास्तापिञ्छगुच्छावलीभिः प्रालम्बमुक्तास्त्रियन्त इवेति, प्रान्तवृत्त्या वसुमती नूतने पयसि मज्जतीवेति च । तत एव हेतोस्त्रियामा वनेषु निजं नीलिमानं प्रारम्भेऽपि तरुणयतीति । शैशवे सम्पूर्णस्वरूपाभिव्यक्त्यभावाद्यौवन एव तदुपपत्तेः शैशवेऽपि युवानं करोतीवेति द्योतकशून्योत्प्रेक्षा । बुद्धिपूर्वस्य तरुणत्वस्यासम्भवाद् अतिशयोक्तिर्वा, असंबन्धे सम्बन्धकथनात् । वाक्यत्रये क्रमेण प्रालम्बावलम्बनैरिवाम्बरविमानस्य सविशेषरमणीयत्वम्, उपान्त्यान्त्यक्रमेण सर्वस्या भूमेरव्यक्तीभवनम्, स्थूलान्तरेभ्योऽपि वनान्तरस्य निबिडनीलिमत्वं च प्रकाश्यते । अप्रस्तुतप्रशंसा चात्र व्यज्यते ॥ ६ ॥

उपर्यधोऽन्तराले च जगतः तिमिरकवलितत्वादस्मदभिमतसाधनसमुचितसमयसम्पत्त्या तदर्थं निर्यन्त्रणमिदानीं प्रवर्तामहे इत्यस्यार्थस्य कारणमुखेन प्रकाशनाद् वृत्तस्य माधवश्मशानावतरणस्य वर्तिष्यमाणस्य मालत्युपहारस्य च दर्शितत्वाद् विष्कम्भं समापयति — निष्क्रान्तेति ।

॥ विष्कम्भकः ॥

१. 'शोभैव', २. 'श्यामलवर्ण' ख. पाठः. ३. 'यूथादिभिः' ज पाठः. ४. 'वलिभिः' ख. पाठः. ५. 'व्यक्त्यभावात्' ग. घ. पाठः. ६. 'मूल एव' ख. पाठः. ७. 'प्रालम्बनैरिव' ग. घ. पाठः. ८. 'उपान्त्यक्रमेण' छ. पाठः. ९. 'रभिव्यक्तीभ' ख. पाठः. १०. 'भावनं' ज. पाठः. ११. 'दस्मदभिमत' ग. पाठः. १२. 'तदर्थनिर्यन्त्रण' ख. ग. पाठः. १३. 'तरणसंदर्शि' ग. घ. पाठः.

(ततः प्रविशति यथानिर्दिष्टो माधवः ।)

**माधवः** — (साशंसं)

प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढरागोदया-
स्तास्ता मुग्धदृशो निसर्गमधुराश्चेष्टा भवेयुर्मयि ।

---

अथ सूचितस्य नायकस्य प्रवेशमुखेन सरसवस्तुप्रयोगायाङ्कमारभते[1]—**ततः प्रविशतीति** । **यथानिर्दिष्टः** कपालकुण्डलया येन प्रकारेणोक्तस्तत्प्रकारविशिष्टः । दक्षिणपाणिकलितकृपाणकः[2] सव्यकरकमललम्बरपल्लोलतावलंयनिबिडनिबद्धकुटिलकुन्तलकक्ष्याबद्धसुदृढचण्डातकत्रिभुवनलोभनीयेन रौद्रमधुरेणाकारेण ललितविकटं परिक्रामन्नित्यर्थः[3] । 'न खलु महामांसविक्रयादन्यदुपायान्तरं पश्यामि' इति पूर्वाङ्कावसानोपक्षिप्तात्मनिरपेक्षप्रवृत्तिप्रोत्साहकस्याभिलाषविप्रलम्भात्मनः श‍ृङ्गारस्याङ्गिनः कविसहृदयकुलशिखामणिरनुसन्धानं करोति— **साशंसमिति** । आशंसा प्रार्थना तया सहितं इत्यभिलाषस्वरूपं द्योतयति ।

'सङ्कल्पेच्छासमुद्भूतव्यवसायपुरस्सरः ।
यस्तत्समागमोपायः सोऽभिलाषः प्रकीर्तितः ॥' इति लक्षितत्वात् ।

**प्रेमार्द्रा इत्यादि** । प्रेम्णा आर्द्राः ।

'परस्पराश्रयत्वेन निरूढं भावबन्धनम् ।
यदेकापायतो न स्यात् तद् प्रेमेति निगद्यते ॥

मनसो यद् द्रवार्द्रत्वं विषयेषु ममत्वतः ।
भयशङ्कावसानात्मा स एव स्नेह उच्यते ॥' इति च,

'आर्द्रता शिशिरत्वं यत् सर्वावस्थासु मानसम् ।'

इति च भावप्रकाशः ।

---

१. 'प्रयोगाङ्कमारभते' क. ख. घ, छ. पाठः. २. 'कृपाणिकः' क. ख. ग, घ, छ, पाठः. ३. 'र्थः । अथ न खलु' ख. ज. पाठः.

'स्नेहस्तु प्रचयाद्वस्तुप्रयुक्तो विवशं नरम् ।
सततं तत्समीपे तु क्षिपन् प्रेमतयोदितः ॥'

इति,

'यद्यदस्य प्रियं वेत्ति तस्य तस्याशुकारिताम् ।
योग्यतामार्द्रतां प्राहुर्मनःकालुष्यनाशिनीम् ॥'

इति दिवाकरः । स्नेहोत्कर्षरूपेण प्रेम्णा शिशिराः सर्वात्मनानुकूलाश्चेत्यर्थः ।

'रथाङ्गनाम्नोरिव भावबन्धनं
बभूव यत् प्रेम परस्पराश्रयम् ।'

इति रघुवंशोक्तवत् । प्रेम्णः प्रथमकथनं तस्यैव रत्यधिष्ठानत्वात् ।

'हृच्छब्दवाच्यो मदनो भाति यत्र प्रकर्षतः ।
तत् प्रेम तदधिष्ठानं रते यूनोः परस्परम् ॥'

इति वचनात् । 'सति हि कुड्ये चित्रकर्म' इति न्यायादधिष्ठाने[2] हि सत्यधिष्ठेयस्य प्रतिष्ठानं भवति । प्रणयस्पृशः प्रणयं स्पृशन्तीति ।

'उपचारैर्मिथो यूनोर्यद् बाह्याभ्यन्तराभिधैः ।
प्रेम नीतं प्रकर्षं चेत् स एव प्रणयः स्मृतः ॥' (इति॥)

बाह्याः आलिङ्गनचुम्बनादयः, आभ्यन्तराः रतिविशेषाः[3] । परिचयादुन्नाढरागोदयाः निर्विघ्नाच्चिरकालाभ्यासादतिदृढरागस्य उदय उद्भवो यासाम् ।

'स एव चेद् गुणद्रव्यदेशकालादिभिर्हृदि ।
रज्यते दीप्यते चित्ते स राग इति कथ्यते ॥' (इति॥)

स एवेति स्नेह उच्यते ।

'कालेनावरणात्ययात् परिणते यत् स्नेहसारे स्थितम् ।'

इति उत्तररामचरितोक्तवत् । तास्ता इति तच्छब्दवीप्सया[4] ईर्ष्यामानप्रणयमानादिशबलत्वादशक्यवर्णनत्वमनुभवैकगोचरत्वं च प्रकाश्यते ।

१. 'तामाहुः' ग. घ. पाठः. २. न्तीति । दृशोऽम्बुदके किम् । उप' क. पाठः. ३. 'रतविशेषाः' ग. घ. ज. पाठः. ४. 'तच्छब्दो वी' ज. पाठः. ५. 'वीप्सायां' ख. ज. पाठः.

यावन्तःकरणस्य बाह्यकरणव्यापाररोधी क्षणा-
दाशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रो लयः ॥ ७ ॥

'रतिरङ्कुरिता प्रेम्णा मानात् पल्लविता भवेत् ।
सकोरका प्रणयतः स्नेहात् कुसुमिता भवेत् ॥
रागात् फलवती चेयमनुरागेण भुज्यते ॥'

इति वचनात् । मुग्धदृश इत्यकृत्रिमालोकनसुभगत्वं दृशोः प्रकाश्यते, निसर्गमधुराः स्वभावतो हृद्याः चेष्टाः वागङ्गसत्त्वनिर्वृत्ताः प्रवृत्तिविशेषाः । निसर्गमधुरा इत्यनुवादः । निसर्गमधुराश्चेष्टाः प्रेमार्द्रत्वादिविशिष्टा मयि भवेयुरिति प्रार्थना । प्रार्थने लिङ् । मयि मद्विषये, अन्तःकरणस्य युगपद् ज्ञानानुत्पत्तिलिङ्गेनेयता देहाभ्यन्तरवर्तित्वाद् ज्ञानसाधनत्वाच्च । अन्तःकरणं मनः तस्य । बाह्यकरणव्यापाररोधी स्थूलदेहापेक्षया चक्षुरादीनामप्यान्तरत्वेऽपि मनोपेक्षया बहिर्वर्तनाद् बाह्यानि, ज्ञानकर्मसाधनत्वाच्च करणानीति तानि बाह्यकरणान्युच्यन्ते ।

'इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः ।'

इति भगवद्वचनात्,

'साम्प्रतकालं बाह्यं त्रिकालमाभ्यन्तरं करणम् ।'

इति च साङ्ख्योक्तेः । तेषां व्यापाराः द्रष्टव्यादिग्रहणं वक्तव्यादिव्याप्तिश्च, तान् रोद्धुं निवारयितुं शीलं यस्य । अनेन मनसः सर्वेन्द्रियसारथित्वात् तल्लये सर्वेन्द्रियलय इति प्रकाश्यते । क्षणादिति चेष्टानामाशुकारित्वसामर्थ्यमाह । आशंसापरिकल्पितासु मनोरथैः सोमशर्मपितृवत् परितः कल्पितासु अनुभूयमानत्वेन चिन्तितास्वित्यर्थः । अपिशब्दात् किमुत साक्षात् प्राप्तास्विति व्यज्यते । आनन्दसान्द्रः सुखेन बहल इत्यनेन तीव्रदुःखजनितान्मोहाद्व्यावृत्तिः ।

१. 'सान्द्रोदयः' क. पाठः.

१. 'समर्थतामाह' ज. पाठः. २ 'परिकल्पितासु' ख पाठः. ३. 'नेन प्रीतदुःख' क, 'नेन प्रीतिप्रीतदुःख' ग. पाठः.

अपि च—

अविमुक्तमद्ग्रथितकेसरावली-
सतताधिवाससुभगार्पितस्तनः ।
अपि कर्णजाहविनिवेशिताननः
प्रियया तदङ्गपरिवृत्तिमाप्नुयाम् ॥ ८ ॥

'तीव्राभिषङ्गप्रभवेण वृत्तिं
मोहेन संस्तम्भयतेन्द्रियाणाम् ।'

इत्युक्तेः । लयः स्वव्यापारोपरमात् स्वरूपशून्यस्येव विश्रान्तिः । अत्रौत्सुक्यं भावो व्यज्यते । अतिशयोक्तिश्चालङ्कारः, अपिक्षणशब्दाभ्यामतिशयस्य प्रकाशितत्वात् ॥ ७ ॥

पुनः प्रकारान्तरेण प्रार्थनामाह— अपि चेति ।

अविमुक्तेत्यादि — अविमुक्ता कदाचिदप्यनुज्झिता । तत्र हेतुः मद्ग्रथिता मया गुम्फिता इति न पुनर्द्रव्यगौरवात । अत आह—केसरावली न पुनर्मौक्तिकावलीति । तया सततमनवरतम् । अधिवासः सुरभीकरणं यस्य स चासौ प्रकृत्या सुभगश्च अर्पितः चुम्बनपरिरम्भादिषु निर्यन्त्रणं दत्तः स्तनो यस्मै । कर्णजाहविनिवेशिताननः कर्णमूले स्वस्य कर्णपार्श्वे विनिवेशितं विशेषेण निक्षिप्तं मुखं यस्य । अनेन स्वस्य तत्कपोलचुम्बनसंरम्भो व्यज्यते । 'तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ' (५. २. २४) इति जाहच् । प्रिययेति कर्तृपदं विनिवेशनक्रियया साक्षात् सम्बध्यते, अर्पणक्रियया त्वर्थात् । अपिशब्दश्चार्थे विशेषणद्वयं समुच्चिनोति । एवमेवमपि भवानिति तत्कालविशेषणं चैतत् । तदङ्गपरिवृत्तिं तस्याः अङ्गानां भुजलतयोरूर्वोश्च मर्दायैर्व्यतिनिमयं तदङ्गस्थाने मदङ्गानां मदङ्गस्थाने

१. 'किं च'. २. 'अतिमुक्त' क. झ. ञ, 'अविमुक्तमुद्ग्रथित' ड, 'अतिमुक्तकमथित' छ. ज. पाठः. ३. 'स्तनं' क. छ. ज. झ. ञ. पाठः. ४. 'कण्ठजाह' ज. पाठः, ५. 'तानन' ड. छ. झ. ञ. पाठः.

१. 'त्सुक्यभावो' ग. घ. पाठः. २. 'तिशयितस्य' ख. पाठः.

अथवा दूरे तावदेतत् । इदमेव तावत् प्रार्थये—

सम्भूयैव सुखानि चेतसि परं भूमानमातन्वते
यत्रालोकपथावतारिणि रतिं प्रस्नौति नेत्रोत्सवः ।

च तदङ्गानामवस्थितिः । सम्प्रयोगकाले प्रयोज्यं तिलतण्डुलकाख्यमुपगूहनविशेषमित्यर्थः । 'शयनगतावूरुव्यत्यासं भुजव्यत्यासं च कृत्वा संसङ्घर्षमिव यद् घनं स्वजेते तत्तिलतण्डुलम्' इति वात्स्यायनः । एकवचनेन सकृत् प्रवृत्तिमात्रं प्रकाश्यते । आप्नुयां लभेय इति प्रार्थने लिङ् । अत्रापि वक्ष्यमाणे 'तत् पश्येयम्' इत्यत्राप्यौत्सुक्यमेव विषयभेदाद्व्यज्यते । अत्राप्रस्तुतप्रशंसालङ्कारः, कार्यमुखेन परस्परानुरागस्य प्रकाशनात् । अत्र 'प्रेमार्द्राः' इत्यादिना चिरकालमविच्छिन्नरससुदितोदितं प्रियासमागमसुखमाशंसितम् । 'अविमुक्ते'त्यादि तु तदलाभेऽपि जातुचिद्यथाभिलषितमुपगूहनमनुभूय तदनन्तरमेव मरणमपि वरमिति द्योतितम् ॥ ८ ॥

इदानीं तदुभयमप्याक्षिप्य ततोऽर्वाचि पर्वण्याशंसामवस्थापयति— अथवेति पूर्वोक्तव्यावृत्तौ । दूरे तावत् मनोरथानामप्यभूमावेवं तादृशसुकृतराशेरभावादिति भावः ।

'यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे ।'

इति वैजयन्ती । एतद् अनन्तराशंसितं द्वयम् । इदं वक्ष्यमाणमेव । तावत् प्रथमम् ।

प्रार्थनाप्रकारमाह—सम्भूयैवेत्यादि । सम्भूय समवेतानि भूत्वा । 'भू प्राप्तौ' इति धातोः सम्पूर्वाल्ल्यपि रूपम् । 'सम्भूय कान्तेः पिबन्ति' इति वक्ष्यति च । एव—न तत्र संशय इत्यर्थः । इवेति वा पाठः । सुखं 'यदर्थं सर्वं यच्च नान्यार्थं तत्सुखम्' इति लक्षितम् । सुखानीति यतः कुतश्चित् जातानि यानि यावन्ति चेति बहुवचनेन व्यज्यते । परं भूमानं निरतिशयं विकासम् । सङ्कोचस्य दुःखरूपत्वात् । अनेन 'यो वै भूमा तत्सुखम्' इति श्रुत्यन्तरवाक्यमप्यनुसारयति कविः । यत्र यस्मिन्मुखे । आलोकपथावतारिणि दर्शनस्य मार्गं

१. 'इदमेव प्र' क. झ. ब. पाठः. २. 'प्रस्नौति' क. छ. ज. झ. ब. पाठः.

१. 'संवर्ष', २. 'प्यभूमिरेव ताद' ख. पाठः. ३. 'नेत्राद्वनः', ४. 'श्रुत्यन्तरवाक्य' ज. पाठः.

यद्बालेन्दुकलोच्चयादपचितैः सारैरिवोत्पादितं
तत्पश्येयमनङ्गमङ्गलगृहं भूयोऽपि तस्या मुखम् ॥ ९ ॥

गाहमाने, न तु समीपतः स्फुटं दृश्यमान इति । अनेन लक्ष्यालक्ष्य इव दूरतो दृश्यमान इति द्योत्यते । आलोकेत्याघ्राणास्वादादिपथावतारित्वमनेनैव व्याख्यातमित्यपि स्फुरति । रतिं रमणं क्रीडाम् । चेतसीत्येव । प्रस्नौति प्रवर्षति,

'श्रेयः परिस्नौति तनोति कीर्तिम् ।'

इतिवत् । प्रस्तौतीति वा, प्रारभते । नेत्रोत्सवः चक्षुषोरुत्सवः । समीपतः स्फुटमवलोकनं दूरदर्शननिर्वृतस्य मनसो दर्शनजनितां नटनादिरूपां क्रीडां करोतीत्यर्थः । 'रमु क्रीडायाम्' इति धात्वर्थाश्रयणात्, न पुनरत्र स्थायिभावो रतिरुच्यते ।

'व्यभिचारिरसस्थायिभावानां शब्दवाच्यता ।'

इति रसदोषत्वेनाचार्यैरुक्तत्वात् । तत्त्वे हेतुभूतं लोकोत्तरं सौन्दर्यमाह—बालेन्दुकलोच्चयाद् बालानामपरिणतत्वेन मुग्धलावण्यानां चन्द्रकलानामुच्चयादेकत्र सङ्ग्रहादपादानात् । अपचितैः स्वीकृतैः । अपचितशब्दस्त्वविवक्षितवाच्येन ध्वनिना लताभ्यः परिगृहीतैः पुष्पैरिवेत्यर्थं व्यञ्जयति,

'सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः ।'

इतिवत् । सारैः कान्तिनवनीतैरुपादानैः । उत्पादितं सृष्टमिव, न पुनः कर्पूरद्रवैरिव विलिप्तम् । अनङ्गमङ्गलगृहं मदनस्याभ्युदयसाधनं भवनम् । देवतागारादिके मङ्गलस्थाने स्वसमृद्ध्यर्थमादरेण जनः सततं यथा सन्निधत्ते तथास्मिन्ननङ्ग इत्यर्थः । अनेन तदाश्रयवशादनङ्गस्य दुर्वारवीर्यत्वं प्रकाश्यते । भूयोऽपि पुनरपीति पूर्वदर्शनेन तृष्णाया अशान्तिः प्रतिपाद्यते । पश्येयमिति प्रार्थने लिङ् । तस्या इति या तथाविधानुरागविवशतयानुभूता तस्या इत्यर्थः । अत्र पूर्वार्धे एवेति पाठे अतिशयोक्तिः, इवेति पाठे तूत्प्रेक्षालङ्कारः । उत्तरार्धे

१ 'मुखम् ॥ ९ ॥ यत्र सत्यं' क. छ. ज. झ. ञ. पाठः.

१. 'वतारित्तत्व' ग. पाठः २. 'प्रस्तौति' क. पाठः ३. 'धात्वर्थश्रवणात्' ख. पाठः. ४. 'सान्द्रपुष्पके माल' ज. पाठः. ५. 'पि पुनः पुनरपि' क. पाठः

**अथवा यत् सत्यमधुना सन्दर्शनं नेति स्वल्पो विशेषः । मम हि सम्प्रति सातिशयप्राक्तनोपलम्भसम्भावितात्मनः संस्कारस्यानवरतप्रबोधात् प्रतायमानस्तद्विसदृशैः प्रत्ययान्तरैरतिरस्कृतप्रवाहः प्रियतमास्मृतिप्रत्ययोत्पत्तिसन्तानस्तन्मयमिव करोति वृत्तिसारूप्यतश्चैतन्यम् ।**

---

पुनरुत्प्रेक्षारूपके । सम्भूयेत्यादिरुदाहृतिः उत्कर्षाभिधानात् । अतः प्रार्थनात्रयं महामांसविक्रयनिष्क्रयत्वेन देवताः प्रति युक्तमिति च वेदितव्यम् ॥ ९ ॥

अथ पश्येयमिति कृतां दर्शनाशंसामाक्षिपन्निव भङ्ग्या चेतसस्तदेकाश्रयत्वमाह—अथवेति । यत् सत्यं सत्यमेव । सन्दर्शनं सम्यक् चक्षुषा विषयीकरणम् । नेति तदभावः कथ्यते,

'वृषता क्लीबता ज्ञानमज्ञानं जीवितं न वा ।'

इति वाहटोक्तवत् । इति अनयोः प्रकारयोः स्वल्पो विशेषः लघीयान् भेदः । स्वल्पग्रहणं मनसोऽनवस्थाने दर्शनाभावस्य दुःखावहत्वं ध्वनति । तदेवोपपादयति—मम हि सम्प्रतीति । हिर्हेतौ । सातिशयप्राक्तनोपलम्भसम्भावितात्मनः बुद्धिरुपलब्धिर्ज्ञानं प्रत्यय इति पर्यायाः । सातिशयेन व्यावृत्तेन प्राक्तनेन पूर्वं जातेनोपलम्भेनार्थात् प्रियतमाविषयेण ज्ञानेन सम्भावितात्मनः सम्यगुत्पादितस्वरूपस्य । संस्कारस्य स्वोत्पादकसजातीयोत्पादकस्तद्विजातीयो गुणः संस्कारः तस्य, अर्थाद् भावनारूपस्य । अनवरतप्रबोधात् प्रत्यूहाभावेन सदा विकासात् । प्रतायमानः विस्तीर्यमाणः । तद्विसदृशैः तच्छब्देन सन्तानः परामृश्यते तस्य स्वभावान्यत्वेन विरुद्धैः । प्रत्ययान्तरैरहमिदमादिभिर्ज्ञानविशेषैर्घटज्ञानसन्तान इव घटपटादिप्रत्ययैः । अतिरस्कृतप्रवाहः अनन्तरित-

---

१. 'ना तत्सन्दर्शनेनातिस्वल्पोऽपि न विशेषः' क. ख. ग. पाठः. २. 'नोपालम्भज्ञानसम्भावितात्मनो वासनासंस्कारस्य' छ. पाठः. ३. 'तात्मजन्मनः'. ४ 'करोत्यन्तर्वृत्ति' क ख च. पाठः.

---

१. 'क्रयत्वेन दे' ग. पाठः २. 'सदाश्रय' ज. पाठः. ३. 'ऽनात्मनसो' क. पाठः ४. 'दुःखासहत्वं', ५. 'यो वा अनुत्पादको वा गुणः', ६. 'प्रबोधनात्' ज. पाठः. ७. 'कटपटादि' ग. घ. छ. ज. पाठः.

प्रसरः । पूर्वोत्तरप्रवाहयोर्मध्ये तेषामननुप्रविष्टत्वात् । प्रियतमास्मृतिप्रत्ययोत्पत्तिसन्तानः प्राणसमाविषयस्य स्मृतिरूपस्य ज्ञानस्य भावनासंस्कारजन्यज्ञानत्वात् स्मृतेः उत्पत्तिसन्तानः उदयस्याविच्छेदः सा सा सेत्येवंरूपः । तन्मयं प्रियतमास्वरूपम् । इवेति वस्तुतस्तस्य तथात्वाभावात् । वृत्तिसारूप्यतः वृत्त्या बुद्धिवृत्तिरूपेण ज्ञानेन समानरूपतया एकाकारतयेत्यर्थः । चैतन्यं आत्मस्वरूपभूतं ज्ञानम् । अयमर्थः — बुद्धिवृत्त्यात्मकस्य प्रियास्मृतिप्रत्ययसन्तानस्य चैतन्यैकाकारतयोदयमानस्य ध्यानपर्यायस्य आत्मचैतन्यैक्यमापद्य विलयान्निर्भेदस्वरूपशून्यमिवानन्दानुभवमात्रमवस्थानं समाधिसंज्ञितं सम्पद्यत इति । तथा चाहुरभियुक्ताः—

'विरुद्धैरविरुद्धैर्वा भावैर्विच्छिद्यते न यः ।
आत्मभावं नयत्यन्यान् स स्थायी लवणाकरः ॥'

इति । अत्र च योगवेदान्तशास्त्रसर्वस्वप्रथानेन कविना तदर्थो विच्छित्त्या प्रकाश्यते इति मन्तव्यम् । तथा हि—निरतिशयेत्यादिना यमादिपञ्चाङ्गनिष्पन्नत्वमुच्यते, संस्कारस्य इति धारणा, प्रतायमान इति धारणान्तषडङ्गसम्भृतत्वम्, तद्विसदृशैरित्यादिना ध्यानं 'विजातीयप्रत्ययानन्तरितसजातीयप्रत्ययप्रवाहकरणं निदिध्यासनम्' इति, योगशास्त्रे लक्षितत्वात्,

'तद्रूपप्रत्ययैकान्तसन्ततिश्चान्यनिःस्पृहा ।
तद् ध्यानं प्रथमैरङ्गैष्षड्भिर्निष्पाद्यते नृप ! ॥'

इति श्रीविष्णुपुराणवचनाच्च । तन्मयमिव करोतीत्यादिना समाधिः ।

'तस्यैव कल्पनाहीनं स्वरूपग्रहणं हि यत् ।
मनसा ध्याननिष्पाद्यः समाधिः सोऽभिधीयते ॥' इति,
'आत्मभावं नयत्येनं तद्ब्रह्मध्यायिनं मुने ।
विकार्यमात्मनः शक्त्या लोहमाकर्षको यथा ॥'

इति च श्रीविष्णुपुराणोक्तेः ।

---

१. 'स्कारस्य जन्य' ज. पाठः. २. 'वृत्त्या सारू' क, 'वृत्त्या बुद्धिसारूप्येण' क. ख. घ. छ. पाठः. ३. 'मानध्यानपर्यायस्य', ४. 'मापाद्य' ज पाठः' ५. 'स्वस्थायी' क, 'स्थायीव लव' ख, 'स्वस्थानी लव' ज. पाठः. ६. 'र्थो विविच्य प्रका' क. पाठः. ७. 'योति निष्पन्न' क. पाठः. ८. 'तद्वित्सदृशैः' क. छ. पाठः. ९. 'ध्यानकं' . पाठः. १०. 'विकारमात्मनः' ख. ज. पाठः.

तथा हि—

लीनेव प्रतिबिम्बितेव लिखितेवोत्कीर्णरूपेव च
प्रत्युप्तेव च वज्रलेपघटितेवान्तर्निखातेव च ।

'सर्वव्यापिनि चिन्मात्रे शिवे स्वैक्येन भावना ।
अविच्छेदेन सततं समाधिः परमो मतः ॥'

इति गुरुदेवः । वृत्तिसारूप्यत इति इदमनिदंरूपादहंकारान्मुञ्जादिषीकामिवानिदमंशं चैतन्यरूपं निष्कृष्य श्रुत्या चाचार्यप्रसादादहं ब्रह्मास्मीति ज्ञानेन विद्याख्येन बुद्धिवृत्तिरूपेणाभ्यस्तेनैकाकारतया समस्तभेदबाधनाद् ब्रह्मात्मत्वानुभूतिः प्रबोधाख्या जायते इत्यद्वैतसिद्धान्तं प्रतिपादयन्नात्मनस्तदभिरुचिमासूचयति । अत्र विशेषणसाम्यादप्रस्तुतस्य गम्यत्वेन समासोक्तिरलङ्कारः । प्रियतमारूपप्रस्तुतवस्त्ववच्छेदकत्वेनाप्रस्तुतस्य परमात्मनः प्रतीतेः ।

सापि लौकिके वस्तुनि शास्त्रीयवस्तुव्यवहारसमारोपरूपतन्मयीकरणमेवोपपादयति—तथा हि — लीनेवेत्यादि । लीनेव यतः कुतश्चिद् भिया ह्रिया वापवरकस्थानीये चेतस्यनुप्रविश्य संश्लिष्टेवेत्यर्थः ।

"सितारविन्दप्रचयेषु लीनाः",
"दिवाकराद्रक्षति यो गुहासु लीनम्",
"तिरश्चकार भ्रमराभिलीनयोः"

इत्यादिषु लीनशब्दस्य संयोगसम्बन्धमात्रवाचकत्वावगमात् । अथवा व्यापकस्य बाह्यस्य वस्तुनः कथमणुमात्रेऽन्तः प्रवेश इत्याशङ्क्याह—प्रतिबिम्बितेव मुकुरायमाणे तस्मिञ्छायात्मनानुप्रविष्टेवेति । प्रतिबिम्बप्रवेशस्यावास्तवत्वेऽपि,

'छायामिवादर्शतलं प्रविष्टाम् ।',
'मुखमिन्दुरुज्ज्वलकपोलमतः प्रतिमाच्छलेन सुदृशामविशत् ।',

१. 'श्रुत्याचारप्रसा' क. ग. घ. छ. पाठः. २. 'भेदावधानात्' क. ग. पाठः. ३. 'संश्लिष्ट एवे' ख. ग. घ. छ. पाठः. ४. 'अथ व्यापक' ख. पाठः. ५. 'बिम्बितप्रवे' ख. पाठः. ६. 'भुवनेराविशत्' ख. पाठः.

'बोळन्ति[1]अपेक्खन्तपडिमासंकन्तवक्कळघणसङ्घाए ।'

इत्यादिषु तत्प्रवेशप्रसिद्धेरेवमुक्तिः । बिम्बमुकुरयोरन्यतरापाये प्रतिबिम्बापायमाशङ्क्याह— लिखितेव फलकायिते तस्मिन् वर्णैस्तूलिकया निर्मितेवेति । सलिलादि[2]विरुद्धोपनिपाता तद्विनाशमाशङ्क्याह— उत्कीर्णरूपेव सम्यक्कल्पे तस्मिन्निशिततङ्कतक्षणेनाकारितेवेति,

"यः क्षत्रदेहं परितक्ष्य टङ्कैस्तपोमयैर्ब्राह्मणमुच्चकार ।"

इति मुरार्युक्तवत् ।

'स्तम्भेषु योषित्प्रतियातनानामुत्क्रान्तवर्णक्रमधूसराणाम् ।'

इत्युक्तन्यायेन कालवशात्तत्रापि वैवर्ण्यादिकमाशङ्क्याह — प्रत्युप्तेव कनकरुचसदृशे तस्मिन् माणिक्यादिवत् साक्षादेव क्षेपणेन स्थापितेव ।

'अनर्घरत्नप्रत्युप्तकाञ्चीगुणनितम्बिनीम् ।'

'तस्योल्लसत्काञ्चनकुण्डलाग्रप्रत्युप्तगारुत्मतरत्नभासा ।',

'प्रत्युप्तः पद्मरागेण प्रभामण्डलबन्धिना ।'

इत्यादिप्रयोगेषु प्रतिवापस्य रत्ननिक्षेपविषयत्वेन दर्शनात् । तत्रापि क्षेपणवशादसमग्रदर्शनत्वमाशंक्याह— वज्रलेपघटितेव पीठदेशीये तस्मिन् देवताप्रतिमादिवद्[3] वज्रलेपाख्येनौषधेन दृढं श्लेषितेवेति ।

'लाक्षासर्जरसः शङ्खः सिक्ता त्रिफलोरसः ।
कुन्दुरुष्कं च संपिष्टं वज्रलेपोऽयमीरितः ॥'

इति सिद्धान्तसारोक्तेः । तत्रापि कालवशाद् बन्धशैथिल्येन चलनमाशङ्क्याह— अन्तर्निखातेव क्षितितलतुलिते तस्मिन् निधानादिवदवदार्याभ्यन्तरे निहितेवेति । अन्तःशब्दो लीनेवेत्यादिभिः प्रत्येकमभिसम्बन्धनीयः । अनया

१. 'बाळत्ति' म. प, 'बोळत्ति' ज. पाठः. २. 'सलिलाभि' ग. घ. पाठः.
३. 'वत् साक्षादेव वज्र' क. पाठः.

सा नश्चेतसि कीलितेव विशिखैश्चेतोभुवः पञ्चभि-
श्चिन्तासन्ततितन्तुजालनिबिडस्यूतेव लग्ना प्रिया ॥ १० ॥

पूर्वपूर्वाकांक्षानिवारितयोत्प्रेक्षाशृङ्खलया अन्तःप्रविष्टेव निरवगमैव निर्निशैवा-म्लानलावण्यैव समग्रदर्शनैव क्षणमप्यचलितेव प्रिया चेतसि लग्नेत्यतिशयितोऽर्थः सहृदयहृदयहारी समर्प्यते ।

परस्परनिरपेक्षतया व्याख्याने कश्चमत्कारः । उत्प्रेक्षाबाहुल्यं च निरर्थकमापद्येत । अन्यतमयैव लग्नतामात्रप्रतीतिसिद्धेः । क्रियोत्प्रेक्षा चेयम्, लग्नक्रियाया लयनादिक्रियात्वेन सम्भावनात् । उत्कीर्णरूपेत्यत्र समासस्य सम्बन्धिसम्भायित्वात् सम्बन्धस्य सिद्धधर्मत्वेन गुणत्वेऽपि उत्किरणक्रियाया अत्र प्राधान्येन विवक्षितत्वात् क्रियोत्प्रेक्षैवेति मन्तव्यम् । अथात्र हेतुरुत्प्रेक्ष्यते । सा या सातिशयप्राक्तनोपलम्भविषयीभूता । नः प्राणेभ्योऽपि तामभिलाषुकाणामस्माकमित्यर्थः । कीलिता कीलः अणिः कवाटतुल्ये तस्मिन् कनकपट्टिकावत् सञ्जातकीलं कृतेव । 'तत् करोति' इति णिच् । 'ध्रुवः कीलोऽप्याणिर्लपणि' इति वैजयन्ती । विशिखैः शरैः चेतोभुवः चित्तजन्मनः, सङ्कल्पयोनित्वात् कामस्य । पञ्चभिरिति प्रसिद्धाया अपि संख्याया ग्रहणं पञ्चाङ्गयामाहतेराणिभूतैः कीलनं प्रकाशयति । तेषामविच्छिन्नपातात्तथोत्प्रेक्षणम् । चिन्तासन्ततितन्तुजालनिबिडस्यूतेव चिन्ताया अनुध्यानस्य प्रवाहश्चिन्तासन्ततिः सैव तन्तुजालं सूत्रसमूहः सूक्ष्मायतत्वात् तेन निबिडं सुश्लिष्टं यथा तथा स्यूता नुन्ना सूचीमुखनिवेशितेन तन्तुजालेन पटे पटान्तरवच्चिन्तासन्तत्या स्यूतेव । 'सूत्राणि तरितन्तवः' इति

१. 'दर्शनैरित्यादिभि क्षण' ग. घ. पाठः. २. 'त्यतिशयोऽर्थः' क. ग. घ. छ. पाठः, ३. 'अन्यतम एव' ख. 'अन्यथैव' ज. पाठः. ४. 'सम्बन्धायित्वात्' क. पाठः. ५. 'प्रेक्षते' क. ग. घ. ङ. पाठः. ६. 'मस्माभिरित्यर्थः, ख. पाठः.

(नेपथ्ये कलकलः)

माधवः — (आकर्ण्य) अहो सम्प्रति प्रवर्तमानकौणपनिकरस्य महतः श्मशानवाटस्य रौद्रता । अस्मिन् हि—

पर्यन्तप्रतिरोधि मेदुरघनस्त्यानं चिताज्योतिषा-
मौज्ज्वल्यं परभागतः प्रकटयत्याभोगभीमं तमः ।

---

वैजयन्ती । स्यूतेति बन्धनार्थस्य सीव्यतेः निष्ठान्तस्य रूपम् । इवशब्दोऽत्र सर्वत्रोत्प्रेक्षाद्योतकः । चकाराः पादपूरणार्थाः । 'तु हि च स्म ह वै पादपूरणे' इति वचनात् । असदर्थपदाद्धरं हि निरर्थकत्वं दोषः । यत एव लग्ना, अतस्तन्मय-मिव करोति । ततश्च सन्दर्शनतदभावयोः स्वल्पो विशेष इति पूर्वपूर्वस्योत्त-रोत्तरो हेतुत्वेनोपात्तः । ततश्च सन्दर्शनप्रायेण सङ्कल्पसमागमेन, किञ्चिदावेग-शान्तिः प्रकाश्यते । उत्प्रेक्षालङ्कारः ॥ १० ॥

अहो संप्रतीति अहो इत्याश्चर्यद्योतकम् । कालविशेषाद् बलोपलम्भं तामसानां भूतविशेषाणां प्रकाशयति । तदेवाह—सम्प्रतीति । कृष्णचतुर्दशीप्र-दोषस्य वर्तमानत्वादित्यर्थः । 'अज्ज कसणचउद्दसि त्ति' इत्युक्तत्वात्, 'कसण-चउद्दसिए महामसाणे' इति वक्ष्यमाणत्वाच्च । तामसानां च निशा बलकरी । किं पुनर्भूतदिनस्य कृष्णचतुर्दश्याः सम्बन्धिनी ।

"ततो हि बलिनो रात्रावसुरा देवता दिवा ।"

इति श्रीविष्णुपुराणवचनात् । प्रवर्धमानबलैर्नाचार्यमाणः प्रवर्तमानः सञ्च-रितुमारभमाणः कौणपानां शवाशनानां रक्षःपिशाचानामित्यर्थः । निकरः समूहो यस्मिन् । रौद्रता भीषणत्वम् । अस्मिन् श्मशाने ।

पर्यन्तेत्यादि । पर्यन्तप्रतिरोधि समीपदेशावारकं मेदुरघन-स्त्यानं सलिलभरिततया सान्द्रस्निग्धश्यामलो मेघ इव संहतम् । 'सान्द्र-

---

१. 'नेपथ्ये' ख. क. पाठः. २. 'माध- अहो' क. झ. पाठः. ३. 'अहो इतस्ततः प्रवर्धमान' छ. पाठः. ४. 'प्रगल्भमान' क. झ. ब. , 'इतस्ततः प्रवर्तमान' ख. घ. ज. वर्धमान' ग. ङ. पाठः ५. 'निकायस्य' क. झ. ब. पाठः. ६. 'महती श्मशान' क. ज. झ. ब. पाठः. ७. 'अत्र हि' छ. ज. पाठः. ८. 'मेदुरचयस्त्यानं' क. झ. ब, 'मेदुरपयस्तस्यां चिता' ख. पाठः.

---

१. 'निष्ठान्तरूपं' ख. पाठः. २. 'सर्वस्योत्प्रेक्षा' ग. पाठः. ३. 'तरहेतु' ख. पाठः. ४. 'नाचार्यमानः' ख. ग. घ. ङ. ज. पाठः. ५. 'देशापचारकं' ज. पाठः.

संसक्ताकुलकेलयः किलिकिलाकोलाहलैः सम्मदा-
दुत्तालाः कटपूतनाप्रभृतयः सांराविणं कुर्वते ॥ ११ ॥

स्निग्धं तु मेदुरम्' इत्यमरः । [स्त्यानं] 'स्त्यै ष्ट्यै संघातशब्दयोः' इत्यस्मान्निष्ठा । चिताज्योतिषां शवदहनकाष्ठसञ्चयज्वलनानामग्नीनाम् । औज्ज्वल्यं प्रभोन्मेषम् । [परभागः] गुणोत्कर्षः 'परभागो गुणोत्कर्षः' इति वैजयन्ती । तेन, प्रकटयति स्फुटं करोति । असितकपिलवर्णयोर्विरुद्धतया परस्परोन्मेषकरणात् । 'सम्प्रोदश्च कटच्'(५-२-२९) । आभोगभीमं विस्तीर्णतया भयावहम् । तमः तिमिरं कर्तृभूतम् । तमःशब्दोपादानात्तामसजनाह्लादकत्वं द्योत्यते । अत आह— संसक्ताकुलकेलयः संसक्ताः प्रसक्ताः आकुलाः सम्भ्रमविशिष्टाः एकोऽन्यमभिधावति, अन्योऽपरमाकर्षति, अपरः परस्मिन् पततीत्येवमादिप्रकारसंकुला इत्यर्थः; केलयः क्रीडाः यैः । किलिकिलाकोलाहलैः किलिकिलेति नीचजन्मनां हर्षशब्दानुकारः, 'ततः किलिकिलायन्ते' इति श्रीरामायणे वानरविषयत्वेनोक्तेः तद्रूपैः [कोलाहलैः] कलकलैः [सम्मदात्] 'प्रमदसम्मदौ हर्षे' (३.३.६८) इति निपातनात् सम्मदो हर्षः, ततो हेतोः । उत्ताला निर्यन्त्रणाः । कटपूतनाप्रभृतयः जरठकटप्रावृताः पिशाचीविशेषाः कटपूतनाः । अथवा पिशाचजातिविशेषाः ।

'कटधूमस्य सौरभ्यमवघ्राय व्रजौकसः ।'

इति श्रीभागवते । कटशब्देनैव पिशाच्या अभिधानात् ।

"वान्ताश्युल्कामुखः प्रेतो विप्रो भवति विच्युतः ।
अमेध्यकुणपाशी तु क्षत्रियः कटपूतनः" ॥

इति मनुवचनाच्च । टाबन्तप्रयोगश्च पिशाचस्त्रीवाचकः । पूतनचकमिति पुंवाचकस्य वक्ष्यमाणत्वात् । अत एव जात्यन्तरसंग्रहणाय प्रभृतिग्रहणम् ।

"डाकिन्यो यातुधान्यश्च कूष्माण्डा येऽर्भकग्रहाः ।
भूतप्रेतपिशाचाश्च यक्षरक्षोविनायकाः" ॥

1. 'किलकिला' क. ज. झ. ञ. पाठः

भो भोः श्मशाननिकेतनाः पूतनाः ।
स्वशस्त्रपूतनिर्व्याजपुरुषाङ्गोपकल्पितम् ।
विक्रीयते महामांसं गृह्यतां गृह्यतामिदम् ॥ १२ ॥

---

इत्यादयः पुराणपठिताः । सांराविणमभिव्याप्तं संरावम् । 'अभिविधौ भाव इनुण्' (३-३-४४), 'अणिनुणः' (५-४-१८) । सांराविणस्य प्रकारान्तरेणापि भावात्तद्व्यवच्छेदार्थं किलिकिलाकोलाहलग्रहणम् । अन्यथा सांराविणशब्देन गतार्थत्वात् । अत्र रौद्ररसो व्यज्यते । पूर्वार्धे प्रतिबलजलधिपरिवृतत्वेऽपि प्रसन्नमुखरागाणां वीराणां समाधिः । विचित्रमलङ्कारः । अपरार्धे स्वभावोक्तिः ॥ ११ ॥

अथ तदभिमुखीकारेण करपोत्क्रमारोपणं करोति । भो भो ! हे भवन्तः श्मशाननिकेतनाः पितृवनमावासो येषाम् ।

स्वशस्त्रपूतेत्यादि । स्वहस्तधृतेन शस्त्रेण खड्गेन खण्डितत्वात् पूतेन शुद्धेन ।

"गोब्राह्मणार्थे शस्त्रपूतान्तरात्मा हतः संग्रामे क्षत्रियः स्वर्गमेति ।" इति

'तव प्रयातो यम्यत्वं शस्त्रपूतो ब्रवीमि ते' ।

इत्यादिमहाभारतादिवचनेषु शस्त्रपातस्य पापहरत्वावगमात् पूतत्वोक्तिः । तदर्थमेव च कृपाणपाणिरिति शस्त्रधारणोक्तिः । ततः पूर्वं पश्चाच्च शस्त्रधारणस्य प्रसङ्गाभावात् । अशस्त्रपूतेति तु पाठे पूतत्वनिषेधादपूतत्वविधेर्विरुद्धत्वं स्फुटमेव । निर्व्याजेन षण्ढरोगादिदग्धव्रणितत्वादिदोषरहितस्य पुरुषस्याङ्गेन मनुष्यस्य मेध्यावयवेनोपकल्पितं युष्मदर्थे संस्कृतम् । विक्रीयते अस्मदभिलषितेन मूल्येन विनिमीयते । गृह्यतां स्वीक्रियताम् । वीप्सया सादरत्वं ध्वन्यते ॥ १२ ॥

---

१. 'भवत्याघोषयामि तावत् । भोः' क. 'तदुच्चैराघोषयामि । भोः' ज. 'भवत्याघोषयामि तावत् । (उच्चैः) भोः' झ. ब. पाठः. २. 'नाः कटपूतनाः' क. छ. ज. झ. ज. पाठः. ३. 'अशस्त्रपूतमव्याजं पुरुषा' क. ज. झ. ज. पाठः. ४. 'मिति' ज. पाठः.

---

१. 'प्रबलजलधि' ज. पाठः. २. 'रोगिदग्ध' छ. ज. पाठः. ३. 'दभिप्रेषितेन' ग. घ. पाठः.

(पुनर्नेपथ्ये कलकलः ।)

माधवः — कथमाघोषणानन्तरमेव सर्वतः समुच्चरदुत्तालतुमुलाव्यक्तकलकलाकुलः प्रचलित इवाविर्भवद्भूतसङ्कटः श्मशानवाटः । आश्चर्यम् —

कर्णाभ्यर्णविदीर्णसृक्कविकटव्यादानदीप्ताग्निभि-
र्दंष्ट्राकोटिविशङ्कटैस्तत इतो धावद्भिराकीर्यते ।

---

आघोषणा उच्चैर्घुष्टं तदनन्तरमेव समुच्चरता समन्तादुद्गच्छता तुमुलेन सङ्कुलेनात एवाव्यक्तेनास्फुटाक्षरेण कलकलेनाकुलः संक्षोभितः । प्रचलितः स्वस्थानादुद्घाटित इव । तत्र हेतुः आविर्भवद्भूतसङ्कटः प्रत्यक्षीभवद्भूतसङ्कटः प्रमथैर्निबिड इति तन्मूलेन भूकम्पेन । अथवा —

'ओसुम्मन्तजलक्किअफइवलवळन्ताळोअं ।
दीसइ ममन्तविहदं थाणप्फिडिआडिट्ठिलं पडन्तं व णहं ॥'
(IV. 54.)

इति सेतूक्तन्यायेन भूतसम्भ्रमलक्ष्यालक्ष्यस्वरूपतया कलकलेश्च प्रचलित इवेत्युत्प्रेक्षा । आश्चर्यमित्यदृष्टपूर्वदर्शनाद् विस्मयं प्रकाशयति ।

कर्णाभ्यर्णेत्यादि — कर्णयोः श्रवणपाश्योरभ्यर्णाभ्यामासन्नाभ्याम् ।

'समीपनिकटाभ्यर्णाभ्यग्राभ्याशान्तिमा भुवः ।
एते शब्दाः समीपाद्या धर्मे क्री तद्वति त्रिषु ॥'

---

१. 'माध — (आकर्ण्य) कथ' छ. घ. पाठः. २. 'समुच्चलदुत्ताल' क. ङ. झ. ञ. पाठः. ३. 'तालवेतालमुक्ततुमुला' क. झ. ञ. पाठः. ४. 'आश्चर्यमाश्चर्यं — कर्णा' छ. पाठः ५. 'स्रक्कविकट' क, ज. झ ञ, 'सक्किविकट' ग. पाठः. ६. 'विशङ्कटैः' क. झ. ञ. पाठः. ७. 'दैरित इतो' क. ङ. ज. झ. ञौ 'दैरत इतो' घ. पाठः.

---

१. 'निबद्ध इति' घ. पाठः.

विद्युत्पुञ्जनिकाशकेशनयनभ्रूश्मश्रुजालैर्नभो
लक्ष्यालक्ष्यविशुष्कदीर्घवपुषामुल्कामुखानां मुखैः ॥ ११ ॥

इति वैजयन्ती । 'अभेश्चाविदूर्ये' (७-२ २५) इत्यभेरिडभावः । विदीर्णाभ्यां अत एव विशेषतो भिन्नाभ्याम् । 'दॄ विदारणे' इत्यस्मान्निष्ठा । सृक्वभ्याम् । 'प्रान्तावोष्ठस्य सृक्वणी' इत्यमरः । विकटेन विरूपेण, व्यादानेन आस्यविवरणेन । 'विकटं च विरूपं स्यात्' इति वैजयन्ती । दीप्ताग्निभिः प्रज्वलितदहनैः, तज्जातिस्वाभाव्यादत एव चोल्कामुखसंज्ञा । दंष्ट्राकोटिविशङ्कटैः महादन्तानामग्रेषु विशालैः, विशङ्कटदंष्ट्रैरित्यर्थः । विसङ्कटैरिति वा पाठः । विशेषतो निबिडैरित्यर्थः ।

'मध्यदन्ता राजदन्ता दंष्ट्रा तत्पार्श्वयोर्द्वयोः ।'

इति वैजयन्ती । तत इत इत्यामिषगवेषणाकुलत्वं द्योत्यते । धावद्भिरिति मुखविशेषणत्वेनोक्तिः शरीराणां क्वचिदवस्थानेऽपि कन्धराणां तु दैर्घ्याच्चेषां दिगन्तभ्रान्तिं प्रकाशयितुम् । अन्यथा धावतामिति वक्तव्यम् । आकीर्यते सन्तन्यते । विद्युत्पुञ्जनिकाशकेशनयनभ्रूश्मश्रुजालैः [विद्युत्पुञ्जनिकाशानि] तटित्समूहवत् कपिलवर्णानि, केशानां शिरस्यबालानां [नयनानाम्] नेत्राणां [भ्रूणाम्] तदुपरिलोमपालीनां श्मश्रूणां चिबुकरोम्णां च जालानि येषाम् ।

'निकाशाद्यास्तु साम्यार्थाः समे स्युः शब्दतः पराः ।'

इति वैजयन्ती । लक्ष्याणि दीर्घाकारत्वाद् अलक्ष्याणि विशुष्कतया सूक्ष्मत्वाच्च वपूंषि शरीराणि येषाम् । लक्ष्यालक्ष्येत्यत्र पाठक्रमादर्थक्रमस्य बलीयस्त्वादर्थक्रमोऽनुसन्धेयः । अलक्ष्यालक्ष्येति वा पदच्छेदः । अलक्ष्याण्यालक्ष्याणि चेत्यर्थः । उल्कामुखानाम् उ(न्मु ? स्मु)कलक्षणा ज्वाला येषां मुखे ते उल्कामुखा इति पिशाचविशेषाः;

१. 'विहरजेन' ख. ग. घ. छ. पाठः. २. 'स्वभावादत' क. पाठः. ३. 'णाद्याकुलत्वं' क. ग. घ. छ. ज. पाठः. ४. 'कन्धरातन्तुदैर्घ्यात्' ख. ग. छ. ज. पाठः. ५. 'षां गगनभ्रान्तिं' क. पाठः. ६. 'क्ष्येति पाठ' क, 'क्ष्येऽत्र पाठ' ख. घ. छ, पाठः.

अपि च—

एतत्पूतनचक्रमक्रमकृतग्रासार्धमुक्तैर्वृका-
नुत्पुष्णत्परितो नृमांसविघसैरार्दर्दरं क्रन्दतः ।
खर्जूरद्रुमदघ्नजङ्घमसितत्वङ्नद्धाविष्कृत-
स्नायुग्रन्थिघनास्थिपञ्जरजरत्कङ्कालमालोक्यते ॥ १४ ॥

---

"ज्वलन्मुखोल्काविचितामिषाभिः संबाध्यते राजपथः शिवाभिः ।"

इति यथा क्रोष्टुविशेषाः । अत्र रौद्ररसो व्यज्यते । प्रकरणेऽस्मिन् भाविकमलङ्कारः, स्वभावोक्तिर्वा ॥ १३ ॥

अथ विचितलब्धनरपिशितानां तेषां चेष्टाविशेषान् शरीरसंस्थानं चाह, मुख्यानां वर्णितत्वात्—अपि च ।

एतत्पूतनचक्रमित्यादि । पूतनशब्देन पुंपिशाचाः कथ्यन्ते, तेषां चक्रं समूहम् । पौतनचक्रमिति वा पाठः; पूतनासम्बन्धि चक्रम् । अक्रमकृतग्रासार्धमुक्तैः आग्रहादक्रमकृतेन ग्रासेन सरभसप्रयुक्तेन चर्वणेन, अर्धमुक्तैः अर्धेन समभागेन त्यक्तैः । वृकान् वनशुनः । 'कोकस्त्वीहामृगो वृकः' इत्यमरः । उत्पुष्णत् अतिशयेनाप्याययत् । परितः समन्तात् । नृमांसविघसैः नरमांसशेषैः ।

'अमृतं विघसो यज्ञशेषभोजनशेषयोः ।'

इत्यमरः । आर्दर्दरं क्रन्दतः पिशितपूरितमुखविवरतया किञ्चित् परुषं भषतः, परस्परकलहादित्यर्थः । दर्दरघर्घरगद्गदादयः शब्दविकारवाचकाः । 'युद्धध्वाने क्रन्दनरोदने' इति वैजयन्ती । खर्जूरद्रुमदघ्नजङ्घं खर्जूरो नाम तालतरुप्रमाणस्तृणद्रुमविशेषः ।

'...अथ मधुक्षीरो महारसः ।
पक्षपः पाण्डुखर्जूरी......'

इति वैजयन्तीः

"खर्जूरं केतकी ताली खर्जूरी च तृणद्रुमाः ।"

---

१. 'मुक्तैर्वृका', २. 'त्पुष्णन् परितो' क. पाठः. ३. 'रार्धघरं' क. ख. ग. पाठः. ४. 'द्रुदघ्नजङ्घ' ख. पाठः.

---

१. 'शेषं शरीर' ख. ज. पाठः. २. 'उत्पुष्णन्', ३. 'प्याययन्' क. ग. घ. पाठः. ४. 'भरतः' ख ज. पाठः. ५. 'विशेषवाचकाः' ग. ज. पाठः.

(समन्ताद्विलोक्य विहस्य च)

अहो प्रकारः पिशाचानाम् —

इत्यमरः । तत्प्रमाणे जङ्घे, जानुगुल्फयोरन्तरालप्रदेशो, यस्य । 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः' (५-२-३७) इत्यत्र, यद्यपि

'प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ मम ।'

इति महर्षिवचनाद्दघ्नच्प्रत्ययेनोर्ध्वमानं प्रकाश्यते तथापि उपमानविशेषग्रहणे-नाबोधः स्थवीयस्त्वमुपर्युपरि तनीयस्त्वं च धर्मसाहचर्याज्जङ्घयोः प्रत्याय्यते । अत एव शेषाङ्गानां दैर्घ्यवैरूप्ये व्याख्याते । तत्र वर्णविशेषं धातुत्रयविरहं चाह— असितत्वङ्नद्धविष्वक्ततस्नायुग्रन्थिघनास्थिपञ्जरजरत्कङ्कालं असितया कृष्णवर्णया त्वचा चर्मणा नद्धं बद्धम्, आच्छादितमिति यावत्, विष्वक्त-ताभिः सर्वतो व्याप्ताभिः स्नायुभिः सन्धिबन्धिनीभिः नाडीभिः यो ग्रन्थि-ग्रथनं, तेन घनं संहतम्, अशिथिलसंस्थानमित्यर्थः, अस्थिपञ्जरं दारुकृतशकुनिः कुलायवदुच्चावचत्वेन स्थितान्यस्थीनि कीकसानि यस्मिन् तच्च, जरच्च चिर-कालजीवि, अथवा जरच्छब्देन जराकार्यमवसादनं लक्ष्यते, अवसीदच्च कङ्कालं कायास्थि यस्य, अन्वर्थो पलितत्वादिविशिष्टस्य जरणस्य देवयोनित्वात् तेष्वनुपपत्तेः ।

'नखास्तु करजा ज्ञावः स्नायवो सन्धिबन्धनम् ।'

इति

'कङ्कालोऽस्त्री तनोरस्थि करङ्कोऽप्यस्थिपञ्जरम् ।'

इति वैजयन्ती ।

'स्नायुन्यासनिबन्धकीकसतनुर्नृत्यन्तमालोक्य माम् ।'

इति बालरामायणेऽप्युक्तम् । अत्र बीभत्सस्य रौद्राद्भुतयोर्वा व्यक्तिः ॥ १४ ॥

समन्ताद्विलोक्येति — बहुत्वात् बहुप्रकारत्वाच्च कचित् स्थिताना-

---

१. 'न्तादवलोक्य' क ख. ज झ. ञ पाठः. २ 'चानाम् । एते हि —' क ख ञ, 'चानाम् । यतः —' ङ, 'चानाम् । ततः —' जं पाठः

---

१, 'लग्नन्धमित्यर्थः' क. पाठः २. 'कार्यवसादनं' ख. 'कार्यमवसानं' ग घ. पाठः ३. 'अवसीदच्च' ख ज पाठः ४. 'धात्पाक्षितत्यादि' क. ग. घ. ज. पाठः. ५. 'अत्र रौद्रस्य वीराद्भुतयोर्वा' ज पाठः.

ततपृथुरसनोग्रमास्यगर्त्तं[1]
दधति विदार्य विशुष्कदीर्घदेहाः[2] ।
गलदजगरघोरकोटराणां[3]
द्युतिमिह दग्धपुराणरोहणानाम्[4] ॥ १५ ॥

---

मेकप्रकारः अन्यत्र स्थितानामन्यः प्रकार इति प्रकाशयितुम् । विहस्येति अद्भुतव्यञ्जकत्वादुक्तिः । अहो आश्चर्यभूतः, प्रकारः स्वभावविशेषः ।

ततपृथ्वित्यादि । ततया भक्षलोभप्रसारितया पृथ्व्या स्वतो विपुलायतया रसनया जिह्वया उग्रं भीमम् । 'रसज्ञा रसना जिह्वा' इति वैजयन्ती । आस्यगर्त्तं आस्यं मुखं तस्य गर्त्तं, लक्षणया विवरम् । 'गर्तावटौ भुवि श्वभ्रे' इत्यमरः । विदार्य व्यादाय । विशुष्कदीर्घदेहा इति पूर्वोक्तानुवादः । गलदजगरघोरकोटराणां गलद्भिः अवशं[1] निस्सरद्भिरजगरैर्महोरगविशेषैर्घोराः कोटराः कन्दररन्ध्राणि[2] येषाम् । 'वाहसोऽजगरः शयुः', 'निष्कुटः कोटरो न स्त्री' इति च वैजयन्ती । इह च श्मशाने । दग्धपुराणरोहणानां[3] दवदग्धानामत एव कृष्णवर्णानां चिरकालजातत्वाद्दीर्घाणां चन्दनानां असितत्वङ्नद्धानां विशुष्कदीर्घाणां चोपमेयत्वाद्दग्धत्वपुराणत्वोक्तिः । दग्धत्वाद् गलनौचित्यम् ।

'चन्दनोऽस्त्री मलयजो भद्रश्री रोहणद्रुमः ।'

इति वैजयन्ती । शैत्यहेतोर्भुजङ्गमसङ्गमौचित्याच्चन्दनग्रहणम्,

'पटीरतरुकोटरमध्यमध्यासीना भुजगयुवतयः ।'

इति मुरारिप्रयोगात्, 'व्यालीव मलयद्रुमम्' इति रघुवंशोक्तेश्च । न्यग्रोधानां वा,

---

१. 'पृथुतररसनो' छ, 'पृथुचलरसनो' ज पाठ. २. 'विवर्णदीर्घ' क. झ. ञ. 'विशीर्णशुष्कदेहाः' ज. पाठः. ३. 'ललदजगर' क झ. ज, 'चलदजगर' ज पाठः ४. 'रोहिणानां'. क. ख. ङ छ. ज. झ. ञ. पाठः.

---

१. 'अवशानिस्सर' ग. घ. छ. पाठः. २. 'राः स्कन्धरन्ध्राणि' क. ज. पाठः. ३. 'रोहिणानां' ख. पाठः. ४. [illegible] पाठः.

(परिक्रम्यावलोक्य)

हन्त! अतिबीभत्समग्रतो वर्तते

उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूच्छ्रायभूयांसि मांसा-
न्यंसस्फिक्पृष्ठपिण्डाद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा ।

---

'रोहणसमिधासयुतं जुहुयान्मन्त्री ततस्स श्मशानाम् ।
सर्वापदां विमुक्त्यै सर्वसमृद्ध्यै महादिशान्त्यै च ॥'

इति प्रपञ्चसारोक्तेः । अत्राद्भुतो वा रौद्रो वा रसो व्यङ्ग्यः । दृष्टान्तोऽलङ्कारः, पिशाचस्य गर्तरसनानां रोहणकोटराजगराणां च बिम्बप्रतिबिम्बभावेन निर्देशात् । निदर्शना च, तिं दधतीत्यत्र द्युतिसदृशीं द्युतिमित्युपमापरिकल्पनात् ॥ १५ ॥

अतिबीभत्सम् अत्यन्तघृणावहम् । कर्मेति शेषः ।

उत्कृत्योत्कृत्येति — छित्त्वा छित्त्वा । 'कृती छेदने' इति धातुः । कृत्तिं त्वचम् । नृमांसविघसैरिति नृशरीरस्य प्रस्तुतत्वात् नृशरीरस्येत्यायाति । तच्च कृत्यादिभिः सर्वैः सम्बध्यते ।

'त्वक् स्त्री छदिस्तनुः कृत्तिः सम्छादन्यप्यसृग्धरा ।'

इति वैजयन्ती । प्रथममादौ । जग्ध्वेत्यत्रापि सम्बध्यते । अथ तदनन्तरं पृथूच्छ्रायभूयांसि विपुलेषु उन्नतेषु च स्थलेषु बहुतराणि ।

'विशालमुरु विस्तीर्णं विपुलं पृथुलं पृथु ।'

इति वैजयन्ती ।

---

१. '(परिक्रम्य)' क. ङ, '(परिक्रम्याग्रतो विलोक्य)' ख, '(परिक्रम्याग्रतोऽवलोक्य)' घ. पाठः. २. '(कद च)' ज. म. पाठः. ३. 'हन्त बीभत्समेवाग्रे वर्तते' क. ङ. ज, 'हन्त बीभत्समिह वर्तते' छ. पाठ. ४. 'पृथूच्छोथभूयांसि' क. 'पृथूत्सेधभूयांसि, छ. ज. 'पृथूच्छोभभूयांसि' ङ. ञ. ब. पाठः. ५. 'न्यस्थिस्फिक्' क. पाठः. ६. 'पिण्डाद्यवयव' क, 'पीठाद्यवयव' ज. पाठः.

---

१. 'तलरसनानां' ज. पाठः २. 'नाम् । इति', ३. 'छित्त्वा भित्त्वा' ४. 'कृती भेदने इति' क. ख. ग. घ. ङ. पाठः.

आत्तस्नाय्वान्त्रनेत्रः[2] प्रकटितदशनः प्रेतरङ्कः करङ्का-
दङ्कस्थादस्थिसंस्थं[3] स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥ १६ ॥

'नगाद्यारोह उत्सेध उच्छ्रायश्चोच्छ्रयश्च सः ।'

इत्यमरः । अंसस्फिक्पृष्ठपिण्डाद्यवयवसुलभानि[1] अंसं बाहुशिखरं, स्फिग् ऊरुमूलं बाह्यपिण्डं पृष्ठम् अपरभागः, पिण्डं जङ्घामध्यप्रदेशः, आदिशब्देन स्तनजघनादिग्रहणम्, एतत्प्रकारेष्वङ्गेषु सुप्रापाणि । 'स्कन्धो भुजशिरोऽसोऽस्त्री',

'ऊरू पुंसि कटिप्रोथौ पूलकौ च स्फिजौ स्त्रियौ ।
पश्चिमाङ्गं तनोः पृष्ठं पिण्डिका स्यात् पिचण्डिका ॥'

इति च वैजयन्ती । [उग्रपूतीनि] दुःसहः पूयवद् गन्धो येषाम् । 'विस्रो मकृति पूये तु पूतिः' इति वैजयन्ती । जग्ध्वा भक्षयित्वा । 'जक्ष भक्षहसनयोः' इत्यस्य क्त्वान्तस्य रूपम् । आत्तस्नाय्वान्त्रनेत्रः स्वीकृतानि स्नायूनि सन्धिबन्धनसिराविशेषाः, आन्त्राणि पुरीतदाख्यानि, नेत्राणि चक्षुर्मांसानि च येन । आङ्पूर्वस्य ददातेश्च उपसर्गात्तः । प्रकटितदशनः प्रकाशितदन्तपङ्क्तिः, हर्षहासविवृतमुखत्वात् । प्रेतरङ्कः पिशाचः । करङ्कात् शरीरास्थिपञ्जरादपादानाद् आत्तस्नाय्वान्त्रनेत्रः । त्वङ्मांसानामुपक्षयेणास्थ्नामेव शिष्टत्वात् करङ्कग्रहणम् ।

'कङ्कालोऽस्त्री तनोरस्थि करङ्कोऽप्यस्थिपञ्जरम् ।'

इति वैजयन्ती । अङ्कस्थात् आदरातिशयेनोत्सङ्गे स्थापितात् । अस्थिसंस्थस्थपुटगतम् अस्थिस्थितानि स्थपुटानि विषमोन्नतस्थानानि । 'स्थपुटं विषमोन्नतम्' इति वैजयन्ती । अपीत्यन्यत्र सर्वत्र भक्षितत्वात् । क्रव्यं मांसम् । अव्यग्रम् अत्वरितम्, तस्य प्रयत्नहार्यत्वात् । 'विहस्तो व्याकुलो व्यग्रः' इति । अत्ति भक्षयति । 'अद भक्षणे' इत्यस्माल्लटि रूपम् । अत्र बीभत्सरसो ध्वन्यते ॥ १६ ॥

---

१. 'आर्तः पर्यस्तनेत्रः' क. पाठः. २. 'स्नाय्वन्त्रनेत्रः' झ. ज. पाठः. ३. 'संस्थं स्थपुट' क. ज. झ. ञ. पाठः.

---

१. 'पिण्डाद्यवयव', २. 'पिण्डी जङ्घा' ज. पाठः. ३. 'जङ्घामध्यः, आदि' ञ. पाठः. ४. 'पिण्डिका' ज. पाठः. ५. 'स्थपुटानि प्राणम् । स्थपुटं', ६. 'क्रव्यं महामांसं' ञ. ज. पाठः.

अपि च—

निष्टापस्विद्यदस्थ्नः क्वथनपरिणमन्मेदसः प्रेतकाया-
नाकृष्यासक्तधूमानपि कुणपभुजो भूयसीभ्यश्चिताभ्यः ।
उत्पक्वस्रंसिमांसं प्रचलदुभयतः सन्धिनिर्मुक्तभारा-
देते निश्चूष्य जङ्घानलकमुदयिनीर्मज्जधाराः पिबन्ति ॥ १७ ॥

अथ प्रकारान्तरेण बीभत्सत्वमाह — अपि च । निष्टापेत्यादि— निष्टापस्विद्यदस्थ्नः निष्टापेन किञ्चिदग्निना तापितत्वात् स्विद्यन्ति पच्यमानानि अस्थीनि येषाम् । अनेन मृदुमांसभूयिष्ठत्वमाह । 'अथास्थि कीकसम्' इति वैजयन्ती । 'ञिष्विदा गात्रप्रक्षरणे' इत्युक्तोऽपि स्विद्यतिरत्र पाके वर्तते, अनेकार्थत्वाद् धातूनाम् ।

'बीतत्वगास्थिकूश्माण्डतुलां स्विन्नां पुनः पचेत् ।
सुधौतः सुतः स्वि(न्नस्य ? न्नोऽस्य)ष्मा चौदनो कवुः ॥'

इति वैद्यकवचनात् । क्वथनपरिणमन्मेदसः क्वथनेन पाकेन परिणमत् स्नेहरूपेण निर्गच्छत् मेदो येषाम् ।

'.... .... मेदस्तु पक्वतेजः पलोद्भवम् ।
विस्रमस्थिकरं स्नेहवरम् ... ... ....'

इति वैजयन्ती । प्रेतकायान् मृतानां शरीराणि, शवानिति यावत् । आकृष्य परतो नीत्वा । आसक्तधूमान् समन्ताद् बद्धधूमान्, ऊष्मणोऽशान्तत्वात् । अपीत्याग्रहात् कालक्षेपाक्षमत्वं प्रकाश्यते । कुणपभुजः शवाशना इत्यनेन त्वराया औचित्यं प्रतीयते । भूयसीभ्यः बहुतराभ्य इति चितानां बाहुल्यात् । मेदस्विनामपि शवानां बहूनां लाभाद्धर्षो व्यज्यते । उत्पक्वस्रंसिमांसं उत्तमेन पाकेनास्थिभिरीषदप्यसक्तं गलन्मांसं यस्य । प्रचलत् स्वस्थानात् भ्रश्यत् । तत्र हेतुः— उभयतः सन्धिनिर्मुक्तं द्वयोर्भागयोरुपर्यधश्च जानुगुल्फसन्धिभ्यां विश्लिष्टमित्यर्थः । आरादन्तिके इति स्पष्टदृष्टसर्वचेष्टत्वमाह । निश्चूष्य आकुञ्चिताधरपुटद्वयवायुनान्तराकृष्य ।

१. 'परिगलन्मेदसः' छ. ज. पाठः. २. 'कायाल्कृष्टासक्त' क. ज. झ. ञ, 'कायानुत्कृष्यासक्त' छ. पाठः. ३. 'निष्कुष्य' क. झ. ञ., 'निष्कृष्य' ज. पाठः.

१. 'बीभत्सितत्वमाह' ज. पाठः. २. 'सुधौतस्सुत' ज. पाठः ३. 'चौदनो' क. ख. ग. घ. छ पाठः. ४ 'दृष्टचेष्टत्व' ज. पाठः.

(विहस्य) अहो प्रादोषिकः प्रमोदः पिशाचानाम्[1] ।

आन्त्रैः[2] कल्पितमङ्गलप्रतिसराः स्त्रीहस्तरक्तोत्पल-

व्यक्तोत्तंसभृतः पिनह्य[3] सहसा हृत्पुण्डरीकस्रजः ।

---

जङ्घानलकं जङ्घानामस्थि । जातावेकवचनम् । नलकानीत्यर्थः । मज्जधाराणां बहुत्वोक्तेः । 'शास्वानि नलकम्' इति वैजयन्ती । उदयिनीः विलीनतया चूषणमात्र एव निर्गच्छन्तीः । मज्जधाराः तदन्तर्गतस्नेहस्रोतांसि ।

'मज्जा स्त्री कौशिकं सूक्ष्ममस्थितेजोऽस्थिसम्भवम् ।

'अस्थिस्नेहो वीर्यकरः ··· ··· ···॥'

इति वैजयन्ती । अत्रापि बीभत्स एव रसः प्रतीयते । आरभटी वृत्तिः,

'··· ··· ···आरभटी पुनः'

'रसे रौद्रे सबीभत्से ··· ··· ···।' इति ।

'मायेन्द्रजालसंभ्रामक्रोधोद्भ्रान्त्यादिचेष्टितैः ।'

इति वचनात् स्वभावोक्तिः स्फुटैव ॥ १७ ॥

विहस्येति । स्वयं शृङ्गारितत्वाच्चेषां[1] बीभत्सरसमपि शृङ्गारत्वेनाभिमन्यमानश्चमत्करोति । प्रादोषिकः प्रदोषे रजनीमुखे भवः । 'तत्र भवः'(४-३-५३) इति ठक् । प्रमोदो हर्षः । पिशाचानां पिशाच्यः पिशाचाश्च पिशाचाः; 'पुमान्स्त्रिया' (१. २. ६७) इत्येकशेषः, तेषाम् ।

आन्त्रैः कल्पितेत्यादि । कल्पितमङ्गलप्रतिसराः कल्पितो निर्मितोऽभ्युदयार्थः प्रतिसरः कौतुकहस्तसूत्रं यासाम् । 'हस्तसूत्रं प्रतिसरः' इति वैजयन्ती । स्त्रीहस्तरक्तोत्पलव्यक्तोत्तंसभृतः मृतानां स्त्रीणां हस्ता एवारुणसुकुमारत्वाद्रक्तोत्पलान्यरुणकमलानि, 'अथ रक्तसरोरुहे । रक्तोत्पलं कोकनदं' इत्यमरः, तद्रूपं व्यक्तमुज्ज्वलमुत्तंसं शेखरं बिभ्रतीति तास्तथा । पिनह्य प्रालम्बत्वेन कण्ठे बद्ध्वा । अपिपूर्वान्नह्यतेरल्लोपे ल्यपि च रूपम् ।

'वष्टि[3] भागुरिरल्लोपमवाप्योरुपसर्गयोः ।'

'धाञ्क्रुञोस्तनिनह्योश्च बहुलत्वेन शौनकिः ।'

इत्यल्लोपः । सहसेति म्लानत्वपरिहाराय । हृत्पुण्डरीकस्रजः मन इन्द्रियाधार-

---

१. 'पिशाचाङ्गनानाम् ।' क. ज. पाठः. २. 'नाम् । तथाहि— अन्त्रैः' क. ख. ब. पाठः; ३. 'पिनंह्य' घ. पाठः.

---

१. 'शाङ्गादि' क. ग. घ. ङ. छ. ज. पाठः. २. 'शृङ्गारिकत्वाद्' ब. पाठः. ३. 'वष्टि बागुरि' ख. ग. घ. ङ, छ, ज, पाठः.

एताः शोणितपङ्ककुङ्कुमजुषः सम्भूय कान्तैः पिब-
न्त्यस्थिस्नेहसुराः कपालचषकैः प्रीताः पिशाचाङ्गनाः ॥१८॥

(परिक्रम्य) भो! भोः! श्मशाननिकेतनाः पूतनाः। (स्वगत्रपूतेति पुनः पठित्वा) कथं नामातिप्रशान्तविभीषणविभीषिकाप्रकारैर्झटित्यप-

---

भूतानां पद्माकाराणां हृन्मांसपिण्डानां मालाः रुधिरकर्दममेव सान्द्रारुणत्वात् कुङ्कुमं जुषन्ति सेवन्त इति शोणितपङ्ककुङ्कुमजुषः। सम्भूय समेत्य। कान्तैः प्रियतमैः। अस्थिस्नेहसुराः मज्जधारारूपा मदिराः। कपालचषकैः शिरोऽस्थिमयैश्चषकैः, तेषां तुल्याकारतया पानसाधनत्वोपपत्तेः।

'सरकं चषकं चास्त्री गल्वर्कोऽप्यनुकर्षणम्।'

इति वैजयन्ती। प्रीताः सर्पात्या संहृष्टाः। अन्त्रान्त्रादिपदानां जुगुप्साद्योतकानामपि मङ्गलप्रतिसरादिपदैरन्तरान्तरितैरश्लीलत्वं परिहृतम्। 'शृङ्गारिणो हि जगदपि शृङ्गारमयं पश्यन्तीति गुणत्वेन विश्रान्तेः' इति भोजः। अत्र शृङ्गारः प्रतीयते। रूपकं चालङ्कारः॥ १८॥

पुनरिति पूर्वपठितत्वात्। आघोषणायाश्च यावत्प्रयोजनलाभं विधेयत्वान्न पुनरुक्तिदोषः। कथं नामेत्याश्चर्ये। अतिप्रशान्तविभीषणविभीषिकाप्रकारैः विशेषेण भीषणा भीरूणां भयावहाः, विभीषिकाप्रकाराः बुद्धिपूर्वाः भ्रुकुटिबद्धभ्रूभङ्गमुखकुहरव्यादानादयस्त्रासनविशेषाः अत्यन्तमेव प्रशान्ताः उपरता येषाम्। अनेनैतद्दर्शनेनाघोषणाश्रवणेन च प्रत्युत तेषामेव भीतत्वं प्रकाश्यते। ततश्च बाल्याद्विषमाभिषङ्गशङ्कुलितत्वाच्च अकार्यप्रवृत्तस्यापि सत्त्वप्रकृतेर्वृत्ताध्ययनसम्पन्नस्य ब्राह्मणस्य पुरतस्तामसानां भूतानां स्थातुं न शक्तिर्विद्यत इति व्यज्यते।

---

१. '(परिक्रम्य पुनरत्राह्वेति पठित्वा) कथं' क. छ. ज. झ. ञ, '(परिक्रम्याग्रतो विलोक्य) भो' ख. घ. पाठः. २. 'कथं त्रागतिप्रशान्त' क., 'कथं नाम प्रशान्त' छ. झ. ञ, 'कथं नामातिभीषण' ज. पाठः. ३. 'न्तभीषणभीषिका' क., 'न्तभीषणविभीषिका' ग. छ. झ. ञ. पाठः. ४. 'विकारैः' घ. ङ. पाठः.

---

१. 'रुधिररसमेव', २. 'सन्तुष्टा' ज. पाठः. ३. 'रन्तरान्तरानीतैः' ञ. ज. पाठः. ४. 'कुहरकन्दरव्या' ज. पाठः. ५. 'व्यादरणादय' ख. ग. पाठः.

1787

क्रान्तं पिशाचैः । अहो निरस्सत्त्वता । (सनिर्वेदं) विचितश्चैव सर्वतः[1] श्मशानवाटः ।

"यो ब्रह्मिः स द्विजो विप्रैर्मन्त्रदर्शिभिरुच्यते ।",

"लोकानन्यान् सृजेयुर्ये लोकपालांश्च कोपिताः ।
देवान् कुर्युरदेवांश्च कः क्षिण्वंस्तान् समृध्नुयात् ॥",

"श्मशानेष्वपि तेजस्वी पावको नैव दुष्यति ॥",

"एवं यद्यप्यनिष्टेषु वर्तते सर्वकर्मसु ।
सर्वथा ब्राह्मणः पूज्यः परमं दैवतं हि सः ॥",

इति मनुवचनात् । झटिति शीघ्रम्, अपक्रान्तं पलायितं इति भावे निष्ठा । अत्र भयानकरसो व्यज्यते । अथ धीरप्रशान्ततया तद्भीतिः स्वमहिममूलत्वमसम्भावयन्नाह — निस्सत्त्वता निरस्तमनोबलत्वम् । सनिर्वेदं निर्वेदसहितम् ।

'दारिद्र्यव्याधिदुःखेष्टवियोगपरिवृत्तिभिः ।
ईर्ष्यातत्त्वावबोधाभ्यां निर्वेदो नाम जायते ॥'

इत्युक्तत्वात् । अत्र बहुदेशपरिभ्रमणखेदादीप्सितार्थानिष्पत्तेश्च[2] मनसः प्रवृत्तिषु कुण्ठता निर्वेदः । विचितः अन्विष्टः, अस्मदभिलषितपूरकः कश्चिदत्र किं वर्तते इत्यस्मिन्नन्वेषणं कृतमित्यर्थः । अधिकरणे कर्मणि चान्विष्यत्यादेः प्रयोगो दृश्यते ।

'……समिच्चषालचमसन्व्याप्ता गृहा यज्वनाम् ।
प्रत्येकं च निरूपिताः प्रतिपदं चत्वार एवाश्रमाः ॥'

इति प्रबोधचन्द्रोदये,

'सैषा स्थली यत्र विचिन्वता त्वाम् ।'

---

१. 'त्वता पिशाचानाम् । (परिक्रम्य दृष्ट्वा सनिर्वेदं)' क. झ. ब., 'त्वाः सर्वे । (सनिर्वेदं) छ. ज. पाठः. २. 'चैष समन्ताद् श्मशानं' क. झ. ब., 'चैष सर्वतः' ब. घ., 'चैव मया सर्वतः' छ., 'चैष सर्वः श्मशानः ।' ज. पाठः.

---

१. 'दुर्मीमे' ग. घ. छ. पाठः २. 'दीप्सितार्थं च' क, 'दीप्सितानिष्पत्तेश्च' ज. पाठः.

तथा हि— खल्वियं पुरत एव

गुञ्जत्कुञ्जकुटीरकौशिकघटाघूत्कारसंवर्गित-
क्रन्दत्फेरवचण्डडात्कृतिभृतप्राग्भारभीमैस्तटैः।
अन्तःकीर्णकरङ्ककर्कर्करतरत्संरोधिकूलङ्कष-
स्रोतोनिर्गमघोरघर्घररवा पारेश्मशानं सरित्॥ १० ॥

इति रघुवंशे च प्रयोगात्। प्रकारेण न कोऽपि न सिद्धमिति दैन्यं द्योत्यते। सर्वतः सर्वस्मिन् भागे इत्यादरातिशयः सूच्यते।

तदेवोपपादयति— तथाहि खल्वियं पुरत एव। पुरतोऽग्रभाग एव न परत इत्यर्थः।

गुञ्जत्कुञ्जेत्यादि। गुञ्जतां शब्दायमानानां, कुञ्जकुटीराणां लतामण्डपनीडानाम्। 'कुटीरस्तु कुटी पल्ली' इति वैजयन्ती। कौशिकानां उलूकानाम्। 'कौशिको गुग्गुलूलूकशक्रेषु' इति वैजयन्ती। घटा लक्षणया समूहः तस्याः, घूत्कारैः घूत्कार इति शब्दानुकारः तैः, संवर्गितानां सम्मेलितानाम्। 'समरनिहतशेषवानरसुभटसंवर्गणवाल्कितसुग्रीवः',

'उन्मीलत्कमनीयनायकगुणग्रामोपसंवर्गणे।'

इति च मुरारिप्रयोगात्। क्रन्दतां फेरवाणां गोमायूनाम्। 'फेरुफेरण्डफेरवाः। मृगधूर्तो भूरिमायो गोमायुः' इति वैजयन्ती। चण्डाभिर्भयानकाभिः डात्कृतिभिः डात्कारः शब्दानुकारः, भृतैः पूर्णैस्तेषां बहुत्वात्, प्राग्भारभीमैः अतिशयेन भयदैः। पूर्वमेव श्मशानसामीप्यात् तिमिरबहुलतया च भयावहत्वात् कौशिक-फेरवकुलकोलाहले किं पुनरिति प्राग्भारग्रहणम्। 'प्राग्भारोऽतिशये तु' इत्यमरः। तटैस्तीरैः। बहुवचनं प्रदेशबाहुल्यपरम्। इत्थम्भूतलक्षणे तृतीया। अन्तःकीर्णैरभ्यन्तरे वृकशृगालकङ्कादिभिराकृष्य विक्षिप्तैः करङ्कैः शरीरास्थिभिः

१. 'तथा खल्वियं' ज. पाठः. २. 'खल्वयं — गुञ्जत्' छ. पाठः. ३. 'संवलित' ज., 'संवलित' झ. ञ. पाठः. ४. 'शीर्ण' क. छ. झ. ज. पाठः. ५. 'कर्पर' छ. ज. पाठः. ६. 'रवयःसंरोधकूलङ्कष' क. झ. ञ. पाठः. ७. 'निर्गम' ख. पाठः.

१. 'मण्डपानां' ज. पाठः. २. 'डात्कृतिभिः डात्कारशब्दा' ख. पाठः. ३. 'भयावहत्वं' क. पाठः. ४. 'काकादिभिः' घ. पाठः.

(नेपथ्ये)[1]

हा ताद! णिक्करुण! एसो दाणिं दे णरिन्दचित्ताराहणोवअरणं[2] जणो विवज्जइ।

(हा तात! निष्करुण! एष इदानीं ते नरेन्द्रचित्ताराधनोपकरणं जनो विपद्यते।)

---

कर्करस्य कठिनस्य। 'कठोरः कठिनः क्रूरः कर्करः कर्कशो दृढः।' इति हलायुधः। तत्र उपरि प्लवमानस्य, संरोधिकूलङ्कषस्य स्वेच्छागमननिरोधं कषितुं बाधितुं शीलमस्येति। 'सर्वकूलाभ्रकरीषेषु कषः (३-२-४२) इति खश्। स्रोतसः प्रवाहस्य निर्गमेनाविच्छिन्नेन प्रसरणेन[1] घोरः श्रवणपरुषः, घर्घर इति शब्दानुकारः अस्निग्ध इत्यर्थः। 'घर्घराव्यक्तघोषान्' इति भट्टमयूरोक्तवत्। स रवः शब्दो यस्याः। पारेश्मशानं श्मशानस्य पारे। 'पारावारे परार्वाची तीरे' इत्युक्तेऽपि पारशब्दोऽत्र लक्षणया पर्यन्तभागमाह। 'पारे मध्ये षष्ठ्या वा' (२-१-१८) इत्यलुक्। 'नाव्ययीभावादतोऽम्त्वपञ्चम्याः' (२-४-८३) इत्यमादेशः। सरित् नदी। इयं सरित् पुरत एव खल्विति सम्बन्धः। खलुस्संवादे, दृश्यत इत्यर्थः। अत्र रौद्ररसो व्यङ्ग्यः। स्वभावोक्तिरलङ्कारः॥ १९॥

अथ 'यज्ञव्यसनोत्सवेषु' इति कामसूत्रोक्तत्वादनुरागदार्ढ्याय व्यसने संसर्गं योजयितुमुपक्रमते — नेपथ्ये। हा तातेति। हा तात! निष्करुण! एष इदानीं ते नरेन्द्रचित्ताराधनोपकरणं जनो विपद्यते। हेति विषादद्योतकमव्ययम्। निष्करुण निरस्तदयेति स्वकार्यपरतया 'कुतोऽपत्यस्नेहः' इत्युक्तस्यानुसन्धानम्। इदानीमिति दिष्ट्या वर्धसे स्वाभिलषितसिद्धिझाटित्येनेति[2] द्योत्यते। यतो निष्करुणेन त्वया छलेन मां मारयितुमेवानुचिते स्थले दानं प्रस्तुतम्। तन्मे मरणमिदानीमेव दैवादुपपादितम्[3]। अतस्तव मनोरथाः पूर्णा इति पितरि विचिकित्सायाः[4] मूलत्वं प्रकाश्यते। निष्करुणत्वमेवाह— नरेन्द्रस्य राज्ञः चित्ताराधने मनःप्रीणने उपकरणं फलकुसुमपल्लवादिवत् साधनम्, न पुनः स्नेहभाजनमिति। एष जनः अयं परिजनसाधारणो जन्तुर्न पुनः

---

१. '(नेपथ्ये) क. ग. ङ. छ. ज. झ. ञ. पाठः. २. 'अरणो' क. घ. पाठः.

---

१. 'प्रसरेण' घ. छ. पाठः. २. 'ध्यानं करोति। इदानीं', ३. 'दुरुपपादितम्' ४. 'त्वया ममूलत्वं' ख. पाठः.

माधवः— (साकूतमाकर्ण्य)

नादस्तावद्विकलकुररीकन्दितस्निग्धतार-
श्चित्ताकर्षी परिचित इव श्रोत्रसंवादमेति ।

पुत्रीति । विपद्यते म्रियते, अथवा इदानीं विपद्यते इति त्वन्मनोरथा दैवेन खण्डिता इति द्योतयति । तत्र हेतुः— नरेन्द्रेत्यादि । यतो मयोपकरणेन राजानमाराध्य ततः पूर्वस्मादधिकं भोगं समासाद्य यावत्कल्पं जीवितुं त्वया सङ्कल्पः कृतस्तदुपकरणभूता चाहमिदानीं विपद्ये इति वेरऽन्यस्मिन् द्वेषस्य दार्ढ्यं प्रकाशयते । अनया च वाचोयुक्त्या मृत्युमुखे वर्तमानाया अपि यथापूर्व एव नायिकाया नायकेऽनुराग इति प्रकाशयन्नङ्गिनो विप्रलम्भात्मनः शृङ्गार-रसस्यानुसन्धानं करोति रससुधानिर्झरोल्लासकैलासो महाकविः । हा तातेत्यादिः द्रवः, गुरुतिरस्कारात् ।

साकूतं कोऽयं कुतो वा नाद इति बुभुत्सायुक्तम्[3] ।

किञ्चित् प्रत्यभिजानानः सावेगमाह — नादस्तावदित्यादि । नादः स्वरः । तावत् प्रथममिति सादृश्यभ्रान्तिरपि सम्भावनां द्योतयति । विकल-कुररीक्रन्दितस्निग्धतारः विकलायाः कुतोऽपि दुःखाद् विवशायाः, कुर्याः क्रन्दितमिव स्निग्धोऽपरुषस्तार उच्चैस्तरश्च । 'खण्डने मौनविकलाः' इति वैजयन्ती, 'अयं च कस्माद्विकलः कथान्तरे' (viii.1) इति वक्ष्यति च ।

'क्रशनश्च विकलं वा व्याथितं बाधनं वा ।'

इति कामतन्त्रोक्तेः । कुररः क्रौञ्चविशेषः । 'उत्क्रोशकुररौ समौ' इत्यमरः । 'उच्चैस्तरो ध्वनिस्तारः' इति वैजयन्ती । चित्ताकर्षी विषयान्तरेभ्यः सद्यो हृदयमाक्रष्टुं शीलमस्य । परिचितः पूर्वमभ्यस्तः । इवशब्दः प्रकारात्, निर्वि-कारावस्थायां श्रुतस्य स्वरस्य विकृतिमये छायामात्रस्फुरणं प्रकाशयति । श्रोत्रसं-वादं श्रवणेन्द्रियस्य तथात्वेन सम्मतिम् । 'सकलहृदयसंवादभाजा साधारण्येन' इति,

१. 'कूजितस्निग्ध' क. ख. ग. घ. ङ. छ. ज. झ. ञ. पाठः.

१. 'भोगमासाद्य' ख. घ. ष. ज. पाठः. २. 'शृङ्गारस्य' क. पाठः. ३. 'बुभुत्सया युक्तं' क, 'बुभुत्सायुक्तः । किञ्चित्' ज. पाठः. ४. 'हृदयं समाक्रष्टुं', ज. पाठः. ५. 'विकृतिसमये' क, 'विकृतसमये' ज. पाठः.

अन्तर्भिन्नं भ्रमति हृदयं विह्वलत्यङ्गमङ्गं
गात्रस्तम्भः स्खलयति गतिं कः प्रकारः किमेतत् ॥ २० ॥

करालायतनादस्मादुच्चरन्करुणध्वनिः ।
विभाव्यते ननु स्थानमनिष्टानां तदीदृशाम् ॥ २१ ॥

---

'अपि द्वन्द्वं दिष्ट्या तदिह सुभगे संवदति वाम् ।'

इत्यादिवत् । भिन्नमपायशङ्कया विदीर्णम्, अत एव हृदयं मनः अन्तर्भ्रमति विचारसरणिं विगाहितुमसमर्थं मूढमेवान्तर्बभ्रम्यते । विह्वलति विवशं भवति । 'ह्वल ह्मल चलने' इति धातुः । अङ्गमङ्गं प्रत्येकं हस्तपादं स्वस्वव्यापाराक्षमं भवतीत्यर्थः । गात्रस्तम्भः शरीरस्य निश्चेष्टता, स्खलयति प्रतिहन्ति गतिं गमनम् । स्खलयतीति हठाद् गमनोद्योगस्याप्यशक्यत्वमाह । कः प्रकारः पूर्वावस्थातः कोऽयं विशेष आपतित इति स्नेहस्वभावादेवाबुद्धिपूर्वं सात्विकविकाराणामाविर्भावमनुसन्धत्ते । किमेतत् अस्मिन् देशे ईदृशनादश्रवणरूपमिदं किं वस्तु वर्तते । अथवा नादश्रवणात्मकमेतत् किं मया चिन्तितं तद्वा न वेत्यर्थः । कः प्रकारः एतस्य वस्तुनः कथमस्मिन् देशेऽस्यां रात्रौ सम्भवप्रकार इत्यर्थः । अत्र निष्फलश्मशानवाटपर्यटनसम्भूतेन विरोधिना निर्वेदेन प्रसुप्तस्य शृङ्गारस्य करुणरसमन्तर्निवेश्य प्रबोधनं कृतमिति मन्तव्यम् ।

'रसान्तरेणान्तरितो नैरन्तर्येण यो रसः ।'

इति वचनाद् आवेगाख्यस्य भावस्य चोदयः प्रतिपाद्यते । सूक्ष्ममनुमानं चालङ्कारः ॥ २० ॥

शब्दानुसारेण देशमनुमिमीते—करालायतनादित्यादि । करालायाश्चामुण्डाया आलयात् उच्चरन् उद्गच्छन्, करुणध्वनिः करुणः शोकावहो नादः,

---

१. 'देहस्तम्भः' क. घ. झ. ञ. पाठः. २. 'स्खलति च गतिः' क. पाठः. ३. 'करुणो ध्वनिः' झ. ञ. पाठः.

---

१. 'अयि द्वन्द्वं' ञ. पाठः. २. 'पादादिकं' ज. पाठः. ३. 'गतं' क. पाठः ४. 'स्तम्भितत इति' ज. पाठः. ५. 'पूर्वं सात्विक' ज. पाठः. ६. 'ईदृशश्रवण' क. ग. घ. ङ. पाठः.

भवतु पश्यामि । (इति परिक्रामति ।)

(ततः प्रविशतो देवतार्चनव्यग्रौ कपालकुण्डलाघोरघण्टौ कृतवध्यचिह्ना मालती च ।)

**मालती** — हा ताद ! णिक्करुण ! एसो दाणिं दे णरिन्द-चित्ताराहणोवअरणं जणो विवज्जइ । हा अम्ब! हिअए हदासि देव्व-

---

विभाव्यते ज्ञायते । चकारः स्वशङ्कितानुगुणत्वं स्थानस्याप्यासूत्रयति । तदेवाह—ननु प्रसिद्धोऽयमर्थ इत्यर्थः । स्थानमुचितं स्थलम् । अनिष्टानां लोकदुःखकराणां कर्मणाम् । तत् करालायतनं ईदृशामस्मदाशङ्कितप्रियतमोपहार-तुल्यानाम् । ईदृशामित्युक्तिरशक्यवचनत्वात् । अनेन च 'या किल विविधजीवोपहारप्रिये'त्यादि पूर्वोक्तं सङ्घटयति । अनुमानमलङ्कारः । 'नादस्तावदि'ति 'करालायतनाख्यामि'ति च वितर्कवद्वाक्याद् रूपम् ॥ २१ ॥

भवत्विति — चिन्तितमेव भवतु वा मा भूत्, तथापि दर्शनेनैव संशयच्छेदः सन्तापच्छेदश्चेति सूचयति ।

अथ प्रकरीवृत्तान्तं प्रस्तौति — ततः प्रविशत इति । 'प्रकरीति प्रदेशभाक्' इति लक्षणात् । देवतार्चनव्यग्राविति 'सविशेषमद्य मया पूजासम्भारः सन्निधापयितव्यः' इत्युक्तस्योपयोगः । कृतवध्यचिह्ना कृतं कापालिकाभ्यां निर्मितं वध्यानां उपजिहीर्षितानां चिह्नं लक्षणम् । 'न्यस्तालक्तकरक्तमाल्यवसना' (V. 23) इति वक्ष्यमाणप्रकारं रक्ताम्बरम् । राजसपूजात्वात्, 'रजो रागात्मकं विद्धि' इति, 'यक्षरक्षांसि राजसाः' इति च भगवद्वचनात् । नागानन्दे च गरुडायोपहृतस्य शङ्खचूडस्य रक्तवस्त्रादिधारणोक्तेः ।

हा तादेति । नेपथ्योक्तेर्मालतीवचनत्वं प्रकाशयितुं पितृवैराग्यादेर्दार्ढ्यं च प्रतिपादयितुं पुनर्वचनं रसपरिपोषकत्वाद् गुण एव । हा अम्ब!

---

१. 'वध्यप्रहरतौ' क. पाठः. २. 'अरण्णे' क. घ. पाठः. ३. 'अम्ब ! सिणेहमअद्दिअए! तुमं पि हदासि' क. 'अम्ब! हदासि' छ, 'अम्ब! सिणेहमअहिअए! हदासि' झ. ञ. पाठः.

---

१. 'गुणार्थस्थानस्यापि' ख. ग. घ. ज. पाठः. २. 'दुःखकारणानां', ३. 'समानमलङ्कारः' क. पाठः. ४. 'वितर्कस्तद्वद्' छ. पाठः. ५ 'च्छेदः तापच्छेद' ज. पाठः. ६. 'नैपथ्योक्तं माल' ज. पाठः

दुव्विलसिदेण । हा माळदीमअजीविदे! मम कल्लाणसाहणेक्कसअळवावारे! भअवदि! चिरस्स जाणाविदासि दुःखं सिणेहेण । हा पिअसहि! लवङ्गिए! सिविणआवसरमेत्तदंसणा दे अहं संवुत्ता ।

(हा तात! निष्करुण! एष इदानीं ते नरेन्द्रचित्ताराधनोपकरणं जनो विपद्यते । हा अम्ब! हृदये हतासि दैवदुर्विलसितेन । हा मालतीमयजीविते! मम कल्याणसाधनैकसकलव्यापारे! भगवति! चिरस्य ज्ञापितासि दुःखं स्नेहेन । हा प्रियसखि! लवङ्गिके! स्वप्नावसरमात्रदर्शना ते अहं संवृत्ता ।)

---

हृदये हतासि, दैवदुर्विलसितेन ईश्वरस्य दुर्विलसितेन अचिन्तितेन प्रतिकूलचेष्टितेन शुष्काशनिनेव हृदयेऽभिहतासि । हा मालतीमयजीविते! मम कल्याणसाधनैकसकलव्यापारे भगवति! चिरस्य ज्ञापितासि दुःखं स्नेहेन । [मालतीमयजीविते] मालतीरूपं प्राणनं यस्या इति स्वापाये तस्या अपि जीवितापायं द्योतयति । तत्कथं ज्ञातमित्याह — मम [कल्याणसाधनैकसकलव्यापारे] कल्याणस्य मङ्गलस्य

'स्तन्यन्यासात् प्रभृति सुमुखी दन्तपाञ्चालिकादि-
क्रीडायोगं तदनु विनयं प्रापिता वर्धिता च ।' (X. 5)

इत्यादि वक्ष्यमाणक्रमस्य साधनं सम्पादनमेकं प्रधानं येषां ते, सकलाः समस्ताश्च व्यापाराः प्रवृत्तयो यस्याः । चिरस्य बहोः कालादितः पूर्वं सुखस्यैवानुभूतत्वात् , स्नेहेन मयि वात्सल्येन, दुःखं ज्ञापितासि ईदृशं दुःखमित्यनुभावितासि । प्रियसखि लवङ्गिके! स्वप्नावसरमात्रदर्शना ते अहं संवृत्ता । [स्वप्नावसरमात्रदर्शना] स्वप्नसमये एव दर्शनं यस्याः, मृतानामन्यथा दर्शनानुपपत्तेः ।

---

१. 'णेक्कसुहसअल' क. जे. झ; 'णक्कसुहवावारे' ध, 'णेक्कसुक्कसअल' ज. ब. पाठः. २. 'वदि कामन्दइ चिरस्स' छ. ज. पाठः.

---

१. 'ये हतासि' ज. पाठः. २. 'मित्यनुभाविता । प्रिय' ख. ब. घ. छ. अ. पाठः.

माधवः — हन्त! सम्प्रति निरस्त एव मे सन्देहः। तदह-मपि नाम जीवन्तीमेव सम्भावयामि।

(त्वरिततरं परिक्रामति।)

कपालकुण्डलाघोरघण्टौ—देवि! चामुण्डे! नमस्ते नमस्ते।

सावष्टम्भनिसुम्भसम्भ्रमनमद्भूगोलनिष्पीडन-
न्यञ्चत्कर्परकूर्मकम्पविचटद्ब्रह्माण्डखण्डस्थिति।

---

हन्तेति विषादे। सम्प्रतीति कामन्दक्यादिसङ्कीर्तनस्य निर्णयहेतोः श्रुतत्वादित्यर्थः। अपि नामेति सम्भावनायाम्। तावती विधेरनुकूला कृतिः सम्भवेदित्यर्थः। जीवन्तीमव्यापादितामेव सम्भावयामि सत्करोमि। महति व्यसने शरणीभाव एव सम्भावनमिति भावः। 'सम्प्राति निरस्त एवे'त्यादिः सम्भ्रमः, शङ्कात्रासाभ्याम्।

कपालकुण्डलाघोरघण्टौ स्वोपहारसङ्ग्रहणार्थं देवतां स्तुतिभिरुद्बोधयत इत्याह — देवीति।

सावष्टम्भेत्यादि — सावष्टम्भेन सावलम्बेन सबलात्कारेणेत्यर्थः। निसुम्भेन चरणाक्रमणेन हेतुना सम्भ्रमतो व्याकुलतया, नमता पातालकुहरे पतता भूगोलेन भूमिपिण्डेन यत् निष्पीडनं भाराक्रान्तत्वं तेन न्यञ्चत्कर्परस्य निर्भुज्यमानपृष्ठकपालस्य सकलभुवनाधारस्यादिकमठस्य स्तम्भस्येव कम्पेन

---

१. 'माध सम्प्रति' घ. पाठः. २. हन्त सैवेयं मदिरेक्षणा। सम्प्रति' क. ख, 'हन्त सैवेयं हरिणेक्षणा। सम्प्रति' ञ. पाठः. ३. 'एव सन्देहः' क. ख. ग. पाठः. ४. 'तदपि नाम' घ. ञ. पाठः. ५. 'नामैनां जी' क. अ. ख. ज. पाठः. ६. 'जीवन्तीं सम्भा', ७. 'सम्भावये' क. ग. न, 'सम्भावयेयम्' ख. घ. ज. पाठः. ८. 'त्वरितं परि' क. घ. ख. ञ, 'झटिति परि' छ. पाठः. ९. 'कपा—देवि' ख. छ, 'कापालिकौ—देवि' ज. ख. ञ. पाठः. १०. 'देवि! सावष्टम्भ' ख. पाठः. ११. 'नमस्ते—सावष्टम्भ' घ. छ. ज. पाठः. १२. 'निशुम्भनिर्भरनमद्' क. पाठः. १३. 'विगलत्' क. ज. ख. ञ. पाठः.

---

१. 'रनुकूलता (के) सम्भवे' ख. ङ, 'रनुकूलता भवे' ख. पाठः. २. 'घण्टौ उपहार' ज. पाठः. ३. 'सङ्ग्रहार्थं' ङ. पाठः. ४ 'निर्भज्यमान' ज. पाठः

पातालप्रतिमल्लगल्लविवरप्रक्षिप्तसप्तार्णवं
वन्दे[1] नन्दितनीलकण्ठपरिषद् व्यक्तर्द्धि[2] वः क्रीडितम् ॥ २२ ॥

चलनेन विचटतः स्फुटतो ब्रह्माण्डस्य खण्डानां शकलानां स्थितिर्यस्मिन् । अथवा विचटति ब्रह्माण्डे खण्डस्थिति असमंजसचरणावस्थानम्, समग्रस्थितेस्स्त- इतयेत्यर्थः । अवष्टम्भेत्यत्र 'अवाच्चालम्बनाविदूर्ययोः' (८-३-६८) इति षत्वम् । निसुम्भ आक्रमणं

'प्रागप्राप्तनिसुम्भशाम्भवधनुर्द्वेधाविधाविर्भवत् ।'

इति महावीरचरितोक्तेः । कूर्मग्रहणमखण्डधरणिमण्डलाधारस्य कुण्डलीपते- रप्याधारत्वात् ।

'पृथ्वि ! स्थिरीभव भुजङ्गम ! धारयैनां
त्वं कूर्मराज! तदिदं द्वितयं दधीथाः ।'

इति बालरामायणेऽप्युक्तम् । 'चट स्फुट विशरणे' इति धातुः । पातालप्रति- मल्ले प्रतिमल्लः प्रतिपक्षः अधोभुवनविवरस्य लक्षणया तुल्ये, विकटगम्भीरत्वात्, गल्लविवरे कपोलरन्ध्रे प्रक्षिप्ताः सप्त समुद्राः यस्मिन् । 'गल्लो गण्डः कपोलश्च' इति हलायुधः । नन्दितनीलकण्ठपरिषत् नन्दितः सन्तोषितः स्वचिकीर्षित- स्यानायासेन करणात्, नीलकण्ठः अर्थात् कालरुद्रः, परिषत् तदीयभूतगणसंसच्च येन । तत्र हेतुः । व्यक्तर्द्धि प्रकटसंहरणसामर्थ्यम् । वः युष्माकमिति गुरुत्वाद् बहुवचनम् । क्रीडितं विहारः प्रपञ्चसंहरणरूपम् । भावे निष्ठा । अनेन

'कालः काल्या सह बहुकल. क्रीडति प्राणिशारैः ।'

इत्युक्तनीत्या कालरुद्रशक्तेर्भद्रकाल्यास्त्रिभुवनसंहरणमयत्नसाध्यत्वाद्धीक्रामाश्रमेवेति ध्वन्यते । अत्र रौद्रो[1] व्यज्यते । अतिशयोक्तिर्भाविकं चालङ्कारः ॥ २२ ॥

१. 'वन्दे सन्मतनीलकण्ठ' क. पाठः. २. 'व्यक्तं हि वः' क, 'व्यक्तं तव क्रीडितं' ज. पाठः

१. 'सप्तं चरणा' ख. ग. घ. पाठ. २. 'इत्युक्तरीत्या' क. पाठः. १ 'रौद्रो रसो व्यज्यते ।' ज. पाठः.

अपि च —

प्रचलितकरिकृत्तिपर्यन्तचञ्चन्नखाघातभिन्नेन्दुनिष्यन्दमानामृत-
श्च्योतजीवत्कपालावलीमुक्तचण्डाट्टहासत्रसद्भूरिभूतप्रवृत्तस्तुति ।
श्वसदसितभुजङ्गभोगाङ्गदग्रन्थिनिष्पीडनास्फालफुल्लत्फणापीठनि-
र्यद्विषज्योतिरुज्जृम्भणोड्डामरव्यस्तविस्तारिदोःषण्डपर्यासितक्ष्माधरम्

अथ संहरणानन्तरमानन्दताण्डवं चण्डिकाया दण्डकेन स्तुवन्तौ स्वाभिलषितमाशंसतः — अपि च प्रचलितेत्यादि । प्रचलितकरिकृत्तिः भ्रमरिकावेगेन प्रकम्पिता प्रावरणभूता वारणत्वग् यस्मिन् । पर्यन्ते परितः चञ्चतां अङ्गहारेण चलतां नखानामाघातेनाघट्टनेन भिन्नादिन्दोः चन्द्रमण्डलात् कलशादिव सलिलेन निष्यन्दमानेन, इति चन्द्रपादादुपरि देवीभुजस्य वर्तनं च द्योत्यते, अमृतश्च्योतेन पीयूषद्रवेण जीवन्त्या लब्धप्राणया, अमृतस्य मृतसञ्जी-वनस्वाभाव्यात्, भूषणकपालावल्या निमित्तेन देव्या मुक्तात्, कायसंश्लेषणरहि-तानां तेषां राहुवद् भ्रूक्षेपादिचेष्टितैर्हास्यरसविहारत्वात्, अथवा कपालावल्यैव मुक्तात् प्रवर्तिताद् देवीनृत्तोत्सवदर्शनप्रमोदेनेति यावत्, चण्डाद् भीमादट्ट-हासाद् अतिशयिताद्धासात् । 'अट्टावतिशयक्षौमौ' इति वैजयन्ती । त्रस-द्भ्यो बिभ्यद्भ्यो भूरिभ्यो बहुभ्यो भूतेभ्यः प्राणिभ्योऽथवा पार्षदेभ्यः प्रवृत्ता प्रसृता स्तुतिः स्तोत्रं यस्य । श्वसतां भूरिश्रमेण फूत्कुर्वतामसितभुज-ङ्गानां कृष्णसर्पाणां भोगाः शरीराण्येवाङ्गदानि दोर्मूलभूषणानि—'केयूरमङ्गदं भूषा दोर्मूले' इति वैजयन्ती—तेषां ग्रन्थिर्बन्धनं तस्य निष्पीडनेन बाधावहे-नास्फालनेन परस्पराघट्टनेन, दोर्दण्डानामित्यर्थात् । 'ऐरावतास्फालनविश्लथं यः', 'अन्योन्यास्फालभिन्नद्विप' इत्यादिप्रयोगात् । उत्फालेति पाठे निष्पीडनेन य उत्फालः क्षोभस्तेनेत्यर्थः,

१. 'निस्यन्दमान', २. 'उनत्फारफुल्लत्' क. ख. ग, 'त्स्फोत्फुल्लफुल्लद्' ग. पाठः. ३. 'दोःखण्ड' क. ख. ग. पाठः.

१. 'संहारानन्तरं', २. 'ण्डवं च चण्डि' क. पाठः. ३. 'चन्द्रपदादुपरि" ४. 'भुक्तत्वात्' ख. पाठः. ५. 'संश्लेषराहित्यानां' क. पाठः. ६. 'त्सवप्रमोददर्शनेन, क. पाठः. ७. 'पारिषदेभ्यः' ख. क. ग. पाठः. ८. 'ता या स्तुतिः', ९. 'स्फालनकर्कशं यः' ख. पाठः.

ज्वलदनलपिशङ्गतुङ्गज्जटाझाटभीमोत्तमाङ्गभ्रमिप्रस्तुतालातचक्र-
क्रियास्यूतदिग्भागमुत्तुङ्गखट्वाङ्गभृङ्गध्वजोद्भूतिविक्षिप्ततारागणम् ।

'सत्सङ्गप्रियता च वीररभसोत्फालश्च मां कर्षतः ।'

इतिवत् । फुल्लद्भ्रुवः कोपेन विकसद्भ्रुवः—'फुल्ल विकासे' इति धातुः—फणापीठेभ्यः विकटायतत्वात् फलकसदृशेभ्यः फणातटेभ्यो निर्यतो निर्गच्छतो विषज्योतिषो विषाग्नेरुज्जृम्भणादुज्ज्वलनात् उड्डामरेण भीषणेन न्यस्तेनाभिनयार्थं विक्षिप्तेन विस्तारिणा स्वत एव विपुलेन दोःषण्डेन भुजसमूहेन पर्यासिताः सर्वतः पातिताः क्ष्माधराः पर्वता यस्मिन् । दोःषण्डोक्तिः,

"अष्टादशभुजा विष्णोस्सायुधाष्टमहाभुजा ।"

इति, अथवा

"षोडशशूलव्यग्रभुजा त्रिणयनाहिनद्धाङ्गी ।'

इत्यादि पुराणागमप्रसिद्धभुजबाहुल्यविवक्षयेति मन्तव्यम् ।

'दुर्गेति भद्रकालीति विजयेत्यम्बिकेति च ।'

इत्येकस्या एव देवताया नामभेदप्रतिपादनात् ।

[ज्वलदनलेत्यादि] — ज्वलदनलवत् [पिशङ्गानां] पिङ्गलानां तुङ्गन्तीनां चलन्तीनां — 'तुगि त्वगि चलने' इति धातुः — जटानां झाटेन समूहेन,

'सन्ध्यानृत्तप्रवृत्तत्रिपुरहरजटाझाटवाचाटवीची ।'

इत्यादिप्रयोगात् । भीममुत्तमाङ्गं शिरो यस्याम् । तया भ्रम्या भ्रमणेन मण्डलनृत्तेन,

"निर्व्यूढभ्रमिविभ्रमाय जगतामीशाय पित्रे नमः ।"

इति मुरारिसूक्तेः । प्रस्तुता आरब्धा अलातचक्रक्रिया अलातम् उल्मुकं ज्वलितैककोटिकाष्ठमित्यर्थः, तस्य चक्रवत् क्रिया चेष्टा, अविच्छिन्नं भ्रमण-

१. 'पिशङ्गमेत्रच्चलटाचक्रभीमो' क. ख. च, 'पिशङ्गितुङ्गजत्सझाटभीमो' छ. पाठः. २. 'चलटाझाट' च. पाठः ३. 'झाटभारभीमो' ज. पाठः, ४. 'भ्रमिप्रस्तुता' घ. पाठः, ५. 'भृङ्गकोटिध्वजो' क. ख. च. पाठः, ६. 'ध्वजोद्भूतविक्षिप्त' घ, 'ध्वजोद्भूतिविक्षिप्त' ज. पाठः.

१. 'भुजा । अथवा' ख. ग. घ. ङ. च. पाठः.

प्रमुदितकटपूतनोत्तालवेतालरावस्फुटत्कर्णसम्भ्रान्तगौरीघनाश्लेषहृ-
ष्यन्मनस्त्र्यम्बकानन्दि वस्ताण्डवं देवि! भूयादरिष्टै च रिष्टै च नः
॥ २३ ॥

(इत्यभिनयतः ।)

मित्यर्थः, अधो नीलवर्णत्वाद् उपरि कपिलवर्णतया अग्निवेगाच्च । तया स्यूतः सम्बद्धः । दिशामग्निना कवलीकृतत्वं अपरिमितातिकपिलप्रभापटलव्याप्तत्वात् । उत्तुङ्गस्य खट्वाङ्गाख्यस्यायुधविशेषस्य शृङ्गेऽग्रे वा ध्वजपताका तस्या उद्धूत्या कम्पनेन विक्षिप्ताः स्वस्थानादन्यतो विकीर्णास्तारकाणां गणा नक्षत्राणां समूहा यस्मिन् । प्रमुदितानां संहृतजनरुधिरपिशितास्वादहृष्टानां कटपूतनानाम्, उत्तालानां दृप्तानां वेतालानां च । 'पिशाचः कापिशेयः स्यात्' इति वैजयन्ती । पिशाचविशेषाः कटपूतनाः । 'प्रेताः परेता वेतालाः' इति वैजयन्ती । प्रेतविशेषा वेताला इति भेदः

"भूतप्रेतपिशाचजम्भकभये स्मृत्वा महाभैरवीम् ।"

इत्याद्यभियुक्तोक्तेः । रावेण शब्देन निर्घातघोरेण सिंहनादेन स्फुटद्भ्यां दलद्भ्याम् (इति लक्षणया कः कीदशीकेथैताभ्यां ?) कर्णाभ्यां सम्भ्रान्ताया भयाकुलिताया गौर्याः पर्वतराजपुत्र्या घनाश्लेषेण स्वयंकृतेन दृढालिङ्गनेन हृष्यन्मनसं त्र्यम्बकं परमेश्वरमानन्दयितुं शीलं यस्येति । महदुपकृतमसुना ताण्डवेनेति बहुमानभाजनत्वात्,

'त्रसत्तुषाराद्रिसुतासंसम्भ्रम-
स्वयंग्रहाश्लेषसुखेन निष्क्रयम् ।'

इति माघोक्तवत् । ताण्डवमुद्धतं नृत्तम् । देवि! द्योतनशीले! वः अरिष्टै

१. 'वेतालतालस्फुटत्' झ. भ. पाठः. २. 'दमीष्ट्यै' क. झ. ञ. पाठः.
३. 'ऋष्ट्यै च' क. च. छ. झ. म. पाठः.

१. 'इति विशेषः भूत' ज. पाठः. २. 'भया कीदशीले ताभ्यां' क. ज. पाठः. ३. 'गाढालिङ्गनेन' क. च. पाठः.

रिषेति क्षयसमृद्ध्यर्थौ द्वौ धातू, नु इति यथा पृथग्भावमिश्रणार्थौ। तयोः क्तिनि रूपं रिष्टिः। अरिष्ट्यै रिष्टेः क्षयस्य प्रतिषेधाय, रिष्ट्यै समृद्ध्यै।

'अरिष्टो वासके निम्बे गोरसे निरुपद्रवे।
क्ली वैवर्ण्ये मृत्युचिह्ने मद्ये तास्रे शुभेऽशुभे॥' इति,

'रिष्टं नाशे शुभेऽशुभे' इति वैजयन्ती। भूयादित्याशिषि लिङ्। अयं विवक्षितोऽर्थस्ताभ्यामन्यथाभूत इत्यपि द्योतयति कविः अरिष्ट्यै समृद्ध्य-भावाय रिष्ट्यै क्षयाय चेति। तत्र हेतुः — न इति सच्छास्त्रचोदनामन्तरेण फलकामनया शिष्टजनगर्हितां हिंसाप्रायां वृत्तिमीश्वराराधनक्रमेण कुर्वाणानाम-स्माकमित्यर्थः। अरिष्ट्यै च रिष्ट्यै च नो भूयादित्याशंसया साक्षात् फलाभि-सन्धिः प्रकाशितः। मालत्या जिघांसया समाकर्षणेन ब्रह्महत्यास्त्रीवधविस्रम्भ-घातकन्याविशसननिरपराधबाधनादिमहापातकाध्यवसानाच्च शास्त्रविध्युल्लङ्घनं सूचितम्। अत एव देवताकोपाद् विरुद्धफलोपनिपातः कविनोपरि प्रदर्शितः। स्वरसमासान्वयाद्यपराधान्मन्त्रादीनां विरुद्धफलत्वे प्रसिद्धेः, 'यथेन्द्रशत्रुः स्वरतोऽपराधात्।' इति,

'स वव्रे भगवन् कृत्या पितृहन्तुर्वधाय मे।'

इति प्रार्थितवतः काशिराजपुत्रस्य परमेश्वरकोपात् स्वविनाशायैव कृत्यासमु-त्पत्तिवचनाच्च।

'यश्शास्त्रविधिमुत्सृज्य वर्तते कामकारतः।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम्॥'

इति भगवद्वचनात्। अत्र रौद्रो व्यज्यते। अतिशयोक्तिरुदात्तं चालङ्कारः। [॥ २१ ॥

अभिनयतः हर्षेण नृत्यतः।

१. 'क्लीबे वर्ण्ये मृत्यु' क. ङ, 'क्ली वैवर्ण्ये मृत्यु' ख. ग. घ. पाठः. २. 'सच्छास्त्रमन्तरेण' ज. पाठः. ३. 'बाधादि' ज. पाठः. ४. 'लङ्घनम्। अत' क. ङ, 'लङ्घनं सूचयति।' ज. पाठः.

माधवः — (विलोक्य) धिक् प्रमादः ।

न्यस्तालक्तकरक्तमाल्यवसना पाषण्डचण्डालयोः
पापारम्भवतोर्मृगीव वृकयोर्भीरुर्गता गोचरम् ।

---

अथ तद्दर्शनजनितोद्वेग आह — धिक् प्रमादः कष्टमिदं महदनवधानजनितं झटिति समाधानयोग्यं च व्यसनम् ।

तथात्वमेवाह — न्यस्तालक्तकेत्यादि । न्यस्तालक्तका तिलकत्वेन निहितलाक्षारसा, रक्तानि लोहितवर्णानि माल्यानि मालायां साधूनि पुष्पाणि, 'तत्र साधुः' (४-४-९८) इति यत्, वसने दले च यस्याः । पाषण्डचण्डालयोरिति । 'पाषण्डा वाबलिङ्गिनः' इति वैजयन्ती ।

"कलौ जगत्पतिं विष्णुं सर्वस्रष्टारमीश्वरम् ।
नार्चयिष्यन्ति मैत्रेय पाषण्डोपहता जनाः ॥
किं देवैः किं द्विजैर्वेदैः किं शौचेनाम्बुजन्मना ।
एवं कलौ वदिष्यन्ति पाषण्डोपहता जनाः ॥"

इति श्रीविष्णुपुराणे,

"निशामुखेषु खद्योतास्तमसा भान्ति न ग्रहाः ।
यथा पापेन पाषण्डा न हि वेदाः कलौ युगे ॥"

इति श्रीभागवते च. वेदबाह्यानामीश्वरभक्तिरहितानां दुस्समयिनां श्वखरसृगालसधर्मणां दुष्कर्मणां पाषण्डत्वावगतेः । तथागतनग्नाटककापालिकादयः पाषण्डशब्देनोच्यन्ते । पाषण्डी पाषण्डश्च पाषण्डौ, "पुमान् स्त्रिया" (१-२-६७) इत्येकशेषविधानात् । अनेन चान्तेवासिन्या गुरोरेकशेषवचनेन गम्यागम्यनियमाभावो द्योत्यते । चण्डाली चण्डालश्च चण्डालौ । तदुपमितयाः अथवा पाषण्डरूपयोर्जनंगमयोरिति अनेनैतदाह —

'सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।' इति,

---

१. 'माध — हा धिक्' क. ख. ग, 'माध — धिक्' च, 'माध — अहो प्रमादः' ङ. पाठः. २. 'प्रमादम्' ज. पाठः. ३. 'पाखण्ड' ख. ग. पाठः

---

१. 'पतिष्यन्ति' ख. ङ. पाठः. २. 'नराः' ख. ग. घ. च. ङ. पाठः. ३. 'मामेव' ख. पाठः.

सेयं भूरिवसोर्वसोरिव सुता मृत्योर्मुखे वर्तते
हा धिक्कष्टमनिष्टमस्तकरुणः कोऽयं विधेः प्रक्रमः ॥ २४ ॥

"हित्वा स्वधर्मं चरणाम्बुजं हरे-
र्भजन्नपक्वोऽथ पतेत्ततो यदि ।
यत्र क्व वाभद्रमभूदमुष्य किं
को वार्थ आप्तोऽभजतां स्वधर्मतः ॥"

इत्यादिभिः प्रतिपादितां परमेश्वरभक्तिं,

"यस्य नाहङ्कृतो भावो बुद्धिर्यस्य न लिप्यते ।
हत्वापि स इमाँल्लोकान् न हन्ति न निबध्यते ॥" इति,

'ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा ।' इति,

'अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः ।
सर्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि ॥' इति,

'सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।
सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥' इति,

तदधिगमे 'उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्' इत्यादिभिः स्मृतिभिस्तन्मूलभूताभिः श्रुतिभिश्च प्रकाशितं तत्त्वज्ञानं तदुभयमनवष्टभ्य यथेष्टं चेष्टमानानां पुरुषदोषदुष्टागमाभ्यासविजृम्भितानां वेदविरुद्धराद्धान्तविभ्रान्तानामशास्त्रविहितघोरधर्मचर्याणामनार्याणां निरवधिकाविपदि निरयतमसि निरवलम्बनं पततां दर्शनस्पर्शनादिष्वपि दुरितोपपत्तेर्दूरतो वर्जनीयत्वं शिष्टैरिति ।

"या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः ।
सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः ॥"

इति मनुवचनात् । भक्तस्य तु स्वधर्मतः स्खलनेऽपि,

१. 'यस्यानहंकृतो भावो' ज. पाठः. २. 'चेतसि' क. ख. ग. घ. ङ. पाठः. ३. 'तदधीनं पूर्वा' ख, 'तदधिगं उत्त' ग. घ. पाठः. ४. 'द्वेषमानानां' ज. पाठः. ५. 'पुत्रदोष' ज. पाठः. ६. 'भ्यासविजृम्भितानां' ख. ग. घ. ङ. च. पाठः. ७. 'हि या स्मृता' घ पाठः.

'मोक्षयिष्यामि मा शुचः ।' इति,

'योगक्षेमं वहाम्यहम् ।' इति,

'तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।' इति,

'कौन्तेय ! प्रतिजानीहि न मे भक्तः प्रणश्यति ।'

इत्येवमादिवचनैः करुणामूर्तेन भगवतैव जनन्येव शिशोः परिपाल्यमानत्वात्[1] ; ज्ञानिनः पुनर्निषिद्धाचरणस्य[2]—

'अनभ्यासादप्रसङ्गाद्वाद्वेष्टृत्वादयो गुणाः[3] ।
अयत्नतो भवन्त्यस्य न तु साधनरूपिणः ॥'

इति अद्वेष्टृत्वादीनामेवाभ्यस्तत्वात् , अलेपकपक्षस्य च—

'शुनां तत्त्वदृशां चैव को भेदोऽशुचिभक्षणे ।'

इति निरस्तत्वात् , कर्मानुष्ठानस्य च—

'अहंप्रत्ययबीजं यदहंप्रत्ययवत्स्थितम् ।
नाहंप्रत्ययवद्युष्टं कथं कर्म प्ररोहति ॥'

इत्यहमध्यासनिबन्धनकर्तृत्वाद्यारोपमूलत्वात् तस्य[4] च ब्रह्मज्ञानाग्निना दग्धत्वेन, अनधिकारतया विध्यगोचरत्वेन

"दण्डाखिलाधिकारश्चेद् ब्रह्मज्ञानाग्निना मुनिः ।
वर्तमानश्रुतेर्मूर्ध्नि नैव स्याद्वेदकिङ्करः ॥"

इति श्रुतिकैङ्कर्यासम्भवेन परास्तत्वात् ; भक्तज्ञानिनोः कर्माननुष्ठानमात्रदर्शनेन पतितत्वाशङ्का मोह एव । भक्तिज्ञानयोरन्यतरविरहे तु विहितनिषिद्धकर्मणोरकरणकरणाभ्यां पाषण्डत्वमत एव चण्डालत्वमिति साधयति परमप्रमाणभूतो भवभूतिः । तत्र हेतुः — पापारम्भवतोः पापानां,

"ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः ।
महान्ति पातकान्याहुः संयोगश्चैव तैः सह ॥"

१. 'पाल्यत्वात्' क. ख. ग. घ. पाठः. २. 'ज्ञानिनं पुनः' ख. ग. ङ. ड. पाठः. ३. 'अनभ्यासादेवाप्रसङ्गादद्वेष्टृत्वेत्यादयो गुणाः' ख. पाठः. ४. 'तस्य मद' क. ग. घ. पाठः.

इति मनुस्मृतानां महापातकानां गोवधादीनां उपपातकानां च, आरम्भोऽनुष्ठानं, तेन नित्ययुक्तयोः । नित्ययोगे मतुप् । मृगी हरिणी । मृगीग्रहणेन मुग्धस्वभावत्वात् स्पृहणीयसभयदृष्टिपाताच्च दयनीयत्वातिशयो द्योत्यते । एकवचनेनें यूथभ्रष्टत्वं व्यज्यते । वृकयोः वृकी च वृकश्च वृकौ, तयोः । उपमानेन पापारैम्भवत्वमेवोपपादयति, नहि वृकादयः श्वापदाः कदाचिदपि सात्त्विका भवन्तीति । भीरुः भयशीला । 'भियः क्रुक्लुकनौ' (३-२-१७४) इति क्रुक्प्रत्ययः । क्रियावचनत्त्वादूङ् न भवति । गतेत्येकवचनेनैकाकिनीत्वम् । गोचरं स्वच्छन्दपराभवविषयम् । सेति गर्भेश्वरत्वसौकुमार्यदुःखानभिज्ञत्वादिकं द्योतयति । अथवास्माभिर्यद्विषये भूयोदर्शनमात्रमाशंसितं सेति । इयमिति अँस्मिन् प्रदेशे पुरोवर्तित्वमस्याः स्वप्नेऽप्यसम्भावितमिति दर्शयति । सेति द्योतितस्य गर्भेश्वरत्वादेर्हेतुमाह — वसोः उपरिचरस्य राजर्षेः । वसुसंज्ञया प्रसिद्धस्येति समग्रशक्तित्रयत्वं प्रकाश्यते । सुँतेत्येकापत्यादेकत्वमाह । मृत्योः यमस्य, मुखे इति अनन्तरमेव जिघांसितत्वात् मृत्योर्मुखं प्रविष्टेव नें निर्गीर्णेत्येतावानस्माकमाश्वास इत्यर्थः । हा धिक्—हेति विषादद्योतकमव्ययम्, धिगिति जुगुप्साव्यञ्जकम् । कष्टमनिष्टमँतिदुःखमतिदुःसहमप्रियमस्माकमिति शेषः । अनिष्टं धिगिति 'धिगुपर्यादिषु त्रिषु' इत्यादिना द्वितीया । अस्तकरुणः निरस्तँदयः । क इति विकल्पे । 'प्रश्ने क्षेपे विकल्पे किं' इति वैजयन्ती । अयमिदानीं दृश्यमानः प्रक्रमः आरम्भः कः आवयोरुत्सादनार्थो वा, अस्मद्वंशयोः ससुहृद्वर्गयोरुन्मूलनार्थो वा, संसारस्यैव निस्सारीकरणार्थो वेत्यर्थः । अत्रावेगो व्यज्यते, विधिं प्रत्यसूया वितर्कश्च । उपमालङ्कारः । न्यस्ताक्षकर्केत्यादिरपवादः, विधिदोषप्रख्यापनात् ॥ २४ ॥

अथ वध्यानामन्तर्गतो भावः तैरेव विशसनात् प्राक् प्रकाशयितव्यः तच्चित्तपरिज्ञानायेति कल्पोक्तक्रमानुष्ठानायाह कापालिकी —

---

१. 'नेन स्वयूथ' क. पाठः. २. 'रम्भत्व' क. ख. ङ. पाठः. ३. 'अस्मिन् देशे' क, ख. ङ. पाठः. ४. 'सुतेत्येकापत्यात्मकत्वमाह' ग. घ. पाठः. ५. 'न गीर्णे' ख. पाठः ६. 'मतिदुःसहमस्माक' ख, 'मतिदुःसह' ग. ङ. च. छ. 'मतिसुदुःसहमस्माक' ज. पाठः. ७. 'स्तकारुण्यः । क इति' ङ. ज. पाठः ८. 'निस्संसारीकरणा' ङ. पाठः.

कपालकुण्डला—

तं[1] भद्रे ! स्मर दयितोऽत्र यस्तवाभू-
द्द्य[2] त्वां त्वरयति दारुणः कृतान्तः ।

मालती — हा[3] दइअ माहव[4] ! परलोअगदो वि सुमरिदव्वो[5] तुम्हेहिं अअं जणो । ण हु सो उवरदो जस्स वल्लहो सुमरदि ।

(हा दयित माधव ! परलोकगतोऽपि स्मर्तव्यो युष्माभिरयं जनः । न खलु स उपरतो यस्य वल्लभः स्मरति ।)

---

तं[1] भद्रे इत्यादि । भद्रे कल्याणिनि[2] इति नामापरिज्ञानात् संबुद्धिः । स्मर चिन्तय, स्मृत्वा वदेति यावत् । दयितः अनुरागविषयः । अत्र अस्मिन् लोके । अभूत् न तु भवतीति भूतत्वप्रकाशनेन तदनुरागस्य नैरर्थक्यं[3] प्रकाशयति । तत्र हेतुः—अद्य त्वरयति शीघ्रं प्रेरयति, स्वपुरगमनायेति शेषः । दारुणः,

'न बालेषु स्नेहं वहति न जरत्स्वादरलवं
न दाक्षिण्यच्छायां युवतिषु न चार्तेषु करुणाम् ।'

इति वर्णितक्रौर्यः[4] कृतान्तः यमः । अतोऽद्य नष्टायास्तवानुरागो निष्फल इत्यर्थः ॥

हेति । हा कष्टं तादृशो मनोरथः ईदृशो जात इत्यर्थः । दयित माधव ! परलोकगतोऽपि स्मर्तव्यो युष्माभिरयं जनः । न खलु स उपरतः यस्य वल्लभः स्मरति । [परलोकगतः] यमपुरं प्राप्तः । अपिशब्देन यद्यपि तवानेन जनेन न फलं तथापीति द्योत्यते । स्मर्तव्यश्चिन्तनीय इति प्रार्थने कृत्यप्रत्ययः । युष्माभिरिति भर्तुः पूज्यत्वाद् बहुवचनम् । तत्र हेतुः — अयं जनः[5] यस्त्वदनुरागेण तादृशीं दशामनुभावित इत्यर्थः । स्मरणे फलमाह — उपरतः मृतः । वल्लभः

---

१. 'त्वं भद्रे' क. च. पाठः. २. 'भूदेव त्वां' क. पाठः. ३. 'हा दइअ णाह माहव' क, 'हा देव्व माहव' ज. पाठः. ४. 'व ! णाह ! परलोअ' ब. पाठः. ५. 'सद्धारिदव्वो' ग. पाठः.

---

१. 'तद् भद्रे' ख, 'त्वं भद्रे' च. पाठः. २. 'कल्याणि इति' ख. ङ. ज. पाठः. ३. 'नैरर्थ्यं' ग. घ. पाठः. ४. 'वर्णितम्, क्रूरः । कृतान्तः' ज. पाठः. ५. 'जनः यस्त्वदनुरागेण' ख, 'जनः त्वदनुरागेण' ज. पाठः.

**कपालकुण्डला** — हन्त! माधवानुरक्तेयं तपस्विनी।

**अघोरघण्टः** — (शस्त्रमुद्यम्य)

चामुण्डे! भगवति! मन्त्रसाधनादा-
बुद्दिष्टामुपनिहितां भजस्व पूजाम् ॥ २५ ॥

**माधवः** — (सहसोपसृत्य खड्गं प्रकोष्ठेन विक्षिप्य) आः दुरात्मन्! अपेहि। प्रतिहतोऽसि कापालिकापसद!

---

प्रियतमः। यस्य स्मरति यं मनसा चिन्तयति। 'अधीगर्थदयेशां कर्मणि' (२-३-५२) इति कर्मणि षष्ठी। वल्लभः स्मरतीत्युभयानुरागस्य विद्यमानत्वान्मनसि सान्निध्याच्च मृतोऽपि न मृतः। अपि त्वत्रैव वर्तते। वल्लभेऽस्मरति सति स जीवन्नपि मृत एवेति व्यतिरेकोऽपि सामर्थ्यात् सिध्यति।

हन्तेति हर्षे, कल्पोक्तस्य हृदयपरिज्ञानस्य कृतत्वात्तदाह। माधवानुरक्तेति। तपस्विनी शोच्या। "सा क्खु तवस्सिणी देवीए उज्जइणीं णादेत्ति प्पवादं कदुअ" इति रत्नावल्यां प्रयोगात्।

शस्त्रमुद्यम्य कण्ठच्छेदनाय खड्गमस्या उपरि उत्क्षिप्येत्यर्थः।

चामुण्डे इति। मन्त्रसाधनादौ मन्त्रसाधनारम्भे, उद्दिष्टां प्रतिज्ञातां उपनिहितामिदानीं समीपतः सन्निधापिताम्, भजस्व प्रतीच्छ, पूजां कन्यारत्नोपहाररूपाम् अर्चनाम् ॥ २५ ॥

सहसेति शस्त्रपातनस्यैवावशिष्टत्वात्तदनन्तरे इत्यर्थः। प्रकोष्ठेन विक्षिप्य दूरतो निपात्य।

---

१. 'कियं वराकी तप' क. पाठः. २. 'अघोर — (शक्तिमुत्सृज्य) यदस्तु तदस्तु। व्यापादयामि। चामुण्डे' क, 'अघोर — (शस्त्रमुद्यम्य) यदस्तु तदस्तु। व्यापादयामि। चामुण्डे' ख. ज. पाठः. ३. 'पूजाम ॥ (इति हन्तुमुपक्रान्तः।) माध —' क. ख. ज. पाठः. ४. 'सृत्य प्रकोष्ठ मालतीं निक्षिप्य' क. 'सृत्य प्रकोष्ठ मालतीं विक्षिप्य' ख. ज. पाठः. ५. 'दुरात्मन्! एष प्राप्त' क. ख. 'आ हा दुरात्मन्' ज. पाठः ६. 'कापालापशद' ज. पाठः. ७. 'शद! नन्वयं न भवसि। माल —' क. पाठः.

---

१. 'न पुनर्मृतः' क. पाठः. २. 'सति जीवन्नपि' ख. पाठः. ३. 'ज्ञानकृत' ज. पाठः. ४. [illegible] ख. पाठः. ५. 'प्रकोष्ठेन निक्षिप्य' क, 'प्रकोष्ठ निक्षिप्य' ज. पाठः.

मालती — (सहसावलोक्य) परित्तायदु परित्ताअदु महाभाओ ।
(परित्रायतां परित्रायतां महाभागः ।)

(इति माधवमालिङ्गति ।)

माधवः — महाभागे! न भेतव्यं न भेतव्यम् ।
मरणसमये त्यक्ताशङ्कप्रलापनिरर्गल-
प्रकटितनिजस्नेहः सोऽयं सखा पुर एव ते ।

'प्रगण्डः कूर्परादूर्ध्वं प्रकोष्ठः कूर्परादधः' ।
इति वैजयन्ती । बलातिशयात् प्रकोष्ठग्रहणम् । 'निष्ठुरैः प्रकोष्ठपृष्ठप्रहारैर्लीनानपि टिट्टिभप्रभृतीनपातयत्' इति हर्षचरितोक्तेः । आः इति कोपे । 'आस्तु स्यात् कोपपीडयोः' इति वैजयन्ती । दुरात्मन् ! दुष्टबुद्धे !, प्रतिहतोऽसि विघ्नितमनोरथोऽसि । कापालिकापशद कापालिकश्चासावधमश्चेति ।

सहसावलोक्येति — जलमध्यमज्जनावसरेऽवहितस्येवाचिन्तितोपनतत्वात् साश्चासत्वं प्रकाशयते । परित्रायतां परित्रायतां महाभागः । भयानकद्योतिका वीप्सा ।

महाभागे इति महान् भागो भाग्यं यस्यास्तस्यास्तव नातिचिरं दुःखानुभव इति द्योतनायामन्त्रणम् । न भेतव्यं न भीतिः कर्तव्या । वीप्सया तस्याः स्थैर्यमापादयति ।

इदानीं प्रत्युत त्वदपकारिण एव भयावकाश इति तामुपपत्त्या समाश्वासयति—मरणसमय इत्यादि । आसन्नप्राणत्यागे काले, त्यक्ताशङ्केन प्रलापेन मुक्तलज्जेन परिदेवितेन, निरर्गलं अप्रतिबन्धं, सर्वोऽपि जनो जानात्विति निजं प्रश्रयं परित्यज्येत्यर्थः, प्रकटितः प्रकाशितो निजोऽकृत्रिमः स्नेहो यस्मिन् । न तु लौकिकवन्मातृप्रभृतिष्विति द्योतयति । स इति यस्त्वद्विषयेणानुरागेणेदृशीं दशां नीतः, कामन्दक्यास्ते निवेदितं इत्यर्थः । अयमिति भयनिमीलिते दृशावुन्मील्य दृश्यतामित्यर्थः । सखेति स्त्रिया भर्तुरतिशयितस्य बन्धोरभावात् ।

१. '(सहसालोक्य)' घ. पाठः. २. 'परित्ताअइ परित्ताअइ मं महा' च. पाठः. ३. 'अदु मं महाणुभाओ माहवो' क. पाठः. ४. 'महाराओ' ब. पाठः ५. 'त्यक्त्वा शङ्कां प्रलापनिरर्गलं' झ ज. पाठः. ६. 'प्रताप' ख. पाठः.

१. 'हस्तस्य चाप्यधः' घ. पाठः. २. 'जलनिधिजलमध्य' ज. पाठः. ३. 'देवनेन' क. छ. पाठः.

सुतनु विसृजोत्कम्पं सम्प्रत्यसाविह पाप्मनः
फलमनुभवत्युग्रं पापः प्रतीपविपाकिनः ॥ २६ ॥

अघोरघण्टः—आः! क एष पापोऽस्माकमन्तरायः संवृत्तः?

'महर्षेर्महिषीसख' इति प्रयोगात्, 'प्रेयो मित्र'मिति शिष्यमाणत्वाच्च। पुर एव ते तवाग्रत एवानन्तरितो वर्तते। मरणसमय इत्यादिभिस्तस्यास्ते तेन मया प्राणेभ्योऽपि त्रातव्यत्वान्मयि च गृहीतभरे दुरात्मनोऽस्य का शक्तिस्तव गन्धमप्याघ्रातुमिति तस्यां हर्षमापादयति। सुतनु शोभनाङ्गीत्यस्यास्त्वत्तनोरपाये कथं मया जीवितव्यमिति व्यञ्जयति। विसृज विशेषेण मुञ्च, निरवशेषं मुञ्चेत्यर्थः। उत्कम्पं भयानुभावं हृदयक्षोभं। सम्प्रति मयि सन्निहिते इत्यर्थः। असाविति प्रत्यक्षदृष्टापराधत्वाद्वध्यत्वमाह। इहेति इतो देशात् जीवन् पदमपि न चलिष्यतीति। पाप्मनः त्वद्वधोद्यमरूपस्य पापस्य, फलं प्रयोजनम्, अनुभवति, वर्तमानसामीप्ये लट्, न क्षणान्तरविलम्ब इत्यर्थः। उग्रमिति लोकद्वयेऽप्यनुभाव्यत्वात् क्रूरम्। पाप इति निषिद्धकर्मताच्छील्यात् पूर्वमेव वध्यः, किं पुनरिदानीमिति व्यञ्जयति। प्रतीपविपाकिनः स्वेष्टस्य प्रतिकूलं विपक्तुं शीलं यस्य।

"अत्युत्कटैः पापपुण्यैरिहैव फलमश्नुते।"

इति वचनात्। अथवा प्रतीपो विपाको यस्य।

'प्रतीपः प्रतिकूलं स्यादनुकूलं विपर्ययः।'

इति वैजयन्ती। त्वद्वधेन स्वसमृद्धिः नन्वमुना पूर्वं सङ्कल्पिता, सम्प्रति त्वमुष्यैव वधेन त्वत्समृद्धिर्भविष्यतीत्यर्थः। अत्र परस्परानुरागसन्धुक्षितः शृङ्गारो व्यज्यते। धृतिरनुकम्पा च रिपुद्वेषश्च भावाः। विषमालङ्कारः, अर्थालाभस्यानर्थप्राप्तेश्च कथनात् ॥ २६ ॥

आः! दुरात्मन्नित्यादिना तर्जनोद्वेजनाभ्यां द्युतिः। अन्तरायो विघ्नः [संवृत्तः] सञ्जातः। अन्तरायग्रहणं कुयोगिनां 'आलस्यं व्याधय' इत्याद्यन्तरायप्रादुर्भावं सूचयति।

१. 'प्रायः' ख. पाठः. २ 'पापोऽस्मदन्तरायः' ङ. पाठः.

1. 'स्तस्य तेन मया' ख, ग, घ, ङ, छ, ज. पाठः. २. 'रभावे कथं' ज. पाठः ३. 'इह देशात्' क. ग. पाठः. ४. 'त्वद्वधोद्यम' क. ख. पाठः ५. 'त्वद्वधेन' क. घ, '[illegible]' ग. पाठः. ६. '[illegible] मुना पूर्वं सङ्कल्पितं' ख. पाठः.

कपालकुण्डला—भगवन् ! स एवास्याः स्नेहभूमिः कामन्दकीसुहृत्पुत्रो महामांसस्य पणयिता माधवः ।

माधवः—(सास्रं) महाभागे ! किमेतत् ?

मालती—(चिराद् आश्वस्य) महाभाअ ! अहं पि ण आणामि । एत्तिअं उणो जाणामि — उवरिअलिन्दे पसुत्ता इह पडिबुद्धह्मि । तुह्मे उण कहं ?

(महाभाग ! अहमपि न जानामि । एतावत् पुनर्जानामि — उपर्यलिन्दे प्रसुप्ता इह प्रतिबुद्धास्मि । यूयं पुनः कथम् ?)

---

अस्या स्नेहभूमिः प्रेम्णो विषयभूत इति 'हा दइअ माहवे'ति प्रकटितत्वात् । कामन्दकीसुहृत्पुत्र इति पूर्वं विष्कम्भकोक्तं सङ्घटयति ।

सास्रं सबाष्पमित्यतीतावस्थानुसरणेन सकरुणत्वं द्योतयति । किमेतत् एतद्भवत्याः पाषण्डहस्तगमनरूपं वस्तु किं कथमायातमिति प्रश्नः ।

चिरादाश्वस्य बहुना कालेनात्मानं पर्यवस्थाप्येति वाग्वृत्तियोग्यतापादनमाह । महाभाग अहमपि न जानामि । एतावत् पुनर्जानामि — उपर्यलिन्दे प्रसुप्ता इह प्रतिबुद्धासीत्याकर्षणविषयाकृष्टत्वादन्तरालवृत्तान्तापरिज्ञानमाह । इहेति करालायतने । यूयं पुनः कथम् ? पुनः शब्दः पक्षव्यावृत्तौ । मद्वृत्तान्तस्तावदास्ताम् । भवद्वृत्तान्तश्चिन्त्यते । एतं वृत्तान्तमज्ञात्वैव केन प्रकारेणास्मिन् देशेऽस्मिन्नवसरे अचिन्तितमेव सन्निहिता इत्यर्थः ।

---

१. 'कपा — भगवत्या एवायमस्याः' क. पाठः. २. 'स्याः अतिस्नेहभूमिः', ३. 'मांसपण्यिता' छ. पाठः. ४. 'विक्रेता' ख. पाठः ५. 'माधवो नाम ।' क. पाठः. ६. 'माध — महाभागे' ख. पाठः. ७. 'अहं ण किं पि आणामि ।' क. पाठः. ८. 'अलिन्दए पसुत्ता' ख. ग. घ. ङ. झ. ञ, 'अलिन्द एव्व सुत्ता' च, 'अलिन्दं पसुत्ता' छ, 'अलिन्दं एव्व पसुत्ता' ज. पाठः.

---

१. 'स्वातीतानुस्मरणेन' क, 'स्वचितोऽवस्थानस्मरणेन' ज. पाठः. २. 'द्भगवत्याः' क. छ. पाठः. ३. 'इहैव प्रति' ख. पाठः ४. 'प्रबुद्धा' क. छ. पाठः.

**माधवः** — (सलज्जम्)

त्वत्पादपङ्कजपरिग्रहपुण्यजन्मा
भूयासमित्यभिनिवेशकदर्थ्यमानः ।
भ्राम्यन्नृमांसपणनाय परेतभूमा-
वाकर्ण्य भीरु ! रुदितानि तवागतोऽस्मि ॥ २७ ॥

---

सलज्जमिति स्वकृतस्य साहसस्य स्वेनैव वक्तुमनुचितत्वात् सवैलक्ष्यमित्यर्थः ।

स्वसन्निधानोपपत्तिमाह—त्वत्पादेत्यादि । त्वत्पादपङ्कजयोः परिग्रहेण अङ्गीकरणेन । कर्तरि षष्ठ्या समासः; कर्मणि षष्ठ्याः परिग्रहे तु पादपङ्कजयोः प्रभुत्वं व्याहन्येत । पादपङ्कजग्रहणं त्वत्परिग्रहेत्युक्तेरपि चरणकमलपरिग्रहोक्तेरग्राम्यत्वेन रसावहत्वात् । पुण्यजन्मा शोभनं जन्म जननं यस्य । भूयासमित्याशिषि लिङ् । अभिनिवेशकदर्थ्यमानः अभिनिवेशो निर्बन्धः 'नितान्तरूक्षाभिनिवेशमीशम्', 'अभूताभिनिवेशो रागः' इत्यादिदर्शनात् । तेन कदर्थ्यमानः क्लेश्यमानः । अनेन दुर्लभत्वबुद्धेः स्थैर्यं प्रकाश्यते । भ्राम्यन् इतस्ततः सञ्चरन् । 'वा भ्राश...' (३-१-७०) इत्यादिना श्यन् विकल्पात्, भ्रमेः श्यनि शतरि रूपम् । नृमांसपणनाय नृमांसविक्रयार्थम् । परेतभूमौ श्मशाने । भीर्विति स्मर्यमाणा तत्रैकाकिन्या भयावस्था मां दहतीति द्योतयति । रुदितानीति लक्षणया साश्रुमोक्षाणि विलपितानीत्यर्थः । अत्रौत्सुक्यं भावः । करुणश्च रसो व्यज्यते । समाधिरलङ्कारः, तस्याः प्राप्त्यर्थं एकस्मिन्नुपायेऽनुष्ठीयमाने कारणान्तरस्यापि दैवोपनीतस्य निबन्धात् । 'महाभाअ अहं पि ण जाणामी'त्यारभ्य 'रुदितानि तवागतोऽस्मी' त्यन्तो मार्गः, तत्त्वार्थकीर्तनात् ॥ २७ ॥

---

१. 'तत्पाणिपङ्कज' क, 'त्वत्पाणिपङ्कज' ङ. ज. झ. ञ. पाठः. २. 'धन्यजन्मा' ख. छ. ज. झ. ञ. 'कृष्णजन्मा' च. पाठः. ३. 'रसितानि' ख. पाठः

---

१. 'णं परिग्रहे' क, पाठः. २. 'वैशोपबन्धः' ख, 'वैशो निबन्धः' घ. ङ. पाठः. ३. 'भ्रामभूतावि' क. पाठः. ४. 'मा दहतीति' ख. ग. घ, ङ. छ. ज. पाठः.

मालती — (अपवार्य)[1] कहं[2] मम कारणादो एव्व[3] एदे अप्पणिर[4]-पेक्खा परि[5]ब्भमन्ति ।

(कथं मम कारणादेवैते आत्मनिरपेक्षा परिभ्रमन्ति ।)

माधवः — अहो णु[6] खलु भोस्तदेतत् काकतालीयं नाम ।

व्यसने समागमस्य योजितस्य साफल्यमाह — अपवार्य स्वगतम् । कथं मम कारणादेवैते आत्मनिरपेक्षाः परिभ्रमन्ति । ममेत्यर्थान्तरसङ्क्रमितवाच्येन ध्वनिना कठिनहृदयत्वानिर्दाक्षिण्यगुणविशेषानभिज्ञत्वादीनि साहसकरणो[1]न्नेयानि व्यज्यन्ते । एते इति विपर्ययः प्रतीयते । तत्र हेतुः— आत्मनिरपेक्षा इति । भूतवेताल[2]व्यालादिसङ्कुलतया सुलभापाये पितृवने परिभ्रमस्य स्वशरीरोपेक्षाद्योतकत्वात् ।

अचिन्तितेन दैवसङ्घटनेन विस्मयमान आह — अहो नु खलु भोः ! आकाशे लोकमभिमुखीकृत्योक्तिः । भोः हे भवन्निति । अहो नु खलु आश्चर्यमेवैतदित्यनुभवं परामृशति । एतदिति वर्तमानं वस्तु, काकतालीयं नाम काकतालीयमिति प्रसिद्धम् । 'समासाच्च तद्विषयाद्' (५-३-१०५) इति छः । काकतालीयमिति कालपक्वतया वृन्तात् च्युते तालशिखावर्तिनि तालफले सहसा[3] समेत्य कश्चित् काकः पदं करोति, तत्फलमपि तदानीं पतति; अविवेकिनस्तदालोक्य काकेन पातितं तालफलमिति कथयन्ति । दैवोपपादितं यौगपद्यमन्तरेण पुनः काकेन तत्पातितमिति । अथवा कार्यान्तरेण तालमूलं गतः काकस्तत्फलमपि तदानीमेव पतितमिति काकतालीयमिति न्यायो निर्दि[4]श्यते । तथा श्रूयमाणं तदे[5]तद्वस्तु महामांसविक्रयाय श्मशाने[6] भ्रमतो[7] मालतीपरित्राणोपपत्तिरिति[8] । यदिति प्रकरणात् ।

१. '(स्वगतं)' क. ख. छ. झ. ज. पाठः. २. 'हद्धि ! हद्धि ! कधं' क. पाठः. ३. 'एव्वं एदे' च, 'एव्व अप्प' ज. पाठः. ४. 'णिरपेक्खं' ज. पाठः. ५. 'परिक्कामन्ति' क, 'परिक्कामति' ज. पाठः. ६. 'तु' ख. घ. ङ. च. पाठः.

१. 'सहसाकरणो' ग. पाठः. २. 'बेतालादि' क. ग. घ. छ. पाठः. ३. 'सहसागत्य' ख. ग. घ. ङ. पाठः. ४. 'निदर्श्यते' ङ. ज. पाठः. ५. 'तदेव तद्वस्तु' ख. ज, 'तदेवैतद्वस्तु' ग. घ. छ. पाठः. ६. 'श्मशानं भ्र' ङ. ज. पाठः. ७. 'भ्रमता माल' ज. पाठः. ८. 'रिति इयदिति' घ. पाठः.

1787

**सम्प्रति हि —**

राहोश्चन्द्रकलामिवाननचरीं दैवात्समासाद्य मे
दस्योरस्य कृपाणपातविषयादाच्छिन्दतः प्रेयसीम् ।
आतङ्काद्विकलं द्रुतं करुणया विक्षोभितं विस्मयात्
क्रोधेन ज्वलितं मुदा विकसितं चेतः कथं वर्ततामू् ॥२८॥

अथ तादात्विकं मनसोऽवस्थाविशेषमनुसन्दधान आह — राहोरित्यादि । राहोः सैंहिकेयस्येति प्रसिद्धं भ्रुकुटीकराळत्वादिरौद्रत्वं ध्वन्यते । चन्द्रकलामिति लावण्यमार्दवादि । आननचरीं मुखे वर्तमानामित्युभयत्र सम्बध्यते । दस्युनापि कबलीकर्तुं निरूपितत्वात् ,

"श्येनावपातचकिता नववर्तिकेव
किं चेष्टसे ननु चिरात् कबलीकृतासि ।" (VIII. 8)

इति वक्ष्यमाणत्वात् । समासाद्य अनभिसन्धिपूर्वकं भाग्यवशादेव समागत्य । मे इति एतदर्थं प्राणानप्युपेक्ष्य प्रवर्तमानस्य ममेत्यर्थः । दस्योः, 'शत्रुर्दस्युरमित्रोऽरिः' इति वैजयन्ती, परमापकारित्वाच्छत्रोः । अस्येति पुरोवर्तित्वम् । कृपाणपातविषयात् खड्गपतनगोचरात् । आच्छिन्दतः हठादाकर्षतः ।

'ध्वान्तादाच्छिद्य देवद्विष इव बलिनः'

इति भट्टमयूरोक्तवत् । प्रेयसीं प्रियतमाम् । 'प्रियस्थिर—' (६-४-१५७) इत्यादिसूत्रेण प्रियशब्दस्य प्रादेशे ईयसुनि च रूपम् । आतङ्काद् भयात्, अपायशङ्कया; यद्यहमस्मिन्नन्तरे नायास्यं ततः किमभविष्यादित्याशङ्कयेत्यर्थः ।

"उल्काशनिनृपव्याघ्रादिभिर्यश्चित्तविप्लवः ।
आतङ्कः स भवेत् सोऽपि प्रायः करुणतामियात् ॥'

इति भावप्रकाशः । 'आतङ्को भयमाशङ्का' इत्यमरः । विकलं विवशम् ।

"ऊरुस्तम्भश्च हृत्कम्पः स्वेदो दृक्चलतारका ।
शुष्कोष्ठतास्यशोषश्च गद्गदत्वं विवर्णता ॥

१. 'वर्तते' घ. छ. ज. पाठः.

१. 'भ्रुकुटी' छ. पाठः. २. 'खड्गपातगोचरात्' ब. घ. पाठः.

विषयस्यापरिछित्तिरुक्तानुक्तानभिज्ञता ।
एतैर्भयानकः स्वाभाविको मानस उच्यते ॥"

इत्युक्तानुभावयुक्तमित्यर्थः । द्रुतं नवनीतद्रवभावमापन्नं, करुणया एकाकिन्या, अदुःखार्हाया स्त्रिया एवंविधं व्यसनमहो समापतितमिति ।

तथा श्रीरामायणे—

'स्त्री प्रणष्टेति कारुण्यमाश्रितेत्यानृशंस्यता ।'

इति ।

"अनुकम्पा तु सा ज्ञेया दुःखितान् प्रति देहिनः ।
उपकारपरत्वं या कुरुते चित्तविक्रिया ॥"

इति दिवाकरः,

"करुः क्लेश इति प्रोक्तः क्लेशं न सहते यतः ।
यस्य धीः करुणा सा स्यात् प्रत्यये करुणो भवेत् ॥"

इति भाँवः[3] ।

"यस्य चित्तं द्रवीभूतं कृपया सर्वजन्तुषु ।
तस्य ज्ञानं च मोक्षश्च किं जटाभस्मचीवरैः ॥"

इति च महाभारते । करुणया द्रुतमिति —

"बाह्यार्थाननुसन्धानं निश्वासोच्छ्वासदीर्घता ।
उपेक्षा केशवासोऽङ्गसंस्कारादिषु दीनता ॥
आकाशवीक्षणं चेति मॉनसः[4] करुणः स्मृतः ॥"

इत्युक्तगुणविशिष्टमित्यर्थः । विक्षोभितं विकृतम्, विस्मयाद् अद्भुतरसावेशात् ।

'विस्मयश्चित्तवैचित्र्यं स त्रिधा त्रिगुणात्मकः ।

इति लक्षितादद्भुतस्थायिभॉवाद्धेतोरित्यर्थः[5] । विक्षोभितमिति—

---

१. 'तवद् द्रवीभाव' ङ, 'तवद् द्रवभाव' ज. पाठः. २. 'अदुःखाया बालाया स्त्रिया' ङ. पाठः. ३. 'भावप्रकाश:' ङ. पाठः. ४. 'मानुषः' क. ख. ग. घ. छ. पाठः. ५. 'भावादित्यर्थः' क. ग. घ. छ. पाठः.

"ध्यानं नयनविस्तारः प्रसादो वदने दृशि ।
आनन्दाश्रु सरोमाञ्चमनिमेषविलोकनम् ॥
अनिश्चलत्वं मनसो यत् तत् स्यान्मानसोऽद्भुतः ॥"[1]

इति निर्दिष्टविकारयुक्तमित्यर्थः । क्रोधेन परापकारजनितेन विकारविशेषेण, 'तेजः स्यान्मनसः क्रोधः' इति लक्षितेन ।

'क्रोधस्त्रिधा भवेत् क्रोधकोपरोषविभागतः ।'

इति शत्रुविषयस्य क्रोधसंज्ञोक्तेः क्रोधग्रहणम् । ज्वलितं शुष्केन्धनमिवाग्निना व्याप्तम् ।

"भ्रुकुटीं कुटिलां धत्ते जिह्वया लेढि सृक्कणी ।
मुहुर्मुहुर्दशत्योष्ठं दन्तान् कटकटापयन् ॥
शस्त्राण्युद्वीक्षते रूक्षं हसश्चोद्वीक्षते भुजौ ।[2]
न तिष्ठति न चैवास्ते विधत्ते कण्ठगर्जितम् ॥
एवं हि वर्तते प्रायो जातक्रोधस्तु शत्रुषु ।"

इति क्रोधकार्योन्मुखमित्यर्थः । मुदा हर्षेण ।

'मुत् प्रीतिः प्रमदो हर्षः प्रमोदामोदसम्मदाः ।'

इत्यमरः ।

"हर्षो मनःप्रसादः स्यादीप्सितार्थोपसङ्गमात् ।
अचिन्त्येष्टार्थसम्पत्तेर्जायते सर्वदा नृणाम् ॥"

इति लक्षितेन हर्षेण, विकसितं कमलमिव बालातपेन निरस्तसङ्कोचम् ।

"रोमाञ्चालिङ्गनस्वेदैर्ललितैः करताडनैः ।
नेत्रवक्त्रप्रसादैश्च भाषितैर्मधुरैरपि ॥
त्यागदानप्रबन्धैः स्युरनुभावास्तु हर्षजाः ॥"

१. 'सो यत् सोऽद्भुत इति स्मृतिः ॥' क, 'सो युक्तं स्यान्मानसोऽद्भुतः ॥' छ. पाठः. २. 'हसश्चोद्वीक्षते' ख. पाठः.

अघोरघण्टः— अरे अरे ब्राह्मणडिम्भ !

---

इत्युक्तहर्षकार्यसमग्रमित्यर्थः । अत्र राहोश्चन्द्रकलामिव दस्योराननचरी-मित्यातङ्कस्य,प्रेयसीमिति करुणायाः, दैवात् समासादयेति विस्मयस्य, अस्येत्यद्यापि जीवन् पुरो वर्तत इति क्रोधस्य, कृपाणपातविषयादाच्छिन्दत इति मुदश्च हेतुरुपन्यस्त इति मन्तव्यम् । सामञ्जस्येनान्वीयमानानामपि पदानामाकाङ्क्षा-सन्निधियोग्यतावशादेवार्थप्रत्यायनौचित्यात् । अन्यथा 'रामं दशरथं विद्धि' इत्यादावप्यसम्बन्धार्थत्वं प्रसजेत् । तत्र रामजनकात्मजाटवीनामुद्देश्य-त्वेन दशरथसुमित्रायोध्यात्ववेदनस्य क्रमेण विधेयत्वात् । अन्यसन्दर्भे च वाक्यद्वयस्यासामञ्जस्यादर्थानुसरणेनान्वयो युक्तः । एवं सर्वत्रावगन्तव्यम् । कथं केन प्रकारेण । वर्तताम् आस्ताम् । एकस्य वस्तुनः एकेनैव प्रकारेण वर्तनोपपत्तेश्चेतसस्तु विकलत्वादिभिः प्रकारैः शबलत्वेनाविर्भवद्भिरनुकलं सहस्रधा कदर्थ्यमानत्वात् केनचिदपि प्रकारेणावस्थातुं न शक्यत इत्यर्थः । अत्र —

'न दोषः स्वपदेनोक्तावपि सञ्चारिणः क्वचित् ।'

इति वचनात् स्वानुभवसिद्धानां भावानां तथा परामर्शमन्तरेण दुर्गमत्वात् स्वशब्दाभिधानेऽपि न दोषः । 'औत्सुक्येन कृतत्वरे'त्यादिवत् आर्थम् । यथा-संख्यमत्रालङ्कारः, समुदायसम्बन्धस्य श्रौतत्वेऽप्यर्थानुमानानुसरणेनावयवानां हेतुहेतुमद्भावतः क्रमसम्बन्धप्रतीतेः; उपमा च । भावशबलत्वं तु स्पष्टमेव । सामान्याभिनयवांश्चात्र प्रयोगः, आङ्गिकवाचिकसात्त्विकाहार्याणां चतुर्णामभि-नयानां विद्यमानत्वात् ॥ २८ ॥

अरे इति सोपालम्भमामन्त्रणम् । वीप्सया वचनत्वरा व्यज्यते । ब्राह्मणडिम्भ ! ब्राह्मणशिशो ! इत्यनेन ब्राह्मणस्य स्वतो भुजवीर्यराहित्यं, शिशुत्वे किं पुनरिति द्योतयति । बहुशो ब्रह्महत्यायाः प्रयत्नतोऽन्विष्य कृतत्वा-दिदानीं स्वयमेव तदागमाद् दिष्ट्या वर्धामह इति च व्यञ्जयति ।

---

१. 'अघो— रे रे' क. ख. ग, 'अघो— अरे रे' ग. ङ, 'अघो—अरे ब्राह्मण' छ. ज. पाठः.

---

१. 'प्रसज्येत' ज. पाठः २. 'तत्र हि राम' छ. पाठः. ३. 'वाक्य-द्वयसामञ्जस्यादर्थानुसारेण अन्वयो युक्तः' ज. पाठः. ४. 'नुसारेणेन' ख. ग., छ. पाठः.

व्याघ्राघ्रातमृगीकृपाकुलमृगन्यायेन हिंसारुचेः
पाप ! प्राण्युपहारकेतनजुषः[1] प्राप्तोऽसि मे गोचरम् ।
सोऽहं[2] प्राग् भवतैव भूतजननीमृप्णोमि खड्गाहति-
व्यस्तस्कन्धकबन्धरन्ध्ररुधिरप्राग्भारनिष्यन्दिना[3] ॥ २९ ॥

व्याघ्राघ्रातेत्यादि । व्याघ्रेण शार्दूलेन आघ्रातायाम्, आघ्रातेत्युक्तिः 'घ्राणैः पश्यन्ति पशवः' इति वचनात् साग्रहमाघ्रातेनानुसृत्य[1] जिघत्सया गृहीतायामिति ध्वनति। मृग्यां हरिण्याम्, कृपया कारुण्येनाकुलस्य मोहितचेतसो मृगस्य हरिणस्य न्यायेन क्रमेण । न्यायश्चाकिञ्चित्कुर्वाणस्य तया सह स्वयमपि[2] विनाशोद्यमः । तथाविधोऽयम् । तवापि प्रियाविषयेण कारुण्येन मदभियोग इत्यर्थः । हिंसारुचेः प्राणिवधे रुचिरतिरागो यस्य । पाप देवीपूजाविप्रकृत्त्वेन दुष्कृतकारिन् । प्राण्युपहारकेतनजुषः सहस्रकृत्वः पूजार्थं कृतेन शरीरिणामुपहारेण निष्कृपजनविजयचिह्नं ध्वजं प्राप्तवतः । अथवा प्राण्युपहारकर्मणि केतनं निमन्त्रणं दीक्षामित्यर्थः । 'श्राद्धे नार्हन्ति केतनं' इति स्मृतिप्रयोगात् । प्राप्तोऽसि न तु मया यत्नतः प्रापितोऽसीति नियतिचोदितत्वमाह । मे इति कायप्राणमनोमन्त्रतन्त्रबलैर्विशिष्टत्वोक्तिः । गोचरं हस्तप्राप्यं देशम् । सोऽहं यः त्वयैवं[3] स्वयमेव कोपितः सोऽहमित्यर्थः । प्राक् अस्याः कन्यायाः पूर्वमिति[4] पश्चात्तदुपहारस्यापि[5] विधित्सितत्वात् । भवतैवेति आस्तां रक्ष्यभूता, रक्षितम्मन्यतया[6] समागतेन त्वयैवेत्यर्थः । ब्राह्मणीतो ब्राह्मणस्य मुख्यतया प्रधानहविषा त्वयैवेति वार्थः । भूतजननीं भूतानां अस्तिप्रत्ययविषयाणां चराचराणां सृष्टिः, मूलप्रकृतित्वात् । 'भूतानां प्राणिनः श्रेष्ठाः' इति वचनात् । ऋप्णोमि प्रीणयामि । खड्गाहत्या खड्गप्रहारेण, व्यस्तस्कन्धस्य पृथक्कृतकण्ठमूलस्य । "स्कन्धो भुज-शिरोंऽसोऽस्त्री" इति वैजयन्ती । अत एव कबन्धस्य शिरोरहितस्याधःकायस्य,

---

१. 'चेतनजुषः' ख, 'केन जुषतः' छ. पाठः. २. 'सोऽयं' ङ. पाठः. ३. 'खड्गाहतिच्छिन्नस्कन्ध' क. ख. ग, 'खड्गाहतव्यस्त' च. पाठः.

---

१. 'साघ्राणनेन' क. छ. पाठः. २. 'मपि नाशो' ज. पाठः. ३. 'त्वयैव स्वय' क. ख. ग. घ. छ. पाठः. ४. 'पूर्वमित्यर्थः', 'पश्चात्', ५. 'रस्य विधि' ज. पाठः. ६. 'रक्षकम्मन्य' ङ. पाठः.

माधवः—आ दुरात्मन् ! पाषण्ड ! चण्डाल !

असारं संसारं परिमुषितरत्नं त्रिभुवनं
निरालोकं लोकं मरणशरणं बान्धवजनम् ।
अदर्पं कन्दर्पं जननयननिर्माणमफलं
जगज्जीर्णारण्यं कथमसि विधातुं व्यवसितः ॥ ३० ॥

---

'कबन्धोऽस्त्री क्रियायुक्तमपमूर्धकलेवरं ।'

इत्यमरः, रन्ध्रं कण्ठनालविवरं, तस्य रुधिरप्राग्भारं शोणितभरं निष्यन्दितुं शीलं यस्य । प्राग्भारग्रहणं युवत्वाच्छ्रीमत्वाच्च प्रत्यग्रसमग्रधातुत्वं प्रकाशयति । अत्र रौद्ररसो व्यज्यते । निदर्शना दृष्टान्तो वा अलङ्कारः ॥ २९ ॥

अथ गुणविशेषनिरपेक्षं तस्य दारुणत्वमनुचिन्त्य सामर्षमाह—असार-मित्यादि । सार उपादेयोंऽशः, तद्रहितमसारम्, अस्या एव सारत्वात्, संसारं जननमरणादितरङ्गसङ्कुलं तापत्रयवाडवाभिघातदुःखितं लोकव्यवहार-सागरम् । परिमुषितरत्नं स्तेनापहृतसर्वोत्तरवस्तु, अस्या एव रत्नत्वात्, त्रिभुवनं स्वर्गभूतलपातालाख्यं लोकत्रयं, तदवान्तरभेदविषयत्वात् सप्त-चतुर्दशसंख्यानाम् । निरालोकं आलोकः प्रकाशः तच्छून्यतया ध्वान्ता-क्रान्तम्, अस्या एव प्रकाशत्वात् । मरणशरणं प्राणत्याग एव रक्षिता शोक-दुःखतो यस्य, बान्धवजनं बन्धवः पित्रादय एव बान्धवाः, स्वार्थे तद्धितप्रत्ययः, तेषां समूहम् । अदर्पम्

'प्रीतिनिर्वृतिनिघ्नानामरागविषयेऽपि यः ।
प्रवृत्तिं कुरुते भावः पुंसां दर्पः स उच्यते ।'

इति लक्षितदर्परहितं, कन्दर्पं कामम्, अस्या एव दर्पहेतुत्वात् । जन-नयननिर्माणं जनानां लोकानां चक्षुरिन्द्रियस्य ब्रह्मकर्तृकां सृष्टिम्, अफलं

---

१. 'माध—दुरा' क. च. छ. झ. म. पाठः २. 'पाखण्ड' ज. झ. ञ. पाठः

---

१. 'यदवान्तर' ख. ग. घ. ङ. ज पाठः २. 'रक्षितारोकदुःखतः' ग. पाठः

निष्प्रयोजनम्, अस्या दर्शनस्यैव फलत्वात्। जगत् सर्वमेव लोकम्[1], जीर्णारण्यं चिरन्तनतया फलकुसुमपल्लवादिशून्यं[2] दावदग्धं वनम्, अस्या अभावे[3] जगतोऽसेव्यत्वात्। विधातुं कर्तुम्, व्यवसितः निश्चयं कृतवान्। कर्तरि निष्ठा।

"किञ्चिदाचरितुं कार्यं व्यवसायः समुत्थितः।
[4]कार्यसिद्धेरजलो [5]यस्य सोऽपि तदाह्वयः॥"

इति दिवाकरः। कथं व्यवसितोऽसि? केन प्रकारेणाध्यवसितवानसीति करणं तावद् दूरे कर्तुमध्यवसायोऽपि चेतनस्य दुष्कर इति द्योत्यते। अत्रानया दुःखरूपस्य संसारस्य सुखप्रतीतेर्जनि(तःहृ)त्वं, त्रिभुवनस्य भूषितत्वं, चन्द्रिकादिभ्योऽपि लोकस्य प्रकृष्टलावण्येनोद्दीपकत्वं, बान्धवजनस्य गुणगणैर्निगलितत्वं, कन्दर्पस्य अपदेऽपि जयाशंसाया विहितत्वं, जननयनानन्दमाकारसौन्दर्यानन्दितत्वं, पुष्पलतयेवोद्यानस्य जगतो विलासिजनोपभोग्यत्वापादनं च क्रमाद्व्यज्यते। संसारादीनामुद्देश्यानामसारत्वादीनां विधेयानां च प्रायः पर्यायत्वेऽपि पुनर्यदुक्तिः प्रियानुरागरिपु[6]रोषविवशचेतसो वक्तुर्न केवलं न दोषः अपि तु गुण एवेति मन्तव्यम्। 'दोषोऽपि गुणः क्वचित् क्वचिन्नोभौ' इति काव्यप्रकाशोक्तेः,

'अविशेषेण पूर्वोक्तं यदि भूयोऽपि कीर्त्यते।
तदेकार्थं रसाक्षिप्तचेतसां तन्न दुष्यति॥'

इति श्रीभोजवचनाच्च। अत्र च प्रकरणाल्लोकोत्तीर्णस्य कन्यारत्नस्य यत् प्रमापणं त्वयोपक्रान्तं तदेतत् संसारादीनामसारताकरणादिति वस्तुसम्बन्धासम्भवेनोपमा[7] परिकल्पिता। मालानिदर्शनालङ्कारः। अथवा मालतीमारणोपक्रमस्य संसारासारताकरणादिभिरध्यवसितत्वादतिशयोक्तिः। तस्य मध्ये मरणशरणं बान्धवजनमिति सहचरभिन्नोऽप्यर्थः प्रविष्टः। तस्योपमात्वाभावात् सोऽपि दोषः पूर्वपरिहारेणैव दत्तोत्तरः। अत्र करुणरसो ध्वन्यते। रिपुं प्रत्यसूया च।

१. 'सर्व एव लोकः' ज. पाठः. २. 'पल्लवशून्यं' क. ख. छ. ज. पाठः. ३. 'अभावेऽसेव्य' क. ग. ब. पाठः. ४. 'अकार्यसिद्धेः' ख. ग. घ. ङ. ज. पाठः. ५. 'यश्च सोऽपि' ख. पाठः. ६. 'रोषरसविवश' ख. ग. घ. ङ. ज. पाठः. ७. 'बन्धासम्बन्धेनोपमा' क. ङ. पाठः.

अपि च । रे रे पाप !

प्रणयिसखीसलीलपरिहासरसाधिगतै-
र्ललितशिरीषपुष्पहननैरपि ताम्यति यत् ।
वपुषि वधाय तत्र तव शस्त्रमुपक्षिपतः
पततु शिरस्यकाण्डयमदण्ड इवैष भुजः ॥ ३१ ॥

---

'अरे ब्राह्मणडिम्भे'त्यादिना 'दुरात्मन् पापण्डचण्डाले'त्यादिना च अन्योन्य-संरब्धवचसा तोटकम् ॥ ३० ॥

पुनस्तदपराधानुचिन्तनान्मूर्छत्क्रोध आह—प्रणयिसखीत्यादि । प्रण-यिनीनामिति स्वशरीरेभ्योऽप्यस्मिन् स्नेहविवशतया दयालुत्वं द्योत्यते, सखीनामिति स्नेहविस्रम्भभूमित्वम् , तासां सलीले परिहासरसे प्रियजनानु-करणसहिते क्रीडारागे ।

'मनोमधुरवागङ्गचेष्टितैः प्रीतियोजितैः ।
प्रियानुकरणं लीला सा स्यात् स्त्रीपुंसयोरपि ॥'

इत्युक्ता लीला । 'द्रवकेलिपरीहासाः' इत्यमरः । अधिगतैः प्राप्तैः । ललित-शिरीषपुष्पहननैः अम्लानतया मृदुलैः शिरीषपुष्पैर्ये प्रहाराः तैः । अथवा ललितैरतोदजनकैरिति हननविशेषणम् । ताम्यति दवस्पृष्टं नवकिसलयमिव म्लानं भवति । तत्र वपुषि तस्मिन् शरीरे विषये । उपक्षिपतः समीपे प्रेरयतः । अथवा प्रस्तुवानस्य वधाय शस्त्रमुपक्षिपत इति अत्यन्तवैषम्यादविवे-कित्वमाह । अकाण्डयमदण्डः अचिन्तितत्वादकाल एवाशनिवद् झटिति प्रवृत्त इत्यर्थः, यमस्य कालस्य दण्ड इवेति ।

'अथ प्रच्छन्नपापानां शास्ता वैवस्वतो यमः ।'

इति वचनात् यमदण्डग्रहणम् । प्राणहरणे च भुजस्य पर्याप्तत्वं द्योत्यते अत्र विषमं काव्यलिङ्गमुपमा चालङ्कारः । प्रणयिसखीत्यादि संफेटः, रोष भाषणात् ॥ ३१ ॥

---

१. 'च । अरे पाप' ख. च, 'च । अरे अरे पाप' घ, 'च । रे पाप' ग. ब पाठः. २. 'शिरःप्रकाण्डयमदण्ड' ख. पाठः.

---

१. 'त्यादि चान्योन्य' ख. ग. घ. ङ. ज. पाठः. २. 'सखीति स्नेह' ज पाठः. ३. 'इति मनुवचनाद्' क. ङ. पाठः.

अघोर—दुरात्मन्! प्रहर प्रहर। नन्वयं न भवसि।

मालती—पसीद साहसिअ णाह। दारुणो क्खु एसो हदासो। परित्ताअसु मं णिवत्तिअ इमादो अणत्थसंसआदो।

(प्रसीद साहसिक नाथ, दारुणः खल्वेष हताशः। परित्रायस्व मां निवृत्त्यास्मादनर्थसंशयात्।)

कपालकुण्डला—भगवन्! अप्रमत्तो भूत्वा दुरात्मानं व्यापादय।

माधवाघोरघण्टौ—(मालतीकपालकुण्डले प्रति) अयि भीरु।

---

सोल्लुण्ठमाह—प्रहर प्रहरेति। मयि प्रहर्तुं तव का शक्तिरित्यर्थः। तदेवाह—अयं न भवसि। अयमीदृशो जळः, त्वमित्यायाति मध्यमप्रयोगात्। न भवसि झटिति विनङ्क्ष्यसीति वर्तमानसामीप्ये लट्।

स्नेहादपायशङ्किन्याह—पसीदेति। प्रसीद साहसिक नाथ। दारुणः खल्वेष हताशः। परित्रायस्व मां निवृत्त्यास्मादनर्थसंशयात्। प्रसीद अनुग्रहं कुरु। तत्र हेतुः—दारुणः क्रूरः, खलु प्रसिद्धो, हताशः, हता अधर्मविषयतया दुष्टा आशा अभिप्रायो यस्य। अथवा दूषिता स्वदुश्चेष्टितैर्दिशो येन। प्रसादप्रकारमाह—अस्माद्विग्रहरूपात्, अनर्थसंशयात् व्यसनसन्देहात्, एकान्तविजयस्यान्यतरस्मिन् अनध्यवसेयत्वादित्यर्थः, निवृत्त्य विरम्य, मां रक्षेति स्वदपाये मदपायस्यापि नान्तरीयकत्वात् त्वद्रक्षणमेव मद्रक्षणमित्यर्थः। 'णिव्वत्तीअदु' इति पाठे निवर्त्यतां भवतेति शेषः। "जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्" (१. २. ३. २८) इति विरामार्थत्वात् पञ्चमी।

अप्रमत्तः अवहितः। व्यापादय मारय।

मालतीकपालकुण्डले प्रतीति यथासंख्यमन्वयः, माधवो मालती लक्षीकृत्याघोरघण्टः कपालकुण्डलामित्यर्थः। उक्त्यैवायं नाटकन्यायाद्रसाभिनयनिबन्धनम्।

---

१. 'अघोर—आः दुरा' क. जे. ञ. पाठः. २. 'अयं न भवसि' ग, 'ननु त्वं भवसि' घ. च. छ. पाठः. ३. 'पसीद णाह साहसिअ। णामदारुणो' क. पाठः. ४. 'अअं' क. ण. झ. म. पाठः. ५. 'णिअत्तीअदु' क. ग. च. झ. ञ, 'णिव्वत्तअदु' छ. ज. पाठः. ६. 'सइआदो' ज. पाठः. ७. 'प्रति—धैर्यं' ञ. पाठः.

१. 'तवाशक्ति' ञ. पाठः.

धैर्यं निधेहि हृदये हत एष पापः
किं वा कदाचिदपि केनचिदन्वभावि ।
सारङ्गसङ्गरविधाविभकुम्भकूट-
कुट्टाकपाणिकुलिशस्य हरेः प्रमादः ॥ ३२ ॥

(नैपथ्ये कलकलः । सर्वे आकर्णयन्ति ।)

(पुनर्नैपथ्ये) भो भो मालत्यन्वेषिणः ! इयममात्यभूरिवसुमाश्वास-

धैर्यं निधेहीत्यादि—निधेहि स्थापय, तस्य चलितत्वात् । हत इति भूतत्वेन निर्देशो नात्र संशय इति द्योतयितुम् । एष इति माधवोक्तौ कापालिकः तदुक्तौ माधवः परामृश्यते । पापः महापातकपुञ्जकञ्चुकितत्वात् पूजाघातकत्वाच्च । किमिति प्रश्ने । वेति विकल्पे । कदाचिदपि वा केनचिद्वा किमन्वभावि प्रत्यक्षमकारीत्यर्थः । सारङ्गसङ्गरविधौ हरिणेन सह युद्धकरणे । इभकुम्भकूटकुट्टाकपाणिकुलिशस्य गजशिरःपिण्डरूपशैलशिखरतक्षणशीलानि हस्तस्थितानि वज्राणि यस्य । 'कुम्भौ तु पिण्डौ शिरसः' इति, 'कूटोऽस्त्री शिखरं शृङ्गं' इत्यमरः । कुम्भयोः कूटत्वेन रूपणाद् इभस्य शैलत्वरूपणसिद्धिः । 'जल्पभिक्षकुट्टलुण्टवृङः षाकन्' (३.२.१५५) इति षाकन्प्रत्ययः । पाणिकुलिशशब्देन हस्तस्थिता नखा अतिशयोक्त्याध्यवसीयन्ते । कूटत्वोक्तेः कुलिशत्वोक्त्यौचित्यं वज्रस्य शिखरिशिखरदारणशक्तिप्रसिद्धेः । हरेः सिंहस्य, इन्द्रस्येति च स्फुरति । प्रमादः लक्षणयानवधानकार्यं व्यसनमिति यावत् । अत्र वीररसो ध्वन्यते । वैधर्म्यतः प्रतिवस्तूपमा, एकदेशविवर्तिरूपकम्, अतिशयोक्तिश्चालङ्कारः ॥ ३२ ॥

मालत्यन्वेषिणः मालतीमन्वेष्टुं शीलं येषाम्, तदन्वेषणार्थमितस्ततः परिभ्रमणशीला इत्यर्थः । आश्वासयन्ती शुनिमित्तादिकथनेन वीतशोकं कुर्वाणा । अप्रतिहतगतिः सर्वपथीनज्ञानसामर्थ्या । 'गत्यर्था बुद्ध्यर्थाः'

१. 'संहतिविधा' ज. पाठः २. 'सर्वो' ख. पाठः ३. 'थ्ये) मालत्य' ख पाठः. ४. 'षिणः सैनिकाः! इयं' क. झ. म. पाठः.

१. 'प्रत्यक्षकारी' क. पा : २. 'अत्र रौद्ररसो' क. छ. पाठः

यन्ती अप्रतिहतगतिर्भगवती कामन्दकी समादिशति—पर्यवष्टभ्यतामेतत् करालायतनम् ।

नाघोरघण्टादन्यत्र कर्मैतद्दारुणाद्भुतम् ।
न करालोपहाराच्च फलमन्यद्विभाव्यते ॥ ३३ ॥

कपालकुण्डला—भगवन्! सर्वतः पर्यवष्टब्धाः स्मः ।

अघोरघण्टः—सम्प्रति विशेषतः पौरुषस्यावसरः ।

---

इति वचनाद् गतिशब्दो ज्ञानमाह । 'णौ गमिरबोधने' (२-४-४६) इति गमेर्बोधनार्थत्वमप्यस्तीति ज्ञापकाच्च । पर्यवष्टभ्यतां परितः सर्वतः आक्रम्यताम् । एतदित्युक्तेः समीपगतत्वं वक्तुर्ज्ञेयम्, करालायतनम् ।

पर्यवष्टम्भे हेतुमाह—नाघोरघण्टादित्यादि । अन्यत्र अन्यस्मिन् पुरुषे । दारुणाद्भुतं क्रूरं मुग्धस्त्रीवधरूपत्वात्, आश्चर्यम् उपर्यलिन्दवर्तिन्याः सखीजनमध्यादर्धरात्रे समाकर्षणात् । करालोपहारात् करालायै बलित्वेन दानात्, अन्यत् फलं प्रयोजनम् । विभाव्यते निरूप्यते । इति समादिशतीति सम्बन्धः । 'अन्याराद्—' (२-३-२९) इत्यादिना अन्यशब्दयोगे पञ्चमी । अत्रानुमानमलङ्कारः । अनुमानाख्यं गर्भाङ्गं चेदं, लिङ्गतोऽभ्यूहनात् ॥ ३३ ॥

कापालिकं कापालिकी सभयमाह—पर्यवष्टब्धाः स्मः उपरुद्धा भवामः, अमात्यसैनिकैरित्यर्थात् ।

कापालिकः सधीरमाह—सम्प्रति बहुजनोपरोधे, विशेषतोऽतिशयेन, पौरुषस्य पराक्रमस्य, अवसरः समयः । पूर्वमेकेनैकस्य जये तादृशस्य यशसोऽनुत्थानाद् बहूनां त्वेकेन पराजये सर्वश्लाघ्यत्वात् प्रयत्नतः परा-

---

१. 'हृतप्रतिज्ञा भगवती' क, 'हृतप्रज्ञाचक्षुर्भगवती' ञ, 'हृतप्रज्ञागतिर्भगवती' झ. ब. पाठः. २. 'न्दकी नः समा' क. ङ. ञ. पाठः. ३. 'तनं द्रुतम् । नाघोर' क. पाठः. ४. 'दन्यस्य' क. घ. ङ. झ. ञ, 'दन्यस्मात्' ज. पाठः. ५. 'तद्भीषणा' क, 'तद्दारुणात् कृतं' ख, 'तद् दारुणं भवेत्' छ, 'तद् दारुणाद्भूत' ञ. पाठः. ६. 'भगवन् पर्य' क. छ. ज. झ. ञ. पाठः. ७. 'ष्टब्धौ स्वः' ङ. पाठः.

---

१. 'नार्थोऽप्यस्ती' ञ. पाठः. २. 'नापनाच्च' क. पाठः. ३. 'सामर्षमाह' ञ. पाठः.

मालती—हा ताद! हा भअवदि! परित्ताअहि परित्ताअहि।
(हा तात! हा भगवति! परित्राहि परित्राहि।)

माधवः—भवतु। बान्धवसमाजसुस्थितां एनां विधाय दुरात्मानं व्यापादयामि।

(मालतीमन्यतः प्रेरयन् परिक्रामति।)

माधवाघोरघण्टौ—(अन्योन्यमुद्दिश्य) अरे रे पाप!

कठोरास्थिग्रन्थिव्यतिकरघणत्कारमुखरः
खरस्नायुच्छेदक्षणविहितवेगव्युपरमः।

क्रमणीयमित्यर्थः। 'गगनतलप्रयाणवेग' इत्युक्तौ गगनगमनशक्तयोरप्यनयोरधर्मपाशबद्धत्वाद् गतिभङ्गो जात इत्यवसेयम्।

स्वजनवचनं बहिः श्रुत्वा सोत्कण्ठा मालत्याह—हा तात! हा भगवति! भूरिवसुरिति कामन्दकीति च द्वयोः स्मारितत्वात् तयोर्दुःखमनुसन्धाय तन्नामग्राहं रोदितीत्यर्थः।

बान्धवसमाजसुस्थितां बन्धुसमूहे निर्भयत्वेन स्थिताम्। भवत्वित्यादिर्विद्रवः, कापालिकवधकथनात्।

अन्यतः पूर्वस्थानाद् बन्धुजनाभिमुखं स्थानान्तरे प्रवर्तयन्।

अथ प्रियापरिभवस्मरणानुशयात् पूजाविघातात्कोद्दीपितक्रोधावाहतुः-कठोरास्थीत्यादि। कठिनानामस्थिग्रन्थीनां सन्धिबन्धास्थिनां व्यतिकरात् सम्पर्काद् घणत्कारेण कृष्णपाषाणकुट्टाकटकसङ्घट्टशब्दसदृशेन शब्दविशेषेण मुखरो वाचाटः। खराणां कर्कशानां स्नायूनां सन्धिबन्धसिराणां छेदेन

१. 'हा अम्ब! हा भअव' घ. च. पाठः २. 'वदि।माध—' क, ङ. ज. झ. म. पाठः
३. 'स्थितां मालतीं विधाय' क. झ. म. पाठः ४. 'य तत्समक्षमेव दुरा' क, 'य तत्समक्षमेनं व्यापा' ङ. ज. झ. म. पाठः. ५. 'न्यतः कापालिकं चान्यतः प्रे' क. पाठः, ६. 'प्रेषयन्' ख. पाठः. ७. 'आः पाप' क. झ. म, 'रे रे पाप' ख. घ, 'आः रे रे पाप' ङ. म. पाठः. ८. 'रणत्कार' क. झ. म. पाठः, ९. 'अविचलितवेगव्यतिकरः' ङ. पाठः. १०. 'व्युपशमः' क. पाठः

१. 'इत्युक्तौ' ख. ग. घ. ज, 'इत्युक्ते' क. पाठः, २. 'त्यवसेयः' म. घ. पाठः. ३. 'तात भगव' क. ख. ग. घ. छ. ज. पाठः. ४. 'ग्रहणमनुसन्धाय रोदि' ज. पाठः ५. 'बन्धनसिरा' ङ. पाठः

निरातङ्कः[1] पङ्केष्विव पिशितपिण्डेषु[2] निपत-
न्नसिर्गात्रं[3] गात्रं सपदि लवशस्ते विकिरतु ॥ ३४ ॥

(इति निष्क्रान्ताः सर्वे ।)

इति मालतीमाधवे श्मशानवर्णनं नाम

॥ पञ्चमोऽङ्कः ॥

---

क्षणं स्वल्पकालं विहितः कृतः पतनवेगस्य व्युपरमः शमनं यस्य । दारुण-दारुदारणप्रवृत्तस्येव[1] परशोः परिणतलतापाशबन्धनेन किंचिद्विलम्बात् । निरातङ्कः आशङ्कारहित इति प्रतिबन्धाभावो लक्षणयोच्यते । पङ्केषु कर्दमेष्विवेति मध्ये कठिनद्रव्याभावात् । पिशितपिण्डेषु अंसस्फिगादिप्रदेशमांसघनेषु । असिः खड्गः । गात्रं गात्रं प्रत्येकमङ्गानि । सपदीति क्रोधस्य कालान्तराक्षमत्वं प्रकाशयति । लवशः तिलवत् कणं कणं कृत्वा । विकिरतु दिक्षु विक्षिपतु । विधौ लोट् । अत्र रौद्रो व्यज्यते । स्वभावोक्तिरलङ्कारः । कठोरास्थीत्यादिर्व्यवसायः, स्वशक्त्युक्तेः । सम्फेटाख्यमारभट्यङ्गं चेदम् ।

"सम्फेटः स समाघातः क्रुद्धः संरब्धयोर्द्वयोः ।"

इति वचनात् ॥ ३४ ॥

निष्क्रान्ताः सर्वे इति—

"दूराध्वानं वधं युद्धं राज्यदेशादिविप्लवम् ।
संरोधं भोजनं स्नानं सुरतं चानुलेपनम् ॥
अम्बरग्रहणादीनि प्रत्यक्षाणि न निर्दिशेत् ॥"

इति वचनाद् युद्धं कापालिकवधं चोपरि विष्कम्भकेण सूचयिष्यन् पात्रनिष्क्रामणेनाङ्कं परिसमापयतीत्यशेषमतिमङ्गलम् ॥

मालतीमाधवस्येत्थं पञ्चमाङ्कार्थचर्चनम् ।
पूर्णज्योतिःप्रसादेन चक्रे पूर्णसरस्वती ॥

॥ इति पञ्चमोऽङ्कः ॥

---

१. 'निरातङ्क' ज. पाठः. २. 'खण्डेषु' ख. ग. ङ. च. छ. ज. पाठः.
३. 'विलसन्नसि' क. पाठः.

---

१. 'दारुणि प्रवृ' क, 'दारुणप्रवृ' ख. ग. घ. ङ. ज. पाठः.

## अथ षष्ठोऽङ्कः ॥

(प्रविश्य)

कपालकुण्डला — आः पाप! दुरात्मन्! मालतीनिमित्तं विनिपातितास्मद्गुरो! माधवहतक! अहं त्वया तस्मिन्नवसरे निर्दयं निघ्नत्यपि स्त्रीत्यवज्ञाता। (सक्रोधं) तदवश्यमनुभविष्यसि कपालकुण्डलाकोपस्य विलसितम्!

अथ विष्कम्भकमारभते — प्रविश्येति। [आः] "आस्तु स्यात् कोपपीडयोः" इति वैजयन्ती। मालतीनिमित्तं मालतीहेतोरिति विनिपातनक्रियाविशेषणम्। मालतीनिमित्तमित्युक्तिः निमित्तभूतायां तस्यां वैरानुबन्धं द्योतयति। विनिपातितास्मद्गुरो प्रमापितः, अस्माकमित्यात्मनि बहुवचनं तन्निग्रहशक्तिं सूचयति, गुरुर्येन इत्यनुवादेन समरभुवि तस्य माधवेन हतत्वं ज्ञाप्यते। माधवहतक! मात्रनसंज्ञनष्टशील! इत्याकाशेऽभिमुखीकृत्योक्तिः। तस्मिन्नवसरे इति विनिपातितेत्युक्तेस्तद्विनिपातनकाल इत्यर्थात्, निर्दयं निघ्नती निष्ठुरं प्रहरन्ती, अपीति स्वस्यावध्यत्वं प्रकाशयति; स्त्रीत्यवज्ञाता स्त्रीत्वेनोपेक्षिता।

'अवध्या ब्राह्मणा गावः स्त्रियो बालाश्च ज्ञातयः'।

इति स्मृतेः। अनया नीचे घृणया नायकस्य शोभाख्यः सात्त्विकगुणः प्रकाशितः।

'हीने घृणाधिके स्पर्धा शोभायां शौर्यदक्षता।'

इति वचनात्। सक्रोधमिति — तदपकारानुसन्धानात् क्रोधविकारमभि-

---

१. 'ततः प्रविशति कपा.' क. ख. ग. घ. छ. ज. झ. ञ. पाठः. २. 'आः दुरात्मन्' क. ख. ग. झ. ञ, 'आः पाप! माल' छ. पाठः. ३. 'व्यापादितास्मद्गुरो' ख. च. झ. ञ, 'विपातितास्मद्गुरो' छ. पाठः. ४. 'अस्मिन्' छ. पाठः. ५. 'कोपस्य विजृम्भितं' क. छ. झ. ञ, 'कोपविजृंभितस्य फलं' ख. ग. घ; 'कोपस्य फलं' ञ. पाठः.

---

१. 'विष्कम्भमारभते' ख. ञ. पाठः. २. 'ति निपातन' ख. ग. घ. ङ. छ. ञ पाठः. ३. 'वैराग्यानुबन्धं' ञ. पाठः. ४. 'त्वं विज्ञाप्यते' क. ङ. पाठः.

शान्तिः कुतस्तस्य भुजङ्गशत्रो-
यस्मिन्नमुक्तानुशया सदैव ।
जागर्ति दंशाय निशातदंष्ट्रा-
कोटिर्विषोद्गारगुरुर्भुजङ्गी ॥ १ ॥

---

नीयेत्यर्थः । तदिति तस्माद्यतोऽहं जीवामीत्यर्थः । अवश्यमन्यभिचरित कपालकुण्डलाकोपस्य कपालकुण्डलेति न तु मदित्यनेन प्रसिद्धप्रभावत्वं द्योतयति । विलसितं विपाकस् ।

उक्तमर्थं निदर्शनेनोपपादयति—शान्तिः कुत इत्यादि । शान्तिर्मनसो निर्वृतिः कुतः कस्माद्धेतोः, सदा शङ्कास्पदत्वेनोद्विग्नत्वात्, भुजङ्गशत्रोः नागमिथुनात् पुमांसं हतवतः । यस्मिन् विषये, अमुक्तानुशया अपरित्यक्त-दीर्घद्वेषा ।

'पश्चात्तापे त्वनुशयो दीर्घद्वेषानुबन्धयोः ।'

इति वैजयन्ती । सदा नित्यम्, एवकारो भिन्नक्रमः, जागर्त्येव न निद्रात्येव, जागृ निद्राक्षये' इति धातुः, अवहितैव छिद्रान्वेषिणी वर्तत इति यावत् । दंशाय दंशनार्थं । निशातदंष्ट्राकोटिः तीक्ष्णदंष्ट्राग्रा, विषोद्गारगुरुः गरलोद्गमनेन गुर्वी अप्रतिहतसामर्थ्या, भुजङ्गी हतस्य नागस्य विरहविधुरा सहचरी नागी । अत्र वैधर्म्येण दृष्टान्तोऽलङ्कारः, कापालिकस्य तद्वन्तुर्माधवस्य तत्प्रति-चिकीर्षोश्च स्वस्याः 'तदवश्य'मिति वाक्योक्तानां बिम्बभूतानां पद्योक्तेः भुजङ्गेन तच्छत्रुणा भुजङ्ग्या च प्रतिबिम्बितस्य स्फुटत्वात् । 'अनुभविष्यसी'त्युक्तस्य कुत इति वैधर्म्येण समर्थनाच्च वैधर्म्यदृष्टान्तत्वम् । अथवा पूर्ववाक्यमनपेक्ष्य पर्यालोचने अप्रस्तुतप्रशंसा, प्रस्तुतस्यार्थस्य अप्रस्तुतमुखेन गम्यमानत्वात्, अतिशयोक्तिर्वा प्रकृतस्यार्थस्य समेन निगीर्याध्यवसानात् । अवश्यमनुभविष्यसीत्यादि विरोधनम् , संरब्धोक्तेः ॥ १ ॥

---

१. 'कोटी' क. पाठः.

---

१. 'कोटी' क. ख. ग. घ. ङ. पाठः. २. वाक्येनोक्ताना' ख. पाठः.
३. 'पद्योक्तैः' ख. पाठः

(नैपथ्ये)[1]

हे राजानश्चरमवयसामाज्ञया सञ्चरध्वं[2]
कर्तव्येषु श्रवणसुभगं भूमिदेवाः पठन्तु ।

अथ 'नन्दनाय राज्ञा प्रतिपादिता' इति पूर्वप्रस्तुतस्य मालतीविवाहोत्सवस्यानुसन्धानं करोति कविः नायककार्यहेतोः—नैपथ्ये[1]। हे राजान इत्यादि। इत्यादिशतीति वक्ष्यमाणेन सम्बन्धः। आदेशप्रकारः—हे राजान इति। राजग्रहणं चक्रवर्तिना पद्मावतीश्वरेण प्रवर्तितत्वाद् उत्सवस्य प्रतापानुरागावनताः सामन्ता एव भृत्यकृत्यं वहन्तीति द्योतनार्थम्। चरमवयसां चरममन्तिमं वयो जीवनकालो येषाम्, नवतिं वर्षाण्यतीतानां[2] दशमीस्थानामिति यावत्। वृद्धत्वोक्त्या धर्मज्ञत्वं लक्ष्यते। अन्यथा पैश्वादिवद्[3] वृद्धत्वव्यवहारस्यैवायोग्यत्वात्।

"न सा सभा यत्र न सन्ति वृद्धाः
न ते वृद्धा ये न वदन्ति धर्मम्।"

इति वचनात्, तेषां वैदिकलौकिकाचारनिष्णातानाम्। आज्ञया नियोगेन। कर्तव्येषु अनुष्ठेयेषु कर्मसु, तोरणस्तम्भोत्तम्भनवितानबन्धनमण्डपमण्डनादिषु, सञ्चरध्वं प्रवर्तध्वम्। आज्ञया सञ्चरध्वमिति 'समस्तृतीयायुक्तात्' (१-३-५४) इत्यात्मनेपदम्। श्रवणसुभगं अर्थानुसन्धानं विनाप्याकर्णने मङ्गलसाधनं पुण्याहस्वस्तिवाचनादिकं सहस्रनामादिकं चेत्यर्थः, भूमिदेवाः ब्राह्मणाः, तेषामेव याजनेऽधिकारात्, पठन्तु अधीयन्ताम्। चित्रं गीतवाद्यनर्तनादिविविधप्रकारविशिष्टम्, नानावचननिवहैः बहुप्रकारा हरिहरपितामहस्कन्दकन्दर्परुद्राणीन्द्राण्यादिदेवताविशेषस्तुतिपरा[4] वचनसमूहा येषां तैः, नटनर्तकतालवचरचारणादिभिरित्यर्थः, [चेष्ट्यतां] प्रवर्त्यताम्, मङ्गलेभ्यः अभ्युदयार्थमायुरारोग्यैश्वर्यसौभाग्यपुत्रसम्पदादिफलसाधनत्वभेदाद् बहुवचनम्। प्रत्या-

1. 'नेपथ्ये' क. ग. छ. ज. झ. ब. पाठः. 2. 'भो राजानः' क. ङ. ज ब. पाठः.

1. 'नेपथ्ये' ग. घ. ङ. पाठः. 2. 'वर्षाणां शतीं' ज. पाठः. 3. 'अश्वादेरिव मनुष्ये' क. पाठः. 4. 'कन्दर्पेन्दिरारुद्राणी' ख. पाठः.

चित्रं नानावचननिवहैश्चेष्टयतां मङ्गलेभ्यः
प्रत्यासन्नस्त्वरयतितरां जन्ययात्राप्रवेशः ॥ २ ॥

यावच्च सम्बन्धिनो न परापतन्ति तावद् वत्सया मालत्या नगर-देवतागृहमविघ्नमङ्गलाय गन्तव्यमित्यादिशति भगवती कामन्दकी। अन्यच्च। गृहीतसविशेषमण्डनः प्रतीक्षतामानुयात्रिको जन इति।

---

सन्नः त्रिचतुरनाडिकान्तरितः, त्वरयतितरां अतिशयेन प्रोत्साहयति, अस्मान् ईदृशेषु व्यापारेष्विति शेषः, जन्ययात्राप्रवेशः जन्यानां जामातृ-बन्धूनां यात्रा, उत्सवार्थमागमनं कन्यावरणार्थं वा।

'ज्ञातिभृत्या नवोढाया जन्या स्निग्धा वरस्य वा।'

इति, 'शान्तियात्रा वरनिमन्त्रणे' इति च वैजयन्ती। शान्तिशब्दाप्रयोगः प्रसिद्ध्या। अथवा जन्यशब्दोपलक्षिता वरयात्रा जन्ययात्रा, 'दौन्दुभी वरयात्रायां' इति वैजयन्ती। सङ्केतसंवरणार्थं चैव तदिति मन्तव्यम्। तस्याः प्रवेशः। प्रविशत्यस्मिन्निति तद्योगो मुहूर्तः प्रवेशः। त्वरयतितरामिति तत्समर्थाचरणादुक्तिः। अत्रार्थान्तरन्यासोऽलङ्कारः, कर्तव्यसञ्चरणादेः कार्यस्य प्रवेशत्वरणेन कारणेन समर्थनात्। अप्रस्तुतप्रशंसा वा, सञ्चरणादिना कार्येण कारणस्य मालतीविवाहोत्सवस्य सूचनात् ॥ २ ॥

यावत् यस्मिन् कालावधौ, चकारो वाक्यार्थसमुच्चये, संबन्धिनः कन्याद्वारेण सम्बन्धमभिलषन्तो बन्धवः, 'पुलस्त्यः पुलहप्रष्ठाश्च सम्बन्धिनः' इति मुरार्युक्तवत्, न परापतन्ति नागच्छन्ति, तावत् तस्मिन् कालावधौ च।

---

१. 'नानारचन' क. पाठः. २. 'यावत्सम्ब' क. ख. पाठः. ३. 'त्या सह नगर' क. पाठः. ४. 'त्यादिशन्ति भगवतीनिदेशवर्तिनोऽमात्यदाराः। तथा गृहीत' क, 'त्यादिशन्ति भगवतीनिदेशवर्तिनोऽमात्यदाराः। अन्यच्च। तथा गृहीत' ख. ज. पाठः.

---

१. 'च' ख. ङ. ज. पाठः. २. 'न्तो वा बन्धवः' ख. ङ, 'न्तो वा बान्धवाः' ज. पाठः.

कपालकुण्डला—भवत्वितो मालतीविवाहपरिकर्मसत्वरप्रतीहारशतसङ्कुलात् प्रदेशादपक्रम्य माधवापकारं प्रत्यभिनिविष्टा भवामि ।

(इति निष्क्रान्ता ।)

॥ विष्कम्भकः ॥

---

नगरदेवतेति देशाधिपत्यात् कुलदेवतात्वाच्चावश्याभिगमनीयत्वमाह । अविघ्नमङ्गलाय निष्प्रत्यूहाय कल्याणाय, अन्यथा—

'प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः ।

इति न्यायाद्विघ्नोपपत्तेः । अन्यच्चेति आदिशतिक्रियानुकर्षणार्थः । गृहीतसविशेषमण्डन इति विभूतिप्रपञ्चेन पूर्वमेव भूषितत्वादिदानीमुत्सवार्थं सातिशयं भूषणं स्वीकृतं येन. प्रतीक्षतां निर्गच्छन्तीं प्रतिपालयतु । आनुयात्रिकः अनुगमनं सेवनं प्रयोजनं येन, परिजन इत्यर्थः । 'हे राजान' इत्यादि भरोचना, भाविनोऽर्थस्य सिद्धत्वेन प्रदर्शनात् ।

भवत्वित्यर्धाङ्गीकारे, वृथा समनुष्ठीयतां, मया पुनर्मूलमेवोच्छेत्स्यत इति भावः । इतः अस्मात् । परिकर्मस्थानेषु जेननिवेशनं, तत्तत्कर्मसु तत्तज्जनव्यापारणमित्यादिरुपसंस्कारः परिकर्म, तत्र सत्वराणां सम्भ्रान्तानां प्रतीहाराणां वेत्रपाणीनाम् । 'द्वास्थेद्वारौ प्रतीहारौ' इति वैजयन्ती । शतेन सङ्कुलात् सङ्कटात् । माधवापकारं प्रति माधवस्य विप्रियं लक्षीकृत्य । अभिनिविष्टा निर्बन्धवती, छिद्रान्वेषिणीति यावत् ।

अतीतस्य कापालिकवधस्य, आगामिनः कपालकुण्डलानिमित्तस्य व्यसनस्य मालतीनिर्गमस्य च सूचितत्वाद् विष्कम्भमुपसंहरति— निष्क्रान्ता ।

॥ इति विष्कम्भकः ॥

---

१. 'विवाहकर्म' भ. पाठः. २. 'प्रतिहार' च. छ. ज. पाठः. ३. 'हारजनसहस्रसङ्कु' ज, 'हारजनशतसङ्कु' ज. पाठः. ४. 'कुलादस्मात् प्रदे' क. पाठः. ५. 'माधवापचारं' घ. पाठः.

---

१. 'देवता ग. घ. पाठः. २. 'स्वातिशय' ज. पाठः. ३. 'यथास्वमनु' ज. पाठः. ४. 'अस्मादुपरि कर्म' ज. पाठः ५. 'जनं तत्तत्' क. ख. ग. घ. छ. पाठः. ६. 'यं प्रति लक्षी' ज. पाठः. ७. 'निर्गमनस्य' ज पाठः.

(ततः प्रविशति कलहंसः ।)[1]

कलहंसः—आणत्तोह्मि णअरदेवतागब्भघरवट्टिणा[2][3] समअरन्देण णाहेण—जाणीहि दाव एत्तोमुहं[4][5] पउत्ता मालदी ण वेत्ति । ता जाव[6] आणन्दइस्सं ।

(आज्ञप्तोऽस्मि नगरदेवतागर्भगृहवर्तिना समकरन्देन नाथेन—जानीहि तावदितोमुखं प्रवृत्ता मालती न वेति । तद्यावदानन्दयिष्यामि ।)

(ततः प्रविशतो माधवमकरन्दौ ।)

माधवः—मालत्याः प्रथमावलोकनदिनादारभ्य[7] विस्तारिणो-[8]
भूयः[9] स्नेहविचेष्टितैर्मृगदृशा[10] नीतस्य कोटिं पराम् ।

---

अथ सरसवस्त्वभिनयायाङ्कमारभते[1]—ततः प्रविशति कलहंस इति ।

कलहंसः — आणत्तोह्मीत्यादि । आज्ञप्तोऽस्मि नगरदेवतागर्भगृहवर्तिना समकरन्देन नाथेन । समकरन्देनेति मकरन्दसाहित्ये तात्पर्यमाह । नाथेन स्वामिना माधवेनेत्यर्थः । जानीहि तावदितोमुखं प्रवृत्ता मालती न वेति । इतोमुखं एतद्देशोद्देशवलितवदनमिति क्रियाविशेषणम् । प्रवृत्ता प्रस्थिता । अथवा नेति अपायशङ्कित्वं द्योतयति, 'श्रेयांसि बहुविघ्नानि' इति न्यायात् । अनया चोक्तिभङ्ग्या साभिप्रायकामन्दकीसङ्केतपूर्वमेव नगरदेवतागर्भगृहवर्तित्वमनयोः, तन्नियोगाच्च मालत्यास्तदुपगमनमिति[2] प्रकाश्यते । 'अविघ्नमङ्गलाय गन्तव्यमि'ति च वचनं सङ्गच्छति । तद्यावदानन्दयिष्यामि प्रियवचनेनेत्यर्थः । यावच्छब्दो वाक्यालङ्कारे अवधारणे वा ।

अथ गर्भगृहवर्तित्वेन सूचितत्वात् नायकोपनायकयोः प्रवेशमाह—ततः प्रविशत इति ।

फलाफलयोरन्यतरनिश्चयाज्जीवनमरणयोरन्यतरं निष्कृष्य हृष्टो धृष्ट आह—मालत्या इत्यादि । प्रथमावलोकनदिनाद् आद्यदर्शनोपलक्षितमदनो-

---

१. 'प्रविश्य कलहंसकः' क. पाठः. २. 'घरट्ठिदेण' क. झ. ञ, 'घरगदेण' छ. पाठः. ३. 'णा मअरन्दसणाहेण माहवेण — जाणाहि' ज. पाठः. ४. 'णाह-माहवेण जहा जा' क. झ. ञ. पाठः. ५. 'जत्तामुहं' क, 'जत्ताहिमुहं' झ. ञ. पाठः. ६. 'ता जाव णं आण' क. ज. झ. ञ, 'तं जाव' क. पाठः. ७. 'लोकदिवसादारभ्य' छ. झ. ञ. पाठः. ८. 'विस्तारितैः' क, 'विस्तारिभिः' च. पाठः. ९. 'भूरिस्नेह' छ. पाठः. १०. 'मृगदृशो' क. छ. ज. झ. ञ. पाठः.

१. 'अथ रसवस्तु' ञ. ध. पाठः. २. 'स्तावदुपगमनं' क. पाठः.

अद्यान्तः खलु सर्वथास्य मदनायासस्य सर्वस्य मे
कल्याणं विदधातु वा भगवतीनीतिर्विपर्येतु वा ॥ ३ ॥

मकरन्दः — वयस्य ! कथं भगवत्याः समेधाशास्तिर्विपर्येष्यति ?

---

स्नानगमनदिवसमादिं कृत्वा, विस्तारिणः स्वयमेव रूपमाधुर्यदर्शनमात्रेण वर्धिष्णोः । विस्तारिभिरित्यपपाठः, भूय इत्यादीनां वैयर्थ्यापातात् । भूयः पश्चात्, स्नेहविचेष्टितैः प्रेमकार्यैः प्रवृत्तिविशेषैः, चित्रलेखनबकुलमालाधारणदानश्रवणवैवर्ण्यमरणसमयमुक्ताशङ्कप्रलापप्रभृतिभिरित्यर्थः, मृगदृशा मालत्या, परां कोटिं नीतस्य अग्रभूमिमारोपितस्य, "आनन्दस्य परां कोटिमन्वभवन्" इति कादम्बर्युक्तवत् । अद्य अस्मिन् काले इति पूर्ववदितः परस्य, श्वः परश्वो वेति प्रतीक्षणीयस्य कालान्तरस्यानुपपत्तेः । अन्तः अवसानम् । खलुरवधारणे । सर्वथा सर्वप्रकारेण, सिद्धावसिद्धौ चेत्यर्थः । अस्येत्यनुभूयमानत्वाभिनयः, मदनायासस्य कामेन जनितस्य दुःखस्य, सर्वस्य अन्तर्बहिर्देशकालदशादिभिरुद्दीप्यमानस्येत्यर्थः, कल्याणं प्रियतमाप्राप्तिरूपं मङ्गलम् । भगवतीनीतिः कामन्दक्या नय उपायप्रयोगः, विपर्येतु विपर्ययमन्यथाभावं वा गच्छतु, तत्प्राप्तिविघ्नोपनिपातात् । अत्र हर्षधृत्याख्यौ भावौ प्रकाश्येते । विकल्पोऽलङ्कारः, तुल्यबलयोः सिद्ध्यसिद्ध्योः स्पर्धीभावेनोपनिबन्धात् ॥ ३ ॥

अथ तदलाभे प्राणत्यागोद्यमपरं तदीयमाकूतमवबुद्ध्योपपत्त्या पक्षान्तरशङ्कामपनुदति — भगवत्या इति प्रसिद्धप्रभावत्वात् सङ्कल्पसिद्धिं द्योतयति, समेधाशास्तिः—'धीर्धारणावती मेधा' इति वैजयन्ती । मेधाशब्देन तत्कार्य-

---

१. 'यासप्रबन्धस्य मे' क. ज. झ. ब. पाठः. २. 'कथं हि भगव' क. पाठः. ३. 'सुमेधसो नीतिर्विप' क. भ. म, 'सुमेधाशक्तिः विप' झ, 'या मेधाशक्तिः विप' ज. पाठः. ४. 'विपर्ययमेष्यति' क. पाठः.

---

१. 'सादनम्' ब. पाठः २. 'कालदशाभि' ख, 'कालादिभि', ३. 'तत्प्राप्ति' ज. पाठः. ४. 'विकस्वरोऽलङ्कारः'; ५. 'यमरूपं तदीय', ६. 'प्रसिद्धभावप्रभाव' ज. पाठः.

**कलहंसः** — (उपसृत्य) णाह ! दिट्ठिआ वड्ढसि । पउत्ता क्खु एत्तोमुहं मालदी ।

(नाथ ! दिष्ट्या वर्धसे । प्रवृत्ता खल्वितोमुखं मालती ।)

**माधवः** — अपि सत्यम् ?

**मकरन्दः** — किमश्रद्धधानः पृच्छसि ? न केवलं प्रवृत्ता प्रत्यासन्ना च वर्तते । तथा हि —

अस्माकमेकपद एव मरुद्विकीर्ण-
जीमूतजालरसितानुकृतिर्निनादः ।

भूतो नीतिप्रयोग उच्यते, तत्सहिता आशास्तिः, 'स्वस्त्यस्मै भूयादि'ति स्नेहपूर्वा आशीः, कथमित्याक्षेपे, केन प्रकारेण, विपर्येष्यतीति विपरीता भविष्यति । 'शापादपि शरादपि' इति न्यायेन प्रत्येकं समर्थयोर्द्वयोरनयोर्मिलितत्वे दहनपवनयोरिव फलविसंवादिता कदाचित् न भविष्यतीत्यर्थः । 'मालत्याः प्रथमे'त्यादि 'कथं समेधाशास्तिर्विपर्येष्यती'त्यन्तः आक्षेपः भगवतीनीतिरूपस्य गर्भबीजस्य समुत्क्षेपात् ।

णाहेत्यादि । नाथ दिष्ट्या वर्धसे । प्रवृत्ता खल्वितोमुखं मालती ।

अपिः प्रश्ने, सत्यं किमित्यात्मनस्तादृशं भागधेयमसम्भावयन्नाह ।

अश्रद्दधानः अविश्वसन् । 'तथेतिप्रत्ययः श्रद्धा' इति हलायुधः । न केवलं प्रवृत्ता प्रस्थितेत्येतावदेव न , किन्तु प्रत्यासन्ना समीपीभूता वर्तते ।

सामीप्यमेवोपपादयति — तथा हि । अस्माकमित्यादि । एकपदे एकचरणविन्यासकाले एव न द्वितीयपदचलनावकाश इत्यनेनैकस्मिन् क्षणे इत्युक्तं भवति । 'अयमेकपदेऽनया वियोगः' इति प्रयोगात् ।

१. 'णाह माहव दि' क. पाठः. २. 'क्खु जत्तामुहं' क, 'क्खु जत्ताहिमुहं' व' पाठः. ३. 'अपि नाम सत्यम्' क. ख. ब. पाठः. ४. 'मक—सखे ! किम' क. ख. घ. छ. झ ब. पाठः. ५. 'धान इव पृच्छसि', ६. 'पदमेव' क. पाठः.

१. 'चापादपि', २. 'तत्वेन दहन' ज. पाठः. ३. 'समीपभूता' ज. पाठः.

गम्भीरमङ्गलमृदङ्गसहस्रजन्मा
शब्दान्तरग्रहणशक्तिमपाकरोति ॥ ४ ॥

तदेहि । जालमार्गेण पश्यामः ।

(तथा कुर्वन्ति ।)

कलहंसः—णाह ! पेक्ख पेक्ख ! इमे दाव उप्पाडिअराअहंस-विब्भमाहिरामचामरसमीरणपेल्लणुव्वेल्लकदलिआवलीतरङ्गिदुत्ताण-

---

'पदं स्थाने शरे त्राणे पादाङ्के पादचिह्नयोः ।
शब्देऽशुवस्तुवाक्येषु व्यवसायापदेशयोः ॥'

इति वैजयन्ती । मरुता वायुना विकीर्णस्य विस्तारितस्य इति प्रावृषेण्यत्वं ध्वन्यते, जीमूतजालस्य मेघसमूहस्य रसितं स्तनितं तस्यानुकृतिः सादृश्यं यस्मिन् । गम्भीराणां अगाधोदराणां मङ्गलमृदङ्गानां शब्दश्रवणात्कल्याण-हेतुभूतानां मुरजवाद्यानां सहस्राज्जन्म उत्पत्तिर्यस्य । 'मृदङ्गा मुरजा' इत्यमरः । मङ्गलमृदङ्गेति शाकपार्थिवादित्वात् समासः । शब्दान्तराणामन्येषां स्वव्यतिरिक्तानां शब्दानां ध्वनीनां ग्रहणे श्रवणे या शक्तिः श्रोत्रेन्द्रियपाटवं तां अपाकरोति निरस्यति । अत्रोदात्तमतिशयोक्तिश्चालङ्कारः ॥ ४ ॥

एहि आगच्छ । जालमार्गेण गर्भगृहगवाक्षरन्ध्रेण । 'जालं गवाक्ष आनायः' इति वैजयन्ती ।

तथा उक्तप्रकारेण, कुर्वन्ति अनुतिष्ठन्ति । पश्यन्तीत्यर्थः ।

णाहेत्यादि— नाथ ! पश्य पश्य । इमे तावदुत्पतितराजहंसविभ्रमाभि-रामचामरसमीरणप्रेरणोद्वेल्लत्कदलिकावलीतरङ्गितोद्यानगगनाङ्कणसरोनिरन्तरोद्दण्ड-पुण्डरीकविभ्रमं वहन्ति मङ्गलातपत्रनिवहाः । [उत्पतितानां] उड्डयमानानां

---

१. 'न्तरश्रवणशक्ति' ज. पाठः. २. 'पेक्खस्स पेक्खस्स' क. पाठः. ३. 'उच्चलिअ' ख. पाठः. ४. 'समीरणोव्वेल्ल' क. च. झ. ञ, 'समीरणोव्वेलिअ' छ. ज. पाठः. ५. 'दुत्तालगअण' क. छ. झ. पाठः.

---

१. 'नेऽङ्कशङ्के त्राणे' ग. घ. ङ. छ. ज. पाठः. २. 'अब्देऽसु' ज. पाठः. ३. 'न्यते । नीलजीमूत' ख. पाठः. ४. 'सहस्रोत्थं जन्म' क, 'सहस्राणां जन्म' ग. घ. पाठः. ५. 'मसुदृहन्ति' ज. पाठः. ६. 'उड्डीय' ग. घ. पाठः.

गअणंगणसरोणिरन्तरुद्दण्डपुण्डरीअविब्भमं वहन्ति, मङ्गलादपत्तणिवहा।
(नाथ पश्य पश्य। इमे तावदुत्पतितराजहंसविभ्रमाभिरामचामरसमीरणप्रेरणोद्वेल्लत्कदलिकावलीतरङ्गितोत्तानगगनाङ्गणसरोनिरन्तरोद्दण्डपुण्डरीकविभ्रमं वहन्ति मङ्गलातपत्रनिवहाः।)

दीसन्ति अ सविळासकबळिदतंबूळापूरिअकवोलमण्डलाभोअ-पडिक्खलिअमहुरमङ्गलुग्गीदकोलाहलेहिं विविहरअणालङ्कारकिरणा-

राजहंसानामिव विभ्रमो विक्षेपो यस्तेन [अभिरामाणां] मनोहराणां सितचामरबालव्यजनानां [समीरणस्य] वायोः प्रेरणेन चलन्तीनां कदलिकानां गजध्वजपटानाम्,

'अभ्युल्लसत्कदलिकावनराजिरुच्चैः'

इति माघोक्तवत्। 'कदली करिणां केतुः' इति वैजयन्ती। [आवलिभिः] पङ्क्तिभिः तरङ्गितस्य सञ्जातकल्लोलस्य अत एवोत्तानस्य गतगाम्भीर्यस्य, ताभिः परिच्छिन्नोर्ध्वभागत्वात्।

'निम्नं गभीरं गम्भीरमुत्तानं तद्विपर्यये।'

इत्यमरः। अथवा 'उत्तानशय' इत्यादिवदधोभागस्य निबिडत्वादुपरि विततस्वरूपस्येत्यर्थः। गगनाङ्गणरूपस्य सरसः पद्माकरस्य निरन्तराणां परस्परमिलितानामुद्दण्डानामुद्गतनालानां पुण्डरीकाणां सिताम्भोजानां विभ्रमं विलासं वहन्ति, मङ्गलार्थाः आतपत्रनिवहाः छत्रसमूहाः। मङ्गलातपत्रैरित्युक्तेः श्वेतच्छत्रत्वं लभ्यते। स्वच्छन्दविपुले गगनसरसि लीलया चामराणि राजहंसतां, कदलिकास्तरङ्गतां, मङ्गलातपत्राणि पुण्डरीकतां च धारयन्तीत्यर्थः। उदात्तं रूपकञ्चात्रालङ्कारः।

दीसन्तीति — दृश्यन्ते च सविलासकबलिततांबूलापूरितकपोलमण्डलाभोगप्रतिस्खलितमधुरमङ्गलोद्गीतकोलाहलैः विविधरत्नालङ्कारकिरणावलीनिब-

१. 'सरोबरणिर' क. झ. ञ. पाठः. २. 'वहन्तो' ज. झ. ञ. पाठः. ३. 'धवळादपत्त' क. झ. ञ, 'धवळमङ्गळादपत्त' ज. पाठः. ४. 'वहा दीसन्ति। एदा अ' क, 'वहा दीसन्ति। इमाओ स' ज. झ. ञ. पाठः. ५. 'तंबूलवीटिआपूरिअ' क. झ. ञ. पाठः. ६. 'मोअन्वइअरक्खलिद' क. ज. झ. ञ. पाठः. ७. 'उबद्धकोळा' क. च. ज. झ. ञ. पाठः.

१. 'मो विलासो विक्षेपो' ञ. पाठः. २. 'चामरवाल' छ. ज. पाठः. ३. 'प्रचलन्तीनां' ग. घ. पाठः. ४. 'अत्युल्लसत्' क. ग, घ. छ. पाठः. ५. 'इत्युक्तेश्च श्वेत', ञ. पाठः. ६. 'लक्ष्यते' क. छ. पाठः. ७. 'कतवं च' ञ. पाठः.

बलीविडम्बिअमहिन्दचावखण्डविच्छुरिअणहत्थळेहिं वारसुन्दरीकदंबेहिं अज्झासिओओ कणन्तकणअकिङ्किणीरणिअझणझणाझङ्कारिणीओ करिणीओ।

(दृश्यन्ते च सविलासकवलितताम्बूलापूरितकपोलमण्डलाभोगप्रतिस्खलितमधुरमङ्गलोद्गीतकोलाहलैः विविधरत्नालङ्कारकिरणावलीविडम्बितमहेन्द्रचापखण्डविच्छुरितनभस्थलैः वारसुन्दरीकदम्बकैरध्यासिताः कनत्कनककिङ्किणीरणितझणझणाझङ्कारिण्यः करिण्यः।)

(तौ च सकौतुकं पश्यतः।)

म्बितमहेन्द्रचापखण्डविच्छुरितनभस्थलैः वारसुन्दरीकदम्बकैरध्यासिताः कनत्कनककिङ्किणीरणितझणझणाझङ्कारिण्यः करिण्यः। सविलासकबलितेति ताम्बूलचर्वणप्रकारोऽपि चातुर्यान्मुखशोभामावहतीति द्योतयति। ताम्बूलेनापूरितत्वाद् गण्डमण्डलकुहरविस्तारे प्रतिस्खलिताः प्रतिरुद्धनिर्गमाः, मधुराः स्निग्धरक्तकण्ठतया प्रयोगवैदग्ध्याच्च हृदयग्राहिणः, मङ्गलार्थास्तत्कर्मोचितदेवतास्तुतिरूपत्वादुद्गीतकोलाहला उच्चैस्तरा गानकलकला येषाम्। विविधानामरुणसितनीलपीतश्यामवर्णानां, माणिक्यादिमहारत्नमयानामाभरणानां किरणावलीभिर्मयूखसमूहैर्नीलवर्णेषु, करिणीशरीरेषु पतिताभिर्हेतुभूताभिरित्यर्थः, विडम्बितमनुकृतम्, महेन्द्रचापस्य इन्द्रधनुषः, तस्य नानावर्णत्वात्, खण्डैः शकलैर्विच्छुरितं मिश्रितं नभःस्थलं यैः। वारसुन्दरीकदम्बकैर्मुख्यगणिकासमूहैः। '...वेश्याः रूपाजीवाथ सा जनैः। सत्कृता वारमुख्या स्यात्' इत्यमरः। अध्यासिता अधिष्ठिताः। कनन्तीनां दीप्यमानानाम्। 'कन दीप्तिकान्तिगतिषु' इति धातुः। कनककिङ्किणीनां रणितरूपो झणझणाझङ्कारो यासाम्। झणझणेति शब्दानुकारः, झङ्कार इति समुदायध्वनिः। करिण्यः गजवध्वश्च दृश्यन्त इति।

१. 'चावखण्डविच्छेअविच्छु' क. छ. झ, 'चावविच्छेदाविच्छु' ज ञ. पाठः. २. 'आओ कणन्त' झ. ञ. पाठः. ३. 'णीजालझण' क. झ. ञ. पाठः ४. 'माधवमकरन्दौ स' क. ज. झ. ञ, 'तौ स' ख. पाठः ५ 'साकूतं' घ. छ. पाठः.

१. 'स्तत्तत्कर्मो' क पाठः. २. 'श्यामलवर्णा' ग. घ. पाठः. ३. 'रितं शबलितं नभ' ज. पाठः.

मकरन्दः— स्पृहणीयाः खल्वमात्यभूरिवसोर्विभूतयः । तथा हि—

प्रेङ्खद्भूरिमयूरमेचकनिभैरुन्मेषिचापच्छद-
च्छायासंवलितैर्विवर्तिभिरिव प्रान्तेषु पर्यावृताः ।
व्यक्ताखण्डलकार्मुका इव भवन्त्युच्चित्रचीनांशुक-
प्रस्तारस्थगिता इवोन्मुखमणिज्योतिर्वितानैर्दिशः ॥ ५ ॥

---

स्पृहणीयाः 'ईदृशीनां विभूतीनां कारणभूतं किं नाम तत्, तपः यदि तद्विदितमभविष्यत्, सर्वं वयमचरिष्याम' इति वाञ्छाकारिण्य इत्यर्थः । कर्तरि कृत्यप्रत्ययः । खलुरवधारणे । विभूतयः सम्पदः, बहुवचनेन बहुमुखत्वं सूच्यते ।

तत् समर्थयति— तथा हि । प्रेङ्खद्भूरीत्यादि । प्रेङ्खतां चलतां [मयूराणां मेचकाः], नेत्राणीति यावत् । 'मयूरो बर्हिणो बर्ही' इति, 'समौ चन्द्रकमेचकौ' इत्यमरः । तन्निभैस्तत्सदृशैः ।

"[तुल्यं सवर्ण] शब्देभ्यः परे स्युः [प्रतिमा प्रभा] ।
[आभा प्रख्योपमाभिख्या प्रकारः] सन्निभं निभम् ॥",
'निकाशाद्याश्च साम्यार्थाः'

इति वैजयन्ती । उन्मेषिचापच्छदच्छायासंवलितैः उन्मेषेण स्फुरणं लक्ष्यते, स्फुरतां चाषपक्षिपक्षाणां छायया शोभया सम्मिश्रितैः । इवशब्दो भिन्नक्रमः, संवलितैरिव । विवर्तिभिः विविधवर्णतया प्रवर्तमानैः । 'चाषो राजविहङ्गमः । मणिकण्ठश्चित्रवाज' इति, 'छदः पक्षो गरुद्वाजः' इति, 'छाया नातपशोभयोः' इति च वैजयन्ती । उन्मुखमणिज्योतिर्वितानैः उन्मुखानामूर्ध्वं प्रसरतां मणिज्योतिषां छत्रचामरवारणवारनारीजनादिभूषणनिहितनवरत्नप्रभाणां विस्तारैः, प्रान्तेषु समीपेषु पर्यावृताः, ऊर्ध्वभागस्यापि [illegible]त्वात् तिर्यगूर्ध्वमपि सर्वतः संच्छादिताः दिश उत्प्रेक्ष्यन्ते । व्यक्ताखण्डलकार्मुका इव स्पष्टदृष्टेन्द्रचापा इव तिर्यक् । उच्चित्रचीनांशुकप्रस्तारस्थगिता

---

१. 'रमणीयाः' क. पाठः. २. 'मयूर' श. ञ. पाठः. ३. 'मेचकचयैः' क. ज. श. ब. पाठः. ४. 'भिरतिप्रा' क. पाठः. ५. 'पर्णावृताः' ब. पाठः. ६. 'विमानैः' ख. पाठः.

---

१. 'वयमाचारिष्याम' अ. ब. पाठः.

कलहंसकः— ससम्भमाणेअपडिहारमण्डलावज्जिदुज्जलकणअकलधौदपङ्कपत्तचित्तवेत्तलआपरिक्खित्तरेहारइअमण्डलो दूरदो एव्व संठिओ परिअणो ।

(ससंभ्रमानेकप्रतिहारमण्डलावर्जितोज्ज्वलकनककलधौतपङ्कपत्रचित्रवेत्रलतापरिक्षिप्तरेखारचितमण्डलो दूरत एव संस्थितः परिजनः ।)

एसा अ बहलसिन्दूरणिअरसंझाराओवरत्तमुहघोळन्तणक्खत्तमालाभरणधारिणिं करेणुरअणिं अलङ्करन्ती इदो एव्व कोदूहलुप्फुल्लमुह-

इव उद्धूतनानावर्णलेख्यविशिष्टानां चीनांशुकानां चीनदेशनिर्मितपट्टवस्त्राणां देवाङ्गादीनां प्रस्तारैः प्रपञ्चैः प्रावृता इवोर्व्यो भवन्तीति। "प्रेस्रोऽयज्ञे" (३-३-३२) इति घञ् । 'पुष्पप्रस्तारशायिनां' इति भर्तृकाव्योक्तेः । अत्रोदात्तं उत्प्रेक्षा चालङ्कारः ॥ ५ ॥

ससंभ्रमेत्यादि । ससंभ्रमानेकप्रतिहारमण्डलावर्जितोज्ज्वलकनककलधौतपङ्कपत्राचित्रवेत्रलतापरिक्षिप्तरेखारचितमण्डलो दूरत एव संस्थितः परिजनः । प्रतिहारमण्डलेन द्वारपालसमूहेनावर्जिताभिरवनामिताभिरुज्ज्वलाभिः स्फुरन्तीभिः; तत्र हेतुः—कनककलधौतपङ्कपत्रचित्राभिः परभागहेतोः सुवर्णरजतद्रवकृतया पत्रलेखया नानावर्णाभिर्वेत्रलताभिः, परिक्षिप्तायां भुवि वर्तुलाकारेण निहितायां अस्यां रेखायां बहिरेव स्थातव्यमिति राजाज्ञाभूतया रेखया रचितमण्डलः कृतवर्तुलाकारसंस्थानः ।

एषा च बहलसिन्दूरनिकरसन्ध्यारागोपरक्तमुखघूर्णमाननक्षत्रमालाभरणधारिणीं करेणुरजनीमलङ्कुर्वाणा इत एव कौतूहलोत्फुल्लमुखसमस्तलोकदृश्यमानमनोहरापाण्डरपरिक्षामदेहशोभाविभावितानङ्गवेदना प्रथमचन्द्ररेखाविभ्रमं वहन्ती किञ्चिदन्तरं प्रसृता मालती । सिन्दूरो धातुविशेषः, तस्य

१. 'कल— कधं ससं' क. ख. छ. ज. झ. ञ. पाठः. २. 'कलहौअपङ्क' क, 'कलधोदवत्तविचित्त' झ. म. पाठः. ३. 'पक्खित्त' ख. पाठः, ४. 'दूरसंठिओ' छ. ज. पाठः. ५. 'रत्तचट्टुलमुह' क. पाठः. ६. 'न्तकन्तणक्खत्त' क छ. ज. झ. ञ. पाठः. ७. 'इह एव्व' ग, ङ. पाठः. ८. 'कोदूहलुम्मुह' क. झ ञ. पाठः.

१. 'पट्टवस्त्रादीनां' ख. छ. 'पट्टानां पर्स्त्राणां' ञ. पाठः.

समत्थलोअदिस्सन्तमणहरापण्डरपरिक्खामदेहसोहाविहाविआणंगवेअणा पढमचन्दलेहाविब्भमं वहन्ती किंञ्चि अन्तरं पसरिआ मालदी ।

(एषा च बहलसिन्दूरनिकरसन्ध्यारागोपरक्तमुखघूर्णमाननक्षत्रमालाभरणधारिणीं करेणुरजनीमलङ्कुर्वाणा इत एव कौतूहलोत्फुल्लमुखसमस्तलोकदृश्यमानमनोहरापाण्डरपरिक्षामदेहशोभाविभावितानङ्गवेदना प्रथमचन्द्ररेखाविभ्रमं वहन्ती किञ्चिदन्तरं प्रसृता मालती ।)

---

रक्तवर्णत्वात् सन्ध्यारागत्वारोपः, तेनोपरक्ते रूषिते मुखे बदने, बहलसिन्दूरनिकरसदृशसन्ध्यारागोपरञ्जिते आरम्भे च । घूर्णमानं चलन्तं नक्षत्रमालारूपमाभरणमलङ्कारं धारयितुं शीलं यस्याः ।

'प्रोक्ता नक्षत्रमाला या सप्तविंशतिमौक्तिका ।'

इति हलायुधः, तारकावली च श्लेषेणोच्यते । करेणुरजनीं हस्तिनीरूपां रात्रिम्, अभ्युदयहेतुत्वात् करेणुवन्नीलबृहद्रूपां रात्रिं च । प्रारब्धविवाहानां कन्यानां दर्शने सर्वलोकस्य सकौतुकत्वप्रसिद्धेः, नवोदितत्वाच्च । मनोहरस्यापाण्डरस्य परिक्षामस्य च देहस्य शोभया विभाविता प्रकाशिता [अनङ्गवेदना] कामजनिता पीडा यस्याः, देहशोभया ज्योत्स्नाङ्कुरेण सूचिता भाविनी लोकस्य कामपीडा यया च । अत एव च प्रथमचन्द्रलेखाविभ्रमं वहन्ती पूर्वपक्षप्रतिपदुदितायाश्चन्द्रकलाया विलासं दधानेति सन्ध्यानुरञ्जितप्रारम्भां तारकानिकरशोभिनीं यामिनीमिव सिन्दूरारुणवदनां नक्षत्रमालाख्यमुक्ताभरणधारिणीं करिणीमधिरूढा कौतूहलोत्फुल्लेत्यादिसाधारणविशेषणविशिष्टा मालती प्रतिपच्चन्द्रलेखेवेत्यर्थः । किञ्चिदन्तरं प्रसृता स्वल्पमस्माकं स्वस्याश्चान्तरालप्रदेशं प्राप्ता । अथवा किञ्चिदन्तरमिति समासः । स्वल्पान्तरालं यथा तथा । प्रसृतेति क्रियाविशेषणम् । अत्र सङ्करोऽलङ्कारः ।

---

१. 'पण्डुर' क. च. छ. ज. झ. ञ. पाठः. २. 'सोहा पढम' क. झ. ञ. पाठः. ३. 'किं पि अन्त' ख. पाठः. ४. 'अन्तरिअं' च. पाठः.

---

१. मुखघूर्णमान' घ. पाठः.

मकरन्दः— वयस्य ! पश्य पश्य ।

इयमवयवैः पाण्डुक्षामैरलङ्कृतमण्डना
कलितकुसुमा बालेवान्तर्लता परिशोषिणी ।
वहति च वरारोहा रम्यां विवाहमहोत्सव-
श्रियमुदयिनीमुद्भूतां च व्यनक्ति मनोरुजम् ॥ ६ ॥

इयमित्यादि । अवयवैः अङ्गैः शाखाभिश्च । अलङ्कृतमण्डना अलङ्कृतानि भूषितानि भूषणानि यया, तेषां तदवयवसङ्गमेन सातिशयशोभोत्पत्तेः; 'आभरणस्याभरणम्' इत्युक्तवत् । अलङ्कृतमण्डनेत्यनेन तेषामनादरन्यस्तत्वं तथापि तेषां स्पृहणीयत्वं च दर्शयन् विच्छित्त्याख्यं शारीरं भावमाह ।

"स्वल्पोऽप्यनादरन्यासो माल्यादीनां स्वमण्डने ।
यः परां जनयेच्छोभां सा विच्छित्तिरुदाहृता ॥"

इति वचनात् । कलितकुसुमा सम्बद्धपुष्पा, बाला अपरिणता, अन्तः परिशोषिणी समयसेकाद्यभावादभ्यन्तरसंसक्तशोषा । स्मरज्वरपाण्डुकृशैरङ्गैरलङ्कृतमण्डना तदानीमन्तःपरिशोषिणी । अत एव पाण्डुक्षामैर्विटपैः कलितकुसुमा बाला लतेव वर्तमानेति श्लेषानुगृहीतो दृष्टान्तोऽत्रालङ्कारः । अन्तःपरिशोषिणी बालेति च धर्माधिक्यं नाशङ्कनीयम्, तथात्वविशिष्टाया एव लताया औपम्योपपत्तेः । [वरारोहा]

'वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी ।'

इत्यमरः । रम्यां दर्शनीयाम् । [विवाहमहोत्सवश्रियं]

'वैवाहिको विधिः स्त्रीणामौपनायनिकः स्मृतः ।'

इति मनुवचनाद् द्विजत्वहेतुभूतसंस्काररूपेण पाणिग्रहणाख्येन महता कल्याणेन या श्रीः शोभा ताम् । उदयिनीमिति ताच्छीलिको णिनिः । स्वयमेव भविष्यत्समृद्धिसूचकत्वेनाविर्भवन्तीमित्यर्थः । मनोरुजं मनसो रोगम् । उत्तरार्धे

१. 'इय — इय' ग. क. ज. पाठः. २. 'मुद्राढां च' क. ख. ज. पाठः.

१. 'तानि आविर्भूतानि भूषणा' ख. पाठः. २. 'शोषणी' छ. पाठः. ३. 'बालालतेव' ख. पाठः. ४. 'महाकल्या' ख. पाठः. ५. 'धैन समु' क. ग. घ. ङ. ख. पाठः.

कथं निषादिता गजवधूः ।

माधवः—(सानन्दं) कथमवतीर्य भगवतीलवङ्गिकाभ्यां समन्वितः प्रवृत्तैवं प्रिया ।

(ततः प्रविशन्ति कामन्दकी मालती लवङ्गिका च ।)

कामन्दकी—(सहर्षमपवार्य)

विधाता भद्रं नो वितरतु मनोज्ञाय विधये
विधेयासुर्देवाः परमरमणीयां परिणतिम् ।

---

समुच्चयोऽलङ्कारः, वहतिव्यनक्त्योः क्रिययोर्यौगपद्येन प्रतिपादनात् । अत्र पूर्वं कलहंसोक्तौ 'पण्डरपरिक्खाम' इत्युक्तस्यैवार्थस्य पुनर्मकरन्देन 'पाण्डुक्षामैः' इत्यादिभिः प्रतिपादनात् पुनरुक्तिर्नाशङ्क्या, उभाभ्यामपि नायकाश्वासनाय एकस्यैवार्थस्य स्थिरीकरणात् । प्रत्युत गुण एवेति ग्राह्यम् ॥ ६ ॥

निषादिता अवरोहणार्थमुपवेशिता । कथमिति स्वभागधेयस्य फलोन्मुखत्वं निरूप्य विस्मयः प्रकाश्यते ।

अवतीर्य गजवध्वाः अवरुह्य ।

सहर्षमिति स्वप्रयत्नफलसिद्धेरासत्तिमनुसन्धाय सानन्दमित्यर्थः । अपवार्य स्वगतम् ।

समुचितेष्टदेवतासङ्कीर्तनेनाभिमतमाशास्ते—विधाता भद्रं न इत्यादि । विधाता सकलजगत्स्रष्टा भगवान् प्रजापतिः, भद्रमविघ्नमङ्गलम्, नः अस्माकम्, वितरतु ददातु ।

'विश्राणनं वितरणं स्पर्शनं प्रतिपादनम् ।'

इत्यमरः । विधातृग्रहणं महानुभावानां दारसङ्ग्रहणस्य गुणवत्सन्तानलाभप्रयोजनत्वात् सृष्टिकर्तुरीश्वरस्य तत्साधनौचित्यं द्योतयति ।

---

१. 'माध — कथ' ख. च. पाठः. २. 'भ्यां इत' ग. छ, 'भ्यां धाक्रमित' छ, 'भ्यां प्रवृ' ज. पाठः. ३. 'वैव । (ततः' क. ख. घ. ज. झ. ञ. पाठः. ४. 'काम — विधाता' छ. पाठः.

---

१. 'श्वासनापरस्यैव' ज. पाठः. २. 'सङ्ग्रहस्य' ख. ङ. ज. झ. पाठः.

कृतार्था भूयासं प्रियसुहृदि यत्नैरभिमतैः
प्रयत्नः कृत्स्नोऽयं फलतु शिवतातिश्च भवतु ॥ ७ ॥

मालती— (स्वगतं) केण उण उवाएण मरणणिव्वाणं सम्पदं अणुभविस्सं । मरणं पि मम मन्दभाआए अहिमदं ति दुल्लहं होदि।

(केन पुनरुपायेन मरणनिर्वाणं साम्प्रतमनुभविष्यामि । मरणमपि मम मन्दभाग्यायाः अभिमतमिति दुर्लभं भवति ।)

---

'अथाभ्यर्च्य विधातारं प्रयतौ पुत्रकाङ्क्षया ।'

इति रघुवंशोक्तवत्, 'प्रजायै गृहमेधिनां' 'दारानपत्याय' इत्यादिप्रयोगाच्च । मनोज्ञाय विषये शोभनाय कर्मणे, तुल्यशीलवयोरूपयोस्तुल्याभिजनलक्षणयोश्च सुहृत्पुत्र्याः प्रशस्तसम्बन्धार्थमित्यर्थः । विधेयासुः क्रियासुः, देवाः हरिहरादयः, परमरमणीयामत्यन्तस्पृहणीयाम्, परिणतिं फलनिष्पत्तिं, उपरितनीं धनादिसम्पदम् । कृतार्था निष्पादितप्रयोजना, प्रियसुहृदि इष्टमित्रे भूरिवसौ देवराते च विषये, यत्नैः प्रवृत्तिभिः, अभिमतैरभीष्टविषयगामित्वादभीष्टैः । कृत्स्नः अवलोकितावुद्धरक्षितादिप्रयुक्तश्च, अयं प्रस्तुतः [प्रयत्नः], फलतु इदानीमविघ्नं सिद्ध्यतु । शिवतातिः उपरि च शिवङ्करः शुभानुबन्धो भवत्वित्यर्थः । 'शिवशमरिष्टेभ्यः करे' (४-४-१४३) इति तातिप्रत्ययः । 'शिवतातिः शिवङ्करः' इति हलायुधः । अत्राशिषि लिङ्लोटौ । आशीर्नामालङ्कारः । 'विधाता भद्रं न' इत्यादि विचलनम्, कामन्दक्या स्वप्रयत्नसूचनात् ॥ ७ ॥

अथ नायिकाया नायकानुरागप्रतिनायकवैराग्ययोर्दार्ढ्यमनुसन्धत्ते— केणेति । केन पुनरुपायेन मरणनिर्वाणं साम्प्रतमनुभविष्यामि । मरणनिर्वाणस्य

---

१. 'सुहृदपत्योपयमने' क. झ. ञ, 'सुहृदपत्योपनयतः' ज. पाठः. २. 'शिवदायी च' क. पाठः. ३. 'मरणणिव्वाणस्स अन्तरं सम्भावइस्सं' क. ख. घ. च. छ. ज. झ. ञ. पाठः. ४. 'पि मन्दभाअहेआणं अहि' क. झ. ञ. 'पि मम मन्दभाइणीए' ख. ङ, 'पि महमन्दभाइणीए' ग, 'पि मन्द' छ, 'पि मे मन्दभाअधेआए' ज. पाठः. ५. 'दं ति सुदुल्लहं' क, 'दं अतिदुल्लहं' ज. पाठः.

---

१. 'प्रययौ' घ. पाठः. २. 'काम्यया' घ. झ. पाठः.

**लवङ्गिका**— (स्वगतं) अतिक्किलाइदा क्खु पिअसही एदिणा अणुऊलविप्पलम्भेण ।)

(अतिक्रामिता खलु प्रियसखी एतेनानुकूलविप्रलम्भेन ।)

(ततः प्रविशति पटलकहस्ता प्रतीहारी ।)

---

अन्तरं सम्भावयिष्यामीति वा पाठः । [मरणनिर्वाणं] मरणरूपं सुखं, अनुभूयमानस्य दुःखस्य तदानीमुच्छेदात् ।

'यद्विविक्ततया स्थानं क्लेशैर्नष्टैः शरीरिणः ।
व्यवसायस्य बुद्धेश्च दीपनी सा तु निर्वृतिः ॥'

इति लक्षितत्वात् । तस्य अन्तरमवकाशम् । सम्भावयिष्यामि प्रापयिष्यामीति यावत् । मरणमपि मम मन्दभाग्यायाः अभिमतमिति दुर्लभं भवति । मरणमपीति जीवनात् प्राणत्यागस्य स्वैरध्यवसायमात्रेण साध्यत्वं ध्वन्यते । मन्दभाग्याया अल्पपुण्यायाः, अभिमतमिष्टं, इति अनेन हेतुना, दुर्लभं लब्धुमशक्यं भवति । अत्रामङ्गलभूतस्य मरणस्य वचनं स्वाभिलषितनैराश्यनिर्विण्णाया उक्तित्वान्न दोषः । मन्दभाग्याया इति आत्मनिन्दा च ध्वन्यते । 'केनोपायेने'त्यादिरुद्वेगः ।

पित्रादिवैराग्याद् इङ्गिताकाराभ्यां तदभिप्रायं विदित्वाह — अतिक्रामिता खलु प्रियसखी एतेनानुकूलविप्रलम्भेन । अत्यर्थं खेदितैव एतेन वर्तमानेन अनुकूलविप्रलम्भेन अनुकूलेन स्वाभिमतानुगुणेन तथा विप्रलम्भेन वञ्चनेन, परमार्थं प्रच्छाद्यान्यथा कथनात् । अथवानुकूलानामेवास्माकं प्रतारणेन ।

**पटलकहस्ता** आभरणपेटकं हस्ते यस्याः ।

---

१. 'क्खु एसा पिअ' च. पाठः. २. 'प्रविश्य पेटकहस्ता' क, 'प्रविश्य पटलहस्ता' घ, 'प्रविश्य पटलकहस्ता' ङ, 'प्रविश्य पटलिकहस्ता' च, 'प्रविश्य पटलिकाहस्ता' छ, 'प्रविश्य भूषणपटलकहस्ता' ज, 'प्रविश्य पेट्टालकहस्ता' झ. ञ. पाठः.

---

१. 'व्यवसायेन बुद्धे' ज. पाठः. २. 'उक्तत्वात्' ख. पाठः. ३. 'कूलेन विप्र' क. ख. ग. घ. छ. ज. पाठः. ४. 'तथापि विप्र' क, 'तथाविधविप्र' ज. पाठः.

प्रतीहारी—भअवदि! अमच्चो भणादि—एदिणा णरिन्दाणुप्पेसिदेण विवाहणेवच्छेण देवदापुरदो सविसेसं अलङ्करिदव्वा मालदि त्ति ।

(भगवति ! अमात्यो भणति—'एतेन नरेन्द्रानुप्रेषितेन विवाहनैपथ्येन देवतापुरतः सविशेषमलङ्कर्तव्या मालती'ति ।)

कामन्दकी—युक्तमाह । माङ्गलिकं ह्येतत् स्थानम् । इतो दर्शय ।

---

'पटलं त्वस्त्रुकृच्छदिषोः क्ली न ना पिटके गणे ।'

इति वैजयन्ती । प्रतीहारी दौवारिकी ।

भगवति अमात्यो भणति — 'एतेन नरेन्द्रानुप्रेषितेन विवाहनैपथ्येन देवतापुरतः सविशेषमलङ्कर्तव्या मालती'ति । नरेन्द्रानुप्रेषितेन पद्मावतीश्वरप्रहितेनेति तस्य स्वयं वक्तवतो मालतीविषये प्रसादातिशयं सूचयति । देवतापुरतः नगरदेवतासन्निधाविति माङ्गलिकत्वं वदन् गर्भगृह एवान्यैरपरिज्ञातमिति व्यञ्जयति । सविशेषं पूर्वस्मादधिकं, राजशासनस्यादरणीयत्वादिति वाच्योऽर्थः ; विशेषो व्यतिरेकः, पुंसः स्त्रीत्वाच्छादनादिति व्यङ्ग्यः । अलङ्कर्तव्या भूषयितव्या; अलं पर्याप्तिः, निस्संशयमित्यर्थः, कर्तव्या सृष्टव्येति व्यङ्ग्यः ।

तदुद्घाटितज्ञाह—युक्तमुपपन्नं आह कथयति, अमात्य इति प्रकरणात् । माङ्गलिकं मङ्गलप्रयोजनम् , हि प्रसिद्धौ, एतत् स्थानं देवतायतनरूपं स्थलम् , अशङ्कास्पदत्वादिति भावः । इत इत्यभिनयेनास्मत्पुरत इत्यर्थः ।

---

१. 'प्रती—अमच्चो भअवदिं विण्णवेदि' क. पाठः, २. 'दो अलङ्क' क. घ. ङ. ञ. झ. ञ. पाठः. ३. 'माहामालः । माङ्ग' क झ. ञ. पाठः. ४. 'कमेतत्' क, 'कं हि तत्' छ. ज, 'कं तत्' झ ञ. पाठः. ५. 'अतो दर्शय' क. झ. ञ. पाठः.

---

१. 'पेटके' ख. ग. घ. छ. पाठः. २. 'स्त्रीत्वापादनादिति' ङ. ज. पाठः. ३. 'पर्याप्तं, निस्सं' ङ. झ. पाठः. ४. 'द्रष्टि' क. ङ. झ. पाठः.

प्रतीहारी — एदं दाव पट्टंसुअजुअळं। इमे सव्वङ्गिणाहरण-सञ्जोआ। इमे मोत्तिआ हारा। एदं चन्दणं। अअं च सिदकुसुमापीडो त्ति।

(एतत् तावत् पट्टांशुकयुगलम्। इमे सर्वाङ्गीणाभरणसंयोगाः। इमे मौक्तिका हाराः। एतच्चन्दनम्। अयं च सितकुसुमापीड इति।)

कामन्दकी — (स्वगतं) रमणीयं हि वत्सं मकरन्दमवलोक-यिष्यति जनः। (गृहीत्वा प्रकाशं) भवत्वेवमित्युच्यताममात्यः।

विवाहनैपथ्यं विभज्य दर्शयति — एतत् तावत् पट्टांशुकयुगलम्। इमे सर्वाङ्गीणाभरणसंयोगाः। इमे मौक्तिका हाराः। एतच्चन्दनम्। अयं च सितकुसुमापीड इति। वस्त्रमुख्यत्वादलङ्कारस्य पूर्वं तदुक्तिः—पट्टांशुकयुगलं क्षौमवस्त्रद्वयं, अन्तरीयोत्तरीयरूपमित्यर्थः। पट्टांशुकग्रहणं मङ्गल्यत्वात्।

'क्षौमं केनचिदिन्दुपाण्डु तरुणा मङ्गल्यमाविष्कृतम्।'

इति शाकुन्तलोक्तेः। [सर्वाङ्गीणाभरणसंयोगाः] सर्वाङ्गीणानां सर्वाङ्गव्यापिनां, पादाङ्गुलीयादिचूडामणिपर्यन्तानामित्यर्थः, आभरणानां संयोगाः समूहाः। 'तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति' (५-२-७) इति खः। मौक्तिक-हाराणां शोभातिशयजनकत्वान्मङ्गल्यत्वान्महार्घत्वाच्च प्राधान्येन पृथगुक्तिः। आपीडः शेखरः। सितकुसुमग्रहणं प्रशस्तत्वात्,

"यत्किञ्चित् पाण्डुरं पुष्पं यत्किञ्चिदनुलेपनम्।"

इति वचनात्।

अमात्येन स्वयं च सङ्केतितमर्थं स्वगतेन भङ्ग्या प्रकाशयति — रमणीयं हीति, एतैः प्रसाधितत्वात्। वत्समिति तस्य सौकुमार्यसौन्दर्या-

१. 'इदं' क. पाठः. २. 'दाव धवळपट्टंसुअ' क. ख. घ. च. छ. ज. झ. ञ. पाठः. ३. 'सुअव्वोळअं' क. झ. ञ. पाठः. ४. 'ळं। एदं अ उत्तरीअरत्तवण्णंसुअं। इमे' क. ख. छ. ज. झ ञ. पाठः. ५. 'इमे अ सव्व' क. ग. घ. ङ. च. छ. ज. झ. ञ. पाठः. ६. 'इमे अ मोत्ति' क. ख. ङ. च. छ. ज. झ. ञ. पाठः. ७. 'णं। कुसु' क, 'णं। अअं सिद' ख. ङ, 'णं। एदं अ सिद' छ, 'णं। एसो सिद' ज, 'णं। सिद' झ. ञ. पाठः. ८. 'पीडं अ।' क. झ. ञ. पाठः. ९. '(अपवार्य)' क. ग. घ. ङ. छ. ज. झ. ञ, '(निर्वर्ण्य अपवार्य)' च. पाठः. १०. 'ष्यति मदयन्तिका।' क. झ ञ. पाठः. ११. '(तद्गृहीत्वा' ख. घ. पाठः. १२. 'भवत्वेवमुच्यतां' क. ज, 'भवत्येव' ख. च. पाठः.

१. 'त्तरीयद्वयरूप' ञ. पाठः.

**प्रतीहारी** — तह । (तथा ।)

(इति निष्क्रान्ता ।)

**कामन्दकी**—लवङ्गिके प्रविश त्वमभ्यन्तरं वत्सया मालत्या सह ।

**लवङ्गिका** — कहं भअवदी ? (कथं भगवती ?)

**कामन्दकी** — अहमपि विविक्ते तावद् अलङ्करणरत्नानां प्राशस्त्यं शास्त्रतः परीक्षिष्ये ।

(इति पटकं गृहीत्वा निष्क्रान्ता ।)

---

दिभिर्मालतीव्यपदेशयोग्यतामाह । जन इति यथादृष्टग्राहित्वमितरजनस्याह । एवमिति इत्थं क्रियतेऽस्माभिरित्यर्थः ।

तह । तथा ।

वैदग्ध्यादभ्यन्तरवर्तिना नायकेन सह स्वैरसल्लापादिकं प्रवर्तयितुं सखीसमेतामेव नायिकामन्तः प्रवेशयति—अभ्यन्तरं देवतागर्भगृहम् ।

ज्ञाततत्त्वापि सखी तच्छङ्कापरिहाराय पृच्छति—कथं भगवती ? कथम्, करिष्यतीति शेषः ।

उपपन्नमपदेशमाह—विविक्ते विजने, मनस ऐकाग्र्याय, शास्त्रतः रत्नशास्त्रात्, 'वर्णवयोऽवस्थाद्यानुगुण्येन निर्दोषाणां गुणिनां वज्रादिरत्नानां धारणे समृद्धिरन्यथा व्यसनम्' इति बुद्धभटादिभिः प्रतिपादितत्वात्तच्छास्त्रत एव गुणदोषनिर्णयादित्यर्थः, परीक्षिष्ये निर्णेष्य इति ।

---

१. 'री निष्क्रान्ता' छ. ज. पाठः. २. 'काम—वत्से लव' क. पाठः. ३. 'प्रविशाभ्यन्तरं' ग. ङ. छ. ज. पाठः. ४. 'या सह ।' ग. छ. पाठः. ५. 'लव—अध भअवदी उण कहिं ?' क. झ. ञ, 'लव—जह भअवदी आणवेदि ।' च. पाठः. ६. 'काम—विविक्ते' छ. पाठः. ७. 'आभरणरत्नानां प्रा' घ. च. पाठः. ८. 'प्रागल्भ्यं' क. पाठः. ९. 'परीक्षे' छ. ज. पाठः. १०. 'इति निष्क्रान्ता' क. ख. छ. ज. झ. ञ. पाठः. ११. 'पटलिकां' ङ. पाठः.

---

१. 'ज्ञातकल्पापि' क, 'ज्ञात्वापि' ख, 'ज्ञातार्थापि' ग. पाठः. २. 'बुद्धभदन्तादिभिः' क, 'बुद्धभट्टादिभिः', ३. 'निर्णेष्यामि' ज. झ. पाठः.

मालती—(स्वगतं) दिट्ठिआ लवङ्गिआमेत्तपरिअणम्हि संवुत्ता।
(दिष्ट्या लवङ्गिकामात्रपरिजनास्मि संवृत्ता।)

लवङ्गिका — इदं देवदामन्दिरदुवारं। पविसदु पिअसही।
(इदं देवतामन्दिरद्वारम्। प्रविशतु प्रियसखी।)

मालती — तह। (तथा।)

(प्रविशतः।)

मकरन्दः — वयस्य! इतः स्तम्भापवारितौ पश्यावः।

(तथा कुरुतः।)

लवङ्गिका—सहि एसो अङ्गराओ। इमाओ कुसुममालाओ।
(सखि! एषोऽङ्गरागः। इमाः कुसुममालाः।)

मालती — तदो किं? (ततः किम्?)

---

कामन्दकीवैदग्ध्यप्रयोगस्य फलं दर्शयति—दिष्ट्या लवङ्गिकामात्रपरिजनास्मि संवृत्ता। स्वाभिमतावकाशलाभहर्षाद्दिष्ट्येत्युक्तिः। [लवङ्गिकामात्रपरिजना] लवङ्गिकैव परिजनः परिवारो यस्या इति तृतीयविग्रहः।

इदं देवतामन्दिरद्वारम्। प्रविशतु प्रियसखी इति गुप्तदेशाभिनयः।

स्तम्भापवारितौ स्तम्भेन छादितौ।

सखि! एषोऽङ्गरागः। इमाः कुसुममालाः। अङ्गराग आलेपनम्।

ततः किमिति तैर्वस्तुभिः किं कर्तव्यमित्यसूयोक्तिः।

---

१. 'माल—(स्वगतं) कधं लवं' क, 'माल—(आत्मगतं) लव' छ. ज, 'माल-(स्वगतं) लवं' झ. ञ. पाठः. २. 'ता। (प्रकाशं) एदं देवदा' ज. पाठः. ३. 'एदं' ख. छ. ज. झ. ञ. पाठः. ४. 'रं। ता पविसम्य।(इति प्रविशतः)' क, 'रं। पविसम्म। (इति प्रविशतः)' झ. ञ. पाठः. ५. 'सही। (प्रविशतः)' छ. ज. पाठः, ६. 'मक—न्द' क. घ. च. ञ. पाठः. ७. 'स्तम्भान्तरितौ' छ. ज. पाठः. ८. 'वारितशरीरौ' क. पाठः. ९. 'तिष्ठावः' क. ख. झ. ञ. पाठः. १०. 'कुर्वन्ति' ख. घ. पाठः. ११. 'सहि अअं अङ्ग' क. ज. झ. ञ, 'सहि इमे अङ्गराआ।' छ. पाठः.

---

१. 'स्मि वृत्ता' ग. घ. पाठः २. 'स्तम्भैः छादितौ' क. झ. पाठः. ३. 'स्यर्थः, असू' ज. पाठः.

लवङ्गिका—सहि ! इमस्सिं पाणिग्गहणमङ्गलारम्भे कल्लाणसम्पत्तिणिमित्तं देवदाओ पूजेहि त्ति अम्बाए अणुप्पेसिदासि ।

(सखि ! अस्मिन् पाणिग्रहणमङ्गलारम्भे कल्याणसम्पत्तिनिमित्तं देवताः पूजयेति अम्बया अनुप्रेषितासि ।)

मा[3]लती—(स्वगतम्) कीस[4] दाणिं दारुणसमारम्भदेव्वदुव्विलसिअपरिणामदुःखणि[5]ब्भरणिट्ठाविअमाणसा पुणो पुणो मम्मच्छेअदूसहं मन्दभाइणी दू[6]मिज्जामि ।

(कस्मादिदानीं दारुणसमारम्भदैवदुर्विलसितपरिणामदुःखनिर्भरनिष्ठापितमानसा पुनः पुनर्मर्मच्छेददुस्सहं मन्दभाग्या परिताप्ये ।)

---

सखि ! अस्मिन् पाणिग्रहणमङ्गलारम्भे कल्याणसम्पत्तिनिमित्तं देवताः पूजयेति अम्बयानुप्रेषितासि । विवाहरूपशोभनकर्मोपक्रमे समृद्धिसम्पादनहेतोरित्यर्थः । देवता इति बहुवचनेन[1] पूज्यदेवताबाहुल्यमभिलषितवशात् सूचयति । अनुप्रे[2]षितासि प्रस्थापितासि । त[3]त् किं विस्मृतमिति भावः ।

सावेगमाह—कस्मादिदानीं दारुणसमारम्भदैवदुर्विलसितपरिणामदुःखनिर्भरनिष्ठापितमानसा पुनः पुनर्मर्मच्छेददुस्सहं मन्दभाग्या परिताप्ये । क्रूरोपक्रमस्यात्यन्तं प्रातिकूल्याद्दैवस्य दुर्विलासो दुश्चेष्टितं, तस्य परिणामेन परिपाकेन, इतः परं तस्य कर्तव्याभावात्, दुःखनिर्भरं सन्तापपूर्णं, निष्ठापितं नाशितं, शून्यीकृतमिति यावत्, मानसं यस्याः । पुनः पुनरिति तातेन कदाचिदम्बया कदाचित् सख्या कदाचिदिति तत्कृतापराधस्मरणम् । [मर्मच्छेददुस्सहं]

---

१. 'लव—इमस्सिं' छ. पाठः. २. 'पाणिग्गहमङ्ग' च. पाठः. ३. 'माल—किं दाणिं' क. झ. ञ. पाठः. ४. 'कुदो दाणिं' ज. पाठः. ५. 'णिब्भाजिदमाणसं पुणो' क. 'णिब्भाविअमाणसं पुणो' छ, 'णिद्दलिअमाणसं पुणो' ज, 'णिहुदमानसं पुणो' झ. ञ. पाठः. ६. 'दुणेवेसि' क, 'दुणोसि' छ, 'दूमिज्जासि' ज, 'दूसावेसि' झ. ञ. पाठः.

---

१. 'वचने पूज्य' क. ग. घ. छ. पाठः. २. 'लपति नाशां सूचयति' ग. घ. पाठः. ३. 'तव किं' झ. पाठः.

**लवङ्गिका** — अइ ! किं पि वत्तुकामा ?[1][2]

(अयि किमपि वक्तुकामा ? )

**मालती** — किं दाणिं दुल्लहाहिणिवेसिमणोरहविसंवदन्त-[3][4]
भाअधेओ जणो मन्तेदि ।

(किमिदानीं दुर्लभाभिनिवेशिमनोरथविसंवदद्भागधेयो जनो मन्त्रयते।)

**मकरन्दः** — सखे किं श्रुतम् ?[5][6]

**माधवः** — श्रुतम् । असन्तोषस्तु हृदयस्य ।[7][8]

---

मर्माणि प्राणवायुसन्निधानस्थानानि, तच्छेदेन दुस्सहम् । कस्मात्परितोप्ये[1] एवं परितापपरम्पराकरणे किं फलं युष्माकमित्यसूया व्यज्यते, आवेगश्च ।

तदाकूतवेदिनी विदग्धसखी माधवसमक्षं तदुपन्यासस्यावतरणिकां करोति—अयि किमपि वक्तुकामा ? अयि सानुनये प्रश्ने । किमपि [वक्तु-कामा] विवक्षुरिवालक्ष्यसे । तत् तव विवक्षितं विशेषतो निश्शङ्कं ब्रूहीत्यर्थः ।

लब्धावकाशा विशेषाभिधित्सया विवक्षितमाक्षिपति— किमिदानीं दुर्लभाभिनिवेशिमनोरथविसंवदद्भागधेयो जनो मन्त्रयते । इदानीमिति अति-क्रान्तकालत्वं[2] सूचयति । दुर्लभे वस्तुनि अभिनिवेशिनो निर्बन्धिनो मनोरथस्य मनोभिलाषस्य[3] विसंवदद् विरुध्यमानं भाग्यं यस्य, अन्यत्राभिलाषोऽन्यत्र दैवकल्पनेत्यर्थः । किं मन्त्रयते वक्तुमवकाश एव नास्तीत्यर्थः । किमिदानी-मित्यादि क्रमः, सञ्चिन्त्यमानमालतीभावाविष्करणात् ।

सखा तमाह्लादयति— श्रुतमिति ।

तावता तद्भावस्यास्पष्टत्वादसन्तुष्ट आह— श्रुतं निशमितमेव, इदं

---

१. 'किं वत्तु' क. ज, 'किं सि वत्तु' ख. ग. घ. छ. झ. ञ. पाठः. २. 'कामासि' क. ख. पाठः ३. 'माल — जं दाणिं' क. झ. ञ, 'माल — (लवङ्गिकां परिष्वज्य) किं दाणिं' ख, 'माल— (लवङ्गिकां परिष्वज्य) जं दाणिं' घ. च. पाठः. ४. 'णिवेसिअमणो' ख. पाठः. ५. 'सखे श्रुतं' क. झ. ञ. पाठः. ६. 'श्रूयतां' छ. पाठः. ७. 'माध—अस' छ ज. पाठः. ८. 'पक्ष ह' क. ञ. पाठः.

---

१. 'तप्ये' घ. पाठः. २. 'मिति क्रान्तकाल' ग. छ. पाठः. ३. 'मनोभि-लषितस्य' ञ. पाठः.

मालती — (लवङ्गिकां परिष्वज्य) ता परमत्थभइणि ! पिअसहि लवङ्गिए ! एसा दाणिं दे पिअसही अणाहा मरणे वट्टमाणा आगब्भणिग्गमणिरन्तरप्परूढवीसंभसरिसं परिस्सइअ अब्भत्थेदि— 'जइ दे अहं अणुवट्टणीआ तदो मं हिअएण धारअन्ती समग्गसोहग्गलच्छीपरिग्गहेकमङ्गलं माहवसिरिमुहारविन्दं आणन्दमसिणं पुलोएहि ।

(तत्परमार्थभगिनि ! प्रियसखि लवङ्गिके ! एषेदानीं ते प्रियसखी अनाथा मरणे वर्तमाना आगर्भनिर्गमनिरन्तरप्ररूढविस्रम्भसदृशं परिष्वज्याभ्यर्थयते— 'यदि ते अहमनुवर्तनीया ततो मां हृदयेन धारयन्ती समग्रसौभाग्यलक्ष्मीपरिग्रहैकमङ्गलं माधवश्रीमुखारविन्दमानन्दमसृणं प्रलोकय ।)

(इति रोदिति ।)

---

वच इति शेषः । तुर्यावृत्तौ । हृदयस्य तु असन्तोषः, अलम्भावो न भवतीत्यर्थः । 'श्रुतम् । असन्तोषस्तु हृदयस्ये'ति स्वाभिमतकार्यसंग्रहणादादानम् ।

परिष्वज्येति— स्वाभिमतानुकूल्यार्थमुपसान्त्वनप्रकारः । तत्परमार्थभगिनि ! प्रियसखि लवङ्गिके ! एषेदानीं ते प्रियसखी अनाथा मरणे वर्तमाना आगर्भनिर्गमनिरन्तरप्ररूढविस्रम्भसदृशं परिष्वज्याभ्यर्थयते । तदिति यत एवमतिक्रान्तवागवसरा तस्मात्, त्वदन्येष्वभ्यर्थना न फलयेत्यर्थः । परमार्थभगिनि ! अनुपचरितस्वसः !, त्वन्मात्रा एव ममापि पोषितत्वात् । प्रियसखीति प्राणेभ्योऽपि स्नेहभूमिः त्वं ममेत्यर्थः । एषेति दृष्टेऽपि मदवस्था ज्ञायत इति भावः । इदानीं पश्चिमे काल इत्यर्थः । प्रियसखीति न केवलं त्वं मम, तवाप्यहं प्रियसखी-

---

१. 'मालती — ता पर' ख. घ. पाठः. २. 'ज्य) पर' छ. ज. झ. ञ. पाठः. ३. 'णिए ! पिअ' ग, 'णिए ! लवं' ङ. पाठः. ४. 'णिग्गमणिम्मिदणिर' क. पाठः. ५. 'न्तरोवरूढ' क. झ. ञ, 'न्तरोवआरूढ' ज. पाठः. ६. 'अ तुमं पत्थेदि' क. ज, 'अ पत्थे' ख. घ. ञ. ज, 'अ पत्थेमि' ज. पाठः. ७. 'मङ्गलस्स माहवस्स पुणो मुहा' छ. पाठः. ८. 'णं अवलोअइस्ससि' क. झ. ज. पाठः.

---

१. 'संग्रहादादानं' ङ. झ. पाठः. २. 'भ्यर्थनाफलाये' ज. पाठः.

माधवः — वयस्य मकरन्द !

म्लानस्य जीवकुसुमस्य विकासनानि
सन्तर्पणानि सकलेन्द्रियमोहनानि ।

एवेति परस्परप्रेमबन्धमाह । अनाथा नाथैः पित्रादिभिरुपेक्षितत्वाद् ,[मरणे वर्तमाना] गत्यन्तराभावात् मरणमेव शरणमवलम्बमाना । [आगर्भतः] गर्भतो मातुरुदरतो निर्गमो गर्भनिर्गमः, तत आरभ्य, अभिविधावाङ् । निरन्तरप्ररूढो निर्विघ्नगाढो यो विस्रम्भस्तस्य सदृशं यथा तथा । अभ्यर्थयते याचते, न पुनरभ्यर्थये इत्युक्तिः या तथाविधा सा त्वामभ्यर्थयत इत्यभ्यर्थनाभङ्गस्य स्वप्नेऽप्यकरणीयत्वं द्योतयति । हठात् तां संवादयन्ती अभ्यर्थनाविषयं प्रकाशयति— यदि ते अहमनुवर्तनीया ततो मां हृदयेन धारयन्ती समग्रसौभाग्यलक्ष्मीपरिग्रहैकमङ्गलं माधवश्रीमुखारविन्दमानन्दमसृणं प्रलोकय । अनुवर्तनीया आनुकूल्येन सन्तोषणीया । ते इति कृत्यप्रत्यययोगे कर्तरि षष्ठी । त्वदनुवृत्तिरपेक्षितैव, तथापि त्वद्विरहकातर्यं मां नानुकूलयतीत्याह—मां हृदयेन धारयन्तीति, हृदयसन्निहितत्वे का विरहशङ्केत्यर्थः । समग्रायाः सम्पूर्णायाः सौभाग्यलक्ष्म्याः सर्वजनप्रार्थनीयत्वाश्रियः परिग्रहार्थमेकमद्वितीयं [मङ्गलं] कल्याणं, माधवश्रीमुखारविन्दं माधवस्य श्रीमुखरूपमम्बुजम् । श्रीशब्द उपचारवाचकः । आनन्दमसृणं सुखानुभवेन मन्दं यथा, मदनुस्मारणायेत्यर्थः । रोदितीति तत्स्मरणेन नवीकृतशोकत्वादुक्तिः ।

तदुक्तिव्यक्तेः सन्तुष्टहृदय आह — म्लानस्येत्यादि । नैराश्यदावसंस्पर्शात् क्लान्तस्य, जीवकुसुमस्य आत्मचैतन्यात्मनः पुष्पस्य , विकासनानि उल्लासकारीणि । सन्तर्पणानि आप्यायनानि, कृशस्य शरीरस्य झटिति पोषकत्वात्, कृशशरीराप्यायकस्यौषधस्य सन्तर्पणसंज्ञया वैद्यके व्यवहारात् । सकलेन्द्रियमोहनानि सर्वेषां श्रोत्रादीनां बाह्येन्द्रियाणां विवशीकरणानि ।

१. 'माधवः—मक' क. पाठः.

१. 'नीयाया: श्रियः' क, 'नीयश्रियः' ख. पाठः. २. 'रूपमरविन्दं अम्बुजं' ख. पाठः. ३. 'स्वतापस्पर्शात्' क. छ, 'स्वतापसंस्पर्शा' ख. ग. घ. ज. पाठः ४. 'स्पर्शनात्' ख. पाठः. ५. 'तान्तस्य' ख. ङ, छ. ज. क पाठः.

आनन्दनानि हृदयैकरसायनानि
दिष्ट्या मयाप्यधिगतानि वचोमृतानि ॥ ८ ॥

मालती—जंह तस्स जीविदप्पदाइणो अवसीदन्तिं मं सुणिअ सन्तप्पमाणस्स तहविहं सरीरअणं ण परिहीअदि, लोआन्तरगदं पि मं उद्दिसिअ सो जणो संभरणसंकहामेत्तपरिग्गहेण वि कालन्तरेण

आनन्दनानि तादात्विकपरमसुखजनकानि । हृदयैकरसायनानि आयत्यामपि मनसः प्रधानरसायनानि । जरामरणादिहर औषधविशेषो रसायनम् । निखिलशङ्कातङ्कसङ्कर्तनेन हृदयस्थैर्यकारिणीत्यर्थः । मयापीति निखिलाशापाशविच्छेदनिश्चितनिजजीवितापायेन,

'तत् पश्येयमनङ्गमङ्गलगृहं भूयोऽपि तस्या मुखम्'

इत्येतावन्मात्रमाशंसमानेन मयापीत्यर्थः । अधिगतानि प्राप्तानि न तु श्रुतानीति निधिवत् संगृहीतत्वं सूचयति । वचोमृतानि वचनरूपाण्यमृतानि । तद्वचसामेव माधुर्यान्मृतसञ्जीवनत्वं, स्वानुकूल्यद्योतकत्वेन किं पुनः कथ्यतामित्यमृतत्वारोपः । अत्र हर्षाख्यो भावः प्रकाश्यते । निरवयवमालारूपकमलङ्कारः ॥ ८ ॥

यथा तस्य जीवितप्रदायिनोऽवसीदन्तीं मां श्रुत्वा सन्तप्यमानस्य तथाविधं शरीररत्नं न परिहीयते, लोकान्तरगतामपि मामुद्दिश्य स जनः संस्मरणसङ्कथामात्रपरिग्रहेणापि कालान्तरेण न लोकयात्रां शिथिलयति तथा कुरु । जीवितप्रदायिन इति व्यसनसमागमस्य कामसूत्रोक्तस्य प्रयोगसाफल्यमाह । कापालिककवलितप्राणप्रत्याहरणपरमोपकारिण इति कृतज्ञतयाप्यनुरागदार्ढ्यं

१. 'इणो जणस्स अवसीदन्ति मं', २. 'स्स तं तह' क. झ. ञ. पाठः, ३. 'अदि, जधा अ परलोअगदं पि' क. 'अदि, जह अ लोआ' ञ. पाठः. ४. 'सुमरण' ज. झ. ञ. पाठः, ५. 'णकधामेत्त' क. ज. पाठः. ६. 'परिसेसं काल' क. ज. झ. ञ. पाठः. ७. 'कालन्तरे वि लोअअत्तं ण सिढि' क. झ. ञ, 'कालन्तरे ण लोअ' ख. ग. ङ. च. छ. पाठः

१. 'तादात्मिक' ग, 'तादात्मक' घ. पाठः, २. 'हरणौषधि' ज. पाठः, ३. 'खिलाशङ्का' क. पाठः, ४. 'विधिवत्' ज. झ. पाठः, ५. 'ते । तन्निरव', ६. 'यथा च तस्य' ग. घ. पाठः.

1787

ण लोअजत्तं सिढिलेदि तह करेसु । एव्वं जेव्व दे पिअसही सणाहा माळदी सकामा किदा होदि[2] ।

(यथा तस्य जीवितप्रदायिनोऽवसीदन्तीं मां श्रुत्वा सन्तप्यमानस्य तथाविधं शरीररत्नं न परिहीयते, लोकान्तरगतामपि मामुद्दिश्य स जनः संस्मरणसङ्कथामात्रपरिग्रहेणापि कालान्तरेण न लोकयात्रां शिथिलयति तथा कुरु । एवमेव ते प्रियसखी सनाथा मालती सकामा कृता भवति ।)

---

प्रकाशयति । अवसीदन्तीमिदानीं मरणस्यावकाशलाभात् कालेन विनश्यन्तीमित्यर्थः । तथाविधं तादृशी विधा प्रकारो यस्येत्यनुभवपरामर्शः । शरीररत्नं स्वयं सन्तापकार्श्येऽपि नवनवलावण्यवत्त्वं द्योतयति । न परिहीयते क्षीणं न भवति, तथा कुर्वित्यन्वयः, समाश्वासनेनेत्यर्थः । लोकान्तरगतामपीति । अद्यैव भाग्यवशादवकाशं लब्ध्वा त्यक्तजीविता परलोकं यद्यहं गता तथापि मामित्यर्थः । अपिशब्दो यथाशब्दानुकर्षणार्थः । उद्दिश्य लक्षीकृत्य । स जनः प्रियतमः । संस्मरणसङ्कथामात्रपरिग्रहेण संस्मरणप्रवृत्तस्य सङ्कथामात्रस्य तयैवं कृतं तयैवं हसितं निरीक्षितं कथितमित्यादिसंलापस्यैव परिग्रहेणाङ्गीकारेण । अपीति तदितरसम्बन्धस्य दैवेन विघटितत्वं व्यज्यते । कालान्तरेण कालविश्लेषेणेति[1] 'स्नेहः प्रवासाश्रयाद्' इत्युक्तन्यायात् कालविच्छेदेन स्नेहविच्छेदस्य संभाव्यत्वमिति भावः । लोकयात्रां लौकिकीं स्थितिम् , 'परस्परानुरागिणोर्द्वयोरन्यतरापायेऽन्यतरः स्मरति[2]' इति न्यायमित्यर्थः । न शिथिलयति न मन्दीकरोति । तथा कुरु तत्पार्श्वे प्रतिक्षणं गत्वा मदनुस्मारणेनेत्यर्थः । एवमेव ते प्रियसखी सनाथा मालती सकामा कृता भवति । एवमुक्तप्रकारेण[3] कृते । एवेति अन्य[4] विसंवादे शत्रुत्वाचरणं व्यज्यते । प्रियसखीति त्वत्प्रेमभूमित्वमनेनैव[5] स्पष्टीभविष्यतीति द्योत्यते । सनाथेत्यनाथत्वं[6]

---

१. 'एव्व पिअसहीए प्पसादादो माळदी किदत्था भोदि' क. झ. पाठः. २. 'होउ' ख. पाठः.

---

१ 'विशेषेणेति' ख. ग. घ. ङ. छ. ज. झ. पाठः. २. 'न्यतरं स्मरति' ज. पाठः. ३. 'एवं मदुक्त' ङ. झ. पाठः. ४. 'अस्या विसं' ख. ग. घ. छ. ज. पाठः. ५. 'एवं तेनैव' क. ख. ग. घ. छ. पाठः. ६. 'सानाथ्यं नाथवत्वं अनिराकृतं' ज. पाठः.

मकरन्दः— हन्त! अतिकरुणं प्रस्तुतम्।

माधवः—

नैराश्यकातरधियो हरिणेक्षणायाः
श्रुत्वा निकामकरुणं च मनोहरं च।
वात्सल्यमोहपरिदेवितमुद्वहामि
चिन्ताविषादविपदं च महोत्सवं च॥ ९॥

लवङ्गिका— सहि! पडिहदं दाणिं दे अमङ्गलं मरणवअणं। ण अदो अवरं दे वअणं सुणिस्सं।

मम निराकृतं भवति, त्वया सनाथत्वात्। सकामा कृता भवति त्वयि प्रार्थनस्य मत्कृतस्य साफल्यमपि त्वया कृतं भवतीति 'अणाहा', 'अब्भत्थेदि' इत्युक्तं द्वयमपि परिहृतं भविष्यतीत्युक्तं वेदितव्यम्।

हन्तेति विषादे, अतिकरुणमत्यन्तशोकावहं, प्रस्तुतं प्रक्रान्तं, अनयेति शेषः।

अथ तदपायशङ्कया तदनुरागवचनश्रवणेन च विषादप्रमोदमध्यवर्त्याह— नैराश्येत्यादि। नैराश्यकातरधियः मत्समागमनिराशतया भीरुहृदयायाः, [हरिणेक्षणायाः] निकामकरुणं जीवितत्यागोद्योगात्, मनोहरं द्वदनुराग-सूचकत्वाद्, वात्सल्यमोहपरिदेवितं वात्सल्यं लक्षणया स्नेहस्तत्कृतो मोहः कर्तव्यापरिज्ञानं तेन जनितं परिदेवितं विलापम्, श्रुत्वा, चिन्ताविषादविपदं च किं भविष्यतीति चिन्तया यो विषादः मनसो दुःखपरवशत्वं तेन जनितां विपदम्, शरीरसादादिकामापदम्, महोत्सवं च अहो धन्योऽस्मि मत्प्राणसमाथा अपि मय्येवमनुरागादिति परममुत्सवं, लक्षणया तत्कार्यं सुखम्। अत्र विषादहर्षौ भावौ स्पर्धीभावेन व्यज्येते। भावसन्धिरलङ्कारः॥ ९॥

१. 'णं वत्तेदि' क. पाठः. २. 'मांदरेक्षणायाः' घ. पाठः. ३. 'लव— अइ! पडि' क. ज. झ. ञ. पाठः. ४. 'ङ्गलं। ण अदो' क. ग. ङ. छ. ज, 'ङ्गलवअणं' ख. घ. पाठः. ५. 'अदो वि अधिअदरं सुणि' क. ञ, 'अदो वरं' ख. घ. ङ. च. ट., 'अदो प्परं' ङ, 'इदो वि अवरं' ज, 'अदो व अवरं' झ. पाठः.

१. 'मनोरमं' ञ. पाठः. २. 'तत्तो जनि' ङ. झ. पाठः. ३. 'षौ स्पर्धौ' क. ख. ग. घ. छ, ञ. पाठः.

(सखि! प्रतिहतमिदानीं ते अमङ्गलं मरणवचनम् । नातोऽपरं ते वचनं श्रोष्यामि ।)

मालती— सहि! पिअं क्खु तुह्माणं मालदीजीविदं, ण उण मालदी ।

(सखि! प्रियं खलु युष्माकं मालतीजीवितम्, न पुनर्मालती ।)

लवङ्गिका— किं त्ति भणिदं होदि ?

(किमिति भणितं भवति ?)

---

अथामङ्गलाशङ्किनी सखी वक्ति— सखि! प्रतिहतमिदानीं ते अमङ्गलं मरणवचनम् । प्रतिहतमीश्वरस्मरणादिभिर्निरस्तम्, भवत्विति शेषः, 'शान्तं पापम्', 'प्रतिहतममङ्गलम्' इत्यादिप्रयोगात् । नातोऽपरं ते वचनं श्रोष्यामि । सासूयमाह — अतः उक्तादपरं दुःश्रवत्वात् नाकर्णयिष्यामीत्यर्थः ।

तद्वचनस्यास्नेहपूर्वत्वादुपचारशब्दत्वमारोप्य सरोषमाह— सखि! प्रियं खलु युष्माकं मालतीजीवितम्, न पुनर्मालती । खलुर्जिज्ञासायाम् ।

'निषेधवाक्यालङ्कारजिज्ञासानुनये खलु ।'

इत्यमरः । युष्माकमिति बहुवचनेन तातादिसङ्ग्रहः । युष्माकं मालतीजीवितं प्रियम्, न पुनर्मालती प्रियेति वचनेनैतद्विवक्षितत्वाह— येन केनाप्युपायेन श्वासमात्रशेषा शल्यप्रोतशकुन्तिकेव दुःखसन्तप्ता जीवन्मरणमनुभवत्वियमिति मालतीजीवितं प्रियमित्यस्यार्थः । न पुनर्मालतीत्यर्थान्तरसङ्क्रमितवाच्येन सुखसंवर्धितत्वमदुःखार्हत्वमुपलालनीयत्वमनुवर्तनीयत्वमित्यादिविशिष्टतया मालती न गण्यत इति ।

तद्विवक्षितमजानती किल पृच्छति— किमिति भणितं भवतीति ।

---

१. 'लवं— किं एव्वं भ' क. झ. ब. 'लव— सहि किं ति' क. छ. ज. 'लवं— सहि किं एव्वं भ' ज. पाठः.

---

१. 'अमङ्गलशङ्किनी' क. पाठः. २. 'अश्रव' ज. पाठः. ३. 'ह— प्रियसखि' ज. पाठः. ४. 'सुखसम्बन्धित्वं' ज. पाठः.

[1]मालती—जेण[2] पच्चासाणिबन्धणेहिं वअणसंविहाणएहिं जीवा-विअ[3] इमं महाबी[4]भच्छसमारम्भं अणुभाविदह्मि । सम्पदं पुण[5] मणोरहो एत्तिओ एव्व[6]—जं तस्स जीविदप्पदाइणो पर[7]केरअत्तणेण अवरुद्धं[8] अत्ताणं परिच्चइअ णिव्वुदा भविस्सं ति[9]। [10]एदस्सिं पओअणे पिअसही से अव-रिवन्थिणी होदु[11]।

(येन प्रत्याशानिबन्धनैर्वचनसंविधानैर्जीवयित्वा इमं महाबीभत्ससमारम्भ-मनुभावितास्मि । साम्प्रतं पुनर्मनोरथ एतावानेव—यत्तस्य जीवितप्रदायिनः

---

स्वविवक्षितं विवृणोति—येन प्रत्याशानिबन्धनैर्वचनसंविधानैर्जीवयित्वा इमं महाबी[1]भत्ससमारम्भमनुभावितास्मीति । प्रत्याशानिबन्धनैः तात्मेवं वशीकरिष्यामः, अम्बां [प्रति] एवमुपायान्तरं वा करिष्यामः, अद्यैवं[2] क्रियते, श्व एवं, परश्व एवमित्याशापाशहेतुभिरित्यर्थः । वचनसंविधानैः वाङ्मात्र-रूपैर्न पुनः क्रिययानुष्ठीयमानैरुपायप्रयोगैरिति भावः । जीवयित्वेति अन्यथा प्रत्याशाविच्छेदेन प्रागेव प्राणपरित्यागोऽकरिष्यत चेदयमर्थो नापतिष्यदित्यर्थः । इममिदानीं वर्तमानं, महाबीभत्सं कमपि गुणमनपेक्ष्य कार्यपरतयैव प्रवर्तित-त्वात् [3]सर्वजनजुगुप्सास्पदम्, आरम्भं कार्यमयोग्यप्रतिपादनरूपम्, अनुभाविता प्रापितास्मीति णिचा बलात्कारं द्योतयति । येनेति यच्छब्दपर्यायो विभक्ति-प्रतिरू[4]पकमव्ययम् । यत एवमनुभावितास्म्यतो मालतीजीवितं प्रियं, न पुन-र्मालतीसुखमिति सम्बन्धः । एवं दैवोपनि[5]पातितेऽनर्थे किं क्रियतामिदानीं

---

१. 'माल—(आत्मानं निर्दिश्य) जेण' क. झ. पाठः २. 'जेण अण्णजणए' क. पाठः. ३. 'अ इमं जेव्व महा' क. 'अ मं महा' ग. घ. ङ. पाठः. ४. 'बीभत्सारम्भं' क. ज. झ. ञ., 'बीभत्ससमारम्भं' ग. घ. ङ. छ. पाठः ५. 'पुण मम मणो' क. 'पुण से मणो' ज. पाठः. ६. 'एसो जेव्व' क. झ. ञ. पाठः. ७. 'तस्स देवस्स परोक्खगुणकिरे-त्तणेण' क. 'तस्स देवस्स पर' ज. झ. ञ. पाठः ८ 'अणवरुद्धं' क. ख. ङ. झ. पाठः. ९. 'इस्सं ति' क. छ. झ. ञ. पाठः. १०. 'ति । ता इमस्सिं' क. झ. ञ' 'ति । ज एदस्सिं' छ. पाठः ११. 'होइ' ख. घ. पाठः

---

१. 'बीभत्ससमारम्भ' ग. घ., 'बीभत्सारम्भ' ज. पाठः २. 'वं करि-ष्यामि, क्रियते च एवं' ज. पाठः. ३. 'सर्वजगज्जुगुप्सा' छ. झ. पाठः. ४. 'रूप-मव्यय' क. ख. ग. घ. छ. पाठः. ५. 'निपातितेऽर्थे' ग. घ. पाठः.

परकीयत्वेनापराद्धमात्मानं परित्यज्य निर्वृता भविष्यामीति । एतस्मिन् प्रयोजने प्रियसखी मे अपरिपन्थिनी भवतु ।)

तूष्णीमेव स्थीयतामित्याशङ्क्याह—साम्प्रतं पुनर्मनोरथ एतावानेव यत्तस्य जीवितप्रदायिनः परकीयत्वेनापराद्धमात्मानं परित्यज्य निर्वृता भविष्यामीति । पुनःशब्दो व्यावृत्तौ, सर्वथा युष्मदभिसन्धिस्तु नानुवर्तत इत्यर्थः । मनोरथः सङ्कल्पः, एतावान् एतत्परिमाणः । एवेति

'क ईप्सितार्थस्थिरनिश्चयं मनः,
पयश्च निम्नाभिमुखं प्रतीपयेत् ।'

इति न्यायेन ब्रह्मणाप्यनिवार्यत्वं व्यञ्जयति । जीवितप्रदायिन इति उपकारस्मरणदार्ढ्यं प्रकाशयन्ती, तद्दत्तजीवितं तदर्थमेव त्यज्यत इति कोऽत्रास्माकं प्रयास इति सूचयति । परकीयत्वेन—

"पिता रक्षति कौमारे भर्ता रक्षति यौवने ।
पुत्रस्तु स्थविरीभावे न स्त्री स्वातन्त्र्यमर्हति ॥"

इति स्मरणात् पित्रायत्ततया । अपराद्धं परहस्तस्पर्शरूपं परमानिष्टकारिणम् । अनपराद्धमिति वा पाठः । अपराधस्याबुद्धिपूर्वत्वात् पशुवदस्वतन्त्रतया बद्ध्वा नीयमानस्यानुतप्यमानस्य नापराधः कश्चित् । बुद्धिपूर्वत्वे हि ब्रह्महत्यादीनामपि प्रायश्चित्ताभावः, अनुतप्तस्य प्रायश्चित्तविधानात् ,

'अकामतः कृते पापे प्रायश्चित्तं विदुर्बुधाः ।'

इति मनुवचनात् ,

'प्रायश्चित्तमकुर्वाणाः पापेषु निरता नराः ।
अपश्चात्तापिनः कष्टान्नरकान् यान्ति दारुणान् ॥'

इति याज्ञवल्क्यवचनाच्चेत्यर्थः । आत्मानं देहम् ।

'आत्मा देहे धृतौ जीवे स्वभावे परमात्मनि ।'

इति वैजयन्ती । आत्मानं परित्यज्येति

'देशं कालं वयः शक्तिं पापं चावेक्ष्य यत्नतः ।
प्रायश्चित्तं प्रकल्प्यं स्याद्यत्र चोक्ता न निष्कृतिः ॥'

१. 'स्थाविरे भर्ते' क. पाठः. २. 'पशुवदस्व' क. ग. घ. ङ. पाठः. ३. 'त्यज्यते यतः' ङ. पाठः

(इति पादयोः पतति ।)

मकरन्दः—सैषा सीमा स्नेहस्य ।

(लवङ्गिका माधवं हस्तसंज्ञया आह्वयति ।)

---

इति याज्ञवल्क्यस्मरणात् स्वयमालोच्य पापानुगुणं प्रायश्चित्तं कल्पयति । भर्तृत्वेन स्वयं सङ्कल्पिते वंशादिभिरनुरूपे प्रणयशालिनि प्राणदायिनि च पारतन्त्र्यप्रयुक्तस्यापराधपातकस्य प्राणपरित्यागमन्तरेण प्रायश्चित्तान्तरस्याशक्यत्वमपर्याप्तत्वं चेत्यर्थः । निर्वृत्ता निरयभयनिवारणात् सुखिता ।

'पापकृन्नरकं याति प्रायश्चित्तपराङ्मुखः ।'

इति स्मरणात् प्रायश्चित्तस्य चानुष्ठितत्वादिति भावः । भविष्यामीति अयं लोकस्तावन्निरर्थको भवतु नाम, असौ तु लोको मैवं भूदिति भावः । इति यद्वस्तु एतावानेव मनोरथ इत्यन्वयः । अनया चोक्त्या 'न त्वेवायं जनो न च जीवितम्' इत्युक्तस्य स्थैर्यमनुसंहितं वेदितव्यम् । एतस्मिन् पारलौकिकत्वेन सूचिते, प्रयोजने परमसुखरूपे फले विषये, प्रियसखी मे इति अद्य यावत् मत्प्रियहितान्वेषिण्यास्तवेदानीं प्रातिकूल्यमनुचितमेवेति द्योतयति, परिपन्थिनी विरुद्धा न भवतीत्यपरिपन्थिनी, भवत्विति प्रार्थने लोट् ।

पादयोः पततीति स्वामिन्याः प्रत्युत चेटीकर्मचरणेनानतिलङ्घ्यत्वं तदभ्यर्थनस्य, निर्बन्धगोचरत्वादिति व्यञ्जयति ।

तच्चेदितं चमत्करोति — सैषेति पाठः । 'सीमसीमे स्त्रियामुभे' इत्यमरः । सा या लोकप्रसिद्धा, एषा इदानीमनुभूयमाना चेटीविषये स्वामिन्याः पादपतनरूपा, सीमा परमावधिः । स एष इति पाठे विधिरित्यध्याहर्तव्यं स्यात् । स्नेहस्य त्वद्विषयस्यानुरागस्य ।

अवसरज्ञसखीमुखेन नायकसमागमं संविधत्ते कविः—हस्तसंज्ञयेति नायिकाया अपरिज्ञानार्थमाह्वानं सङ्केतरूपेण हस्ताभिनयेन, आह्वयति आगत्यात्र स्थाने स्थीयतामित्यभिप्रायेणाकारयतीत्यर्थः । माधवं हस्तसंज्ञया आह्वयतीत्यधिबलम्, मालत्या अतिसन्धानात् ।

---

१. 'मक—एषा परमा [सीमा] स्नेहस्य' छ, 'सैषा परमा सीमा स्नेहस्य' ज. ञ. पाठः २. 'धवं संज्ञया' क. छ. ज, झ. ञ, पाठः. ३. 'हस्तेन संज्ञया' ख. पाठः. ४. 'समाह्वयति' क, छ. झ. ञ. पाठः.

---

१. 'स्वयं कल्पिते' झ. पाठः. २. 'प्राणप्रदायिनि' क. पाठः. ३. 'प्राणत्याग', ४. 'स्याशक्तित्वं' ज. पाठः. ५. 'इयद्वस्तु' क. ख. ग. घ. ज. पाठः. ६. 'इति भाव' क. ख. ग. घ. छ. पाठः. ७. 'चरणेऽनति' ख. पाठः. ८. 'परमरूपावधिः' ज. पाठः.

मकरन्दः—वयस्य! उपसृत्य लवङ्गिकास्थाने[1] तिष्ठ[2] ।

माधवः—[3]परवानस्मि साध्वसेन ।

मकरन्दः—[4]इयमेव[5] नेदीयसां प्रकृतिरभ्युदयानाम् ।

(माधवः स्वैरं लवङ्गिकास्थाने तिष्ठति ।)

मालती—सहि! अणुऊलदाए पसादं करेसु ।

(सखि! अनुकूलतया प्रसादं कुरु ।)

माधवः—

सरले! साहसरागं परिहर रम्भोरु! मुञ्च संरम्भम् ।
विरसं विरहायासं सोढुं तव चित्तमसहं मे ॥ १० ॥

तदिङ्गितं विवृणोति — उपसृत्य समीपं गत्वा, लवङ्गिकास्थाने यत्र पूर्वं लवङ्गिका स्थिता तत्र स्थले, तिष्ठ ।

हर्षोत्कम्पमभिनयन्नाह — परवान् परतन्त्रः अस्ववशशरीर इत्यर्थः । साध्वसेन हृदयोत्कम्पेन ।

तथात्वमेवोपपादयति — इयमेव वर्तमानसाध्वसविशिष्टत्वादिरूपा, नेदीयसां अन्तिकतमानाम्[1] । दूरस्थत्वे पुनरौत्सुक्येन[2] कदा भविष्यतीति प्रार्थ्यते, हस्तगतत्वे पुनरचिन्तितानामभिलषितानां[3] हर्षपरवशतया मनसः स्तम्भकम्पादिसम्भार इतीयमेव[4], प्रकृतिः स्वभावः, अनेरिवौष्ण्यम्, अतो न वितर्कगोचर[5] इत्यर्थः, अभ्युदयानां समृद्धीनाम् ।

स्वैरं शनैः, पदशब्दाश्रवणाय ।

पादपतितैर्वाह—सखि[6] अनुकूलतया प्रसादं कुरु । अनुकूलतया मदभिप्रायानुवर्तनेन । प्रसादमनुग्रहम् ।

अथ लवङ्गिकास्थाने स्थितो वैदग्ध्यात्तद्भाषामनुकुर्वाण आह तच्छङ्कापनोदनार्थं—सरले इत्यादि । सरले अकुटिले इति संबुद्धिः,

१. 'कायाः स्थाने' क. पाठः. २. 'तिष्ठ । माल—सहि' ज. पाठः. ३. 'माध—वयस्य! पर' क. पाठः. ४. 'मक—वयस्य! इय' ख. पाठः. ५. 'इयं हि ने' च. पाठः.

१. 'माना साध्व' क. ख. घ. ङ. छ. झ. पाठः. २. 'क्ये कदा' क. ग. घ. छ. पाठः. ३. 'मभिमतानां' ज. पाठः. ४. 'सम्भव इति' क. पाठः. ५. 'मतो न तद्गोचर' ज. पाठः. ६. 'नैवाह । सखि' क. ख. ग. घ. छ. ज. पाठः.

'बाले लज्जां निरस्ता नहि नहि सरले! चोलकः किं त्रपाकृत् ।'

इतिवत् । अनेन अहो तवेयमृजुता, या पित्रादींस्तृणाय मत्वा स्वाभिलषितं न साधयतीति व्यज्यते । अथवा अग्राम्ये इति ।

'अग्राम्यसरलोदारविदग्धच्छेकदक्षिणाः ।'

इति वैजयन्ती । साहसरागं आत्मत्यागरूपेऽविचारितकारित्वे सक्तिम्, आत्मघातस्यापि महापातकमध्ये गणनात् ।

'सुराप्यश्चात्मघातिन्यो नाशौचोदकभाजनाः ।'

इति याज्ञवल्क्यस्मरणात्,

"महापातकिनां चैव तथा चैवात्मघातिनाम् ।
उदकं पिण्डदानं च न कुर्याद्धर्ममेव च ॥"

इति संवर्तनस्मृतेश्च । परिहर त्यज । [रम्भोरु] रम्भा कदली, तत्काण्डवृत्तानुपूर्वमसृणशीतलगौरभाजावूरू यस्याः । साहसपरिहारहेतुमाह — मुञ्च संरम्भं पित्रादिवैराग्यजनितनिर्बन्धम् ।

"आवेश एव विषये प्रतिघातिनि रोषवान् ।
अनुबन्धी च भूयोऽपि संरम्भकं प्रपद्यते ॥"

इति दिवाकरः । विरसं विगतसुखम् । तव विरहायासं त्वद्विश्लेषदुःखम् । चिरं मे सोढुमसहं अशक्तम् । 'शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन्' (३-४-६५) । अनयोक्त्या त्वन्निधने मयापि न जीव्यते । अत उभयोस्त्राणाय साहसरागं मा कार्षीरिति द्योतयति । अत्र मतिरावेगश्च भावौ व्यज्येते । भाषाश्लेषोऽलङ्कारः, मध्यमपात्रभूमिकास्थोत्तमपात्रप्रयोज्यसंस्कृतप्राकृतसाधारणजातित्वात् ।

'तद्भवं तत्समं देशीत्यनेकः प्राकृतक्रमः ।'

इति दण्ड्यादिभिर्लक्षितं तत्समम् इदम् ॥ १० ॥

---

१. 'बोलकः' क. ग. घ. छ. पाठः. २. मृजुतायाः, पित्रा . . . . . साधयसीति' क. ङ. झ. पाठः. ३. 'इये अतिक्षीणे । अग्राम्ये इति' क. पाठः. ४. 'गौरवभावावूरू' ग. घ. ङ. 'गौरस्वभावावूरू' छ. झ. 'गौरवावूरू' ज. पाठः. ५. 'स्थनम्' ख. झ. पाठः. ६. 'प्रकाश्येते' क. छ. झ. पाठः.

1787

मालती—सहि! लवङ्गिए! अलंघणिज्जो[२] दे मालदीप्पणामो।

(सखि लवङ्गिके! अलङ्घनीयस्ते मालतीप्रणामः।)

माधवः—

किं वा भणामि विच्छेददारुणायासकारिणि!।
कामं कुरु वरारोहे! देहि मे परिरम्भणम्॥ ११॥

लवङ्गिकाया अननुमतिं विज्ञाय पुनर्निश्चिकित्स्या तां प्रार्थयते—सखि लवङ्गिके! अलङ्घनीयस्ते मालतीप्रणामः। सखि लवङ्गिके इति त्वामहमर्थये इति भेदप्रयोगः। अलङ्घनीयः प्रतीपाचरणेनानादर्तुं न योग्यः। मालतीति सहजसौहार्दद्रवार्द्रत्वादिति द्योतयति। प्रणाम इति नीचकर्मत्वम्। ते इति कर्तरि षष्ठी।

तदनुमतिव्याजेन स्वाभिमतं व्यनक्ति—किं वा भणामीत्यादि। एवंवादिन्यां त्वयि मया किं[३] वक्तव्यमनुमतिमन्तरेणेत्यर्थः। विच्छेददारुणायासकारिणीति एतावत् पुनर्भण्यते—विच्छेदे विरहे दारुणं दुस्सहं आयासं दुःखं कर्तुं शीलं यस्याः, सा त्वमिति बन्धुजनोपतापमगणयन्ती स्वसुखं चिकीर्षसीत्यहो ते निर्घृणत्वमिति भावः। कामं कुरु स्वाभिमतं कुरु। परिरम्भणं आश्लेषं[४] तावत् मे देहि। एतावतापि मां सुखयेति सखीवचनत्वेन वाच्यः, नायकवचनत्वेन तु व्यङ्ग्यः। त्वद्विरहवेदना कथं मया वर्ण्यते। अतो ममाभिलषितं कुरु। तत् किमिति चेत् परिरम्भणं देहि। तावतैव चरितार्थत्वमिति भावः। अत्रौत्सुक्यं व्यज्यते। भाषाश्लेष एवालङ्कारः॥ ११॥

१. 'माल—अलं' ङ. झ, 'माल—सहि अलं' ग. पाठः. २. 'णीओ लेव्व दे' क. ग. पाठः ३. 'माध—(सहर्षं) किं वा' क, झ. ग. पाठः, ४. 'भणाम्यहं वत्से दारुणा' ग. पाठः

१. 'प्रतीपचर' ङ. ग. ब. छ. पाठः, २. 'द्रवीभूतत्वादिति' ज, 'दयार्द्रत्वादिति' झ. पाठः, ३. 'किं कर्तव्यं' क, छ. ज. पाठः, ४. 'आश्लेषणं' ज. पाठः.

**मालती** — (सहर्षं) कहं अणुमदह्मि ? (उत्थाय) इअं आलिङ्गामि । दसणं पुण बाहोप्पीळेण पिअसहीएँ अवच्छिमं ण लब्भइ ।

(कथमनुमतास्मि ? इयमालिङ्गामि । दर्शनं पुनर्बाष्पोत्पीडेन प्रियसख्या अपश्चिमं न लभ्यते ।)

(आलिङ्ग्य सानन्दं) सहि ! कठोरकमळगब्भपह्मलो अण्णारिसो एव्व दे अङ्ग णिव्वावेदि मं सरीरप्फंसो । (सास्रं) सहि! किं च मौळिविणि-

---

तदनुमतिं परिकल्प्याह — सहर्षं स्वाभिमतसौकर्यात् । कथमनुमतास्मि । मरणं प्रतीत्यर्थात् । इयं अहं आलिङ्गामि त्वत्प्रियं करोमीत्यर्थः । सखीजनसन्निधौ प्रियतमालिङ्गनदोषं मुग्धाया अदर्शनकृतमिति भङ्ग्या परिहरति कविः— दर्शनं पुनर्बाष्पोत्पीडेन प्रियसख्या अपश्चिमं न लभ्यते । बाष्पोत्पीडेन अश्रुसमूहेन, अनुपतिहर्षजेन वा स्त्रीस्वाभाव्यात् बन्धुजनानुस्मरणजनितेन वा. अपश्चिमं यस्मादन्तिमं नास्ति, तत्तैवावसानसमयभावितया अन्त्यत्वादित्यर्थः, न लभ्यते न प्राप्यते, दृष्टिप्रसरनिरोधादित्यर्थः ।

अदर्शनेऽपि स्पर्शान्तरात् प्रियतमस्पर्शनस्य सविशेषसुखप्रदत्वं स्वभावतोऽनुसन्धायाह — यथा उत्तररामचरिते भागीरथीवरान्तर्हितायाः सीतादेव्याः स्पर्शे रामः 'इयमियं गृह्यसे' इति, रघुवंशे च,

'विस्पष्टमस्त्रान्धतया न दृष्टौ
ज्ञातौ सुतस्पर्शसुखोपलम्भात् ।' इति ।

सखि ! कठोरकमलगर्भपक्ष्मलोऽन्यादृश एव तेऽङ्ग निर्वापयति मां शरीरस्पर्शः । कठोरस्य पूर्वेद्युर्विकसितत्वेन परिणतस्य कमलस्य गर्भोऽभ्यन्तरमिव

---

१. 'अणुमदह्मि' क. ज. झ. ञ. पाठः. २. 'बाहूप्पीळणिरुद्धं अव' क, 'बाप्फ्पीडणेण' ज, 'बाहुप्पीडेण णिरुद्धं अव' झ. ञ. पाठः. ३. 'ए पच्चक्खं ण ळं' छ. ज पाठः. ४. 'मं सन्तप्पमाणं पिअसहीए सरीर' क. पाठः. ५. 'सं, किं च' क. ज झ. ञ. पाठः. ६. 'विणिवेसिअञ्जली' क. ख. ग. घ. ङ. छ. ज. झ. ञ. पाठः.

---

१. 'मुग्धया' ञ. पाठः. २. 'पीडनेन' क. पाठः ३. 'स्पर्शस्य' ख. ज. झ. पाठः. ४. 'विम्रब्ध' झ. पाठः. ५. 'लाभात्' ञ. पाठः.

हिअञ्जली मम वअणेण विण्णवेहि तं जणं । जधा 'ण मए मन्दभाइणीए वोसट्टन्तसअपत्तलच्छीविळासहारिणो मुहचन्दमण्डलस्स सच्छन्ददंसणेण

पक्ष्मलः सान्द्रः । सुकुमारप्रकृतित्वात् पुंस्त्वव्यायामादिभिश्च मृदुकठिनकायत्वात् कमलस्य कठोरस्योपमानत्वम् । अन्यादृशः पूर्वस्मात् प्रकारान्तरविशिष्ट एव । एवेति नात्र कश्चिद् भ्रम इति यावत् । अद्येति अन्तिमदशाप्रयुक्तत्वे किमीदृशो भवतीति मौग्ध्यात् प्रतीतिर्द्योत्यते । निर्वापयति निर्वृतसुखितां करोति । सखि ! किञ्च मौलिविनिहिताञ्जलिर्मम वचनेन विज्ञापय तं जनम् । किञ्च अन्यच्च, मम वक्तव्यमिति शेषः । 'तह करेहि' इति नायकं प्रति सन्देशस्य प्रस्तुतस्यानुसरणेन तत्समुच्चिनोति, अन्यस्य वाक्यजातस्य प्रसक्तानुप्रसक्तिकया मध्ये प्रसङ्गात् । [मौलिविनिहिताञ्जलिः] शिरसि निक्षिप्तो युतहस्तद्वयरूपोऽञ्जलिः यया, तन्माननार्थम् ।

'चूडा किरीटं केशाश्च संहता मौलयस्त्रयः ।' इति,

'तौ युतावञ्जलिः पुमान्' इति चामरः । यथेति येन प्रकारेण विज्ञाप्यते तथा, कथ्यते इति सामर्थ्यादायाति । विज्ञापनप्रकारमाह — न मया मन्दभाग्यया विकसच्छतपत्रलक्ष्मीविलासहारिणो मुखचन्द्रमण्डलस्य स्वच्छन्ददर्शनेन सम्भावितश्चिरं लोचनमहोत्सवः ।

'सहस्रपत्रं कमलं शतपत्रं कुशेशयम् ।'

इत्यमरः । विलासो विस्तारः । मुखस्य चन्द्रत्वारोपात् पद्मश्रीहरणौचित्यम् । स्वच्छन्ददर्शनेन वातायनान्तरितत्वमन्तरेण स्वेच्छया कृतेन

१. 'ए विअसन्तपुण्डरीअलच्छी' क. छ. झ. ञ, 'ए विअसन्तसअपत्त' ब. पाठः, २. 'णो सम्पुण्णचन्दमण्डलाहिरामस्स मुहस्स दे सच्छन्द' क. पाठः ३. 'लस्स दे सच्छन्द' छ. झ. ञ. पाठः.

१. 'विस्पष्ट' ज. पाठः. २. 'एवेति नात्र' क. ब, 'इव । एवेति' छ. झ. पाठः. ३. 'विदित' क. ब. झ. पाठः. ४. 'तन्मानार्थं ख. ग. घ. छ. ञ, झ पाठः. ५. 'संयता' घ. झ. पाठः. ६. 'विकस' क. ब. झ. पाठः

सम्भाविओ [1]चिरं लोअणमहूसओ । मुहामणोरहेहिं[2] एव्व विरहविअम्भमाणदुव्वारुव्वेअव्वइअरुव्वत्तमाणबन्धणं धारिअं हिअअं । वारं वारं [3]सविसेसदूसहाआससन्दाविअसहीअणा गमिआ अ सरीरसन्दावा । कहं वि अदिवाहिदा मलअमारुदचन्दादवप्पहुदीओ[4] अणत्थपरम्पराओ । सम्पदं पुण णिरासह्मि संवुत्ते'त्ति ।

(सखि ! कठोरकमलगर्भपक्ष्मलोऽन्यादृश एव तेऽद्य निर्वापयति मां शरीरस्पर्शः । (सास्रं) सखि ! किञ्च मौलिविनिहिताञ्जलिर्मम वचनेन विज्ञापय तं जनम् । यथा—'न मया मन्दभाग्यया विलसच्छतपत्रलक्ष्मीविलासहारिणो मुखचन्द्रमण्डलस्य स्वच्छन्ददर्शनेन सम्भावितश्चिरं लोचनमहोत्सवः । मुधा मनोरथैरेव विरहविजृम्भमाणदुर्वारोद्वेगव्यतिकरोद्वर्तमानबन्धनं धारितं हृदयम् । वारं वारं सविशेषदुस्सहायाससन्तापितसखीजना गमिताश्च शरीरसन्तापाः ।

---

दर्शनेन । सम्भावितः सत्कृतः । लोचनमहोत्सवश्चक्षुषोरानन्दः । तर्हि कथं जीवितमिति चेत् तत्राह— मुधामनोरथैरेव विरहविजृम्भमाणदुर्वारोद्वेगव्यतिकरोद्वर्तमानबन्धनं धारितं हृदयम् । मुधामनोरथैर्निष्फलत्वान्मिथ्याभूतैः सङ्कल्पैः । उद्वर्तमानबन्धनं शिथिलीभवत्स्वस्थानस्थिति । वारं वारं सविशेषदुस्सहायाससन्तापितसखीजना गमिताश्च शरीरसन्तापाः । कथमप्यतिवाहिता मलयमारुतचन्द्रातपप्रभृतयोऽनर्थपरम्पराः । अतिवाहिताः गमिताः । प्रभृतिशब्दात् परभृतविरुतबकुलपरिमलादयो गृह्यन्ते । अनर्थपरम्पराः उपर्युपरि अविच्छिन्नागमा विपत्तयः । दुःखावहत्वाद् वाक्यत्रयेऽपि मुधामनोरथैरिति सम्बध्यते । साम्प्रतं पुनर्निराशास्मि संवृत्तेति । साम्प्रतमिति परस्मै प्रदानोद्यमात् निराशा त्वत्प्राप्त्याशारहितेत्यतो जीवितनिरपेक्षास्मीत्यर्थः । इतिविज्ञापनप्रकारसमाप्तौ ।

---

१. 'चिरं महूसवो लोअणाणां । मुहा' क. पाठः. २. 'हिं अ अविरदविअम्भ' क. ख. च, 'हिं च्चिअविरइ' ख. ग. ङ, 'हि अविरआवेअम्भ' छ. ज. पाठः. ३. 'सेसदूसस्साइअसही' क, 'सेसदूसाविअसहा' ख. ग. घ. ज. झ. न, 'सेसदूणी-असही' ञ. पाठः. ४. 'प्पमुहा अणत्थ' क. छ. ज. झ. ञ. पाठः.

---

१. 'सत आह्' ख. पाठः. २. 'प्रश्वासा' ख. पाठः. ३. 'अहो' ख. पाठः.

कथमप्यतिवाहिता मलयमारुतचन्द्रातपप्रभृतयोऽनर्थपरम्पराः । साम्प्रतं पुनर्नि... शाऽस्मि संवृत्ता' इति ।)

तुह पिअसहि! सव्वदा सुमरिदव्व म्हि । एसा अ माहवसिरीस... त्थणिम्माणमणुहरा बउलमाला मालदीणिव्विसेसं पिअसहीए दट्ठव्वा... सव्वदा हिअएण अ धारणीआ ।

(तव प्रियसखि! सर्वदा स्मर्तव्याऽस्मि । एषा च माधवश्रीस्वह... निर्माणमनोहरा बकुलमाला मालतीनिर्विशेषं प्रियसख्या द्रष्टव्या । सर्व... हृदयेन च धारणीया ।)

(स्वकण्ठादुन्मुच्य बकुलमालां माधवस्य कण्ठे विन्यस्यन्ती सहसापसृत्य साध्वसोत्कम्पं नाटयति ।)

---

तव प्रियसखि ! सर्वदा स्मर्तव्यास्मि । तवेति कर्तरि षष्ठी... स्मर्तव्यास्मीत्यनुवादः परिसङ्ख्यया प्रकाश्यते, नतु विधिः, अनौचित्यात्... मत्तोऽन्यत्तव स्मर्तव्यं न कदाचिदस्तीत्यर्थः । नित्यमनुक्तेऽपि स्मरणीयैव । ... न विशेषतस्त्वमस्मिन्नर्थेऽभ्यर्थनीयेति भावः । 'आत्मा वा अरे द्रष्टव्यः' इत... द्रष्टव्य इतिवत् ;

'नियमः परिसङ्ख्या वा विध्यर्थेऽपि भवेद्यतः ।
अनात्मादर्शनेनैव परात्मानमुपास्महे ॥'

इत्याचार्यवचनात् । एषा च माधवश्रीस्वहस्तनिर्माणमनोहरा बकुलमा... मालतीनिर्विशेषं प्रियसख्या द्रष्टव्या । सर्वदा हृदयेन च धारणीया । द्रष्टव्... धारणीयेति च विधिः, पूर्वसिद्धत्वाभावात् ;

---

१. 'तुए वि पिअ' क. ख. ज. झ. म, 'तह वि पिअ' ख, 'तुह... घ. पाठः. २. 'सहीए सव्व' क. पाठः. ३. 'सव्वहा' झ. पाठः. ... 'एसा वि मा' ग. घ. पाठः. ५. 'सिरीहत्थ' छ. ज. पाठः. ६. 'मालदीजी... णिव्वि' क. पाठः. ७. 'सव्वधा' क. पाठः. ८. 'हिअए धा' क. झ. म. पा... ९. 'ण्ठादपनीय' क. झ. म. पाठः. १०. 'स्य हृदि विन्य' क. ख. छ. ज... म. पाठः. ११. 'साध्वसं नाट' छ. पाठः.

---

१. 'चिह्नात्। धान पुनः मत्तो' क. झ. पाठः.

माधवः— (अपवार्य) हन्त!

एकीकृतस्त्वचि निषिक्त इवावपीड्य
निर्भुग्नपीनकुचकुड्मलयानया मे ।
कर्पूरहारहरिचन्दनचन्द्रकान्त-
निष्यन्दशैवलमृणालहिमादिवर्गः ॥ १२ ॥

"विधिरत्यन्तमप्राप्ते नियमः पाक्षिके सति।
तत्र चान्यत्र च प्राप्ते परिसङ्ख्येति कीर्त्यते ॥"

इत्याचार्योक्तेः । उन्मुच्य ऊर्ध्वमुत्क्षिप्य, कण्ठे विन्यस्यन्तीति तदा स्थाननिवेशनाय सूक्ष्मेक्षिकाया अवश्यम्भावमाह । सहसापसृत्य शीघ्रं परतो गत्वेति नायकोऽयमिति ज्ञात्वा लज्जयापसृत्येत्यर्थः । साध्वसोत्कम्पं मनःक्षोभजनितं शरीरवेपथुम्, आलिङ्ग्येति प्रकृतम् ।

अचिन्तितोपनतं प्रियापरिष्वङ्गसुखमेवानुसन्दधान आह— एकीकृत इत्यादि । एकीकृतः सम्मिश्रितः । त्वचि स्पर्शनेन्द्रिये, निषिक्तः अभिवृष्टः, 'सुखैर्निषिञ्चन्तमिवामृतं त्वचि' इतिवत् । अवपीड्य यन्त्रनिष्पीडनेन स्वरसं संगृह्येत्यर्थः, अथवा गाढालिङ्गनेन वक्षः सम्पृच्य । निर्भुग्नपीनकुचकुड्मलया वक्षःपीडनेन वामनीकृते स्थवीयसी नवोद्भिन्नत्वात् कमलकोशसदृशत्वाद्वा स्तनमुकुले यया,

'गाढालिङ्गनवामनीकृतकुचप्रोद्भिन्नरोमोद्गमा'

इत्युक्तवत् । निरुपसृष्टाद् 'भुज कौटिल्ये' इत्यस्मात् निष्ठायां निर्भुग्न इति रूपम् । अनया पुरोवर्तिन्येति स्वभागधेयपरिणतिर्द्योत्यते । हारः मुक्तावली । 'ताम्रसारं तु चन्दनम्',

१. 'माध — (स्वगतम्)' ख, 'माध— हन्त ! (अपवार्य)' ज. पाठः.
२. 'निषक्त' क. पाठः. ३. 'निर्भिन्नपीन' छ. पाठः.

१. 'चान्यत्र' क. ग. च. पाठः. २. 'क्षिकया' ख. पाठः.

मालती ।— (स्वगतं) अहो लवङ्गिआए मालदीविप्पलम्भो पउत्तो ।

(अहो लवङ्गिकया मालतीविप्रलम्भः प्रयुक्तः ।)

माधवः— अयि स्वचित्तवेदनामात्रवेदिनि ! परव्यथानभिज्ञे ! इयमुपालभ्यसे ।

---

'पीतचन्दनमर्कोहं गोशीर्षं हरिचन्दनम् ।'

इति वैजयन्ती । चन्द्रकान्तनिष्यन्द इति चन्द्रकान्तस्य शिलाविशेषत्वात् तस्य चन्द्रसन्दर्शनजनिते जलद्रव एव शैत्यान्निष्यन्दग्रहणम् । अन्येषां तु स्वतः शैत्यात् तस्यापरिग्रहणमिति ज्ञातव्यम् । 'शैवलो जलशूकः स्यात्' इति वैजयन्ती । मृणालं बिसम् । हिमं तुहिनजलम् । आदिशब्दः प्रकारवचनः, इत्येवंप्रकारः वर्गः समुदायः । आदिशब्दाच्चन्द्रिकरकरकोपकर्कदलीकिसलयकमलकुवलयादिग्रहणम् । 'बहुष्वनियमः' इति वचनाद् अल्पाच्तराभ्यर्हितत्वानादरेण पूर्वनिपातः । अत्रोत्प्रेक्षातिशयोक्तिश्चालङ्कारः ॥ १२ ॥

वैलक्ष्यादाह — अहो लवङ्गिकया मालतीविप्रलम्भः प्रयुक्तः । अहो इति तस्य स्वप्नेऽप्यशङ्कितत्वं द्योत्यते ।

मालत्या वचनं स्वावस्थानिवेदनव्याजेन तद्वैलक्ष्यं परिहरति—स्वचित्तवेदनामात्रवेदिनि ! स्वहृदयदुःखमेव ज्ञातुं शीलं यस्याः । परव्यथानभिज्ञे ! परस्य प्रतियोगिनो, ममेत्यर्थात्, व्यथां सन्तापमनभिजानाने इति । इयम् ईदृशी त्वं उपालभ्यसे सोत्प्रासं परुषमुच्यसे । 'उत्प्रासः स्यादुपालम्भः' इति वैजयन्ती । स्वसन्तापमात्रवेदने सति परव्यथानभिज्ञत्वोक्तिरेव प्रयुक्तोपालम्भः ।

---

१. 'माल—, अहो' क. छ. ज. पाठः. २. 'मालदी विप्पलद्धा । माध—' ख. ज. झ. ञ. पाठः. ३. 'स्ववेदना' क. पाठः. ४. 'मात्रनिवेदिनि' क. ख. पाठः.

---

१. 'कदलीदलकिस' ज. पाठः. २. 'लयकुलकुवलय' क. ख. ग. घ. ङ. च. पाठः. ३. 'ङ्गिकाया मालतीविप्रलम्भः । अहो' क. ख. ग. घ. ङ. पाठः.

उद्दामदेहपरिदाहमहाज्वराणि
सङ्कल्पसङ्गमविनोदितवेदनानि ।
त्वत्स्नेहसंविदवलम्बितजीवितानि
किं वा मयापि न दिनान्यतिवाहितानि ॥ १३ ॥

लवङ्गिका — सहि ! उवालम्भणिज्जं उवालद्धासि ।
(सखि ! उपालम्भनीयमुपालब्धासि ।)

कलहंसः — अहो सरसरमणीअदा संविहाणस्स ।
(अहो सरसरमणीयता संविधानस्य ।)

---

तत्र हेतुमाह — उद्दामेत्यादि । उद्दामदेहपरिदाहाः विशृङ्खल-सर्वशरीरदहनक्रियाः महाज्वराः महान्तः सन्तापा येषु । सङ्कल्पसङ्गमैश्चिन्ताविरचितैः सम्भोगैः [विनोदिता] प्रशमिता वेदना दुःखानुभवा येषु । त्वत्स्नेहसंविदा त्वं मयि स्निग्धेति परिज्ञानेन अवलम्बितं बलान्निरुद्धं प्रयाणोन्मुखं जीवितं येषु,

'अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते ।'

इति न्यायात् । मयापीति । यथा त्वयेत्यर्थः । दिनानि किं वा नातिवाहितानीति प्रश्नमुखेनोक्तिः । सर्वलोकविदितोऽयमर्थः, त्वयापि कामन्दक्यादिमुखेन श्रुत एव । अतः स्वदुःखवेदनादुपालम्भमर्हस्येवेत्यर्थः । अत्र नायिकां प्रत्यसूया व्यज्यते । अप्रस्तुतप्रशंसालङ्कारः, कार्यमुखेन कारणस्य लोकोत्तरस्य स्वानुरागस्य प्रकाशनात् । पर्यायोक्तं वा, पर्यायेण गम्यस्यानुरागस्याभिधानात् ॥ १३ ॥

तद्वचनमुपोद्बलयति — सखि ! उपालम्भनीयमुपालब्धासि । उपालम्भनीयमधिक्षेपयोग्यमर्थम्, प्रतीति शेषः ।

कलहंसमुखेन संविधानचातुरीं सहृदयान् प्रत्यनुसारयति कविः — अहो सरसरमणीयता संविधानस्य । सरसतया प्रदीप्तशृङ्गाररसतया चमत्कार-

---

१. 'परितापमहा' ख. पाठः. २. 'सस्नेह' ङ. पाठः. ३. 'मया न दिवसान्यति' छ. पाठः. ४. 'लव— उवा' ख. पाठः. ५. 'णअस्स' ग. घ. पाठः.

---

१. चित्तविरचितैः' ख. पाठः. २. 'म्बितं निरुद्धं' ज. पाठः. ३. 'खेन अवलम्बितं श्रुत' क. ख. ग. घ. ङ. ज. पाठः. ४. 'वेदनामुपा' ख. ङ. छ. ज, 'वेदनमुपा' झ. पाठः.

1787

**मकरन्दः**— महाभागे! एवमेतत् ।

त्वं वत्सलेति कथमप्यवलम्बितात्मा
सत्यं जनोऽयमियतो दिवसाननैषीत् ।
आबद्धकङ्कणकरप्रणयप्रसाद-
मासाद्य नन्दतु चिराय फलन्तु कामाः ॥ १४ ॥

---

कारित्वं[1] सङ्घटनस्य विधिकर्तृकस्य[2] कविकर्तृकस्येति[3] स्फुरति ।

अथ नायकोक्तमर्थं स्वसंवादेन द्रढयंस्तदानुकूल्यं प्रार्थयते — **महाभागे!** इति स्त्रीषु त्वमेव भाग्यशालिनी, यस्यामस्य पुरुषरत्नस्येदृशस्नेह इति द्योतयति।

**त्वं वत्सले**त्यादि । **वत्सला** स्वविषये स्निग्धा । इति अनेन हेतुना। अनेन 'त्वेंत्स्नेहसंवित्' (VI. 13) इत्यादेरनुवादः । तत्रापि **कथमपि** अतिकृच्छ्रेण, **अवलम्बितात्मा** धारितदेहः । 'आत्मा जीवे धृतौ देहे' इति **वैजयन्ती** । 'कथमपी'त्यादिः 'सङ्कल्पसङ्गम' (VI. 13) इत्यादेरनुवादः । **सत्य**मव्यभिचरितमित्यस्मिन्नर्थे[5] तुलाप्रत्ययादिकमपि मया कर्तुं शक्यमित्यर्थः। **अयं जन** इति हस्तस्पर्शेन कार्श्यवैवर्ण्यादिकप्रदर्शनम् । **इयतः** इदंपरिमाणानिति दैर्घ्याभिनयः । **अनैषीत्** नीतवान् इति । न तु नयति नेष्यति चेति त्वमिव नैराश्यादयमप्यतः परं न जीविष्यतीति द्योतयन् भेदं प्रयुङ्क्ते । अत एव **आबद्धकङ्कणकरप्रणयप्रसादम्** , 'हस्तसूत्रेऽपि कङ्कणम्' इति **वैजयन्ती**, आबद्धकङ्कणयोः करयोरुभयोः सम्बन्धिनोः सौहृदरूपं परिचयरूपं वा प्रसादं च त्वदनुग्रहं आसाद्य । 'करप्रणये'त्यनेन समानसम्बन्धत्वात् सर्वजनश्लाघ्यत्वं द्योतयति,

'पाणिग्रहणसंस्कारः सवर्णासूपदिश्यते[6] ।'

इति स्मरणात् । **नन्दतु** समृध्नोतु, सोऽयं जन इत्यर्थात् । **चिराय** बहोः कालात्, **फलन्तु**, 'फलन्तु कल्पतरवः' इतिवत् फलिता भवन्तु, **कामाः** कदा नु खल्वेष कृतकृत्यो भविष्यतीति मनोरथाः । अविशेषनिर्देशात् सर्वेषा-

---

१. 'त्वं घटनस्य' ज. पाठः. २. 'विधिकर्णकस्य' ङ, 'विधिकर्णकर्तृकस्य' झ. पाठः.. ३. 'कस्येति स्फुरति' ख, 'कस्य कविकर्णकर्तृक' ङ. झ. पाठः. ४. 'स्वस्नेह' क. पाठः. ५. 'मित्येतस्मि' क. छ. पाठः. ६. 'सूपपद्यते। इति' ज. पाठः।

लवङ्गिका— महाभाअ! हिअए वि अप्पडिहदसअंगाहसाहसो अअं जणो । किं दाणिं कङ्कणाभरणे करे विआरिअदि ।

(महाभाग! हृदयेऽपि अप्रतिहतस्वयङ्ग्राहसाहसोऽयं जनः । किमिदानीं कङ्कणाभरणे करे विचार्यते ।)

मालती — (स्वगतम्) हद्धि! हद्धि! कुलइत्थीविरुद्धं एसा किं पि उवण्णस्सदि ।

(हा धिक्! हा धिक्! कुलस्त्रीविरुद्धमेषा किमप्युपन्यस्यति ।)

---

मस्माकमिति सिद्ध्यति । अत्र सुहृद्विषयो भावः प्रकाश्यते । अतिशयोक्तिरलङ्कारः । 'त्वं वत्सले'त्यादि पर्युपास्तिः, मकरन्दमुखेन नायिकानुनयात् ॥१७॥

बलादपि पाणिग्रहणे क्रियमाणे न कश्चिद्दोषः । अतः स्वयमेवाभ्युपगम्यतामिति भङ्ग्या सखी प्रतिपादयति— महाभाग! हृदयेऽपि अप्रतिहतस्वयङ्ग्राहसाहसोऽयं जनः । किमिदानीं कङ्कणाभरणे करे विचार्यते । हृदयेऽपीति तस्य आन्तरत्वात् सुरक्षणीयत्वाच्च विरोधः प्रकाश्यते । अप्रतिहतं अनिषिद्धं स्वयङ्ग्राहसाहसं एतदननुमत्यापि नायकस्य स्वेच्छया ग्रहणरूपं साहसं येन । अयं जन इति मालती । कङ्कणाभरण इति 'आबद्धकङ्कणे'ति तदुक्त्यनुवादः । कर इति बाह्यत्वेन स्वयङ्ग्राहानुमतेः सौकर्यम् । किं विचार्यते किंशब्दः क्षेपे, न खलु तत्र संशयोऽस्या इत्यर्थः ।

तदभिप्रायवेदिनी मालत्याह — स्वगतम् । हा धिक्! हा धिक्! कुलस्त्रीविरुद्धमेषा किमप्युपन्यस्यति । किमपीत्यनुचितत्वादचिन्त्यमित्यर्थः ।

---

१. 'महाणुभाअ' क. घ. छ ज. झ. ञ. पाठः. २. 'कङ्कणाभरणं करं विआरेदि महाभाए ।' क, 'करग्गहणे वि' ज, 'कङ्कणाभरणं करं वि' झ. ञ. पाठः. ३. 'माल— अम्मआविरुद्धं' छ, 'माल — हद्धि! कण्णआअणविरुद्धं' ज. ञ.'माल — हा हदम्हि। कण्णआअणविरुद्धं' झ. पाठः. ४. 'तम्) हा! हद्धि हदम्हि । कण्णआअणविरुद्धं' क. पाठः. ५. 'अम्मआविरुद्धं' ख. ग. ङ. पाठः. ६. 'एसा उव' क. पाठः.

---

१. 'तद्युक्त्यानुवादः' ख, 'तदुक्त्यानुवादः' ग. घ. पाठः. २. 'ब्द आक्षेपे' झ. पाठः. ३. 'तस्य संश' क. ख. छ, 'तस्यात्र संश' ग. घ. पाठः. ४. 'तम्। धिक्! धिक्!' क. ख. ग. घ. ङ. पाठः.

(प्रविश्य)

कामन्दकी — पुत्रि! कातरे! किमेतत्?

(मालती कम्पमाना कामन्दकीमालिङ्गति।)

कामन्दकी — (तस्याश्चिबुकमुन्नमय्य)

पुरश्चक्षूरागस्तदनु मनसोऽनन्यपरता
तनुज्यानिर्यस्य त्वयि समभवद्यत्र च तव।

सन्देहनिवारणेन कार्यसम्पादनार्थमुचिते समये कामन्दकीं प्रवेशयति—**प्रविश्येति**। साध्वसीं प्रतिपत्तिमाकारतो लक्षयित्वाह — **पुत्रि! कातरे! किमेतत्**। पुत्रीति ननु तव पितरि मातरि च मयि सन्निहितायां न साहसमेतदिति पित्राद्यननुमतिशङ्कां निरस्यति। कातरे इति इष्टेऽपि वस्तुनि मौग्ध्यात् स्त्रीस्वभावाच्च भीरुत्वं भवत्येवेत्यर्थः। तथापि एतावत् कातर्यं मा भूदित्याह — **किमेतत्** अतिशयेन दृश्यमानं कातर्यमित्यर्थः।

**कम्पमाना** साहसभयेन सोत्कम्पा शिशुरिव जननीं शरणबुद्ध्या आलिङ्गतीत्यर्थः।

**चिबुकमधरस्याधःप्रदेशम्**। **उन्नमय्य** त्रपया नमितमुखत्वात्। अनुनयप्रकारश्चायम्।

परस्परानुरागप्रकाशनेन विरहदुःखानुस्मारणेन च तां पर्यवस्थापयति—**पुरश्चक्षूराग इत्यादि**। पुरः आदौ। चक्षूरागः चक्षुषो रमणीयत्वाभिमानेन

१. 'काम—वत्स माधव! (पृष्ठ ३६७); The portion : काम—पुत्रि कातरे to माल — हा ताद! हा अम्ब! (पृष्ठ ३६७) occurs below verse 17 (पृष्ठ ३७२) after the following additional sentences: काम — वत्स माधव। माध — आज्ञापय। काम — स्वीक्रियतामियम्। माल — हद्धि हद्धि! अम्हकाविरुद्धमुवण्णस्सद्दि।' च. छ. पाठः. २. '(मालत्याश्चिबुक' ख. पाठः. ३. 'मय्य) वत्से मालति! पुर' ख. घ, 'मय्य) वत्से! पुर' ज. झ. पाठः. ४. 'तनुग्लानि' क. ज. झ. ञ. पाठः.

१. 'सादप्रति' क. पाठः. २. 'रि च मयि सन्नि' ख. पाठः ३. 'भवत्येवेत्यर्थः' ख. ङ, छ. ज. झ. पाठः. ४. 'अत्रातिशयेन' ङ. पाठः. ५. 'नयश्चायं' क. ख, ज. पाठः. ६. 'स्मरणेन' ङ. ग. छ, ज. झ. पाठः.

युवा सोऽयं प्रेयानिह सुवदने ! मुञ्च जडतां
विधातुर्वैदग्ध्यं विलसतु सकामोऽस्तु मदनः ॥ १५ ॥

लवङ्गिका — भअवदि ! कसणचउद्दसीरअणीमहामसाणसञ्चार-
णिव्वडिअविसमव्ववसाओ णिट्ठाविदचण्डपासण्डुद्दण्डभुअदण्डसाहसो

प्रीतिः । तदनु तस्यानन्तरम् । अनन्यपरता अन्यद्विषयान्तरं परं प्रधानं न भवतीत्यनन्यपरं, तस्य भावः । मनसोऽनन्यपरतेति चिन्तासङ्गेन सङ्कल्पनिद्राच्छेदविषयनिवृत्तित्रपानाशोन्मादमूर्च्छा उपलक्ष्यन्ते, मनःसङ्गमूलत्वात् । तनुज्यानिः शरीरकार्श्यम्, 'आत्मोदयः परज्यानिः' इति माघोक्तवत् । 'ज्या वयोहानौ' इति धातुः । तनुज्यानेः पृथग्वचनं प्रत्यक्षत्वाद् अवस्थान्तराणां कार्यानियतत्वात् । मरणस्याप्रसङ्गादकीर्तनम् । त्वयि त्वद्विषये । यत्र यस्मिन् विषये । युवा भोगयोग्यः, सः अभिजनादिसर्वगुणसमग्रतया मया कथितस्त्वया श्रुतश्च यः, अयमिति दिष्ट्या सन्निहितः, प्रेयान् प्रियतमः इति त्वया प्रेप्सितत्वेनान्विष्ट इत्यर्थः । इहास्मिन् यूनि विषये । सुवदने शोभनमुखीति सोत्प्रासं वचनं, तव हृदयानुकूल्यं प्रसन्नेन मुखेनैवापसर्पणे कथ्यते, किमर्थमस्मान् व्याकुलयसीत्यर्थः । जडतां किंकर्तव्यमित्यप्रतिपत्तिम्, 'अप्रतिपत्तिर्जडता' इति वचनात्, [मुञ्च] । वैदग्ध्यं युवयोराकारसौन्दर्यनिर्माणगुणसामग्र्यसङ्घटनरूपं नैपुणम्, विलसतु सज्जनसकाशे प्रकाशताम् । सकामः समानानुरागजनकः मदनः कामोऽपि सङ्गमनेन सिद्धसङ्कल्पोऽस्तु । 'सोऽयं', 'इह' इति चोक्तेः सन्निहितोपेक्षणे पश्चात्तापोऽपि भवती, बाधिष्यत इति व्यञ्जयति । अप्रस्तुतप्रशंसातिशयोक्तिश्चालङ्कारः ॥ १५ ॥

सखी साकूतमाह— भगवति! कृष्णचतुर्दशीरजनीमहाश्मशानसञ्चार-पृथग्भूतविषमव्यवसायो निष्ठापितचण्डपाषण्डोद्दण्डभुजदण्डसाहसः साहसिकः

१. 'अणीमसाण' क. ज. झ. ञ. पाठः. २. 'णिव्वत्तिद' क. झ. ञ, 'णिव्वूढ' ञ. पाठः. ३. 'णिव्वाविअ' झ. ४. 'पासण्डपअण्डदोद्दण्डसाअसो' क. ज. झ. ञ. पाठः.

१. 'त्वदुपस्थित' ज, 'स्वप्रेप्सित' झ. पाठः. २. 'मुखेनैवाल्पसर्पेण' ग. घ, 'मुखेनैव सर्पेज' ज, 'मुखेनैवापसर्पेण' झ. पाठः. ३. 'नैपुण्यं' ञ. पाठः. ४. 'नीरात्रौ महा' ग. घ. पाठः. ५. 'पृथग्भवद्विषम' क. पाठः.

साहसिओ क्खु एसो । अदो[1] क्खु मे पिअसही उक्कम्पिदा ।

(भगवति ! कृष्णचतुर्दशीरजनीमहाश्मशानसञ्चारपृथग्भूतविषमव्यवसायो निष्ठापितचण्डपाषण्डोद्दण्डभुजदण्डसाहसः साहसिकः खल्वेषः । अतः खलु मे प्रियसखी उत्कम्पिता ।)

---

खल्वेषः । अतः खलु मे प्रियसखी उत्कम्पिता । कृष्णपक्षचतुर्दशीरात्रौ, महाश्मशाने इति भूतवेतालसृगालादिकरालत्वं द्योतयति । महामांसविक्रयार्थेन सञ्चारेण[1] पृथग्भूतम् अन्येभ्यो व्यतिरेकेण स्पष्टः ।

'णिव्वडिअसुहालोअं णिव्वत्तिअकज्जणिव्वडत्तच्छाअं ।'

इत्यादिसेतुप्रयोगात्[2] । विषमः स्वजात्यवस्थाज्ञानसौकुमार्यादेर्विरुद्धो व्यवसाय आरम्भदार्ढ्यं यस्य । अनेनानुरागस्य गरीयस्त्वं सूचितम् ।

"सदोषेषु पुनः कार्येष्वालोच्य गुणवत्तरम् ।
अध्यवस्यति यः कर्तुं व्यवसायी स कथ्यते[3] ॥"

इति,

"आलोचनं तु कार्येषु[4] मन्वानो दीर्घसूत्रताम् ।
अध्यवस्यति यः शीघ्रमसौ साहसिकः स्मृतः ॥"

इति च दिवाकरः[5] । निष्ठापितः समापितः, चण्डः क्रूर इति सुकुमारैतत्कण्ठकाण्डघटितमण्डलाग्रत्वं व्यञ्जयति, पाषण्डो येन, अत एव उद्दण्डं लोकोत्तरं भुजदण्डयोः साहसं शौर्यं यस्य इति प्राणपरित्राणरूपस्योपकारस्य गरीयस्त्वं द्योतयति । उत्कम्पिता एतद्दर्शनेन[6] भीता, वेपितेत्यर्थः, उत्कम्पनस्य[7] हर्षभयसाधारणत्वात् । व्याजोक्तिरलङ्कारः, अन्यथोद्भिन्नस्य कम्पस्य भयव्याजेन गूहनात । मीलितं वा ।

---

१. 'अदो मे पिअ' क, 'अदो पिअ' ज. झ. ञ. पाठः.

---

१. 'सञ्चरणेन' क. ङ. झ, 'सञ्चारणेन' ख. ग. घ. छ. पाठः. २. 'सेतूक्तवद् ।' ज. पाठः. ३. 'उच्यते', ४. 'कार्यार्थं' ज. पाठः. ५. 'इति दिवा' क. ख. छ. ज. पाठः. ६. 'दर्शनभीता' ख, 'दर्शने भीता' ग. घ. ज. पाठः ७. 'उत्कम्पस्य' क. ख. पाठः.

**कामन्दकी** — (स्वगतम्) साधु लवङ्गिके! साधु । स्थाने खल्वनुरागोपकारयोर्गरीयसोरुपन्यासः ।

**मालती** —(स्वगतम्) हा ताद! हा अम्ब! (हा तात! हा अम्ब!)

**कामन्दकी** — वत्स माधव!

**माधवः** — आज्ञापय ।

**कामन्दकी** — इयमशेषसामन्तमस्तकोत्तंसपरागरञ्जितचरणाङ्गुलेरमात्यभूरिवसोरेकापत्यरत्नं मालती भगवता सदृशसंयोगरसिकेन वेधसा, मन्मथेन, मया च तुभ्यं दीयते ।

---

तदुक्तिमवसरप्राप्तत्वाच्चमत्करोति — **स्वगतम्** । **साधु** प्रशस्तम्, इदं वस्त्विति शेषः । वीप्सयादरं द्योतयति । **स्थाने** योग्येऽवसरे । **अनुरागोपकारयोरिति** तदुक्तिक्रमादुक्तिः । **गरीयसोरतिमहतोः** । **उपन्यासः** स्वविवक्षितद्वारतयोक्तिः ।

अथ तदुक्त्या पर्यवस्थापितहृदयत्वं नायिकाया आह — **हा तात! हा अम्बेति** । हेति विषादे । अस्मिन्नवसरे युवाभ्यां न सन्निधिः कृत इत्यर्थः । अथवा युष्मदतिलङ्घनेन मयेदमध्यवसितमिति ।

आकारतस्तस्याः पर्यवस्थितत्वमुपलक्ष्याह — **वत्स माधवेति** । मत्सन्निधानाद् देवरातादिसन्निधिस्तव नापेक्ष्य इति द्योतयति ।

**आज्ञापयेति** तद्वचनश्रवणे सादरत्वमाह ।

अथानधिकारिणा कृतस्य पूर्वदानस्य अकृतत्वादिदानीं दानाधिकृतैरेवास्माभिः श्रुतिस्मृत्युदितेन मार्गेण दीयत इत्याह — **इयमित्यादि** । **सामन्ताः** समन्ताद् भवा राजानः, पद्मावतीश्वरस्य चक्रवर्तित्वादस्य च तदात्मभूतत्वात् ।

---

१. 'मक—(स्वगतम्) साधु' क. ज. झ. ञ. पाठः २. 'तम्) लवङ्गिके! स्थाने' ञ. पाठः. ३ 'साधु । अवसरे खलु' क. झ. ञ. पाठः ४. 'माल — हा ताद' क. ख. ज. झ. पाठः. ५. 'संसितपराग' च. पाठः. ६. 'रेकमपत्यरत्नं' क. झ. ञ. पाठः. ७. 'प्रदीयते' क. पाठः ८. 'ते । (इति रोदिति ।) मक —' क. झ. ञ, 'ते । (इति बाष्पं विसृजति ।) मक —' ज. पाठः.

मकरन्दः — फलितं[1] हि नस्तर्हि भगवतीपादप्रसादेन ।

ब्राह्मण्याच्च, नमतां तेषां मस्तके शिरसि ये उत्तंसाः शेखरमालिकाः तत्परागैः तद्रजोभिः । "वतंसोत्तंसशेखराः" इति वैजयन्ती । 'परागः सुमनोरजः' इत्यमरः । रञ्जिता रूषिताः पादाङ्गुलयो यस्य । एकापत्यरत्नं एकम् अपत्यान्तराभावादिति प्रेमसर्वस्वभूमित्वं द्योतयति । 'अपत्यं तोकं तयोः समे' इत्यमरः । अपत्यश्रेष्ठमिति सर्वगुणसमुदितत्वात् स्वगुणतोऽप्युपलालनीयत्वं व्यञ्जयति । सदृशसंयोगरसिकेन तुल्यगुणयोः सङ्घटने तात्पर्यशालिना,[1] वेधसा दैवेनेति प्रत्यूहबहुलत्वेऽपि सङ्कल्पितासिद्धिर्दैवानुकूल्यमन्तरेण कुतो भवतीति प्रकाशयति । मन्मथेनेति परार्घ्यमङ्गलभूतस्य दारकर्मणीतरेतरानुरागस्य भावाद् भाविनीमृद्धिं[2] सूचयति । ममेति भूरिवसुत्वेन देवरातत्वेन च स्थितायाः

'यत्र दाता ग्रहीता च स्वयं कुशिकनन्दनः ।'

इतिवद् दानग्रहणयोरनन्यापेक्षत्वं द्योतयति । चकारेण पित्रा चेत्यनुक्तसमुच्चयात् तद्बुद्ध्यनुसारेणैव स्वया[3] क्रियमाणत्वमनृतपरिहाराय व्यञ्जयति । तुभ्यं न तु तवेति सम्प्रदानत्वं[4] समग्रगुणतया समानसम्बन्धत्वेन च प्रकटयति । दीयते उदकपूर्वं स्वत्वनिवृत्त्या त्वदधीना क्रियत इत्यर्थः, अग्निसाक्षिकस्य विवाहविधेरुपरि वक्ष्यमाणत्वात् । 'इयमशेषसामन्ते'त्यादिः प्रसङ्गः, गुरुकीर्तनात् ।

हर्षलज्जाभ्यां तूष्णीं तिष्ठन् नायकः प्रतिवचनं सुहृन्मुखेनाह—फलितं संप्रयोजनेन[5] जातम्, भावे निष्ठा । न इति कुलद्वयानुबन्धिनां सङ्ग्रहः । तर्हि तस्मात्, भगवत्याः पादशुश्रूषणात्, तयोरिदानीं प्रसादेनानुग्रहेण । 'फलितं हि नस्तर्ही'त्यादिः शक्तिः, विरोधशमनात् ।

१. 'तं नस्तर्हि' छ. झ. ञ, 'तं हि तर्हि' च. ज. पाठः.

१. 'सङ्घटने तात्पर्य' क छ. पाठः. २. 'नीं समृद्धिं' ज. पाठः. ३. 'स्वयं' क. झ. पाठः ४. 'त्वसङ्ग्रहणतया' ख. पाठः ५. 'सम्प्रयोजनेन' क. छ, 'सम्प्राप्तयोजनेन' ग. घ. पाठः.

**माधवः** — तत्किमिति[1] बाष्पायितं[2]माननं भगवत्याः ?

**कामन्दकी** — (चीवराञ्चलेन[3] नेत्रे परिमृज्य[4]) वत्स ! किमपि[5] कल्याणिनं[6] वक्तुकामास्मि ।

**माधवः** — नन्वाज्ञापयत्वेव[7] भगवती ।

**कामन्दकी**[8] —

परिणतिरमणीयाः प्रीतयस्त्वद्विधाना-
महमपि तव मान्या हेतुभिस्तैश्च तैश्च ।

---

हर्षकाले त्वसम्भावितं[1] दुःखमुपलक्ष्याह — तदिति । यस्मात् चिरप्रयुक्तस्य भगवत्याः प्रयत्नस्य फलितत्वेनेदानीं हर्षस्यावसरः, तस्मादित्यर्थः । किमिति कस्माद्धेतोः । बाष्पायितं अश्रुजलोद्गमनविशिष्टं । 'बाष्पोष्मभ्यामुद्वमने' (३-१-१६) इति क्यषि निष्ठा ।

चीवराञ्चलेन काषायवस्त्रान्तेन । 'वस्त्रान्तस्त्वञ्चलः' इति वैजयन्ती । बाष्पहेतुमाह — वत्स ! किमपीति सूचनमादरजननार्थः[3] । कल्याणिनं महाभाग्याद् भविष्यत्समृद्धिशालिनमिति स्वत एव तु बुद्धेरविकृतत्वं[4] स्वस्याः स्नेहवशाद्वचनोद्यमं च सूचयति । वक्तुकामास्मि न तु वदामीति तदभ्युपगमनानन्तरं[5] विवक्षां व्यनक्ति ।

तदाशङ्कां निवर्तयति — ननुरवधारणे, आज्ञापयत्वेव[6] भगवती । दुष्करमपि तत्क्रियत इति भावः ।

निरस्ताशङ्का विवक्षितमाह — परिणतीत्यादि । परिणतिरमणीयाः कालपाके, चिरपरिचय इत्यर्थः, मनोहराः, प्रीतयः स्नेहाः, बहुवचनेन बहुमुखत्वं व्यज्यते । त्वद्विधानाम्

---

१. 'किमित्यतिबाष्पायित' ज. पाठः. २. 'तं भगवत्या ।' क. झ ञ. पाठः. ३. 'चीराञ्चलेन' छ. ज. पाठः. ४. 'प्रमृज्य' क. च. झ. ञ. पाठः. ५. 'ज्य) विज्ञापयामि कल्याणिनम् ।' क. झ. ञ, 'ज्य) किमपि' ख. पाठः. ६. 'कल्याणं' ञ. पाठः. ७. 'माध — नन्वाज्ञापय ।' क. झ. ञ, 'माध — आज्ञापय' च. छ. ज. पाठः. ८. 'काम — वत्स माधव ! परिणति' ग. घ. ङ. च. पाठः.

---

१. 'तदसम्भावितं' क. पाठः. २. 'अस्मा' क. ख. ग. घ. छ. ज. पाठः. ३. 'सुतरामादर' क. पाठः, ४. 'एव बुद्धे' ज. पाठः ५. 'गमनानन्तरं' क. ग. घ. ङ. छ. पाठः. ६. 'त्वेतद् भग' ज. पाठः. ७. 'रतः' क. ज. झ. पाठः

तदिह सुवदनायां तात ! मत्तः परस्तात्[1]
परिचयकरुणायाः[2][3] सर्वथा मा विरंसीः[4] ॥ १६ ॥

'चिरपरिचयद्वेषी लोको नवं नवमिच्छति'

इत्युक्तालोकादुत्तीर्णानां त्वत्सदृशानां महापुरुषाणाम्,

'न संवासाज्जीर्यते मैत्री तेषाम्........'

इति महाभारतोक्तेः,

"इक्षोरग्रात् क्रमशः पर्वणि पर्वणि यथा रसविशेषः ।
तद्वत्सज्जनमैत्री विपरीतानां तु विपरीता ॥"

इति वचनात् । त्वद्विधानामिति भङ्गुरसङ्गत्वे[1] हेतुरुक्तः । हेत्वन्तरमपि तेन समुच्चिनोति — अहमपीति । तव मान्या पूज्या, तैस्तैरित्यगण्यत्वम्, हेतुभिः पितृधर्मतः स्वसुत्वं पोषणं रक्षणं विद्योपदेशः प्रव्रज्या स्वामिरूपितेषु स्नेहतः प्रवृत्तिरित्यादिभिरपरिमितैः कारणैरित्यर्थः । तत् तस्मादिति मयि जीवन्त्यां प्रीतिभङ्गस्य यस्मात् स्वप्नेऽप्यनाशङ्क्यत्वमित्यर्थः,[2] इह अस्यां, सुवदनायामित्युपलक्षुणं सर्वाङ्गलक्षणसम्पन्नायां[3] अस्याः कदाचिदप्यनाशङ्क्यव्यसनत्वं तथापि स्नेहतो वक्तव्यमिति वदामीति प्रतीयते । 'पुत्रस्तु वत्स तात' इति वचनात् तातेत्यामन्त्रणम् । मत्तः मत्, 'पञ्चम्यास्तसिल्' (५-३-७), परस्तात् परस्मिन्नुपरितने काले, कालार्थेऽस्तातिः, मच्छरीरविमोक्षादूर्ध्वमित्यर्थः, परिचयकरुणायाः प्रेम तावद्देवतो भवतु वा मा वा, चिरं परिचयजनितादस्मदाश्रितायाः[5] दुःखं मा भूदिति दाक्षिण्यपर्यायात् कारुण्यात्, सर्वथा सर्वप्रकारेण

---

१. 'परस्मात्' ख. ज, 'पुरस्तात्' ङ. पाठः. २. 'परिचितकरु' छ. पाठः. ३. 'करुणायां' ङ. च. झ. ञ. पाठः. ४. 'रंसीः ॥ (इति पादयोः पतितुमिच्छति ।) माध—' क. ज, 'रंसीः ॥ (इति दातुमिच्छति ।) माध—' छ, 'रंसीः ॥ (इति नन्तुमिच्छति ।) माध—' झ. ञ. पाठः.

---

१. 'असङ्गसङ्गत्वे', २. 'प्यशक्यत्वं' ३. 'सर्वलक्षण' ४. 'यां अस्यां' ञ. पाठः. ५. 'दस्मानाश्रिताया' क. ख. ग. घ. छ. ज. पाठः.

माधवः— अहो ! वात्सल्यादतिक्रामति प्रसङ्गः !

मकरन्दः—भगवति !

श्लाघ्यान्वयेति नयनोत्सवकारिणीति

निर्व्यूढसौहृदभरेति गुणोज्ज्वलेति ।

---

उभयोराभिजात्यादिकमनुरागमस्यां चावेक्ष्य दृढरूपेण धर्मपत्नीत्वमाश्रितात्वं नीत्वं चादृढरूपेणेत्यर्थः । 'साध्वी भार्या सुतः शिशुः' इति मनुवचनात्,

'आनृशंस्यं परो धर्मस्त्वत्त एव मया श्रुतः ।'

इति रामायणोक्तेः,

'स्त्रियः श्रियो गृहस्योक्तास्तस्माद्रक्ष्या विशेषतः ।'

इति महाभारतोक्तेः । मा विरंसीः निवृत्तो मा भूः । 'जुगुप्साविरामप्रमादार्थानामुपसंख्यानं' (वा० २-३-२८) इति पञ्चमी । 'व्याङ्परिभ्यो रमः' (१-३-८३) इति परस्मैपदम् । अत्राप्रस्तुतप्रशंसालङ्कारः, कार्यमुखेन कारणस्य वात्सल्यस्य प्रकाशनात् । एवमादिषु स्थलेषु, 'सौहार्दहृद्यानि विचेष्टितानि' इत्युक्तस्यानुसन्धानं कार्यम् ॥ १६ ॥

वात्सल्यं चमत्करोति—वात्सल्यात् स्नेहात्, अतिक्रामति अतिभूमिं गच्छति, प्रसङ्गः वचनप्रस्तावः । एतद्विषये मय्येवं वक्तव्यत्वाभावादिति भावः ।

उपपत्त्या तदाज्ञापरिपालनस्याव्यभिचारमाह — श्लाघ्यान्वयेत्यादि । [श्लाघ्यान्वया] पूज्यवंशभवा, नयनोत्सवकारिणी निरतिशयलावण्ययोगात्, निर्व्यूढसौहृदभरा वातायनदर्शने प्रस्तुतो यावत्प्राणपरित्यागाध्यवसायनिश्चलत्वेन फलपर्यन्ततां नीतः सौहृदभरः स्नेहातिशयो यया, गुणोज्ज्वला गुणैः सहजैः

---

१. 'माध —(निवारयन्) अहो' क, 'माध—(वारयन्) अहो' झ. ब. पाठः. २. 'वात्सल्यातिक्रमप्रसङ्गः ।' झ. पाठः. ३. 'मक— श्लाघ्या' ख. पाठः. ४. 'सौहृदमयीति' च, 'सौहृदरसेति' छ. ब. पाठः.

---

१. 'रपि जाता' ब. पाठः. २. 'स्यानुबन्धनं' क. ग. छ. पाठः. ३. 'ममैवं' छ. झ. पाठः. ४. 'त्यागव्यवसाय' क. पाठः.

एकैकमेव हि वशीकरणं गरीयो
युष्माकमेवमियमित्यथ किं ब्रवीमि ? ॥ १७ ॥

कामन्दकी — वत्स माधव ![1]

माधवः — आज्ञापय[2][3] ।

कामन्दकी[4] — वत्से मालति !

मालती — आणवेदु[5] भअवदी । (आज्ञापयतु भगवती ।)

---

शीलमाधुर्यादिभिः सांस्कारिकैः[1] विनयादिभिश्च प्रदीप्ता । इतिः सर्वत्र प्रकारवाची । एवंप्रकारं वस्त्विति शेषः । एकैकं प्रत्येकमेव न द्वितीयापेक्षेति । 'गर्भेश्वरत्वमभिनवयौवनत्वमप्रतिरूपत्वममानुषशक्तित्वं चेति महती खल्वियमनर्थपरम्परा । सर्वाविनयानामेकैकमप्येतेषामायतनम् । किमुत समवाय[2]' इति कादम्बर्युक्तवत् । वशीकरणं एतदधीनताकरमौषधं मन्त्रपदं वा । करणसाधनोऽत्र ल्युट्प्रत्ययो न भावसाधनः । गरीयः अपुनर्निवृत्तिकारित्वान्महत्तरम् । एकैकमेवेत्युक्तेः किमुत समवाय इति द्योत्यते । युष्माकमिति गुरुषु बहुवचनम् । एवमिति 'भत्तः परस्ताद्' इति वचनहेतुभूतवात्सल्यविषयत्वाभिनयः । इतिः प्रकारे । अथशब्दो व्यावृत्तौ, अस्मिन् प्रकारे, किं पुनर्ब्रवीमि अवाङ्मनसगोचरोऽस्या भाग्यसम्पदित्यर्थः । अत्र काव्यलिङ्गमतिशयोक्तिश्चालङ्कारः ॥ १७ ॥

अथ सर्वोपकारक्षमस्य

'विशेषेण गृहस्थस्य क्षेपाश्रय इवाश्रमाः ।'

इत्यादिस्मृतिभिराश्रमत्रयात् प्रशस्तस्य गृहस्थाश्रमस्य दम्पत्योः परस्परमानुकूल्ये एव समग्रधर्मसाधकत्वात् सहधर्मचरणोपदेशाय द्वयोराभिमुख्यं करोति—वत्स माधवेति ।

आज्ञापयेत्यादरः ।

वत्से मालतीति ।

आज्ञापयतु भगवतीत्यवधानं द्योतयति ।

---

१. 'व ! वत्से मालति! ।' छ. पाठः. २. ' माध—आज्ञापयतु भगवती' च. पाठः. ३. 'य । माल —' छ. पाठः. ४. 'काम—स्वीक्रियतामियम् । माध—स्वीकरोमि । काम—वत्स माधव ! वत्से मालति ! माध—आज्ञापय । माल—' ज. पाठः. ५. 'कव – आणवेदु' क. घ. च. पाठः.

---

१. 'संस्कारैः', २. 'समुदाय' ज. पाठः.

कामन्दकी —

प्रेयो मित्रं बन्धुता वा समग्रा
सर्वे कामाः सम्पदो जीवितं वा।
स्त्रीणां भर्ता धर्मदाराश्च पुंसा-
मित्यन्योन्यं वत्सयोर्ज्ञातमस्तु ॥ १८ ॥

उपदिशति—प्रेयः प्रियतमं, मित्रं वयस्यः, बन्धुतां मातापितृसम्बन्धानां भ्रातृमातुलादीनां समूहः, 'ग्रामजनबन्धुसहायेभ्यस्तल्'(४-२-४३) इति समूहार्थे तल्प्रत्ययविधानात् । समग्रा समस्ता । वाशब्दः समुच्चये । 'वा विकल्पोपमानयोः । समुच्चये च' इति वैजयन्ती । कामाः काम्यन्त इति शब्दादिविषयाः, सम्पदः तत्साधनमूला धनधान्यादिसमृद्धयः, जीवितं सर्वस्य मूलभूतं प्राणधारणम्,

"शरीरमाद्यं खलु धर्मसाधनम् ।"

इत्युक्तेः । वाशब्दोऽत्रापि समुच्चये । बाह्यान्तरभेदेन राशिद्वयत्वादेको राशिरेकेन अपरोऽन्येन वाशब्दाभ्यां समुच्चीयते । भर्ता धारणपोषणाधिकृतत्वेन धात्रा कल्पितः,

"वृद्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः ।
अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत् ॥"

इति वचनात् । धर्मदाराः धर्मत ऊढा भार्या, सवर्णा पित्रा दत्ता अग्निसाक्षिकं श्रौतेन स्मार्तेन च विधिना परिणीतेत्यर्थः, तस्या धर्मसहायत्वाद् अन्यास कामार्थत्वात् ।

"भर्तुः शरीरशुश्रूषां धर्मकार्यं च नैत्यकम् ।
स्वा स्वैव कुर्यात् सर्वेषां नास्वजातिः कथंचन ॥"

इति मनुवचनात् । पुंसि भूम्नि च दारशब्दो भार्यापर्यायो वर्तते, 'एते वयस्,

१. 'कोवधिर्जीवितं' क. ज. झ. ञ. पाठः. २. 'च' क. पाठः.

१. 'ता पितृ' ख. पाठः. २. 'बाह्याभ्यन्तर' ग. घ. ज. ञ. पाठः.
३. 'कुर्यात्' क. ग. घ. छ. पाठः.

अमी दाराः' इत्यादिप्रयोगात् । इति इत्थंभूतं वस्तु । इतिशब्दो भिन्नक्रमः। इति ज्ञातमस्त्विति सम्बन्धः । अन्योन्यं परस्परम् । वत्सयोरिति विदितवेदितव्यत्वेऽपि बालत्वात् ज्ञानदार्ढ्यार्थं पुनः पुनः प्रबोद्धव्यत्वं द्योतयति । ज्ञातमस्त्विति राजाज्ञावत् श्रुतिस्मृतिवचनं गृह्यताम् । न पुनरत्र संशयः कार्य इति विधिः । स्त्रीणां पुंसां च भर्ता धर्मदाराश्चान्योन्यं मित्रादिकः कामादिकश्च वर्ग इति ज्ञातमस्त्विति सम्बन्धः । प्रेयो मित्रं परमविस्रम्भभूमित्वात्, बन्धुता नित्यं प्रियहितान्वेषणात् सुखदुःखयोरभेदेनानुभवाच्च, कामाः सुखहेतुत्वात्, सम्पदः भोग्यसामग्रीसम्पादनात्, जीवितं परस्परविरहे तस्यापि दुःखावहत्वेन जिहासितत्वाच्चेति ग्राह्यम् ।

'मितं ददाति हि पिता मितं भ्राता मितं सुतः ।
अमितस्य तु दातारं भर्तारं का न पूजयेत् ॥' इति,

'नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषणम् ।
पतिं[1] शुश्रूषते यत्तु तेन स्वर्गे महीयते ॥'

इत्यादिभिरुभयलोकोपकारात् स्त्रीणां भर्ता मित्रादिः,

"धर्मार्थकामकार्येषु भार्या पुंसः सहायिनी ।" इति,

"विदेशगमने चास्य सैव विश्वासकारिणी ।" इति,

"अपत्यं धर्मकार्याणि शुश्रूषा रतिरुत्तमा ।
दाराधीनस्तथा स्वर्गः पितॄणामात्मनश्च हि ॥"

इत्यादिभिः स्मृतिवचनैः पुंसां धर्मदारा मित्रादिः कथ्यते इति ज्ञेयम् । 'ज्ञातमास्त्वि'त्यनेनोपनिषदात्मज्ञानव्यतिरिक्तानां ज्ञानानां प्रवृत्तिनिवृत्त्युपयोगित्वादेतत् ज्ञात्वा परस्पराव्यभिचारेण सहधर्मचर्या कार्येत्युपदेशो द्योत्यते,

"अन्योन्यस्याव्यभीचारो भवेदामरणान्तिकः ।
एष धर्मः समासेन ज्ञेयः स्त्रीपुंसयोर्परः ॥"

इति मनुवचनात् । अनया च वाचोयुक्त्या प्राजापत्योऽयं विवाहो न तु गान्धर्व इति सूचितम्,

१. 'पतिशुश्रूषणं यत्तु' क. पाठः. २. 'भोग्येषु' भ. पाठः ३. 'नां प्रवृत्ति' क. ग. घ. ज. पाठः. ४. 'परः' क. पाठः.

मकरन्दः — अथ किम् ।[1]

लवङ्गिका — जहा तुम्हे आणवेध ।[2] (यथा यूयमाज्ञापयथ ।)

कामन्दकी — वत्स ! मकरन्द ![3] अनेनैव[4] मालतीनेपथ्येन[5] अपवारय स्वपरिणयायात्मानम्[6] ।[7]

(इति पटलकमर्पयति[8] ।)

---

"सहोभौ चरतं धर्ममिति वाचानुभाष्य तु ।
कन्याप्रदानमभ्यर्च्य प्राजापत्यो विधिः स्मृतः ॥"

इति मनुवचनात्,

"इच्छयान्योन्यसंयोगः कन्यायाश्च वरस्य च ।
गान्धर्वः स विधिर्ज्ञेयो मैथुन्यं कामसम्भवम् ॥"

इत्युक्तेः, स्वेच्छासंयोगस्य चात्राकथनात्, परस्परानुरागस्य च सर्वविवाहोपकारकत्वात्,[1] तावता च गान्धर्वविवाहत्वाभावात् । अत्रोल्लेखोऽलङ्कारः, एकस्य निमित्तवशादनेकधा ग्रहणात् । अन्योन्यं च मित्रमित्योर्दिज्ञानस्य परस्परसाधारण्येन कथनात् ॥ १८ ॥

अथ नायकयोर्लज्जामुद्रितत्वात् सखा सखी च तद्वचनमनुवदतः— अथाकिमिति ।

यथा यूयमाज्ञापयथ तथैतच्छासनानतिक्रमादित्यर्थः ।

अथ स्वाभिलषितस्य मालतीप्रदानस्य निर्वृत्तत्वात् प्रकृतस्य नन्दनविवाहस्य छलेन निर्वाहाय मदयन्तिकासंग्रहणाय च अनाशङ्कनीयमग्राम्यं

---

१. 'मकरन्दः—भगवति ! अथ किम् ।' घ. च. म. पाठः. २. 'लवङ्गिका—भगवदी जधाज्ञापयति' क. पाठः. ३. 'न्द ! त्वमनेनैव' क. ञ. ब. पाठः. ४. 'नैव वैवाहिकेन माल' क. च. ज. झ. ञ, 'न वैवाहिकेन माल' ञ. पाठः. ५. 'न प्रसाधितः परि' क. झ. ञ, 'न अवतारितः प्रवर्तयस्व परि' ख, 'न अपवारितः प्रवर्तस्व परि' च. ञ, 'न परिवारितः प्रवर्तस्व परि' ङ. पाठः. ६. 'परिणयात्मानं' क, 'परिणाययात्मानं' च. झ. ज, 'परिणयनाय ।' छ. पाठः. ७. 'णयायात्मनः' ज. पाठः. ८. 'पट्टालं' क, 'पट्टालकं' झ. ज. पाठः.

---

१. 'कारत्वाद्' ख. ग. घ. छ. झ. पाठः. २. 'स्यादितत्त्वज्ञानस्य' छ. पाठः. ३. 'च्छासनानतिक्रमा' क. क. ज. पाठः.

  

मकरन्दः — यदाज्ञापयति भगवती । यावदितश्चित्रभवनिकाय-न्तर्धाय नैपथ्यं धारयामि ।

(पटलकं गृहीत्वा निष्क्रान्तः ।)

माधवः — भगवति ! सुलभमपि बह्वनर्थसङ्कटं ह्येतद् वयस्यस्य ।

कामन्दकी — कस्त्वमस्यां चिन्तायाम् ।

---

चैकमुपायमुपदिशति — [वत्स मकरन्देति ।] अनेनेति नरेन्द्रानुप्रेषितनिर्देशः, मालतीनैपथ्येन मालत्यर्थेनालङ्कारजातेन, अपवारय छादय । मालतीनैपथ्येनेत्युक्तेः सामर्थ्यान्मालतीभावेनेति सिद्ध्यति । स्वपरिणयाय आत्मनो मदयन्तिकाविवाहाय । आत्मानं स्वं । अपवारितं वर्तयस्वेति पाठे छादितं मस्थापयेत्यर्थः ।

पटलकं आभरणपेटकम् ।

सौहार्दादपायशङ्कयाह — सुलभं उपायबलात् सुप्रापमपि, बह्वनर्थसङ्कटं बहुभिर्व्यसनैर्विषमं, दुरन्तमिति यावत्, राज्ञोऽमात्ययोश्च क्षोभहेतुत्वात् । ह्विरवधारणे । 'हि हेतावधारणे' इति वैजयन्ती । एतद्धस्तु नन्दनातिसन्धानं मदयन्तिकाहरणं च । वयस्यस्येति स्नेहकातर्यं द्योत्यते । सुलभमपी'त्यादि माप्त्याशा ।

उपायापायशङ्काभ्यां सुचिन्तितक्षेमतया तमवस्थापयति — [कस्त्वमिति ।] अस्यामीदृश्यां, चिन्तायां कार्यविचारे, त्वं कः । किंशब्दः क्षेपे, न कोऽपि । तव कः सम्बन्धः कार्यचिन्तायाम् । अस्मास्वधिकारो, युष्माकं तु फलभोक्तृत्वमेवेत्यर्थः ।

---

१. 'यथाज्ञा' ग. ङ. झ. ञ. पाठः. २. 'बसि' छ. ञ. पाठः. ३. 'वती (पट' ग. पाठः. ४. '(तथा करोति ।)' क. छ. ज. झ. ञ. पाठः. ५. 'सुलभमद्य' क. झ. ञ. पाठः. ६. 'नर्थमतिसङ्कट' क. झ. ञ, 'नर्थमिति सङ्कट' ब, 'नर्थकन्तिसङ्कट' ज. पाठः. ७. 'ह्यमिदं वयस्यस्य' क. झ. ञ, 'ष्टमेतद्' छ. पाठः. ८. 'काम — आः; कस्त्व' क. झ. ञ. पाठः

---

१. 'के साम' क. ग. ङ. छ, 'के न साम' झ. पाठः. २. 'स्वपरिण' क. ग. घ. ङ. छ. पाठः. ३. 'रितमुपवर्त' क. पाठः. ४. 'पायमाशङ्कयाह' क. छ. ज. झ. पाठः. ५. 'दुस्तरामिति' क. ङ. ज. झ. पाठः.

**माधवः** — एवं, भगवत्येव जानाति।

(प्रविश्य)

**मकरन्दः** — (विहस्य) वयस्य! मालत्यस्मि।

(सर्वे सकौतुकं सस्मितं च पश्यन्ति।)

**माधवः** — (परिष्वज्य) भगवति! कृतपुण्य एव नन्दनः, यत् प्रियवयस्यमीदृशं मनसा मुहूर्तमपि कामयिष्यते।

---

तदभिप्रायमनुसरति — [एवमिति।] भगवत्येवेति इह पूर्वं यथा, तथातः परमपि भगवत्येवास्मिन्नर्थे प्रमाणम्। अस्मच्चिन्ता तु चापलमेवेति भावः। अत्र 'कस्त्व'मित्यादिना दृष्टस्य राजरोषरोपितवलक्ष्यलक्षणेन 'मत्सरवैलक्ष्य-मषीमलिनमुखौ भूरिवसुनन्दना'विति वक्ष्यमाणेन नष्टस्य पुनः नरेन्द्रप्रसादादिना दृष्टस्य बीजस्यान्वेषणरूपो गर्भसन्धिरारभ्यत इत्यनुसन्धेयम्।

मालतीसन्निधानेवोक्तेर्विहस्येत्युक्तिः। मालत्यस्मीति यदि कश्चिद् भेत्तुं प्रगल्भते तर्हि जानीम इत्यर्थः।

सकौतुकं वेषस्य सुश्लिष्टत्वेन रमणीयत्वात्, सस्मितं पुंसः स्त्रीत्वा-वलम्बने हास्यरसव्यञ्जकत्वात्।

परिष्वज्येति स्वकार्यार्थं तस्याः कार्यकरणेऽपि प्रवृत्तिं सुश्लिष्टवेषतां चानुसन्धाय हर्षादालिङ्गयेत्यर्थः। ईदृशं मालतीवेषभूषितं, मुहूर्तमपीति परतो वञ्चनस्य प्रकटीभावात्, कामयिष्यते कामुकत्वेनाभिमंस्यते। 'यदि'ति मालतीवेषभूषितस्य 'धन्यो नन्दन' इति स्तुतेरिदमभूताहरणं, छद्मप्रयोगात्।

---

१. '(विहसन्)' क. छ. झ. ञ, '(विहसन्) (सर्वे' ज. पाठः. २. '(सर्वे सकौतुकं पश्य' क. झ. ञ, '(सर्वे सविस्मयं सकौतुकं पश्य' छ. ज. पाठः. ३. 'तुकस्मितं पश्य' ख. च. पाठः. ४. 'माध — (मकरन्दं परिष्वज्य सोपहासम्)' क. झ. ञ, '(गाढं मकरन्दं परिष्वज्य)' ज. पाठः. ५. 'यः प्रियामीदृशीं मन' क, 'यः प्रियवयस्य' घ. ङ, 'यः प्रियवयस्यमीदृशमिमं मन' छ. 'यतः प्रियवयस्यमीदृशं मन' ज, 'यः प्रियामीदृशीं काम' झ. ञ. पाठः. ६. 'ष्यति' क. ञ. पाठः.

1787

**कामन्दकी** — वत्सौ मालतीमाधवौ ! इतो निर्गत्य वृक्षगहनेन[3] अस्मद्विहारिकायाः पश्चादुद्यानवाटे गम्यताम् । सुविहितं च तत्र वैवाहिकं द्रव्यजातमवलोकितया । भूयश्च —

गाढोत्कण्ठकठोरकेरलवधूगण्डावपाण्डुच्छदै-
स्ताम्बूलीपटलैः पिनद्धफलितव्यानम्रपूगद्रुमाः ।

इतोऽस्मात् प्रदेशान्निर्गत्य, अस्मद्विहारिकायाः अस्मन्मठस्य, **पश्चात्**, पश्चिमभाग इति विविक्ततया जनैरपरिज्ञातत्वात्, **उद्यानवाटे** उद्यानप्रदेशे **गम्यताम्** । किं तत्र गम्यत इत्याह — **सुविहितं** सुष्ठु सम्पादितं, **वैवाहिकं** विवाहः प्रयोजनमस्य तत्, 'प्रयोजनम्' (५-१-१०९) इति ठ(क् ? न्), **द्रव्यजातं** आज्यकुशसमिच्छमीपल्लवलाजादिपदार्थसमूहः । सुविहितमित्यनेन पुरोहितवचनादुपपादितत्वं तत्सन्निधिश्च द्योत्यते । **भूयश्चेति** पुनश्च कथ्यते इत्यर्थः ।

सम्भोगसाधनद्रव्यसम्पत्त्या उद्यानवाटस्योद्दीपनत्वमाह — **गाढोत्कण्ठेत्यादि** । गाढा चिरविरहादन्तःप्ररूढा प्रियसमागमोत्कण्ठा यासां, **कठोराः** प्रौढाः,

"बाला त्वा षोडशाब्दात् तदुपरि तरुणी त्रिंशता यावदूर्ध्वं
प्रौढा स्यात् पञ्चपञ्चाशदवधि परतो वृद्धतामेति नारी ॥"

इति रतिरहस्योक्तेः, गाढोत्कण्ठाश्च कठोराश्च याः केरलवध्वः तासां गण्डवदवपाण्डुच्छदैर्नागपल्लवदलैः । ईषत्पाण्डुत्वोदप्रसन्नलावण्याच्च विशेषणद्वयोपादानं, प्रकृत्या कनकवर्णत्वात् केरलीग्रहणं, विटपवर्तिनां दलानामुपमेयत्वाद्, अवतार्य संस्कृतानां धावल्यलावण्यातिशयप्रसिद्धेः;

१. 'वत्से मालति ! वत्स ! इतो' छ. पाठः. २. 'त्य पक्षद्वारेण वृक्ष' ब. पाठः. ३. 'नेन निर्गम्यतामुद्वाहमङ्गलार्थमस्मद्' क, 'नेन गम्यतां विवाहमङ्गलार्थमस्मद्' ख. ङ. च, 'नेन गम्यतामुद्वाहमङ्गलार्थमस्मद्' ड. झ. ञ, 'नेन गम्यतामुद्वाहमङ्गलार्थम् । अस्ति तत्र दीर्घिकायाः पश्चादुद्यानवाटः ।' ज. पाठः. ४. 'वाटिकायां' क, 'वाटः ।' घ. ज. झ. ञ, 'वाटे ।' छ, पाठः. ५. 'सन्निहितं' ङ. पाठः. ६. 'तं तत्रैव' क. ख. छ. ज, 'तं तत्र' घ. ब. पाठः. ७. 'तया सर्वं सम्पादितमास्ते । भूयश्च' ङ. पाठः. ८. 'गण्डाच्छपाण्डु' ङ. ब. पाठः. ९. 'कठिन' क. ब. पाठः.

१. 'अतो' ग. घ. ङ. पाठः. २. 'एतत्, पयो' ङ. झ. पाठः. ३. 'त्वात् प्रसन्न' ब. पाठः.

तक्कोलीफलजग्धिमुग्धविकिरव्याहारिणस्तद्भुवो
भागाः प्रेङ्खितमातुलुङ्गवृतयः प्रेयो विधास्यन्ति वाम् ॥ १९ ॥

'शकयुवतिकपोलापाण्डु ताम्बूलवल्ली-
दलमरुणनखाग्रैः पाटितं वा वधूभ्यः ।'

इत्यादिप्रयोगात् । ताम्बूलीपटलैः नागवल्लीसमूहैः पिनद्धफलितव्यानम्रपूगद्रुमाः आश्लिष्टाः सञ्जातफलाः, अत एव तद्भरेण व्यानमनशीलाः क्रमुकवृक्षा येषु । तक्कोली नाम सुगन्धफली लताविशेषः, तत्फलस्य जग्ध्या भक्षणेन मुग्धाः कोमलाः विकिराणां पक्षिणां व्याहाराः शब्दा येषु ।

'..........तक्कोलं कोलकं परम् ।
अपि कोशफलं फाल........ ॥'

इति,

'शलको विकिरस्तुण्डी नीडजो वातगाम्यपि ।'

इति वैजयन्ती । विकिरशब्देन संवर्धिता लीलापक्षिणः शुकादय उच्यन्ते । तद्भुवः उद्यानभूमेर्भागाः प्रदेशाः । प्रेङ्खितमातुलुङ्गवृतयः मन्दमारुतचलिता मातुलुङ्गलता एव वृतिः प्रान्तावरणं येषु ।

"फलपूरो बीजपूरो रुचको मातुलुङ्गकः ।",
".......... प्राचीनं प्रान्ततो वृतिः ।"

इत्यमरः । प्रेयः प्रियतमं वस्त्विति वैदग्ध्यात् सम्भोगसाम्राज्यं सूचयति । विधास्यन्ति करिष्यन्ति । वां युवयोः, षष्ठीद्विवचनस्यास्य युष्मच्छब्दस्य वामादेशः । अत्र नष्टरागप्रत्यानयनमुखवासोपयुक्तद्रव्यसम्पत्तिरुद्दीपनानां शुकशारिकादिशकुनिकुलकोलाहलानां सद्भावश्च प्रतिपाद्यते । 'मातुलुङ्गत्वच-स्ताम्बूलमुखवासनानि च स्युः । तस्य बहिः क्रीडाशकुनिपञ्जराणि' इति रतिभवनविन्यासे वात्स्यायनोक्तेः । उदात्तमलङ्कारः, समृद्धिमद्वस्तुवर्णनात् ॥
[ १९ ॥

१. 'कङ्कोली' क. ड., 'कक्कोली' ख. भ. पाठः. २. 'भुवां', ३. 'प्रीतिं' ङ. पाठः.

१. 'लता एव' क. ङ. ज. पाठः. २. 'शकुनिकोला' क. ग. घ. पाठः.

अतस्तत्रैव मदयन्तिकामकरन्दागमनं यावत् स्थातव्यम् ।

माधवः — (सहर्षम्) कल्याणवतां कल्याणसम्पदुपरिष्टाद् भवति ।

कलहंसः — दिट्ठिआ एव्वं पि णो भविस्सदि ?
(दिष्ट्या एवमपि नो भविष्यति ?)

मकरन्दः — कथमत्र सन्देहः ।

---

अतः प्रदेशस्य मनोहरत्वात्, स्थलान्तरगमनस्यानपेक्षितत्वमुच्यते — मदयन्तिकामकरन्दागमनं मदयन्तिकाया मकरन्दस्य चागमनं, यावत् यत्परिमाणेन कालेन भवेत् तावत्कालावधि । अनेन 'स्वपरिणयावे'त्युक्तमर्थं निश्चाययति ।

हर्षात् स्वभागधेयं चमत्करोति — कल्याणवतां पुण्यवतां, कल्याणसम्पत् मङ्गलसमृद्धिः, उपरिष्टाद् ऊर्ध्वम् । वीप्साप्यर्थादनुसन्धेया, उपर्युपरीत्यर्थः, 'सम्पत् सम्पदमनुबध्नाति' इति विवक्षितत्वात् ।

एवमपि नो भविष्यति? [एवं] अयमपि मकरन्दविवाहरूपः प्रकारः । अपिर्माधवविवाहं समुच्चिनोति । नः अस्माकं, भविष्यतीति काकुप्रयोगात् किं भविष्यतीति प्रश्ने पर्यवस्यति ।

प्रश्नस्योत्तरमाह — कथं केन प्रकारेण, अत्र अस्मिन्नर्थे । फलसिद्धेः प्रमाणतो निर्णीतत्वात् सन्देहस्य न काचिदुपपत्तिरित्यर्थः ।

---

१. 'गत्वा च तत्रैव' क. ख. ग, 'अतस्तत्रैव' घ. पाठः. २. 'कल्याणान्तरावतंसा हि कल्याण' क. ख. ग, 'कल्याणसम्पत्त्या इदं भव' छ, 'कल्याणान्तरावतंसा कल्याण' ज. पाठः, ३. 'भवतु' छ. ज. पाठः. ४. 'कल—कहं कल्लाणं एव्वं पि' छ. पाठः. ५. 'एदं पि' क, 'इदं पि पिअं णो' ज. पाठः. ६. 'माध — कथं' क. ख. ग, 'काम — कथं' घ. छ. ज. पाठः. ७. 'कथं सन्देह एवात्र भवतः' क. ख. ग, 'कथमत्र सन्देहो भवतः' क. ङ, छ, 'क एष सन्देह एवात्र भवतः' घ, 'कथं सन्देहो भवतः' ज, 'कथमेष सन्देहोऽत्र भवतः' ट. पाठः.

---

१. 'प्रमाणेन' ज. पाठः. २. 'सम्प्रश्ने पदमनु' क. ख. ग. घ. ङ. पाठः. ३. 'कदाचिदुप' क. ख. ग. घ. पाठः.

लवङ्गिका — सुदं पिअसहीए ! (श्रुतं प्रियसख्या !)

कामन्दकी — वत्स मकरन्द ! भद्रे लवङ्गिके ! इतः प्रतिष्ठामहे ।

मालती — सहि ! तुए वि गन्तव्वं ?
(सखि ! त्वयापि गन्तव्यम् ?)

लवङ्गिका — (विहस्य) संपदं क्खु अह्मे एत्थ उक्कण्ठामो ।
(साम्प्रतं खलु वयमत्रोत्कण्ठामहे ।)

(इति निष्क्रान्ताः कामन्दकीलवङ्गिकामकरन्दाः ।)

---

मालतीं ह्लादयति — श्रुतं प्रियसख्या । एतद्वचनमिति शेषः ।

इतः अनेन मार्गेणेति विवाहस्थानमार्गाभिनयः । अथवा अस्मात् प्रदेशादिति । प्रतिष्ठामहे गच्छामः । 'समवप्रविभ्यः स्थः' (१-३-२२) इत्यात्मनेपदम् ।

सखीविरहासहत्वादाह — सखि ! त्वयापि गन्तव्यमिति काका प्रश्नो व्यज्यते । अपिशब्दादितरयोर्गमनं भवतु नाम, त्वद्गमनं त्वयुक्तमिति द्योत्यते ।

विहस्येति । 'त्वयापि गन्तव्य'मित्यनेन स्वविरहासहत्वं तया सूचितमभिप्रेत्य सोत्प्रासमाह — साम्प्रतं खलु वयमत्रोत्कण्ठामहे । साम्प्रतमिति चिरप्रार्थितप्रियसमागमनिर्वृतायां त्वयीदानीं, अत्रानिरहरूपे वस्तुनि, उत्कण्ठामहे अभिलाषुका भवामः । वर्तमानसामीप्ये लट् । त्वद्दर्शने वयमेवोत्का भविष्यामः, सदा सम्भोगरसिकतया द्रष्टुमेवानवकाशादिति भावः ।

---

१. 'वत्से' क. ख. छ. पाठः. २. 'इत इतः' क. ख. पाठः. ३. 'उपचरामो' क, 'उव्वरामो' ङ. च, 'अवसरामो' घ, 'ओसरम्ह' ज, 'उवराम' झ. म. पाठः.

---

१. 'अस्माद्देशादिति' ज. पाठः. २. 'द्दर्शनेन-वय' ङ. झ. पाठः. ३. 'चोत्सुका' ङ. झ. पाठः.

माधवः — अयमिदानीमहं —

आमूलकण्टकितकोमलबाहुनाल-
माद्राङ्गुलीदलमनङ्गनिदाघतप्तः ।

---

'बद्धान्तः खलु सर्वथास्य मदनायासस्य सर्वस्व मे' (VI. 3.) इति स्वाभिमतानुकूलं चिरानुभूतस्य मदनसन्तापस्य प्रत्यासन्नं प्रशममनुसन्दधानः सानन्दमाह---अयमहं यस्तथाविधमदनवेदनादवानलज्वालापरिभर्जितः अयमहमित्यर्थः, इदानीमस्मिन् क्षणे ।

आमूलकण्टकितेत्यादि । आमूलं अंसदेशं यावत् [कण्टकितो] पुलकितो नाल इव बाहुर्यस्य । स्कन्धमणिबन्धयोरन्तरालप्रदेशो [बाहुः], 'बाहा बाहुभुजौ न षण्' इति वैजयन्ती । आर्द्राः स्विन्ना दलानीवाङ्गुल्यो यस्य । उपमासमासाश्रयणेन करपक्षयोजना । अनेन सात्त्विकविकार उक्तः । कान्तं आरुण्यमार्दवादियोगात् सुन्दरम् । आमूलं यावत्कन्दं कण्टकितो बाहुसदृशो नालो यस्य, आर्द्राणि सरस्सलिलेन मधुना वा सिक्तानि, अङ्गुलीसदृशानि दलानि यस्येति मध्यमपदलोपिसमासान्तराश्रयणेन पङ्कज-पक्षयोजना । कान्तमिति साधारणं विशेषणम् । करं पाणितलम् ।

'मणिबन्धो मणिः पाणिमूले पाणौ करः शयः ।'

इति वैजयन्ती । अनङ्गनिदाघतप्तः निदाघो ग्रीष्म इव कामस्तेन सन्तापित इति नायकपक्षे, अनङ्गसदृशेन निदाघेन तप्त इति द्विरदपक्षे । करेण स्वपाणिना, पुष्करेण च । आकलयामि गृह्णामि । 'कल बन्धने' इति धातुः । आरक्तपङ्कजं अरुणकमलम् । द्विरदः गजः । नलिन्याः पद्मस्तम्बस्य सरस्या वा ।

"... ... ... ... ... नलिनी पुनः ।
बिसिनी पद्मिनीत्याद्याः पद्मस्तम्बे सरस्यपि ।"

इति वैजयन्ती । पद्मस्तम्बस्योपमानत्वे शैत्यसौकुमार्यादि, सरस्यास्तु स्वच्छ-सरसगम्भीरत्वादि नायिकायाः प्रतीयते । द्विरदग्रहणेनाग्रहातिशयं द्योतयति,

---

१. 'मदनबद्धा'. २. 'उपमाश्रयणेन' क. ख. ग. झ. ज. पाठः ३. 'करपक्षे योजना' क. ङ. ख. पाठः.

अस्याः करेण करमाकलयामि कान्त-
मारक्तपङ्कजमिव द्विरदो नलिन्याः ॥ २० ॥

(इति निष्क्रान्ताः सर्वे ।)

इति मालतीमाधवे चौरिकाविवाहो नाम

॥ षष्ठोऽङ्कः ॥

---

आकलनमात्रे तात्पर्यात् । वाचकोपमानग्रहणे दोषो नाशङ्कनीयः, सर्वथा साम्याभ्युपगमे सर्वोदाहरणभङ्गप्रसङ्गात् । अत्र दृष्टान्तोऽलङ्कारः, नायकस्य नायिकायाः, करस्य च द्विरदस्य, नलिन्या रक्तपङ्कजस्य च बिम्ब-प्रतिबिम्बभावेन निर्देशात् । विशेषणानां तु समासद्वयवशाद् बिम्बप्रतिबिम्ब-भावः प्रदर्शित एव । करमाकलयामीत्युक्तेः

'पाणिग्रहणसंस्कारः सवर्णासूपदिश्यते ।'

इति स्मृतस्य पाणिग्रहणमङ्गलस्य विधिवत् करिष्यमाणत्वसूचनादविकल-शास्त्रार्थानुष्ठानमुभयलोकोपकारकं कविकुलमुकुन्दः कन्दलयतीत्यशेषमति-मङ्गलम् ॥ २० ॥

मालतीमाधवस्येत्थं षष्ठाङ्कस्यार्थचर्चनम् ।
पूर्णज्योतिःप्रसादेन चक्रे पूर्णसरस्वती ॥

॥ इति षष्ठोऽङ्कः ॥

---

१. 'दः सरस्याः' क. ख. ज. झ. ञ. पाठः.

---

१. 'दपि सकल', २. 'मुभयकुलोप' झ. पाठः

# अथ सप्तमोऽङ्कः।

(ततः प्रविशति बुद्धरक्षिता।)

बुद्धरक्खिता — अह्महे! सुसिलिट्ठमालदीणेवच्छलच्छी-विप्पलद्धणन्दणकरग्गहो[2] अमच्चभूरिवसुमन्दिरे भअवदीसंविहाणएहिं क्खेमेण गोवाइदो मअरन्दो अज्ज अह्मेहिं णन्दणावासं उवगओ। तदो भअवदी णन्दणमापुच्छिअ णिआवसहं गदा।

(अह्महे! सुश्लिष्टमालतीनेपथ्यलक्ष्मीविप्रलब्धनन्दनकरग्रहो अमात्य-भूरिवसुमन्दिरे भगवतीसंविधानैः क्षेमेण गोपायितो मकरन्दः अद्यास्माभिः नन्दनावासमुपगतः। ततो भगवती नन्दनमापृच्छ्य निजावसथं गता।)

अथ पताकानायकवृत्तान्तस्य पृथक् प्रतिपादनाय प्रवेशकमारभते— ततः प्रविशतीति। 'नियुक्तैव हि मया तत्र सखी बुद्धरक्षिता' इति मदय-न्तिकासमागमने नियुक्तत्वाद् बुद्धरक्षिताप्रवेशः।

सुसिलिट्ठेत्यादि। सुश्लिष्टमालतीनेपथ्यलक्ष्मीविप्रलब्धनन्दनकरग्रहो भूरिवसुमन्दिरे भगवतीसंविधानैः क्षेमेण गोपायितो मकरन्दः। सुश्लिष्टया सुष्ठु घटितयेति भेदापरिज्ञाने हेतुः। मालतीनेपथ्यलक्ष्म्या मालतीवेष-परिग्रहशोभया विप्रलब्धः प्रतारितः [नन्दनकरग्रहः] नन्दनस्य विवाहो येन। भगवत्याः संविधानैः बाह्यजनोत्सारणस्वसखीजनपरिवृतत्वावकुण्ठना-पचारकस्थापनादिभिः उपायैः, क्षेमेण रक्षया गोपायितः छादितः। अद्यास्माभि-र्नन्दनावासमुपगतः। अस्माभिरिति लवङ्गिकादीनां सङ्ग्रहः, सहार्थः। ततो भगवती नन्दनमापृच्छ्य निजावसथं गता। ततः जामातृगृहगमनानन्तरं तस्मात् गृहाद्वा, आपृच्छ्य अनुज्ञाप्य, [निजावसथं] स्वविहारं, गता।

१. 'णन्दणाकदकर' क. ख. ब. पाठः. २. 'हो भूरिवसु' ख, छ. पाठः. ३. 'वदीविअणसं' क. ख. ब, 'वदीए सं' ज. पाठः. ४. 'विहाणेण क्खे' क. छ. ज, ब, पाठः. ५. 'दो अज्ज मअ' ज. पाठः. ६. 'न्दो। (नृत्यति।) अज्ज' क. पाठः. ७. 'अह्मे वि णन्द' क. ख. ब, 'अह्मे बहुए समं णन्द' छ, 'अह्मे णन्द' ज. पाठः. ८. 'उवगदा' क. च. छ. ज. ख. ब. पाठः, ९. 'अदो' ज. पाठः. १०. 'माआविहिब' ख. ट. पाठः. ११. 'आअदा' छ. पाठः.

१. 'स्वसखी' ग. पाठः.

अअं च णववहूवरप्पवेसविरइदाआलकोमुदीमहूसवमेत्तपज्जाउला-सेसपरिअणो पदोसो अणुऊलइस्सदि अज्ज णो ववसिदम् । संपदं च तुवरन्तकामो कामेदुं सपादपडणं अब्भत्थिअ, पुणो बलामोडिअ अभिद्दवन्तो मअरन्देण णिट्ठुरं अभिहदो जामादा । सो अ वेळक्खरोसणिब्भरो ढुलुक्खिदो परुण्णपप्फुरन्तवदणो 'ण मे सव्वदं इमाए कोमारबन्धईए पओअणं' ति ससवहं पइण्णं काऊण वासभवणादो णिग्गदो । ताँ एदिणा पसङ्गेण मदअन्तिअं आणीअ मअरन्देण सङ्गोअइस्सम् ।

अयं च नववधूवरप्रवेशविरचिताकालकौमुदीमहोत्सवमात्रपर्याकुलाशेषपरिजनः प्रदोषोऽनुकूलयिष्यत्यद्य नो व्यवसितम् । चकारो वाक्यार्थसमुच्चये । नवेन वधूवरयोः ऊढकन्याजामात्रोः प्रवेशेन विरचिते अकालकौमुदीमहोत्सवे शरदृतुप्रथममासस्याश्वयुजस्य पूर्वपक्षे इन्द्रयागरूपस्य कौमुदीमहोत्सवस्य कर्तव्यत्वाद्, अकालग्रहणं प्रमोदमात्रेण, कालान्तरे प्रवर्तितत्वात् । ज्योत्स्नोपलक्षिते पूर्वपक्षे प्रवृत्तत्वात् कौमुदीमह इति संज्ञा;

'सखीजनोद्वीक्षणकौमुदीमहम्'

इति रघुवंशोक्तेः, 'मन्युता नयनकौमुदीमहः' इति वक्ष्यति च; 'आश्वयुज्यामष्टमीचन्द्रके कौमुद्यामुत्सवेऽपि' इति वात्स्यायनवचनात् । मात्रशब्दोऽव-

१. 'वहूगिहप्पवसे' क, 'वहूघरप्पवेस' छ. ज. झ. ञ. पाठः. २. 'सवप्पउत्तिपज्जा' क. झ. ञ, 'सवप्पमत्तपज्जा' ख. पाठः. ३. 'दं क्खु तुव' क. ख. ग. ङ. च. ट, 'दं तुव' छ. झ. ञ. पाठः. ४. 'कामो कामिणीं का', ५. 'दुं बहुसो सपाद', ६. 'पन्दणं' ७. 'पुणो वि बला' क. झ. ञ. पाठः. ८. 'पडिहदो' क. ख. घ. छ. ज. झ. ञ. पाठः. ९. 'सो अ अधिअदरवेळक्खलन्तअक्खरोस' क, 'सो अ वेळक्खरोसावेअक्खलन्तअक्खरो ओइदवअणपप्फुरन्त' ज, 'तदो सो क्खु अविअवेळक्खखलन्तअक्खरो रोस' झ. ञ. पाठः. १०. 'णिब्भरढुक्खिदो रुदिअपप्फुरन्त' क, 'णिब्भरो रुदिअफुरन्त' छ, 'णिब्भरढुक्खिदो मदपप्फुरन्त' झ. ञ. पाठः. ११. 'पल्लुदन्त' ख. पाठः. १२. 'णअणो' क. झ. ञ. पाठः. १३. 'मे इमा ए' ख, 'मे एदाए' ट. पाठः. १४. 'एदाए' घ. च. ट, 'दुए' झ. ञ. पाठः. १५. 'वद्धआर' छ, 'बडईए' ज. पाठः. १६. 'दो त्ति । एदिणा' क. झ. पाठः. १७. 'तदो एदेण एव्व पसङ्गेण' छ. पाठः. १८. 'ण सह सं' क. छ. च. झ. ञ. ट. पाठः.

१. 'इन्द्रयागनरूपस्य' ज. पाठः. २. 'प्रवर्तितत्वात्' क. पाठः. ३. 'मुखं' क. ख. ङ. छ. झ. पाठः. ४. 'रसनेषु' इति ख. ङ. ञ. पाठः.

(अयं च नववधूत्रासविनोदनेच्छया कौमुदीमहोत्सवमात्रपर्याकुलाशेषपरिजनः प्रदोषोऽनुकूलयिष्यत्यद्य नो व्यवसितम् ।, साम्प्रतं च त्वरमाणकामः कामयितुं सपादपतनमभ्यर्थ्य पुनर्बलात्कारेणाभिद्रवन् मकरन्देन निष्ठुरमभिहतो जामाता । स च वैलक्ष्यरोषनिर्भरो क्षुभितः प्ररुदितप्रस्फुरद्वदनो 'न मे साम्प्रतमनया कौमारबन्धक्या प्रयोजनम्' इति सशपथं प्रतिज्ञां कृत्वा वासभवनान्निर्गतः । तदेतेन प्रसङ्गेन मदयन्तिकामानीय मकरन्देन संयोजयिष्यामि ।)

(निष्क्रान्ता ।)

॥ इति प्रवेशकः ॥

---

धारणे । तस्मिन्नेव पर्याकुलाः संभ्रान्ताः परिजना यस्मिन् इत्यनेन रक्षिणामप्यनवधानं द्योतयति । 'प्रदोषो रजनीमुखम्' इत्यमरः । अनुकूलयिष्यति अनुकूलं सफलं करिष्यति । न इति भगवत्युपदेशेन स्वस्या लवङ्गिकायाश्चोद्यमं सूचयति । व्यवसितं अध्यवसितं, मदयन्तिकाहरणरूपं कार्यम् । स्वव्यवसितानुकूल्ये हेत्वन्तरमपि समुच्चिनोति — साम्प्रतं च त्वरमाणकामः कामयितुं सपादपतनमभ्यर्थ्य पुनर्बलात्कारेणाभिद्रवन्मकरन्देन निष्ठुरमभिहतो जामाता । साम्प्रतं त्वरमाणकाम इति शनैः शनैः विस्रम्भणे कृते कर्तव्यस्याभियोगस्याकालप्रवृत्तेरनौचित्यं द्योतयति, 'सञ्जातयोस्त्रिरात्रमधःशय्या ब्रह्मचर्यम्' इति कामशास्त्रोक्तविरुद्धानुष्ठानात् । पुनरित्यभ्यर्थनफलस्यालाभादित्यर्थात्, कामयितुं रन्तुमभिद्रवन् अभिगच्छन्, निष्ठुरं देहाभिघातवेदना यथा गणरात्रमनुवर्तते तथा निर्दयं अभिहतः गर्दभेनेव कृतव्यायामकठिनाभ्यां चरणाभ्यां ताडितः । स च वैलक्ष्यरोषनिर्भरो वञ्चितः— क्षुभित इति वा — ढुलुक्खिदो इति वचनार्थे देशीपदम्— प्ररुदितप्रस्फुरद्वदनो 'न मे साम्प्रतमनया कौमारबन्धक्या प्रयोजनम्' इति सशपथं प्रतिज्ञां कृत्वा वासभवनान्निर्गतः ।

'विलक्षं चेष्टते चित्तं यत्तद्वैलक्ष्यमुच्यते ।'

इति वचनात् स्वाभिप्रायभङ्गजनिताभ्यां वैलक्ष्यरोषाभ्यां [निर्भरः] पूर्णः,

---

१. 'त्वर्थ' ज. पाठः. २. 'मुपवर्तते' ख. पाठः. ३. 'तस्फुर' ग. पाठः.
४. 'वधेया' न. ५. ८ी. ०.

(ततः प्रविशति शय्यागतो मकरन्दो लवङ्गिका च ।)

मकरन्दः — लवङ्गिके ! अपि नाम बुद्धरक्षितासंक्रान्ता भगवतीनीतिर्विजेष्यते ।

---

अत एव क्षुभितः; प्ररुदितं साश्रु प्रस्फुरत् परुषवचनाय स्फुरदधरं मुखं यस्य । कौमारबन्धकया कौमारे कन्यात्वे बन्धकया कुलटया चारित्रहीनयेति माधवानुरागप्रवादं मनसि कृत्वोक्तिः । सशपथं सप्रत्ययं 'इयं मया कदाचित् स्पृश्यते चेदिष्टदेवतागुर्वाज्ञालङ्घको महापातकी च भविष्यामी'त्यादिशापसहितमित्यर्थः । तद्वृत्तान्तस्य स्वाभिमतानुकूल्यं दैवोपपादितमनुसन्धत्ते— तदेतेन प्रसङ्गेन मदयन्तिकामानीय मकरन्देन संयोजयिष्यामि । एतेन प्रस्तावेन मालतीभर्त्सनसान्त्वनाद्यवकाशलाभाद् भर्तृभगिन्या मदयन्तिकाया आनयनौचित्यादशङ्कास्पदत्वमिति भावः ।

नन्दनगृहागमनस्य तत्कोपनिर्गमनस्य च वृत्तस्य मदयन्तिकानयनस्य च वर्तिष्यमाणस्य सूचितत्वात् प्रवेशकमुपसंहरति—निष्क्रान्तेति ।

॥ इति प्रवेशकः ॥

---

अथाङ्कमारभते पताकावृत्तान्तकथनाय, 'सानुबन्धं पताका स्याद्' इति वचनात्—ततः प्रविशतीति । शय्यागतः शयनतलवर्तीति नववधूत्वाभिनयायोक्तिः ।

बुद्धरक्षितासंक्रान्ता बुद्धरक्षितामनुप्रविष्टा । भगवतीनीतिः कामन्दकया उपायप्रयोगः इत्यनेन पुत्रिकादिवदुक्तप्रकारानुष्ठानमेवास्याः प्रयोजक-

---

१. 'प्रविशतः' च. ट. पाठः. २. 'गतो मालतीवेशो मक' क. झ. ब. पाठः ३. 'मक—अपि' छ. पाठः. ४. 'नीतिरविपर्येष्यति' क. पाठः.

---

१, २. 'वधकया' ख. ङ. झ. पाठः. ३. 'रागं मनसि' क. छ. पाठः. ४. 'न सह संयोज' ख. पाठः. ५. 'मालतीनिर्भर्त्सन' क. पाठः. ६. 'पताकास्थान' ख. पाठः.

लवङ्गिका — कहं सन्देहो महाभाअस्स ? किं बहुणा । जह एस मञ्जीरसद्दो तह जाणामि तेण ववदेसेण आणीदा बुद्धरक्खिदाए मदअन्तिआ त्ति । ता उत्तरीआववारिदो सुत्तलक्खेण चिट्ठ ।

(कथं सन्देहो महाभागस्य ? किं बहुना । यथैष मञ्जीरशब्दस्तथा जाने तेन व्यपदेशेनानीता बुद्धरक्षितया मदयन्तिकेति । तदुत्तरीयापवारितः सुप्तलक्षेण तिष्ठ ।)

मकरन्दः — बाढं । (तथा करोति ।)

---

व्यापारस्तु तदीय एवेति द्योतयति । विजेष्यते प्रत्यूहान् निरस्य फलदायिनी भविष्यति । 'विपराभ्यां जेः' (१-३-१९) इत्यात्मनेपदम् ।

कथं सन्देहो महाभागस्य ? किं बहुनेति । सन्देहाभावोपपत्तिं वक्तुकामा कार्यप्रत्यासत्तिमनुमाय विवक्षितमाक्षिपति—यथैष मञ्जीरशब्दः, श्रूयते इति शेषः, तथा जाने तेन व्यपदेशेनानीता बुद्धरक्षितया मदयन्तिकेति । तेनेति पूर्वसङ्केतितत्वात् प्रकृतपरामर्शः । व्यपदेशेन 'मालत्या परिकोपितस्तव भ्राता सशपथं प्रतिज्ञाय निर्गतः, अतस्तां निर्भर्त्सनसान्त्वनाभ्यां त्वं भ्रातृवशवर्तिनीं कुर्वि'ति वचनव्याजेन । अनेन 'ता एदेण पसङ्गेण मदअन्तिअं आणीअ मअरन्देण सङ्गोअइस्सं' इति बुद्धरक्षितावचनं संघटयति । तदुत्तरीयापवारितः सुप्तलक्षेण तिष्ठ । उपरिवस्त्रेणावकुण्ठितः, सुप्तं सुप्तिः, भावे निष्ठा, तद्व्याजेन ।

'लक्षं नपुं शरव्ये ना स्त्री व्याजे नियुते न ना ।'

इति वैजयन्ती ।

---

१. 'को सन्देहो' क. ज. झ. ञ. पाठः २. 'हो एत्थ महा' क. पाठः. ३. 'महाणुभावस्स' च. पाठः. ४. 'सद्दो सुणीअदि तह' क. छ. ज. झ. ञ. पाठः. ५. 'तक्केमि' क. पाठः. ६. 'तेणव्व वव' छ. पाठः. ७. 'उत्तरीओवारिदो' क. ख. घ. ङ. ट. पाठः. ८. 'लक्खणो चिट्ठ' क. छ. ज. झ. ञ. पाठः. ९. '(मकरन्दस्तथा करोति)' छ. ज. झ. ञ. पाठः.

---

१. 'लक्षणः' क, 'लक्षणे' ख. ज. पाठः.

(ततः प्रविशतः मदयन्तिकाबुद्धरक्षिते । )

मदयन्तिका — सहि ! सच्चं जेव्व परिकोविदो मे भादा मालदीए ?

(सखि ! सत्यमेव परिकोपितो मे भ्राता मालत्या ? )

बुद्धरक्षिता — अह इम् । (अथ किम् । )

मदयन्तिका — अहो अच्चाहिदम् ! ता एहि। वामसीलं मालदिं णिब्भच्छिअ गच्छह्म ।

(अहो अत्याहितं ! तदेहि । वामशीलां मालतीं निर्भर्त्स्य गच्छामः ।)

(परिक्रामतः ।)

बुद्धरक्षिता — इदं वासभवणं । पविसदु पिअसही ।

(इदं वासभवनम् । प्रविशतु प्रियसखी । )

मदयन्तिका — तह । (तथा ।)

---

स्वादर्शनाय तद्विस्रम्भवचनप्रवर्तनाय च बुद्धरक्षितया नन्दनवृत्तान्तस्य कथितत्वं; तदुक्तिभङ्ग्या प्रकाशयति— सत्यमेवं परिकोपितो मे भ्राता मालत्या !?

अथ किम् ।

अहो अत्याहितं महद्व्यसनम् । दम्पत्योरेकस्यानुरागपारवश्येऽन्यस्या वैराग्येण निरतिशयदुःखहेतुत्वमिति भावः । तदेहि । वामशीलां मालतीं निर्भर्त्स्य गच्छामः । तद्यतोऽयमनर्थोऽस्माभिः सुहृद्भावेन परिहर्तव्यः तस्मात् कारणात्, एहि त्वयापि साहाय्यं कर्तव्यमिति प्रार्थना । वामशीलां प्रतिकूलस्वभावां, भर्तुरित्यर्थात् ; अनेन स्वभ्रातुर्निर्दोषत्वं ध्वनति । निर्भर्त्स्य परुषवचनेन विनीयेत्यर्थः । पश्चात् स्वभवनं गच्छामः । अनेन व्यपदेशप्रयोगस्य फलोन्मुखत्वं द्योतयति ।

इदं वासभवनं शयनगृहम् ।

---

१. 'इति मदयन्तिका बुद्धरक्षिता च' क. ङ. छ. ज. झ. ञ. पाठः. २. 'अच्चाहिदं' छ. पाठः. ३. 'णिब्भच्छेह्म' क. ज. झ. ञ. पाठः. ४ 'वणदुवारम् । (प्रविशतः ।) मद—सहि' क झ. ञ, 'वणं । (उभे प्रविशतः ।) मद —सहि' छ. ज. पाठः.

---

१. 'व कोपितो' ख. ञ. पाठः. २. 'किम् । अत्या' ज. पाठः. ३. 'त्ये निर' क, 'त्ये च निर' ख. पाठः.

(प्रविशतः।)

मदयन्तिका — सहि लवङ्गिए! जाणीअदि पसुत्ता दे पिअसही।
(सखि लवङ्गिके! ज्ञायते प्रसुप्ता ते प्रियसखी।)

लवङ्गिका — सहि! मा णं पडिबोहेहि। एसा चिरं दुम्मणाअन्ती, दाणिं ईसि मण्णे पसुत्तेत्ति। अदो सणिअं इदो जेव्व सअणद्धन्ते उवाविस।

(सखि! मैनां प्रतिबोधय। एषा चिरं दुर्मनायमाना इदानीं ईषन्मन्ये प्रसुप्तेति। अतः शनैरित एव शयनार्धान्ते उपविश।)

मदयन्तिका — (तथा कृत्वा) दुम्मणाअदि वा इअं वामसीला?
(दुर्मनायते वा इयं वामशीला?)

---

उत्तरीयावकुण्ठननिष्पन्दत्वाभ्यामनुमायाह — सखि लवङ्गिके! ज्ञायते प्रसुप्ता ते प्रियसखीति। ते प्रियसखीति त्वयापि किमस्या दुश्चेष्टितमनुमोदत इति सूचयति।

सखि! मैनां प्रतिबोधय। तत्र हेतुः— एषा चिरं दुर्मनायमाना इदानीं ईषन्मन्ये प्रसुप्तेति। दुर्मनायमाना मनोदुःखमनुभवन्तीति नन्दनापराधसूचनम्। इदानीमीषत्प्रसुप्तेति मन्ये इति सम्बन्धः। अतः शनैरित एव शयनार्धान्ते उपविश। अतः अप्रतिबोधनाय, इत इत्यङ्गुलीनिर्देशः, शय्यैकदेशे, 'महिअलद्धन्ता' इत्यादिप्रयोगात्।

तथा कृत्वा उपविश्य। दुर्मनायते वा इयं वामशीला। वा विकल्पे। स्वयं भर्तुः प्रतिकूलमाचरति दुर्मनायते च किमित्युपालम्भः।

---

१. 'ए! जाणीहि दाव पसुत्ता' क, 'ए! अवि जाणी' ख. घ. ट. पाठः २. 'सही ण बोधि।' क. छ, 'सही माळइत्ति।' ख. घ. ङ. ट. पाठः. ३. 'लव— सहि एहि। मा णं' क, 'लव—मा णं' ख, छ. ट, 'लव — एहि। मा णं' झ. ञ. पाठः. ४. 'हि जदो एसा' क. झ. ञ. पाठः ५. 'दाणिं जेव्व ईस मण्णे उसिअ पसु' क. झ. ञ, 'दाणिं जेव्व ईस पसु' ज. पाठः ६. 'तदो' क. झ, 'एदस्सि सअण' छ पाठः. ७. 'इध' क. ज. झ. ञ. पाठः, ८. 'सअणत्ताङ्कि' क. ज, 'सअणुद्धन्ते' झ, 'सअणुप्पन्ते' ञ. पाठः. ९. 'मद—तह। (तथा)' ख. ट. पाठः. १०. '(त्वा) सहि. कधं दु' क, '(त्वा) कहं दु' छ. ज. झ. पाठः. ११. 'दि अअं' क, 'दि इअं' ज. झ. ञ. पाठः

---

१. 'त्वादनुमाय' ञ. पाठः. २ 'नन्दननिन्दापराध' ग. पाठः.

लवङ्गिका — कहं णाम णववहूवीसम्भणोवाअजाणअं लडहं विअड्ढमहुराभासणं अरोसणं अक्कादरं भादरं दे भत्तारं समासादिअ दुम्मणाइस्सदि मे पिअसही ।

(कथं नाम नववधूविस्रम्भणोपायज्ञं लटहं विदग्धमधुराभाषणं अरोषणं अकातरं भ्रातरं ते भर्तारं समासाद्य दुर्मनायिष्यते मे प्रियसखी । )

---

तस्या उपालम्भोद्यमं ज्ञात्वा निरवकाशत्वाय स्वयमुपालम्भते—**कथं नाम** नववधूविस्रम्भणोपायज्ञं लटहं विदग्धमधुराभाषणं अरोषणं अकातरं भ्रातरं ते भर्तारं समासाद्य दुर्मनायिष्यते मे प्रियसखी । **नववधूविस्रम्भणोपायाः** 'तस्मात् साम्नैवोपचरेत्, युक्त्या च । युक्तितः प्रसरमुपलभेत । तेनैवैनामनुप्रविशेत् ।' इत्यादिकामसूत्रोक्ताः तान् जानानं, लटहं सुन्दरं, **विदग्धमधुराभाषणं** अग्राम्यं सरसं च वचनं यस्य, अनेन 'तत्र सिद्धामालपयेत्तद्वाक्यश्रवणार्थम् । किञ्चिदल्पाक्षराभिधेयमजानन्निव पृच्छेत् ।' इत्याद्यालपयोजनवैदग्ध्यं कामसूत्रोक्तं सूचयति; अरोषणं अतिलज्जया तस्या वामशीलत्वे क्रोधशीलो न भवतीति,

"अतिलज्जान्वितेत्येवं यस्तु कन्यामुपेक्षते ।
अनभिप्रायवेदीति पशुवत् परिभूयते ॥"

इति वचनात्; अकातरं साध्वसरहितं, तदभिप्रायं ज्ञात्वा किञ्चिद् बलात्कारोऽपि कर्तव्य इति द्योतयति,

"नात्यन्तमानुकूल्येन न चापि प्रातिलोम्यतः ।
सिद्धिं गच्छति कन्यासु तस्मान्मध्येन साधयेत् ॥"

---

१. 'विअद्ध महु' ङ. ज. पाठः. २. 'महुअराभासणं' ख. 'महुरालावभा' ङ. पाठः. ३. 'आसिणं' क. छ. झ. ज. पाठः. ४. 'णं लज्जिणेहं अरो' झ. ज. पाठः. ५. 'णं दे भादरं' ज. पाठः. ६. 'दे समा' क. पाठः. ७. 'आसादिअ' ज. पाठः. ८. 'अ पिअसही ण दुम्म' क, 'अ कई दुम्म'. ख, 'अ ण दुम्म' ग, 'अ सही ण दुम्म' झ. पाठः.

---

१. 'मुपालभते' क. छ. ज. पाठः. २. 'अग्राम्यसरलं वचनं' ज. पाठः. ३. 'मानुलोम्येन' ख. ग. ज. झ. पाठः.

मदयन्तिका—पेक्ख बुद्धरक्खिदे ! विप्पदीवं उवालम्भीआमो।
(पश्य बुद्धरक्षिते ! विप्रतीपमुपालभ्यामहे ।)
बुद्धरक्षिता — विप्पदीवं ण वा विप्पदीवं।
(विप्रतीपं न वा विप्रतीपम् ।)
मदयन्तिका — कहं विअ । (कथमिव ।)

इति वात्स्यायनवचनात् । अत्र विपरीतलक्षणया अनुपायज्ञत्वं असुन्दरत्वं ग्राम्यपरुषवचनत्वं रोषणत्वं कातरत्वं च प्रकाश्यते । भ्रातरं ते इति सर्वोऽपि स्वजनं गुणवन्तं मन्यते, न तु तदीयं दोषं पश्यति

'प्रिये शुभानि सर्वाणि द्वेष्ये पापानि भारत ।'

इत्युक्तन्यायादिति सूचयति । भर्तारमिति यावज्जीवभावित्वं हृदयशल्यस्य प्रकाश्यते । कथं दुर्मनायिष्यते केन प्रकारेणोद्विजिष्यते इति विपरीतलक्षणा । अत्यन्ततिरस्कृतवाच्येन ध्वनिना सदा विषादस्यैवावकाशो न कदाचिदपि सुखलेश इति व्यज्यते ।

तदुक्त्यभिप्रायं ज्ञात्वाह— पश्य बुद्धरक्षिते ! विप्रतीपमुपालभ्यामहे । पश्येति निरूप्यतां गम्भीराक्षेप इत्यर्थः । विप्रतीपं प्रतिकूलम् ।

अथ विकल्प्य भङ्ग्या लवङ्गिकोपालम्भस्योपपन्नत्वं स्थापयति–विप्रतीपं न वा विप्रतीपमिति । उभयथापि विदग्धैर्योजयितुं शक्यते । तत्त्वतस्तु एकैव कोटिः परिशिष्यत इत्यर्थः ।

"दोषानपि गुणीकर्तुं दोषीकर्तुं गुणानपि ।
शक्तो वाग्मी न तत्तथ्यं दोषा दोषा गुणा गुणाः" ॥

इत्युक्तेः ।

तज्जिज्ञासया पृच्छति— कथमिव केन प्रकारेणैकस्योभयथा योजनमित्यर्थः ।

---

१. 'मद—हुं बुद्ध' छ. पाठः. २. 'त्वं अहो वि उवा' क. झ. ञ. पाठः. ३. 'लद्ध झ' क. ज. पाठः.

१. 'विकल्पभङ्गया' ज. पाठः.

बुद्धरक्षिता — जं दाव चलणाणदो भत्ता ण बहुमाणिदो एत्थ [1]लज्जादोसेण एसो जणो ण उवालम्भणिज्जो । जं पि [2]णववहूविरुद्धसरह-[3]सोवक्कमक्खलणवेलक्खविच्छड्डिदमहाणुभावत्तणस्स [4]भादुणो दे वाआ-गदं [5]किं पि अपरिण्णाणअं [6]तेण विआरीअदि के अह्मे [7]त्ति ।

(यत्तावच्चरणानतो भर्ता न बहुमानितः अत्र लज्जादोषेणैष जनो नो-पालम्भनीयः । यदपि नववधूविरुद्धसरभसोपक्रमस्खलनवैलक्ष्यविच्छर्दितमहानु-भावत्वस्य भ्रातुस्ते वाग्गतं किमप्यपरिज्ञानकं तेन विचार्यते के वयमिति ।)

तत्प्रकारं दर्शयति — यत्तावच्चरणानतो भर्ता न बहुमानितः; तावदा-दाक्षिण्यविचारदशायामिति बोध्यते, बहुमानः सत्कारः तत्प्रणयानुवर्तने न लम्भितः, यदिति एतत् खलु त्वया तदुपालम्भनिमित्तमित्याशङ्कवचने इत्यर्थः; अत्र परिहारोऽस्तीत्याह — अत्र लज्जादोषेणैष जनो नोपालम्भनीयः । अत्र अस्मि-न्नर्थे लज्जादोषेण [1]असंस्कृतमुग्धत्वादिहेतुकेन लज्जारूपेण दोषेण, अथवा लज्जाया अपराधेन,

"स्खलितं मम जानीयुरिति चिन्तासमुद्भवा ।
मानसी विक्रिया लज्जा सर्ववृत्तिविरोधिनी ॥"

इति दिवाकरः, एष जन इति मालत्यभिनयः, नोपालम्भनीयः उपा-लम्भं नार्हतीति 'विप्रतीपमुपालभ्यामहे' इत्युक्तस्य प्रतिवचनम् । यदपि नववधू-विरुद्धसरभसोपक्रमस्खलनवैलक्ष्यविच्छर्दितमहानुभावत्वस्य भ्रातुस्ते वाग्गतं किम-प्यपरिज्ञानकं तेन विचार्यते के वयमिति । नववधूः नवपरिणीता कन्या, तद्विरुद्धस्य तत्प्रतिकूलस्य, कामशास्त्रे तस्य निषिद्धत्वात्, सरभसोपक्रमस्य रभससहितस्य रतारम्भस्य;

१. 'णपडिदो भत्ता' क. ज. झ, 'णपडिदो वि भत्ता' म. पाठः. २. 'जं पि पिअसहि णव' क. म, 'जं च णव' घ. ट, 'जं पिअसहि णव' छ. झ, 'जं वि पिअसहि अहिणव' ज. पाठः. ३. 'रअसो' क. छ. ज. झ म. पाठः. ४. 'विच्छाइअमहा' ज. पाठः. ५. 'किं पि अप्पडिण्णाणं' छ, 'किं अप्पडिण्णाणम्' ज. पाठः. ६. 'तेण तुह्मे त्ति' क. झ. म, 'तेण आणाअदि किंभावराहा अह्मे त्ति' छ, 'तेण आणीअदि अह्मे त्ति' ज. पाठः. ७. अह्मेहि त्ति' घ. पाठः.

१. 'असंस्तुतत्व' छ. ज. झ. पाठः.

1787

किञ्च 'कुसुमसधर्माणो हि योषितः सुकुमारोपक्रमाः। तास्त्वनधिगतविश्वासैः प्रसभमुपक्रम्यमाणाः सद्यः संप्रयोगविद्वेषिण्यः पुरुषद्वेषिण्यो वा इति।' एवं किल कामसूत्रकारा आमणन्ति।

''सर्वात्ययानपेक्षी तु त्वरावान् लङ्घितक्रमः।
अशक्यः सोढुमन्यैश्च व्यापारो रभसः स्मृतः ॥''

इति दिवाकरः, स्खलनं प्रतिहतिः, शास्त्रार्थातिक्रमस्य विरुद्धफलत्वादिति भावः, तद्धेतुकेन वैलक्ष्येण लज्जातिशयेन विच्छर्दितमुद्वान्तं, निरस्तमिति यावत्, महानुभावत्वं वंशैश्वर्यश्रुतवयःपरिणामादिजनितं माहात्म्यं येन, 'क्षमासारा हि साधवः' इति वचनात्। ते भ्रातुरिति तदपराधस्य अस्मासु सर्वासु सम्बन्धित्वाल्लज्जाजनकत्वमिति द्योतयति। वाग्गतमिति कायिकं ताडनादिकं तु सङ्कुचितमेव, शिक्षारूपत्वात् तत्क्षण एव वेदनाशमनाच्च, वाचिकं तु मर्माविच्त्वान्न कदाचिच्छाम्यतीति,

"वाक्सायका वदनान्निष्पतन्ति यैराहतः शोचति रात्र्यहानि।
परस्य नामर्मसु ते पतन्ति तान् पण्डितो नावसृजेत् परेषु ॥"

इति व्यासवचनादिति व्यञ्जयति। किमपीत्यतिपरुषतया दुर्वचत्वमाह। अपरिट्ठानकं—अप्पडिट्ठाणअं इति वा पाठः, अप्रतिष्ठानकं— योग्यस्थलमुल्लङ्घ्य प्रवृत्तिं, अक्रमवचनमित्यर्थः। तेन हेतुना विचार्यते निरूप्यते; 'केण जाणीअदि' इति वा पाठः, केन ज्ञायते। वयमिति नन्दनगृहाणां ग्रहणम्। के इति 'एसो जणो ण उवालम्भणिज्जो' इति मालत्या अनुपालम्भ्यकोटौ निवेशितत्वाद् वय तु कस्यां कक्ष्यायां निक्षेप्तव्याः उपालभ्यकोटौ वा उपालम्भककोटौ वेति न ज्ञायते इत्यर्थः। 'नववधूविरुद्धे'ति, 'विच्छर्दितमहानुभावत्वे'ति, 'अप्रतिष्ठानकमि'ति स्फुटं दोषोद्घोषणायाः कृतिः मया तु न ज्ञायते, त्वमेव मतिशालिनी निर्णयेऽस्य प्रमाणमिति सूचयन्ती भङ्ग्या वयमेवोपालभ्या इति

१. 'किं च (संस्कृतमाश्रित्य) कुसु' क. छ. ब. ज. पाठः. २. 'णाः संप्र' ब. पाठः. ३. 'ण्यो भवन्ति। एवं' क. छ. ब. झ. ज, 'ण्यो भवन्ति पुरुद्वेषि' घ. पाठः. ४. 'आभणन्ति' क, 'मन्वन्ति' ज. पाठः.

१. 'कमिति' क. पाठः. २. 'स्वत्र परुष' ख. पाठः. ३. 'दुर्वचनत्व', ४. 'स्थानङ्ग' ज. पाठः. ५. 'ति। ण जा' ख. छ. झ, 'तिः जा' ज. पाठः. ६. 'पाठः—न ज्ञायते, के वय' ख. छ. झ. पाठः. ७, 'ज्ञायते। के वय' छ. ज. पाठः. ८. 'उपालम्भकोटौ' ख. पाठः. ९. 'इत्यर्थात्', १०. 'घोषणाकृतिः' ज. पाठः.

स्थापयतीति मन्तव्यम् । के इति पुल्लिङ्गान्तेन किंशब्देनोक्तिर्मन्दनस्य प्राधान्येन परामर्शवीक्षणाद्, अन्यथा का वयमिति वक्तव्यत्वात् ।

नववधूविरुद्धेत्युक्तमेव नन्दननिन्दनाय कामसूत्रसंवाद[1]नेन स्थापयति--किञ्चेति । अन्यच्च मया कथ्यते । मदूहमात्रमिदमिति[2] त्वया न मन्तव्यम् । शास्त्रार्थ एव मया प्रदर्श्यते इत्यर्थः[3] । तदेव शास्त्रमुदाहरति--कुसुमसधर्माण इत्यादि । पुष्पसदृशस्वभावाः, यथा कुसुमानि सदयमादाय शिरसि[4] धरितानि परमं सुखं शोभातिशयं च जनयन्ति, न तु करैव[5]लक[6]लनं विदढतरं क्षमन्ते, तथा योषितोऽप्युपलालनीयाः, न तु कदर्थनीयाः इत्यर्थः,

"नैसर्गिकी सुरभिणः कुसुमस्य सिद्धा मूर्ध्नि स्थितिर्न मुसलैरवताडनानि ।"

इत्युक्तेः । हि प्रसिद्धौ । योषित इति स्त्रीमात्रस्यायं धर्मः, किं पुनः कन्यानामित्यर्थः, कन्याविस्रम्भणप्रकरणपठितत्वात् । सुकुमारोपक्रमाः मृदूपायानुष्ठेयसम्प्रयोगाः, भवन्तीति शेषः । ता योषितः, तुर्विशेषे, अनधिगतविश्वासैः[7] अप्राप्तविस्रम्भैः प्रसभं बलात्कारेण उपक्रम्यमाणाः भोक्तुमारभ्यमाणाः, सद्यस्तत्क्षण[8] एव संप्रयोगविद्वेषिण्यः पुरुषसंसर्गविरागशीलाः । ततोऽपि वैरस्यमाह--पुरुषद्वेषिण्यो वेति । सम्प्रयोगमन्तरेणापि पुरुषमात्रमेव दर्शनस्पर्शनादिष्वपि द्वेष्टुं शीलं यासां ताः, वा । इतिस्सूत्रसमाप्तौ[9] । एवं किलेति । एवमिति प्रकारे[10], ईदृशानां वचनानां बहुत्वात् । एवं किल कामसूत्रकाराः आमनन्तीति । किलेति प्रसिद्धौ । त्वयाप्यधीतत्वाद्विदित एवायमर्थ इति भावः । कामसूत्रकाराः नन्दीश्वरश्वेतकेतुबाभ्रव्यवात्स्यायनादयः, आमनन्ति अधीयते । इतिः श्रुतिवत् तदनुसारिण्यां[11] स्त्रीवर्गस्मृतेरव्यभिचरि[12]तफलत्वमविचारणीयत्वमन्यथाकरणे विरुद्धफलत्वं च व्यञ्जयति । 'कुसुमे'त्यादेः 'पुरुषद्वेषिण्यो वे'त्यन्तस्य सूत्रस्य पाठानुकरणाद् 'अनुकरणे तु सर्वेषां' इत्युक्तेः साधुत्वात् संस्कृतत्वं, 'एवं किल' इत्यादेः स्वोक्तित्वाद् प्राकृतत्वं चेति मन्तव्यम्, न तु संस्कृता[13]श्रयणेन, तस्य स्ववचनविषयत्वात् ।

१. 'संवादेन', २. 'मदाग्रहमात्र', ३. 'प्रदर्शित इत्यर्थः' ज. पाठः, ४. 'शिरसा धा' ख. ङ. पाठः. ५. 'करकलनं' ज. पाठः. ६. 'कलनमपि दृढ' ख. ङ. झ. पाठः. ७. 'विश्वासैः' झ. पाठः. ८. 'क्षणमेव', ९. 'इतिः कामसूत्र', १०. 'कारे, वचसां' ११. 'ण्या स्मृते' ज. पाठः, १२. 'चारित' ख. ज. पाठः, १३. 'संस्कृताश्रयेण' क. ग. छ. पाठः.

लवङ्गिका—(सास्रं) घरे घरे पुरिसा अञ्ञकाओ उव्वहन्ति। ण अ को वि लज्जापसाहणं अणवरद्धमुद्धसहावं कुलकुमारीअणं पहवामि त्ति वाआणलेण पज्जालेदि। एदे क्खु दे हिअअसल्लणिक्खेवा आमरणं सम्भरिज्जन्तदूसहा परघरणिवासवेरग्गआरिणो महापरिभवा, जाणं किदे इत्थिआजम्मलाहं जुगुच्छन्ति बान्धवा।

सास्रमिति सत्यस्वभावनावैदग्ध्यमाह। गृहे गृहे पुरुषाः स्त्रिय उद्वहन्ति। न च कोऽपि लज्जाप्रसाधनमनपराद्धमुग्धस्वभावं कुलकुमारीजनं प्रभवामीति वागनलेन प्रज्वालयति। उद्वहन्ति विवहन्ति। कोऽपीत्युत्तमो मध्यमोऽधमो वेत्यर्थः। लज्जैव प्रसाधनमलङ्कारो यस्य, 'स्फुटमभिभूषयति स्त्रियस्त्रपैव' इत्युक्तेः। अनपराद्धः कदाचिदप्यपराधरहितः, तत्र हेतुः मुग्धः हरिण्यादेरिवाकृत्रिमः स्वभावो यस्य। कः खल्वनुन्मत्तः शिशुषु च पशुषु च कन्याजनेषु च मौग्ध्यादनिष्टमाचेष्टमानेष्वपि निकृष्टरोषाविष्टत्वमाचरेदिति भावः। कुलकुमारीजनं प्रशस्ते वंशे जातं कुलस्य परिपालकं च कन्याजनम्। अनेन त्रिवर्गस्य तदायत्तत्वात् पण्यनारीवदानुकूल्ये परिग्रहः, प्रातिकूल्ये परित्यागश्च किं शक्यते वा अयं उपपन्नो वेति द्योत्यते। प्रभवामि प्रभुः स्वाम्यहमस्मीति। इतिर्हेतौ, अनेन हेतुना न पुनस्तत्कृतेनापराधलेशेन दोषणारोपभूतस्य वस्तुनः परिलालने परिलोलने को वा निवारयिता, तथापि द्वितीया कोटिरनुचितेति भावः। वागनलेन वचनरूपेणाग्निना, निरतिशयवेदनाजनकत्वात् पुनःसन्धानाभावत्वाच्चाग्नित्वरूपणम्,

'वाचा दुरुक्तं बीभत्सं न संरोहति वाक्क्षतम्।'

इति महाभारतोक्तेः। प्रज्वालयति प्रदीप्तं करोति। प्रज्वालयति न पुनर्दहतीत्युक्तिः पुटपाकवत् सर्वदा मनःक्वाथजननाद् अभस्मीकरणाच्च। एते

१. 'लव—घरे' ज. पाठः. २. 'कुलकण्णकाओ' क. ज. झ. ञ. पाठः. ३. 'ण क्खु कोवि' क. ख. ञ, 'ण कोवि' ङ. ट. पाठः. ४. 'पराधीणं' क. झ. ञ. पाठः. ५. 'द्ध लट्ठसहावं' क, 'द्ध मुद्धलट्ठसहावं' झ. ज. पाठः. ६. 'क्खु हिअअ' ङ. छ. पाठः

१. 'वाकृतिमधुरस्वभावो' ज. पाठः. २. 'मौढ्यादनिष्ट' क. पाठः. ३. 'पि निकृष्टरोषा' क. छ, 'नि कष्टरोषा' ख. ङ. झ. पाठः. ४. 'न च त्रिवर्ग' क. पाठः. ५, ६. 'कूल्येन परि' ज. पाठः. ७. 'शक्यतेकिंच उप' ख. ङ. ज. झ, 'शक्यते' छ. पाठः. ८. 'सर्वथा' क. ग. पाठः.

(गृहे गृहे पुरुषाः स्त्रिय उद्वहन्ति। न च कोऽपि लज्जाप्रसाधनं अनपराद्धसुखवस्त्रनावं कुलकुमारीजनं प्रभवामीति वागनलेन प्रज्वालयति। एते खलु ते हृदयशल्यनिक्षेपाः आमरणं संस्मर्यमाणदुस्सहाः परगृहनिवासवैराग्य-कारिणो महापरिभवाः, येषां कृते स्त्रीजन्मलाभं जुगुप्सन्ते बान्धवाः।)

मदयन्तिका— सहि बुद्धरक्खिदे! अदिदूमिआ पिअसही लवङ्गिआ। अवि महन्तो[2] को वि अवराहो[3] किदो मे भादुणा?

(सखि! बुद्धरक्षिते! अतिपरितापिता प्रियसखी लवङ्गिका। अपि महान् कोऽप्यपराधः कृतो मे भ्रात्रा!)

---

खलु ते हृदयशल्यनिक्षेपाः आमरणं संस्मर्यमाणदुस्सहाः परगृहनिवासवैराग्य-कारिणो महापरिभवाः। खलुः प्रसिद्धौ। एते लोकैर्दृश्यमानाः आमरणं यावज्जीवं हृदयशल्यनिक्षेपाः मनसि शल्यस्य शरफलस्य निखननरूपाः, अन्तर्व्यथाकारित्वात्। संस्मर्यमाणत्वे दुस्सहाः अनुभवसमयादपि स्मरणे स्मरणे मर्मच्छिदः। परशब्देन स्वपितृगेहादन्य उच्यते। अन्यदीयभवन-निवासे वैराग्यं निर्वेदं कर्तुं शीलं येषाम्। महापरिभवाः ताडनादिभ्योऽ-प्यधिकास्तिरस्काराः। येषां कृते स्त्रीजन्मलाभं जुगुप्सन्ते बान्धवाः। येषां कृते हेतोः, परिभवानां भाविनामाशङ्कयेत्यर्थः, स्त्रीजन्मलाभं स्ववंशे स्त्रीणां प्रसूतिं जुगुप्सन्ते गर्हन्ते, बान्धवाः पित्रादयः।

"धिक् खल्वलघुशीलानामुच्छ्रितानां यशस्विनाम्।
नराणां शुद्धसत्त्वानां कुले कन्यानिरूपणम्॥"

इति महाभारतोक्तेः।

'एतस्मिन्निमित्तं जातमात्राभ्यः कन्याभ्यः प्रयच्छन्ति सलिलमश्रुबिन्दुभि-र्बान्धवाः' इत्यादिवचनैः सास्रत्वादिभिः परमार्थतो दुःखितत्वं निश्चित्याह — सखि बुद्धरक्षिते! अतिपरितापिता प्रियसखी लवङ्गिका। अपि महान् कोऽप्यपराधः कृतो मे भ्राता। अपिः प्रश्ने। महानिति क्षुद्रेऽपराधे सास्रत्वादेरनुपपत्तेः।

---

१. 'दुम्मविदा', २. 'न्तो क्खु को' क. पाठः. ३. 'को वि मे भादुणा वाआवराधो किदो' क. ब. श. ज. 'किम्मे भादुणा तह अपराधो किदो' ब, 'को वि मे भादुणा वाअपराधो' च. ज. पाठः.

---

१. 'पश्यमानाः' ब. ज. पाठः. २. 'स्करणाः' ज. पाठः. ३. 'एतन्निमित्तं' क. पाठः. ४. 'भ्यः प्रय' क. ब. छ. ज. पाठः.

बुद्ध—अह इं[2] । 'ण मे इमाए [1]कोमारबन्धईए पओअणं' ति ससवहं पडिण्णं काऊण वासभवणादो णिग्गदो ।

(अथ किम् । 'न मे अनया कौमारबन्धकया प्रयोजनमि'ति सशपथं प्रतिज्ञां कृत्वा वासभवनान्निर्गतः ।)

मदयन्तिका—(कर्णौ पिधाय) अहो अदिक्कमो! अहो पमादो! सहि लवङ्गिए! असमत्थम्हि दे [3]मुहं दंसिदुम् । तह वि पभवामि त्ति किं पि मन्तिस्सम् ।

(अहो अतिक्रमः! अहो प्रमादः! सखि लवङ्गिके! असमर्थास्मि ते मुखं द्रष्टुम् । तथापि प्रभवामीति किमपि मन्त्रयिष्यामि ।)

---

अपराधमेवोपन्यस्यति—अथ किम् । 'न मे अनया कौमारबन्ध[1]कया प्रयोजनमि'ति सशपथं प्रतिज्ञां कृत्वा वासभवनान्निर्गतः इति प्रवेशकोक्तमेव सङ्घटयति। कर्णौ पिधाय श्रवणपुटौ हस्ताभ्यामाच्छाद्य ,

"गुरोर्यत्र परीवादो निन्दा वापि प्रवर्तते ।
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ॥"

इत्यादिस्मरणात् साधुनिन्दाश्रवणस्य प्रायश्चित्तं विधायेत्यर्थः । अहो अतिक्रमः। अहो प्रमादः। अतिक्रमः [2]केनातिलङ्घनं, कुलकन्याविषये तथा वक्तुमयुक्तत्वात् । तत्र हेतुः—प्रमादः [3]अनवधानम् । अहो इत्याश्चर्ये । महानुभावस्य तस्य कथमीदृशो [4]बुद्धिक्षोभः सञ्जात इत्यर्थः । तदपराधेन लज्जिता आह— सखि लवङ्गिके । असमर्थास्मि ते मुखं द्रष्टुम् । असमर्था अशक्ता, [5]ह्रियेति शेषः । भ्रातुरनपराधत्वं मन्त्रणा समर्थयितुमुपक्रमते— तथापि प्रभवामीति किमपि

---

१. 'बुद्ध—ण मे सम्पदं इमाए' छ. पाठः. २. 'इं । सुदं अहोहिं । मद—सहि! कीरिसो? बुद्ध—मम तुए सम्पदं कोमार' क, 'इं? सुदं एव्वं अहोहिं । ण मे सम्पदं इमाए' ज, 'इं? सुदं अहोहिं । जधा ण मम तुए सम्पदं कोमार' झ. ज. पाठः. ३. 'मुहं पि संपदं दे' क. झ. ज, 'मुहं पि अज्ज दे' घ. च. ट, 'मुहं सम्पदं दट्ठुं' छ. ज. पाठः

---

१. 'वर्धकया' ख. ङ. छ. झ. पाठः. २. 'क्रमलङ्घनं' क. ग. ङ. ज. पाठः. ३. 'अनवस्थानं' ज. पाठः. ४. 'बुद्धिप्रक्षोभः' ङ. ख. पाठः. ५. 'त्रपा लज्जयेति' ग. पाठः

लवङ्गिका — साहीणो दे अअं जणो ।

(स्वाधीनस्ते अयं जनः ।)

मदयन्तिका — चिट्ठदु[3] दाव मम भादुणो दुस्सीळदा, अवरिट्ठाणअं च । तुह्मेहिं पि ईरिसो वि सम्पदं जहचित्तमणुवट्टणीओ जेण

मन्त्रयिष्यामि । तथापीत्यपराधः कृतस्तेन भवतु नामेत्यर्थः । प्रभवामि प्रियसखीत्वाद् युष्मानिगृह्य वक्तुमहमधिकृतास्मीत्यर्थः । किमपीति यथामतिमातं किञ्चिदिति तत् सोढव्यमिति प्रार्थना ।

अथ तदनुमोदनेनैव स्वामिलषितावतरणाय विस्रम्भसल्लापस्यावकाशं वैदग्ध्याद् ददाति — स्वाधीनस्ते अयं जनः । स्वाधीनः तव वशे वर्तते, अयं जनः मालती अहं च । अनेन त्वद्वचसि न कदाचिदस्माकमीर्ष्येति द्योतयति ।

अथ सुहृद्भावेनोपालब्धुमुपक्रमते — तिष्ठतु तावन्मम भ्रातुर्दुश्शीलता, अपरिष्ठानकं च । दुश्शीलता दुष्टस्वभावता, अपरिष्ठानकं चैपल्यं च, तिष्ठतु नेदानीं तदुच्यत्, तथात्वस्य प्रसिद्धत्वादित्यर्थः । युष्माभिरपि ईदृशोऽपि साम्प्रतं यथाचित्तमनुवर्तनीयः, येन भर्ता एव इति । अपिशब्दो युष्माकमपि सापराधत्वमस्त्येव, न केवलं तस्येति समुच्चिनोति । ईदृशः दुश्शीलत्वादिविशिष्टः, अपिर्विरोधे, तस्यान्यैरसेव्यत्वेऽपीत्यर्थः साम्प्रतं पाणिग्रहणे निर्वृत्ते, यथाचित्तं चित्तमनतिक्रम्य, इच्छासदृशमित्यर्थः, अनुवर्तनीयः परिचरणीयः । निर्गुणोऽप्यनुवर्तनीय इति किमियं राजाज्ञेत्यत्राह — येन भर्तेति । येनेति निमित्तप्रतिपादकमव्ययं, इदं यस्मात्तस्मादित्यर्थः । अनेन श्रुतिस्मृत्यो राजाज्ञावदविचारणीयत्वं व्यज्यते,

"अशीलः कामवृत्तो वा गुणैर्वा परिवर्जितः ।
साध्व्या स्त्रियोपचर्यः स्यात् सततं देववत् पतिः ॥"

१. 'णो अअं' घ, 'णो क्खु अअं' ङ. पाठः. २. 'चिट्ठदु जेव्व म' क. ख. ग, 'चिट्ठदु मम' घ. पाठः. ३. 'वि एसो सम्पदं' ज. पाठः.

१. 'चापलं' ख. पाठः.

बुद्ध—अह इं[2] । 'ण मे इमाए कोमारबन्धईए पओअणं' ति ससवहं पडिण्णं काऊण वासभवणादो णिग्गदो ।

(अथ किम् । 'न मे अनया कौमारबन्धक्या प्रयोजनमि'ति सशपथं प्रतिज्ञां कृत्वा वासभवनान्निर्गतः ।)

मदयन्तिका—(कर्णौ पिधाय) अहो अदिक्कमो! अहो पमादो! सहि लवङ्गिए! असमत्थह्मि दे मुहं[3] दंसिदुम् । तह वि पभवामि त्ति किं पि मन्तिस्सम् ।

(अहो अतिक्रमः! अहो प्रमादः! सखि लवङ्गिके! असमर्थास्मि ते मुखं द्रष्टुम् । तथापि प्रभवामीति किमपि मन्त्रयिष्यामि ।)

---

अपराधमेवोपन्यस्यति—अथ किम् । 'न मे अनया कौमारबन्धक्या[1] प्रयोजनमि'ति सशपथं प्रतिज्ञां कृत्वा वासभवनान्निर्गतः इति प्रवेशकोक्तमेव सङ्घटयति। कर्णौ पिधाय श्रवणपुटौ हस्ताभ्यामाच्छाद्य,

"गुरोर्यत्र परीवादो निन्दा वापि प्रवर्तते ।
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ॥"

इत्यादिस्मरणात् साधुनिन्दाश्रवणस्य प्रायश्चित्तं विधायेत्यर्थः । अहो अतिक्रमः! अहो प्रमादः! अतिक्रमः क्रमातिलङ्घनं,[2] कुलकन्याविषये तथा वक्तुमयुक्तत्वात् । तत्र हेतुः—प्रमादः अनवधानम्[3] । अहो इत्याश्चर्ये । महानुभावस्य तस्य कथमीदृशो बुद्धिक्षोभः[4] सञ्जात इत्यर्थः । तदपराधेन लज्जिता आह— सखि लवङ्गिके । असमर्थास्मि ते मुखं द्रष्टुम् । असमर्था अशक्ता, ह्रियेति[5] शेषः । भ्रातुरनपराधत्वं भङ्ग्या समर्थयितुमुपक्रमते— तथापि प्रभवामीति किमपि

---

१. 'बुद्ध—ण मे सम्पदं इमाए' छ. पाठः. २. 'इं । सुदं अहोहि । मद—सहि! कीरिसो? बुद्ध—मम तुए सम्पदं कोमार' क, 'इं? सुदं एव्वं अहोहि । ण मे सम्पदं इमाए' ज, 'इं? सुदं अहोहि । जधा ण मम तुए सम्पदं कोमार' झ. ज. पाठः. ३. 'मुहं पि संपदं दे' क. झ. ञ, 'मुहं पि अज्ज दे' प. च. ट, 'मुहं सम्पदं दट्ठुं' छ. ज. पाठः.

---

१. 'बर्धक्या' ख. क. छ. झ. पाठः. २. 'क्रमलङ्घनं' क. ग. ङ. ज. पाठः. ३. 'अनवस्थानं' ज. पाठः. ४. 'बुद्धिप्रक्षोभः' क. झ. पाठः. ५. 'का लज्जयेति' ग. पाठः.

लवङ्गिका — साहीणो दे अअं जणो ।

(स्वाधीनस्ते अयं जनः ।)

मदयन्तिका — चिट्ठदु दाव मम भादुणो दुस्सीळदा, अवरि-ट्ठाणअं च । तुह्मेहिं वि ईरिसो वि सम्पदं जहचित्तमणुवट्टणीओ जेण

---

मन्त्रयिष्यामि । तथापीत्यपराधः कृतस्तेन भवतु नामेत्यर्थः । प्रभवामि प्रियसखीत्वाद् युष्मान्निगृह्य वक्तुमहमविकृतास्मीत्यर्थः । किमपीति यथाप्रति-भातं किञ्चिदिति तत् सोढव्यमिति प्रार्थना ।

अथ तदनुमोदमानेव स्वामिलषितावतरणाय विस्रम्भसल्लापस्यावकाशं वैदग्ध्याद् ददाति — स्वाधीनस्ते अयं जनः । स्वाधीनः तव वशे वर्तते, अयं जनः मालती अहं च । अनेन त्वद्वचसि न कदाचिदस्माकमीर्ष्येति द्योतयति ।

अथ सुहृद्भावेनोपालम्भमुपक्रमते — तिष्ठतु तावन्मम भ्रातुर्दुश्शी-लता, अपरिष्ठानकं च । दुश्शीलता दुष्टस्वभावता, अपरिष्ठानकं चपलत्वं च, तिष्ठतु नेदानीं तद्वक्तव्यम्, तथात्वस्य प्रसिद्धत्वादित्यर्थः । युष्माभिरपि ईदृशोऽपि साम्प्रतं यथाचित्तमनुवर्तनीयः, येन भर्ता एष इति । अपिशब्दो युष्माकमपि सापराधत्वमस्त्येव, न केवलं तस्येति समुच्चिनोति । ईदृशः दुश्शीलत्वादिविशिष्टः, अपिर्विरोधे, तस्यान्यैरसेव्यत्वेऽपीत्यर्थः साम्प्रतं पाणिग्रहणे निर्वृत्ते, यथाचित्तं चित्तमनतिक्रम्य, इच्छासदृशमित्यर्थः, अनु-वर्तनीयः परिचरणीयः । निर्गुणोऽप्यनुवर्तनीय इति किमियं राजाज्ञेत्यत्राह — येन भर्तेति । येनेति निर्भक्तिप्रतिरूपकमव्ययं, इदं यस्मात्तस्मादित्यर्थः । अनेन श्रुतिस्मृत्यो राजाज्ञावदविचारणीयत्वं व्यज्यते,

"अशीलः कामवृत्तो वा गुणैर्वा परिवर्जितः ।
साध्व्या स्त्रियोपचर्यः स्यात् सततं देववत् पतिः ॥"

---

१. 'णो अअं' घ, 'णो क्खु अअं' ड. पाठः २. 'चिट्ठदु जेव्व म' क. झ. ञ, 'चिट्ठदु मम' घ. पाठः. ३. 'वि एसो सम्पदं' ज. पाठः.

---

१. 'चापलं' झ. पाठः.

भत्ता एसो त्ति[1] । ण अ तुम्हे इमस्स[2] अणभिजादाक्खराहिक्खेवोवालम्भस्स[3][4] जं मूलं तं[5] जाणध ।

(तिष्ठतु तावन्मम भ्रातुर्दुश्शीलता, अपरिज्ञानकं च । युष्माभिरपि तादृशोऽपि साम्प्रतं यथाचित्तमनुवर्तनीयः येन भर्ता एष इति । न च यूयमस्यानभिजाताक्षराधिक्षेपोपालम्भस्य यन्मूलं तं जानीथ ।)

लवङ्गिका — अहो[6] कहं अक्खगअं जाणामो ?[7]

(वयं कथमात्मगतं जानीमः ?)

---

इति मनुवचनात् । तदपराधस्य न केवलं दुश्शीलं मूलमन्यदप्यस्तीत्याह — न च यूयमस्यानभिजाताक्षराधिक्षेपोपालम्भस्य यन्मूलं तज्जानीथ । अनभिजातानामकुलीनानामक्षरैर्वचनैराधिक्षेपः[1] परुषोक्तिः तेन उपालम्भो निन्दा, तस्य यन्मूलं निमित्तम् ।

तदुक्त्यभिप्रायं[2] लवङ्गिका जानाना अपि अजानानेवाह — वयं कथमात्मगतं जानीमः । आत्मगतं मनसि स्थितं कथं जानीमः 'वचनलिङ्गा हि वक्तुरभिप्रायाः' इति न्यायात् त्वया कथिते[3] ज्ञायते त्वदाकूतं[4], तत् कथ्यतामित्यर्थः । 'असन्तअं' इति पाठे असत् मिथ्याभूतमित्यर्थः, तस्य मूलभावादिति भावः । 'ण वाआगअं' इति पाठे वागगतमपि कथं न जानीम इति तद्विवक्षितार्थखण्डनाय साभिप्रायं वचनं[5], त्वद्भ्रातुर्दौश्शील्यमन्तरेण न किञ्चिन्मूलं तच्च तद्वाचैव व्यक्तमित्यर्थः[6] ।

---

१. 'त्ति । अण्णं च । ण अ' क, 'त्ति । अण्णं च । तुम्हे' झ. ञ. 'त्ति तुम्हे' छ. ज. 'त्ति । लव—ण तुम्हे' ट. पाठः. २. 'स्स इत्थीअण अणाभि', ३. 'जाददुरक्खर' क. पाठः. ४. 'म्भदूसणस्स' झ. ञ, 'म्भस्स मूलं जाणाहि' ट. पाठः. ५. 'तं ण आ' क. ख. च. छ. झ. ञ. पाठः. ६. 'लव—कहं' क. च. पाठः. ७. 'कहं वाआगदं पि, णाम ण जा' क, 'कहं वाआबअं पि ण जा' ख. च, 'कहं वा वाआगअं पि ण जा' छ, 'कहं असन्तं जा' ज, 'कहं वाआमन्तिदं वि ण जा' झ. ञ, 'कहं अन्तगअं जा' ट. पाठः.

---

१. 'अभिजातानां अमलिनानां' ख. पाठः. २. 'तदुक्त्यभिप्रायं' ग. पाठः. ३ 'कथितेन ज्ञा' ख. पाठः. ४. 'ते तथात्मकं त्वदाकूतं' ग. पाठः. ५. 'वचनं भ्रातु' क. ख, 'वचनं यद् भ्रातु' ग. पाठः. ६. 'वक्तव्यमित्यर्थः' क, 'वक्ष्यामीत्यर्थः' ख. पाठः.

मदयन्तिका — जं[1] दाणिं तस्सिं महाणुभावे माहवे किं[2] पि किळ माळदीएँ[3] वाआमत्तं[4] आसि तस्सिं सव्वलोअस्स[5] अदिभूमिं गदो पवादो, तं क्खु एदं विअंभदि[6] ।

(यदिदानीं तस्मिन् महानुभावे माधवे किमपि किल मालत्या वाङ्मात्रमासीत् तस्मिन् सर्वलोकस्यातिभूमिं गतः प्रवादः, तत् खल्वेतद् विजृम्भते ।)

---

उपालम्भमूलं विवृणोति — यदिदानीं तस्मिन् महानुभावे माधवे किमपि किल मालत्या वाङ्मात्रमासीत् तस्मिन् सर्वलोकस्यातिभूमिं गतः प्रवादः, तत् खल्वेतद् विजृम्भते । तस्मिन्निति शार्दूलविमर्दसमयदृष्टत्वात् माधवानुभवाभिनयः[1] । अथवा तस्मिन्निति शङ्करपुरप्रवेशाभिनयः । माधवे विषये किमपीत्यनुरागविषयत्वसंवरणम्[2], अन्यस्मै दत्ताया अपरस्मिन्ननुरागकथनस्यानौचित्यात् । किलेत्यैतिह्ये, मयापि श्रुतं कथ्यते, न मयि रोषः कार्य इति भावः । वाङ्मात्रं सख्यादीनां मिथो वचनमेव, विवाहकार्यस्यान्यत्र निर्वृत्त[3]त्वात् ; अथवा 'दिट्ठिआ वड्ढसि पडिवण्णचेअणो महाभाओ',

'तत्कामं प्रभवति पूर्णपात्रवृत्त्या
स्वीकर्तुं मम हृदयं च जीवितं च ।' (VI. 1.),

'परिच्छिदो क्खु एसो पसादो' इत्यादिरूपं वाङ्मात्रं ; आसीत्, तस्मिन् विषये सर्वलोकस्य आबालवृद्धस्य सर्वस्य जनस्य अतिभूमिं परां काष्ठां, सर्वदा सर्वत्रोद्घुष्यमाणत्वात्, प्रवादः अपवादः । इदानीमतिभूमिं गतः प्रवाद इति यदित्यन्वयः । अनेन 'अनुरागप्रवादस्तु वत्सयोः सार्वलौकिकः'

---

१. 'लव—तव भाउणो दुस्सीलमन्तरेण कीमूळम् ? मद—जं दाणिं' ट. पाठः. २. 'वे किं पि' घ. ङ. पाठः. ३. 'किं वि माल' ट. पाठः. ४. 'ए तारामेत्तअं' ङ. थु. पाठ. ५. 'त्तअं' क. ख. ग. ङ. च. झ. ञ. ट. पाठः. ६. 'दि । तहिं अ सव्व' क, 'दी, सो एसो सव्व' ज. पाठः.

---

१. 'अनुभावाभिनयः' ग. पाठः. २. 'विषयसंवरणं' ङ. पाठः. ३. 'निवृत्त' क. ख. ङ. पाठः.

ता पिअसहि! जह से भत्तुणो अवक्खाहिणिवेसो णिरवसेसं हिअआदो उद्धरीअदि तह करेध। अण्णधा महादोसो त्ति जाणिदं भोदु।

(तत् प्रियसखि! यथास्या भर्तुरपक्षाभिनिवेशो निरवशेषं हृदयादुद्ध्रियते तथा कुरुत। अन्यथा महादोषः इति ज्ञातं भवतु।)

---

इत्यादि पूर्वोक्तमुपायोजयति। तत् तथा भूतं वस्तु, खलुरवधारणे, एतत् नन्दनपरुषवचनं भूत्वा विजृम्भते परिणमति, तन्मनसि कृत्वा कौमारबन्धकीति चारित्रदूषणं दुर्भाषणं तेन प्रयुक्तमित्यर्थः।

तत् प्रियसखि! यथास्या भर्तुरपक्षाभिनिवेशो निरवशेषं हृदयादुद्ध्रियते तथा कुरुत। अन्यथा महादोष इति ज्ञातं भवतु। भर्तृहृदयादस्या मालत्या अपक्षाभिनिवेशः विरुद्धपक्षानुरागः निर्बन्धः, तदाशङ्केत्यर्थात्, निरवशेषं साकल्येन उद्ध्रियते अपोह्यते यथा तथा कुरुत तथा तदावर्जनं सर्वात्मना कर्तव्यम्। कुरुतेति बहुवचनेन मौग्ध्यान्मालत्या अपरिज्ञानेऽपि युष्माभिः तदात्मभूताभिः सा शिक्षणीया रक्षणीया चेति द्योतयति। विपक्षे बाधकमाह — अन्यथा तथा युष्माभिरक्रियमाणे, महादोषः महद् व्यसनं, दम्पत्योः परस्परविरोधे गृहस्यैव नाशप्रसङ्गात्, कदाचिद् दुष्टायाः स्त्रियोऽपरित्यागोऽधिवेदनं वापि सम्भाव्यत इति भङ्ग्या सूचयति —

"विधिवत् प्रतिगृह्यापि त्यजेत् पत्नीं विगर्हिताम्।
व्याधितां विप्रदुष्टां वा छद्मना चोपपादिताम्॥"

इति,

"मद्यपासत्यवृत्ता च प्रतिकूला च या भवेत्।
व्याधिता चाधिवेत्तव्या हिंसार्थघ्नी च सर्वदा॥"

---

१. 'साहए जह' क. पाठः. २. 'ह एस भ' क. ख. ङ. च. ज. झ. ञ, 'इ क्खस्स भ' छ. पाठः. ३. 'भादुणो' छ. पाठः. ४. 'उवक्ख' क. ज. पाठः. ५. 'अण्णहा' ङ. पाठः. ६. 'महान्तो पमादो त्ति' ज. पाठः.

---

१. 'मुपयोजयति' ख. पाठः. २. 'बर्धकीति' क. ख. ग. छ. झ. पाठः. ३. 'कुरुत। तत्र त 1' ब. पाठः. ४. 'कन्या' ख. ङ. झ. पाठः.

णिक्कम्पदारुणा क्खु अम्मकाओ, दूमाअन्ति हिअअं मणुस्साणं ईरिसादो दुरभिसङ्गादो त्ति मा भणह मदअन्तिआए ण कधिदं त्ति ।

(निष्कम्पदारुणाः खलु स्त्रियः, परितापयन्ति हृदयं मनुष्याणां ईदृशाद् दुरभिषङ्गादिति मा भणत मदयन्तिकया न कथितमिति ।)

इति, 'सर्वस्त्वप्रियवादिनी' इति च मनुवचनात् । ज्ञातं भवत्विति उपदेशत्वेन इदं गृह्यतामित्यर्थान्तरसङ्क्रमितवाच्येन ध्वनिना व्यज्यते ।

त्यागादेः सम्भावितस्य हेतुं समर्थयति — निष्कम्पदारुणाः खलु स्त्रियः, परितापयन्ति हृदयं मनुष्याणामीदृशाद् दुरभिषङ्गादिति । निष्कम्पाः ईप्सितार्थस्थिरनिश्चयाः दारुणाः अनुरागपरवशेऽपि जने निष्कारुण्याः, खलु प्रसिद्धौ, 'न च दीर्घे कठिनाः खलु स्त्रियः', 'किं क्रूरं स्त्रीहृदयम्' इत्यादिना सहृदयैः समर्थितोऽयमर्थ इत्यर्थः । ईदृशात् मालतीप्रवृत्तिसदृशाद् दुरभिषङ्गाद् दुष्टाल्लोकद्वयविरुद्धाद्, भर्तारमन्तरेण यत्र कुत्रचित् प्रवृत्तादनुरागात् । इतिर्हेतौ । मनुष्याणामित्यनवस्थितप्रेमत्वं व्यज्यते ।

'प्रमदास्वनवस्थितं नृणां न खलु प्रेम चलं सुहृज्जने ।'

इत्युक्तेः, 'मनुष्यजातेश्चित्तानित्यत्वात्' इति वात्स्यायनवचनाच्च । यतः परितप्ताः त्यागादिष्वपि प्रवर्तन्ते, अतोऽन्यथा महादोष इति ज्ञातं भवत्वित्यन्वयः ।

"आकेशग्रहणान्मित्रमकार्यात् सन्निवर्तयेत् ।
अवाच्यः कस्यचिद् भवति कृतयत्नो यथाबलम् ॥"

इति वचनाद् आत्मनो निर्दोषत्वायाह — मा भणह । मा भणत मदयन्तिकया न कथितमिति । मदयन्तिकयेति सहपांसुक्रीडासमुपजातसौहार्दविस्रम्भत्वं ध्वन्यते । अयमर्थो जानानयापि मदयन्तिकया हन्त ! नास्मभ्यं कथितः इति पश्चान्मा वदत, पूर्वमेव मयोपदिष्टत्वादित्यर्थः ।

---

१. दारुणासु [illegible]आसु दूमा' ज, 'दारुना अम्म' [illegible] ञ. पाठः. २, 'दुम्मावेदि' क. ज. पाठः. ३. 'त्ति । मा भणिस्सध' क. 'त्ति जाणह । मा' ज. 'त्ति मा णं भ' [illegible]. ञ. पाठः. ४. 'भणिस्सथ' क. [illegible]. ज, 'भण' छ. ज. पाठः. ५. 'आए कधिदं' क. [illegible]. ज. [illegible]. ञ. पाठः.

---

१. 'उपदेशः, तेनेदं' क. पाठः. २. 'वरं' [illegible]. पाठः. ३. 'त, तत्पूर्वे' ञ. पाठः.

लवङ्गिका — अइ असम्बद्धलोअप्पवादमोहिदे! अवेहि। ण तुए सह मन्तइस्सम्।

(अयि असम्बद्धलोकप्रवादमोहिते! अपेहि। न त्वया सह मन्त्रयिष्यामि।)

मदयन्तिका — सहि! पसीद। अहवा ण तुम्हे पुढमं भणिदाओ। चिट्ठद। किं च अह्ये सच्चं जेव्व माहवमअजीविदं मालदिं जाणामो।

(सखि! प्रसीद। अथवा न यूयं प्रथमं भणिताः। तिष्ठत। किञ्च वयं सत्यमेव माधवमयजीवितां मालतीं जानीमः।)

---

प्रणयकुपिताह — [अयि] असम्बद्धलोकप्रवादमोहिते! अपेहि। न त्वया सह मन्त्रयिष्यामि। असम्बद्धेन असत्यविषयत्वादघटितेन लोकस्येतरजनस्य प्रवादेन मोहिते व्याकुलितहृदये, अपेहि पुरतोऽपसर। त्वया सह सल्लापं न करिष्यामि, उन्मत्तैः सह सम्भाषणस्यानौचित्यादिति भावः।

अथ तां प्रसादयन्ती स्वोक्तेः परमार्थत्वसमर्थनेन 'असम्बद्धलोकप्रवादमोहिते' इति तदुक्तिं प्रतिक्षिपति — सखि! प्रसीद मा कुप्य। अथवा न यूयं प्रथमं भणिताः। अथवेति पूर्वोक्तव्यावृत्तौ, यूयं मालत्यादयः, प्रथमं भणिताः लोकप्रवादपतितत्वेन मयोक्ताः अथवा भविष्यद्व्यसनं मया पूर्वमेव ज्ञापिता न भवथेति शेषः। तत्र युष्माकं विमतेरित्यर्थः। तिष्ठत किञ्चित् क्षणमात्रं तूष्णीमाध्वम्। ततो मदुक्तमर्थं संवादयामीति भावः। संवादनायोपक्रमते — किञ्च वयं सत्यमेव माधवमयजीवितां मालतीं जानीमः। वयमिति बुद्धरक्षिताग्रहणम्। सत्यमेव न लोकप्रवादमात्रेणेत्यर्थः। माधवमयजीवितां माधवात्मकप्राणाम्। तदप्राप्तौ मरणादेरपि सम्भाव्यत्वमनेन द्योतयति। न जानीम इति पाठे काक्वा किन्न जानीम इति व्यज्यते।

---

१. 'अयि असावधाणे! असं' क. झ. पाठः. २. 'लोअवाद' छ. पाठः. ३. 'तुए किं पि मन्तिदव्वं' क, 'तुए सह जप्पिस्सं' झ. ञ. पाठः. ४. 'द पसीद। अहवा' क. छ. झ. ञ. पाठः. ५. 'तुम्ह अकुडं' क. छ. झ. ञ. पाठः. ६. 'सच्चकं' क, 'सव्वं' ख. घ. पाठः. ७. 'माहवेकमअं' क. छ. ज. झ. ञ. पाठः. ८. 'जीअलोअं' क. घ. झ. ञ. पाठः. ९. 'दिं कहं ण जाणामो?' क, 'दिं ण जाणामो?' ख. घ. ङ. पाठः.

---

१. 'अपरतो' ख, 'परतो' ङ. छ. झ. पाठः. २. 'विमतेरिति' क. छ. ञ. पाठः. ३. 'मते—वय' क. ख. ग. ङ. झ, 'मते— किञ्च सत्यमेव' ज. पाठः.

केण वा कठोरकेअईगब्भविब्भमावअवदोब्बल्लणिव्वडिअसुन्दरत्तणं[1] माहवसहत्थणिम्माविदबउलावलीविरइदकण्ठावलम्बमेत्तसञ्जीवणं[2][3] मालदीए माहवस्स अ[4] पभादचन्दमण्डलापण्डरपरिक्खामरमणिज्जदंसणं ण विहाविदं सरीरं। किञ्च तस्सिं[5] दिअहे कुसुमाअरुज्जाणपेरन्तरच्छामुहसमागमे सविब्भमुल्लसिदकोदूहलुल्लाणं[6] सविलासमसिणसंवलणचारुतारआविराअन्तविब्भमा[7][8] अणङ्गसङ्गीआआरिअसंव्वादरोवदेसणिक्किमद्दणिअवेअड्ढिमुद्धमणोहरा[9][10][11], मए[12] वि ण[13] णिरूविदा इमाणं दिट्ठिसंभेदा। किञ्च[14] मम भादुणो दाणवुत्तन्त सुणिअ तक्खणुत्तरङ्गुव्वेअव्वइअरमिलाअन्तदेहसोहं[15][16] उव्वत्तमाणमूलबन्धणं[17][18] विअ ण लक्खिदं हिअअं। किञ्च[19] मे अवरं पि सुमरिदं।

युष्माभिः कथं ज्ञायत इत्याशङ्क्य आबालगोपालं ज्ञातोऽयमर्थ इत्याह— केन वा कठोरकेतकीगर्भविभ्रमावयवदौर्बल्यपृथग्भूतसुन्दरत्वं माधवस्वहस्तनिर्मितवकुलावलीविरचितकण्ठावलम्बमात्रसञ्जीवनं मालत्या माधवस्य च प्रभातचन्द्रमण्डलापाण्डरपरिक्षामरमणीयदर्शनं न विभावितं शरीरम्। कठोरस्य

१. 'णविसेसं माह' क. ज. झ, ञ. पाठः. २. 'लक्खणमेत्त' झ. पाठः. ३. 'सन्धारिदजीवणं' झ. ञ. पाठः. ४. 'वणं विअसहीए माल' छ पाठः. ५. 'तद्दिअसे' झ. ञ. पाठः ६ 'कोदूहलुप्फुल्लल्लोअणविलास' क, 'कोदूहलुप्फुल्लदिअअवेल्लसम्मदविलास' छ, 'कोऊहलुप्फुल्लपरिसरुव्वेल्लमाणउविलास' ज, 'कोदुहलुप्फुल्लपसरन्तणअणुप्पलबहलविलास' झ. ञ. पाठः. ७. 'सवारचारु' क. छ. झ, 'सिणिद्धसञ्चरण' ज. पाठः. ८. 'विअम्भमाणाणङ्ग' ज. पाठः. ९. 'अणङ्गणआआरिअ' क. झ. ञ, 'अणङ्गसिङ्गाराआरिअ' छ. ज. पाठः १०. 'सव्वाअलोपदेस' ज. पाठः. ११. 'महुरा' क. झ, ञ. पाठः. १२. 'तुए' झ. ञ. पाठः. १३. 'ण णिरूविदा' क. ख. घ. च. छ. ज. झ. ञ, 'णणु णिरूविदा' ट. पाठः. १४ 'च भादुणो' ख. पाठः. १५ 'तक्खणुच्छलिदगम्भीरावेअव्वइअरआरिदमिलाअन्त' क, 'तक्खणुव्वत्तगंभीरुव्वेअवइअरमिलाअन्त' छ, 'तक्खणुवत्तगंभीरुव्वेअवइअरन्धआरिआमिलाअन्त' ज, 'तक्खणुच्छलिदगंभीरावेअव्वइअरमिलाअन्त' झ. ञ. पाठः. १६ 'सोहाणं' क. ज. झ. ञ. पाठः. १७. 'उक्खडमाण' छ, 'उक्खण्डिअमाण' ज. पाठः १८. 'मूलं विअ' छ. झ. पाठः. १९. 'च मए अवरं' क. छ, 'च मए एवं अवरं' ज, 'च एदं पि अवरं सुमरिदं मए।' झ. ञ. पाठः.

(केन वा कठोरकेतकीगर्भविभ्रमावयवदौर्बल्यपृथग्भूतसुन्दरत्वं माधवस्वहस्तनिर्मितबकुलावलीविरचितकण्ठावलम्बमात्रसञ्जीवनं मालत्या माधवस्य च प्रभातचन्द्रमण्डलापाण्डरपरिक्षामरमणीयदर्शनं न विभावितं शरीरम् । किञ्च तस्मिन् दिवसे कुसुमाकरोद्यानपर्यन्तरथ्यामुखसमागमे सविभ्रमोल्लसितकौतूहलयोः सविलासमसृणसञ्चरणचारुतारकाविराजमानविभ्रमा अनङ्गसङ्गीताचार्यसर्वादरोपदेशनिर्मितनिजवैदग्ध्यमुग्धमनोहरा मयापि ननु निरूपिता अनयोर्दृष्टि-

परिणतस्य केतकीगर्भस्य केतकीकुसुमाभ्यन्तरपत्रस्य विभ्रमो विलास इव विभ्रमो येषाम्, आपाण्डरसुकुमारलावण्यत्वाद्, अवयवानां दौर्बल्येन ग्लान्या पृथग्भूतं स्वाभाविकाद्व्यतिरिक्तं सौन्दर्यं यस्य; कण्ठावलम्बः कण्ठभूषणं तन्मात्रं सञ्जीवनं प्राणधारणौषधं यस्य। मालत्याः शरीरं, माधवस्य चेति शरीरं समुच्चिनोति। विभावितं निरूपितम्। किञ्च तस्मिन् दिवसे कुसुमाकरोद्यानपर्यन्तरथ्यामुखसमागमे सविभ्रमोल्लसितकौतूहलयोः सविलासमसृणसञ्चरणचारुतारकाविराजमानविभ्रमा अनङ्गसङ्गीताचार्यसर्वादरोपदेशनिर्मितनिजवैदग्ध्यमुग्धमनोहरा मयापि ननु निरूपिता अनयोर्दृष्टिसंभेदाः। तस्मिन्नित्यनुभवपरामर्शः, शार्दूलविमर्दसंभ्रमजनिते समागमे सविभ्रममुल्लसितमुद्भूतं कौतूहलं परस्परदर्शनाभिलाषो[1] ययोः। विभ्रमः त्वराजनितो भूषणादिविन्यासव्यत्यासः।

'विभ्रमस्त्वरयाकाले भूषास्थानविपर्ययः।'

इति धनिकः। सविलासमसृणेन सलीलतया अनुल्बणेन सञ्चरणेन चारुः शोभना तारका कनीनिका तया विराजमानाः विभ्रमाः करचरणादीनां चेष्टाविशेषाः येषु, नयनविलासमूलत्वाच्छेषाङ्गविभ्रमचारुत्वस्य, 'सर्वे भावाश्चक्षुषि व्यज्यन्ते' इति न्यायात्। अनङ्गरूपस्य सङ्गीताचार्यस्य नर्तकस्य सर्वादरोपदेशेन सर्वेण समग्रेण आदरोपदेशेन सच्छिष्यलाभजनितपक्षपातकृतेन शिक्षादानेन निर्मितनिजवैदग्ध्या स्वतो मुग्धा अत एव मनोहराः। मयापीति नान्यवचसा मत्प्रत्ययः, मयापि साक्षान्निरूपिता दृष्टाः। नन्विति संवादे, युवाभ्यां सहेत्यर्थः। नेति वा पाठः। तदानीं 'किं चे'त्यत्र किमा सम्बन्धः, किं न निरूपिता इत्यर्थः। चकारो हेत्वन्तरसमुच्चये। अनयोः

१. 'परस्परामिलाषो' ख. पाठः.

सम्भेदाः । किञ्च मम भ्रात्रे दानवृत्तान्तं श्रुत्वा तत्क्षणोत्तरङ्गोद्वेगव्यतिकरम्लायद्देहशोभमुद्वर्तमानमूलबन्धनमिव न लक्षितं हृदयम् । किञ्च मे अपरमपि स्मृतम् ।)

लवङ्गिका—[1] सहि ! किं दाणिं अवरम् ?[2]

(सखि ! किमिदानीमपरम् ?)

---

मालतीमाधवयोर्दृष्टिसंभेदाः दृष्टीनां परस्परव्यतिकराः । हेत्वन्तरमाह— किंच मम भ्रात्रे दानवृत्तान्तं श्रुत्वा तत्क्षणोत्तरङ्गोद्वेगव्यतिकरम्लायद्देहशोभमुद्वर्तमानमूलबन्धनमिव न लक्षितं हृदयम् । मम भ्रात्रे नन्दनाय 'परमेश्वरेण स्वयमेव मालती प्रतिपादिता' इति पुरुषमुखात्[1] श्रुत्वा तत्क्षण एवोत्तरङ्गस्य उपर्युपरि प्रसरतः उद्वेगस्य क्षोभस्य व्यतिकरेण[2] सम्बन्धेन दहनस्पर्शेनेव[3] कुसुमस्य म्लायन्ती देहस्य शोभा कान्तिर्यस्मिन् येन वा, मनस्तापस्य शरीरतापनान्तरीयकत्वात् ,

'मनः शरीरयोस्तापः परस्परमभिव्रजेत्[4] ।'

इति पूज्यवाहटोक्तेः; अत एवोद्वर्तमानमूलबन्धनं मनसोऽपीन्द्रियत्वात् चक्षुरादिवदधिष्ठानस्थिरत्वाद् हृदयग्रन्थिशब्दवाच्यात् निजाधाराद्विघटितसन्धिबन्धमिवेत्यर्थः । हृदयं अन्तःकरणम् । किंच लक्षितं दृष्टमेव लिङ्गानेयत्वान्मनोवृत्तेर्वैवर्ण्यरूपस्य लिङ्गस्य च झटिति स्फुरणादित्यर्थः । किञ्च मे अपरमपि स्मृतम् । किञ्च अन्यच्च, वदामीति शेषः, अपरं अन्यदपि वस्तु, स्मृतं पूर्वं विस्मृतमिदानीं प्रतिभातमित्यर्थः । मे स्मृतमिति 'मतिबुद्धिपूजार्थेभ्यश्च' (३-२-१८) इति मत्यर्थत्वाद्[5] वर्तमाने क्तः, "क्तस्य च वर्तमाने" (२-३-६७) इति षष्ठी ।

तद्विवक्षितज्ञा प्रश्नद्वारेण तत् प्रस्तावयति स्वचिकीर्षितानुगुण्यात्— सखि ! किमिदानीमपरम् ? स्मृतमित्यनुक्तिः त्वरां द्योतयति ।

---

१. 'लव— किं' क. ख. छ. ज. झ. ञ. पाठः.

२. 'किं अण्णं पि सुमरिदं ?' ख. पाठः.

---

१. 'मुखात्' ग. पाठः. २. 'करणेन' ज, पाठः. ३. 'स्पर्शेनेनेव' ग. पाठः. ४. 'मनुव्रजेद्' ख. पाठः. ५. 'बुद्ध्यर्थत्वाद्' ग. पाठः.

मदयन्तिका- जं तस्स मम जीविदप्पदाइणो महाणुभावस्स चेअणालम्भपिअणिवेदिआए मालदीए भअवदीए विअड्ढवअणोवण्णासेण चोदिदेण हिअअं च जीविदं च माहवेण पारितोसिअत्तणेण सअंगाहे णिउत्तं। अह लवंगिए! तुए एव्व फणिदं 'पडिच्छिदो क्खु णो पिअसहीए अअं पसादो' त्ति।

(यत्तस्य मम जीवितप्रदायिनो महानुभावस्य चेतनालम्भप्रियनिवेदिकायै मालत्यै भगवत्या विदग्धवचनोपन्यासेन चोदितेन हृदयं च जीवितं च माधवेन

स्फुटमर्थं प्रकाशयति— यत्तस्य मम जीवितप्रदायिनो महानुभावस्य चेतनालम्भप्रियनिवेदिकायै मालत्यै भगवत्या विदग्धवचनोपन्यासेन चोदितेन हृदयं च जीवितं च माधवेन पारितोषिकत्वेन स्वयङ्ग्राहे नियुक्तम्। तस्येति स्वरूपमाधुर्यशौर्यदाक्षिण्यादिविशिष्टतयानुभवो व्यज्यते। मम जीवितप्रदायिन इति प्राणदानात्परस्योपकारस्याभावात्।

"एकतः क्रतवः सर्वे समाप्तवरदक्षिणाः।
एकतो भयभीतस्य प्राणिनः प्राणरक्षणम्॥"

इति न्यायस्तुतस्य प्राणदानस्य करणात् परमोपकारित्वं तस्य, स्वस्याश्च कृतज्ञतया तत्प्रियान्वेषणं तद्दर्शनादिषु औत्सुक्यं च द्योतयति। व्यसनसमागमस्य कामसूत्रोक्तस्य च साफल्यमनेन प्रकाशयति कविः। महानुभावस्य तादृग्व्यालव्यापादनसमर्थो निरतिशयः प्रभावो यस्येति तत्पराक्रमे अद्भुतबुद्धिः प्रकाश्यते। चेतनेत्यादिना 'दिट्ठिआ वड्ढसि पडिवण्णचेअणो महाभाओ' इत्युक्तमनुस्मारयति। भगवत्या कामन्दक्या विदग्धवचनोपन्यासेन अग्राम्येण 'वत्स माधव! दिष्ट्या वर्धितोऽसि। मालत्याः सोऽयमवसरः प्रीतिदायस्य' इत्येवंरूपेण वचनप्रस्तावेन हेतुना। 'प्राणसमा त्वया सम्भावनीया' इति वचनस्य

१. 'जं क्खु तस्स' क. ब, 'जं क्खु मम' ज. पाठः. २. 'बापडिलम्भ' क. ख. झ. ञ, 'णोपालम्भ' छ पाठः. ३. 'बदीविअअड्ढ' क. छ. ज. झ. ञ. पाठः. ४. 'बोधिदेण', ५. 'गाहसाहसे णिउत्तं', ६. 'अह अ लवं', ७. 'ए ताहिं तुए' क. झ. ञ. 'ए वि ताहिं एव्वं द' छ, ए क्खु एव्वं अ' ख. पाठः.

१. 'सुआओ' क. छ. ज. झ. पाठः. २. 'परिरक्षणम्' ख. झ. पाठः.

पारितोषिकत्वेन स्वयङ्ग्राहे नियुक्तम् । अथ लवङ्गिके ! त्वयैव भणितं 'प्रतीष्टः खलु नः प्रियसख्या अयं प्रसादः' इति ।)

लवङ्गिका— कदमो उण सो महाणुहाओ ? विसुमरिदं मए ।
(कतमः पुनः स महानुभावः ? विस्मृतं मया ।)

मदयन्तिका — सहि ! सुमरेहि सुमरेहि, जेण तस्सिं दिअहे विअडदुट्ठसद्दूलववाअगोअरं गदा असरणा, मुहुत्तसण्णिहिदेण पीअर-भुअत्थम्भसंभाविआ णिक्कारणबन्धवेण सअलभुअणेक्कसारणिअदेहोवहार-

---

बहुजनसमक्षं ग्राम्यत्वात्, विच्छित्त्या व्यञ्जनस्य च चमत्कारकारित्वादित्यर्थः । चोदितेन प्रेरितेन, माधवेन स्वयङ्ग्राहे स्वयमेव बलाद्ग्रहणे, नियुक्तम् 'यद्यालब्धाणितसुहृत्प्रमोहमुग्धमपि'त्यादिना समर्पितम् । अथ लवङ्गिके ! त्वयैव भणितं 'प्रतीष्टः खलु मे प्रियसख्या अयं प्रसादः' इति । त्वयैवेति या त्व-मिदानीं 'असम्बद्धलोकप्रवादमोहिते' इति मामधिक्षिपसि, कुप्यसि, अनल्प-बाष्पजलझलज्झलीविच्छिलीकृतकपोलतला मिथ्येदमिति रोदिषि च, सा त्वमेव तदानीमेवमनुभिततवती ; अहो तव कैतवमिति व्यञ्जयति ।

अथ मकरन्दविषये तस्याः प्रकृतं प्रेमबन्धमनुसन्धाय प्रस्तुतवस्तुविस्म-रणायार्थान्तरेण व्याक्षिपति — कतमः पुनः स महानुभावः ? विस्मृतं मया । पुनःशब्दो व्यावृत्तौ । आस्तां तावदिदं वस्त्वित्यर्थः । सः यस्त्वया 'तस्स मम जीविदप्पदाइणो' इति सूचितः स कतमः तत्र बहवः स्थिताः; तेषां मध्ये कः ?

सखि ! स्मर स्मर, तमित्यायाति, उपरि यच्छब्दात् ; येन तस्मिन् दिवसे विकटदुष्टशार्दूलावपातगोचरं गता अशरणा मुहूर्तसंनिहितेन पीवरभुज-स्तम्भसम्भाविता निष्कारणबान्धवेन सकलभुवनैकसारनिजदेहोपहारसाहसं कृत्वा

---

१. 'लव —अं । सहि कदमो' क. 'लव—सहि कदमो' खं. घ. ज. ब. पाठः. २. 'उण महा' क. झ. च. पाठः. ३. 'भाओ त्ति वि' क. ज. झ. ञ. पाठः. ४. 'दं विअ मे' घ. च. 'दं विअ मए ।' ज. पाठः. ५. 'जो तस्सिं' ख. पाठः. ६. 'विअडसावदोवाअगोअरं' घ. पाठः. ७. 'सद्दूलावदेसगोअरं' क, 'सावदवाअगोअरं' च. छ, 'सावदसद्देसकालगोअरं' झ. ण. पाठः. ८. 'णा तक्खणसण्णि' क. झ. ञ, 'णा क्खणसण्णि' ख. 'णा तक्खणसण्णि' ङ. च. ट, 'णा मुहुत्तसण्णि' ञ. पाठः. ९. 'ण जीविदप्पदाइणा पीअर' क. झ. ञ. पाठः.

साहसं कदुअ परिरक्खिदाह्मि[1]; [2]विढत्ता अ विअडमंसलुत्ताणपरिणाहि-[3]वक्खत्थलुज्जलिदजरठजज्जरिद[4][5]मुत्तालआपीडहारिणा [6]करुणाघणेण पस[7]किदे खुप्पन्तसअलणहाणिहाअवज्जपञ्जरप्पहारा; मारिदो अ सो [8]दुट्ठसावद-महारक्खसो ।

(सखि! स्मर स्मर, येन तस्मिन् दिवसे विकटदुष्टशार्दूलावपातगोचरं गता अशरणा मुहूर्तसंनिहितेन पीवरभुजस्तम्भसम्भाविता निष्कारणबान्धवेन सकलभुवनैकसारनिजदेहोपहारसाहसं कृत्वा परिरक्षितासि; विघृताश्च विकट-मांसलोत्तानपरिणाहिवक्षस्थलोज्ज्वलितजरठजर्जरितमुक्तालतापीडहारिणा करुणा-घनेन मत्कृते निमज्जत्सकलनखनिकायवज्रपञ्जरप्रहाराः; मारितश्च स दुष्ट-श्वापदमहाराक्षसः ।)

---

परिरक्षितासि । स्मर स्मरेति वीप्सया तत्रादरो ध्वन्यते । तस्मिन् दिवसे कृष्णचतुर्दशीदिने । विकटस्य विस्तीर्णस्य दुष्टशार्दूलावपातस्य तदुत्प्लवनस्य गोचरं विषयः । अशरणा हतविद्रावितपरिजनत्वाद् रक्षितृरहितेत्यप्रतीकारत्वं द्योतयति । क्षणसन्निहितेनेति पूर्वसंस्तवाभावः ख्याप्यते ।

'कह वि तुळग्गघडिआहि आगमसुद्धं'

इति सेतौ । स च निष्कारणबान्धवहेतुः । पीवराभ्यां पीनाभ्यां भुजस्तम्भाभ्यां वृत्तोत्तुङ्गकठिनायतत्वात् स्थूणाकाराभ्यां बाहुभ्याम्, सम्भाविता मध्ये प्रविश्य सदयमाश्लिष्य पृष्ठतः प्रतिष्ठाप्यानुगृहीता । निष्कारणबान्धवेन कारणं पूर्वोपकारादिकमन्तरेण बन्धुत्वमाश्रितवता,

'कार्यं विना भवति यः शरणं स बन्धुः ।'

---

१. 'सखि! जेण अ विअडसद्दूलावदारिआविअड' क. झ. ब, 'सखि! जेण दिढ-विअड' अ. पाठः. २. 'विस्सम्भता अ' छ. पाठः. ३. 'वक्खत्थलसम्मद्दणेण जरठ' क, 'वज्झत्थलसम्मद्दजज्जरिद' ज, 'वक्खत्थलेण जरठ' झ. ब. पाठः. ४. 'स्थलजज्ज-रिद' छ. पाठः. ५. 'दजवापीड' क. ज. झ. ब, 'दमुत्तागुणापीड' छ पाठः. ६. 'करुणेक्कमग्गेण' क. झ. न. पाठः. ७. 'द विसहिदा अतिदुट्ठसद्दूलणहसिहावज्ज-प्पहारा' क. झ. ब, 'दे पविसन्तसअल' छ, 'दे वि णिमज्जन्तसअल' ब. पाठः ८. 'दुट्ठसद्दूलो महा' क. पाठः.

इति लक्षितत्वात् । सकलभुवनैकसारम्यं सर्वेषां लोकानामेकीभूतस्य प्रशस्तांशस्य, सर्वगुणसमुदायाश्रयत्वात्, निजस्य देहस्येति. परमप्रेमास्पदत्वमाह, उपहारसाहसं व्याघ्रायार्पणरूपमविचारितकारित्वमनुग्राह्येत्यर्थः । प्रथमं मदर्थं श्वापदाय देहः समर्पितः, प्रहारश्चानुभूतः, पश्चाद् देवतोऽप्युज्जीवितः, स च हत इति तस्य स्वस्यां कारुण्यविन्नतां द्योतयति । परिरक्षितास्मीति । अहं तावद् रक्षिता; मया तु मन्दभाग्यया तद्विषये न किञ्चित् निवेदितमिति दैन्यं व्यज्यते । विधूताश्च विकटमांसलोत्तानपरिणाहिवक्षःस्थलोज्ज्वलितजरठजर्जरितमुक्तालतापीडहारिणा करुणाघनेन मम कृते निमज्जत्सकलनखनिकायवज्रपञ्जरप्रहाराः । विद्रुता विधूताः, 'कलङ्कसङ्घाडी विढत्ता' इति मुरारिः । विकटं कठिनविषमम् । 'विकटं तु विरूपं स्यात्' इति वैजयन्ती ।

'विकटेऽक्षरबन्धश्च कृत्स्नमेकत्र दुर्लभम् ।'

इति हर्षचरितोक्तवत् । मांसलं पीनं उत्तानमुन्नतं परिणाहि विशालं च यद्वक्षःस्थलं तस्मिन्नुज्ज्वलत् स्फुरत् जरठः उचितकालपाकावस्थिरः प्रहारबलात् शकलीभूतः मुक्तालतापीडः मौक्तिकावलीरूपा माला, तां धर्तुं शीलं यस्य तेन वा हारिणा सुन्दरेण, [करुणाघनेन] करुणा भूतानुकम्पैव धनं सर्वस्वं यस्य । करुणाघनेनेत्यनेन प्रत्युपकारनैरपेक्ष्यं ध्वन्यते । मम कृते मत्कार्यनिमित्तम्,

'कृते कानिष्ठिनेयस्य ज्यैष्ठिनेयं विवासितम् ।'

इति भट्टिकाव्यप्रयोगात् । आहतिवेगाद् वक्षःस्थले निमज्जतोऽन्तःप्रविशतः सकलस्य नखनिकायरूपस्य वज्रपञ्जरस्य निशितस्य कठिनतया कुलिशसमूहस्य प्रहारा आहननव्रणाः खुप्पन्त निमज्जत्, 'पङ्कखुप्पन्तवग(?) अइळकइसेण्णं' इति सेतूक्तेः । मारितश्च स दुष्टश्वापदमहाराक्षसः । श्वापदस्य महाराक्षसत्वारोपणं निर्दयत्वातिशयप्रतिपादनार्थम् । येन परिरक्षितास्मि, वज्रपञ्जरप्रहारा विधूताः, मारितश्च श्वापदराक्षसस्तं स्मरेति सम्बन्धः ।

१. 'परप्रेमा' ख. ग. ङ. छ. ञ. पाठः. २. 'उत्तालं' क. ग. ङ. ज. पाठः.

लवङ्गिका — हुं मअरन्दो ? (हुं मकरन्दः ?)

मदयन्तिका — (सानन्दं) सहि ! किं भणासि ?
(सखि ! किं भणसि ?)

लवङ्गिका — णं भणामि मअरन्दो त्ति ।
(ननु भणामि मकरन्द इति ।)

(सस्मितं शरीरमस्याः स्पृशन्ती संस्कृतमाश्रित्य)

वयं तथा नाम यथात्थ किं वदा-
म्ययं त्वकस्माद्विकलः कथान्तरे ।

---

स्मरणाभिनयेनाह — हुं मकरन्दः ? 'आमन्त्रणे भर्त्सने हुं' इति वैजयन्ती ।

पुनःश्रवणश्रद्धया पूर्वोक्तश्रवणमभिनयन्ती आह — सखि! किं भणसि?

तद्भावज्ञा पुनराह — ननु भणामि मकरन्द इति । नन्विति त्वया किं न श्रुतमित्यर्थः ।

अथ स्वाभिमतमार्गमवतीर्णायास्तस्या हृदयं प्रकाशयितुमाकारविशेषं स्वया दृष्टं विवृणोति — सस्मितमिति भावज्ञानं सूचयति । शरीरमस्याः स्पृशन्तीति प्रियतमनामश्रवणात् सपदि पुलकितत्वं प्रतीयते । संस्कृताश्रयणं निर्यन्त्रणोपालम्भकार्याय ।

वयं तथेत्यादि । वयमिति मालत्यादीनां सङ्ग्रहः, तथा तत्प्रकार-विशिष्टाः, नामेति प्राकाश्ये कुत्सने वा, तथा प्रसिद्धाः कुत्सिता इति वार्थः; यथा यत्प्रकारविशिष्टतया, आत्थ त्वं ब्रवीषि । ब्रुवो लटि आहादेशे, आहः थे च, मध्यमैकवचनस्य रूपमिदम् । पाणिग्रहणमन्तरेण पुरुषान्तरप्रणयविवश-तया लङ्घितमर्यादाः कुत्सिता एवेत्यर्थः । किं वदामि त्वया प्रमाणतः प्रति-पादितेऽर्थेऽन्यथाभावः किं वक्तुं शक्यत इत्यर्थः । अथवा वक्ष्यमाणस्यार्थस्य

---

१. 'मद — सहि' ख. पाठः २. 'न्दं) पिअसहि' क. ङ. म. ञ. 'न्दं) किं' च. पाठः. ३. 'किं किं भ' प. च. म. ञ. पाठः. ४. 'सस्पृहं' ङ. ञ. पाठः. ५. 'मवलम्ब्य)' प. पाठः. ६. 'यदात्थ' क. ङ. ज. पाठः. ७. 'यं न कस्माद्' क. ज. पाठः.

कदम्बगोलाकृतिमाश्रितः कथं
विशुद्धमुग्धः कुलकन्यकाजनः ॥ १ ॥

पीठिकाबन्धः, 'सर्वः परदोषनिरीक्षणे प्रगल्भते । स्वदोषं तु न विजानाति । अस्मिन्नर्थे किं वदामी'ति । अथवा किमिति प्रश्ने । 'मयोपलक्षितमर्थं वदामि किं? मयि मन्युं मा कृथाः' इत्यर्थः । तुर्विशेषे । अकस्मात् कारणमन्तरेण ।

'तमालश्यामलज्ञाने निर्बाधे जाग्रति स्फुटे ।
द्रव्यान्तरं तमः कस्मादकस्मादुपलभ्यते ॥'

इति चित्सुखाचार्यप्रयोगात्, 'आकस्मिकत्वप्रसङ्गः' इत्यादिप्रयोगाच्च । विकलः परवशः । कथान्तरे मालत्युपालम्भनार्थं प्रवर्तितायाः कथायाः सल्लापस्य मध्ये, इत्यनेनानुपक्रान्ते तत्प्रसङ्गे त्वेवमवस्थां मुञ्चेति किं ब्रूम इति द्योतयति । कदम्बगोलाकृति नीपतरुकुड्मलाकारं, महत्पुलकत्वात्, पुलकानां कदम्बमुकुलसाम्यप्रसिद्धेः । गोलशब्देन पिण्डमात्रवाचिनापि कदम्बसन्निधिना कुड्मलं लक्ष्यते । कथमित्याश्चर्ये । विशुद्धमुग्धः अनुचितस्थले रागाप्रवृत्तेः विशुद्धो निर्दोषः मुग्धः शाठ्यमशिक्षितः । अनेन वयं त्वविशुद्धाः शठाश्चेति व्यतिरेकं व्यञ्जयति । कुलकन्यकाजनः कुलपरिपालनैकव्रतः कन्यावर्गः । स्ववर्गव्यतिरिक्तत्वख्यापनाय जनग्रहणम् । अयं तु जनोऽन्यः, वयमन्ये इत्यर्थः । अत्र त्वमपि कस्मिंश्चिदनुरागेण कदर्थ्यमाना मिथ्यैव मालतीमुपालिप्ससे,

"यत्रोभयोः समो दोषः परिहारोऽपि वा समः ।
नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे ॥"

इति न्यायादिति विपरीतलक्षणया व्यज्यते । अत्र मोट्टायिताख्यो भावविशेषः प्रकाश्यते ।

'मोट्टायितं तु तद्भावभावनेष्टकथादिषु ।'

---

१. 'विदग्धमुग्धः' क. ध. पाठः

---

१. 'निर्बन्धे' ख. पाठः. २. 'द्रव्यान्तरे तमः' क. ग. घ, 'द्रव्यान्तरतमः' ख. पाठः. ३. 'लम्भार्थं' ख. क. ग. पाठः. ४. 'मुपालभसे' क. पाठः.

मदयन्तिका — (सलज्जं) सहि! कीस[2] मं उवहससि। णं भणामि[3] उव्वेअअदि तारिसस्स अप्पणिरवेक्खव्ववसाइणो कदन्तकवलिज्जन्त-जीविदबलामोडिअचाणअणगॅरुओवआरिणो[4] जणस्स संकहा[5] णामग्गहणं पि त्ति।

(सखि! कस्मान्मामुपहससि। ननु भणामि उद्वेजयति तादृशस्यात्म-निरपेक्षव्यवसायिनः कृतान्तकवलीक्रियमाणजीवितबलात्कारप्रत्यानयनगुरूप-कारिणो जनस्य सङ्कथा नामग्रहणमपि इति।)

इति धनिकः। सूक्ष्ममलङ्कारः, संलक्षितसूक्ष्मार्थप्रकाशनात्; अप्रस्तुतप्रशंसा च, कार्यमुखेन कारणस्य मकरन्दानुरागस्य प्रतीतेः; निदर्शना च, आकृति-सदृशीमाकृतिमित्युपमापरिकल्पनात् ॥ १ ॥

अथ लज्जया स्वाभिप्रायं छादयति — सखि! कस्मान्मामुपहससि कुतो हेतोर्मामन्यथा सम्भाव्योपालम्भसे। न खलु चिन्तितोऽर्थः पुलकस्वेद-कम्पादिहेतुः येनाहमुपहास्य इत्यर्थः[1]। तर्हि कोऽन्य इत्यत्राह — ननु भणामि उद्वेजयति तादृशस्यात्मनिरपेक्षव्यवसायिनः कृतान्तकवलीक्रियमाणजीवितबला-त्कारप्रत्यानयनगुरूपकारिणो जनस्य सङ्कथा नामग्रहणमपीति। उद्वेजयति भाययति। 'ओविजी भयचलनयोः' इति धातुः। भयग्रहणात् तत्कार्य-त्वेनापि पुलकादीनामुपपत्तिः समर्थ्यते। तादृशस्येति तृणीकृतशार्दूल-विक्रमत्वमाह — आत्मनिरपेक्षव्यवसायिनः स्वशरीरापायशङ्कारहितनिश्च-यस्य। कृतान्तेन यमेन; कृतान्ततया व्याघ्रोऽध्यवसीयते, संहर्तृत्वात्। अथवा तद्द्वारेणापि यमस्यैव संहर्तृत्वात् स एवोच्यते। कवलीक्रियमाणस्य भक्ष्यमाणस्य, न तु कवलीकरिष्यमाणस्येत्यवसरसन्निधाभिरिवं द्योत्यते। जीवि-तस्य बलात्कारतः प्रत्यानयनेन।

"अन्यजन्मकृतं कर्म दैवं पौरुषमैहिकम्।
विभक्ते कर्मणि त्रेधा श्रेष्ठमध्याधमत्वतः॥

1. 'मद— सहि' ख. पाठः. 2. 'किं मं' ज. म. पाठः 3. 'मि णिव्वावेदि मं ता' क. ञ, 'मि उव्वेअन्ति, ता', छ, 'मि णिव्वावअन्ति मं ता' झ. ब. पाठः 4 'गुरुदरोवआरिणो' क. पाठः. 5. 'कथासु णाम' क. झ. ञ, 'कहासेत्तस्स णाम' ज. पाठः. 6. 'णसुमरणाइं अ।' क, 'णसुमरणाइं।' झ. ञ, 'णं सुमरणं अ।' ज. पाठः

1. 'ह्रास्या इत्यर्थः' ज. पाठः.

तह तुए वि गाढणहरप्पहारवेअणालंभविस्सराविदसरीरसङ्गो सङ्कलिअमोहमीलन्तणेत्तकन्दोट्टजुअलो भूमिविळसिदासिलेट्ठिणिट्ठम्भधीरधारिदसरीरसारो पच्चक्खीकदो जेव्व मदअन्तिआणिमित्तमेत्तविच्छड्डिअमहामहग्घजीवलोओ महाभाओ त्ति ।

(तथा त्वयापि गाढनखरप्रहारवेदनालम्भविसारितशरीरसङ्गः सङ्कलितमोहमीलन्नेत्रनीलोत्पलयुगलो भूमिविलसितासियष्टिनिष्टम्भधीरधारितशरीरसारः प्रत्यक्षीकृत एव मदयन्तिकानिमित्तमात्रविच्छर्दितमहामहार्घजीवलोको महाभाग इति ।)

---

"दैवं पुरुषकारेण दुर्बलं ह्युपहन्यते ।
तथा दैवेन बलिना पौरुषं कर्म दुर्बलम् ॥"

इति सङ्ग्रहोक्तेः,

'बली पुरुषकारो हि दैवमप्यतिवर्तते ।'

इति वचनात् निश्चितमपि मरणं पुरुषकारसामर्थ्येन निवर्तितमित्यर्थः । गुरूपकारिणः परमानुग्रहशीलस्य, जनस्येति ताटस्थ्येनोक्तिः, स्वप्रणयसंवरणार्था सङ्कथा वृत्तान्तकथनं, नामग्रहणं नामाक्षरकीर्तनम् । नामग्रहणमपीति पश्चादुक्तिः सङ्कथा तावदास्तां, नामाक्षरमेव श्रुतमुद्वेजयतीति द्योतयितुम् । अत्र व्याजोक्तिरलङ्कारः, उद्भिन्नवस्तुनिगूहनात् ।

आत्मनिरपेक्षव्यवसायत्वादिकमेव संवादयति — तथा त्वयापि गाढनखरप्रहारवेदनालंभविसारितशरीरसङ्गः सङ्कलितमोहमीलन्नेत्रनीलोत्पलयुगलो भूमिविलसितासियष्टिनिष्टम्भधीरधारितशरीरसारः प्रत्यक्षीकृत एव मदयन्तिकानिमित्तमात्रविच्छर्दितमहामहार्घजीवलोको महाभागः । तथा मदुक्तेन

---

१. 'तथा अ सो तुए' क. झ. ञ, 'तह अ तुए' ज. पाठः. २. 'गाढप्पहार' क. ख. ब. चु. झ. ञ, 'गाढगुरुणहर' ज, 'गाढणहप्पहार' ट. पाठः. ३. 'सङ्गळिदसेअसलिलुप्पीलो मोह' क. ञ. ञ, 'सङ्गळिअसेअसलिलुग्गमो मोह' ज. पाठः. ४. 'विगळिदासि' क. ज, 'विळसिदासि' झ. ञ. पाठः. ५. 'लदाविट्ठम्भ' क. झ. ञ. पाठः. ६. 'धीरत्तणधारिद' क, 'धीरत्तधारिअ' ज. पाठः. ७. 'सरीरं' क, 'सरीरभारो' ज. झ. ब. पाठः ८. 'महग्घ' छ. ज. पाठः ९. 'लोओ त्ति' ञ. पाठः.

---

१. 'मोहनिमील' क. पाठः. २. 'शारीर' ग. पाठः.

 

(स्वेदादीन्[१] विकारान् नाटयति ।)

बुद्धरक्षिता — अस्सत्थसरीरे पिअसहि ! उव्भिण्णाइ सहवासिणीए माळदीए ।

(अस्वस्थशरीरे प्रियसखि ! उद्भिन्ना स्मः सहवासिन्या मालत्याः ।)

---

प्रकारेण गाढानामुरसि मग्नानां नखराणां प्रहारेणाघातेन या वेदना तीव्रा तया तस्यालम्भेन प्राप्त्या विस्मारितः प्रमोषितः शरीरसङ्गो अहम्भावो यस्य सङ्कलितेन वेदनाजनितेन मोहेन मूर्च्छया निमीलन्नयनकुवलयद्वयं यस्य । भूमिविकासितायाः क्षितितलनिमग्नाग्रायाः असियष्टेः खड्गपट्टिकाया निष्टम्भेनावलम्बेन[१] धीरं निश्चलं धारितः शरीरसारो देहबलं देहश्रेष्ठो वा यस्य । मदयन्तिकानिमित्तामिति कृतज्ञतां तस्या लघीयस्त्वं च द्योतयति । विच्छर्दितमहामहार्घजीवलोकः विच्छर्दितः परित्यक्तः अतिशयेन महार्घः विशिष्टजात्यायुर्भोगलक्षणपुण्यफलानुभवसाधनत्वाद् बहुमूल्यः । महार्घशब्दस्य तथैव रूढत्वात् महाशब्देन समासः । अथवा महान्मह उत्सवः अर्घः पूजा च यस्मिन्नित्यर्थः । 'मह उद्धव उत्सवः' इत्यमरः, 'अर्घौ पूजाप्रतिक्रियौ' इति वैजयन्ती । जीवलोकः जीवानां मनुष्याणां लोकः, भारतवर्षमित्यर्थः, तस्य स्वर्गतोऽभ्यर्हितत्वात् ।

"गायन्ति देवाः किल गीतकानि धन्यास्तु ये भारतभूमिभागे ।
स्वर्गापवर्गास्पदमार्गभूते[२] भवन्ति भूयः पुरुषाः सुरत्वात् ॥"

इत्यादिवचनैः, तत्रापि लोकोत्तरज्ञानैश्वर्यरूपसौभाग्यादिगुणगणवरेण्यस्य ब्राह्मणस्यागण्यजन्मान्तरसञ्चितपुण्यविशेषजन्यत्वात् तदेव मत्प्राणतृणपरित्राणाय तेन तृणायापि न मतमिति उपकारगौरवं द्योतयति ।

"ब्राह्मणो जायमानो हि पृथिव्यामधिजायते ।
ईश्वरः सर्वभूतानां धर्मकोशस्य गुप्तये ॥"

इत्यादिमनुवचनात् ।

---

१ (स्वेदं नाट' छ पाठः. २. 'बुद्ध — (शरीरमस्याः स्पृशन्ती)-अ, दवसिदं पियसहीए सरीरेण । मद- (सलज्जं — अ. क.) पिअसहि ! अवेहि । उब्भिण्णाह्मि सहवासिणीए वासम्भेण । लव —' क. ग. घ. 'बुद्ध — (शरीरमस्याः स्पृशन्ती) अस्सत्थसरीरे ! बाआ दसिदं सरीरेण मअरन्दसमा गमोत्सुकं । मद — (सलज्जं) आह ! अवेहि अवेहि उब्भिण्णाह्मि सहवासिणीए माल्दीए । लव —' ज. पाठः. ३. 'उब्भिण्णसहावा पिअसहीए माल' क. पाठः.

---

१. 'लम्बनेन' ज. पाठः २. 'स्वर्गापवर्गे' ज, 'स्वर्गमात्रभूते' झ. पाठः.

लवङ्गिका — सहि मदअन्तिए! अह्मे' वि जाणिदव्वं जाणामो । ता पसीद । विरम² ववदेसादो । एहि वीसम्भगब्भिअकहा सविसेससुहं³ चिट्ठह्म ।

(सखि मदयन्तिके! वयमपि ज्ञातव्यं जानीमः । तत् प्रसीद । विरम व्यपदेशात् । एहि विस्रम्भगर्भितकथाः सविशेषसुखं तिष्ठामः ।)

---

स्वेदादीन् आदिशब्देन स्तम्भकत्वादयः सात्त्विका गृह्यन्ते । नाटयतीति भयहेतुत्वेन व्यपदिष्टत्वान्निरशङ्कमभिनयतीत्यर्थः ।

अथ तदभिप्रायावगमनाय सुहृद्भावेन तामुपायतः प्रेरयति — अस्वस्थशरीरे प्रियसखि! उद्भिन्ना स्मः सहवासिन्या मालत्याः । अस्वस्थं कृशत्वपाण्डुत्वादियोगादिदानीं स्वभावे नावस्थितं शरीरं यस्या इत्यामन्त्रणेन शरीरावस्थयैव सर्वं प्रकाश्यते, किमिति वृथा संवरणव्यसनमनुभूयत इति द्योतयति । उद्भिन्ना स्मः प्रकाशितरहस्या भवामः । 'अयं त्वकस्मा'दित्यादिवाचोयुक्तिभिरित्यर्थः । सहवासिन्या सह वस्तुं शीलं यस्याः । मालत्याः सहवासिन्येत्यनेन मालत्यामेव मन्मथोन्माथप्रकारस्य शिक्षितत्वादन्यत्रापि तल्लिङ्गैस्तदूहनसामर्थ्यं प्रकाश्यते ।

'उद्भिन्ना स्मः' इत्युक्तेर्लब्धप्रसरा स्वसान्त्वनस्याभेदं प्रयुङ्क्ते — सखि मदयन्तिके! वयमपि ज्ञातव्यं जानीमः । वयमपीति यथा बुद्धरक्षिता तथा वयमपि प्रेमविस्रम्भभूमित्वात् तव वृत्तान्तमवश्यं ज्ञेयं विशेषतो जानीमः, सामान्यतो ज्ञातत्वात् । तत् प्रसीद । विरम व्यपदेशात् । तत् तस्माद्, यतो वयं जिज्ञासवः, कथनेनानुग्रहं कुरु । व्यपदेशात् भयाद्व्याजोक्तेः विरम निवर्तस्व । एहि आगच्छेति लोकोक्त्यनुसारः, प्रतिकूलमार्गादितोऽनुकूले वर्त्मनि समागच्छेति यावत् । विस्रम्भगर्भितकथाः सविशेषसुखं तिष्ठामः । विस्रम्भगर्भितया अन्तर्गतविश्वासया कथया सल्लापेन सविशेषसुखं त्वद्दर्शनादेव सुखस्य विद्यमानत्वात् ततोऽधिकसुखं यथा तथा, तिष्ठामः वर्तामहे । 'मित्रस्यावञ्चनं रसः' इत्युक्तेरिति भावः ।

---

१. 'अह्मे ज.मि' ख. पाठः. २. 'म उव्ववदेसादो' प. ज. ट. पाठः. ३. 'गब्भकथाणुबन्धसरिसंसुहं' क, 'गब्भकहाप्पबन्धसरसं सुहं' छ. ज, 'गब्भकहाबन्धसरिसं सुहं' ब. भ. पाठः.

---

१. 'स्तदवगमनसामर्थ्यं' क. ग. पाठः.

**बुद्धरक्षिता** — सहि ! सोहणं लवङ्गिआए भणिदं।

(सखि ! शोभनं लवङ्गिकया भणितम्।)

**मदयन्तिका** — विधेआह्मि सम्पदं पिअसहीणं।

(विधेयास्मि साम्प्रतं प्रियसख्योः।)

**लवङ्गिका**—जइ एव्वं ता कहेहि कहं णु दे कालो गच्छदि त्ति।

(यद्येवं तत् कथय कथं नु ते कालो गच्छतीति।)

**मदयन्तिका** — णिसामेहि पिअसहि। मम हि बुद्धरक्खिदा पक्खवादपच्चएण पुढमं जेव्व तस्सिं जणे अविरलुक्कण्ठमणोरहं हिअअं

---

तदुक्तिमुपोद्बलयति — सखि ! शोभनं लवङ्गिकया भणितम्।

मुग्धतया तदभिप्रायपतिता आह — विधेयास्मि साम्प्रतं प्रियसख्योः। **विधेया** वशवर्तिनी, 'पुरविजयी करुणाविधेयचेताः' इतिवत्।

अथ तन्मुखारविन्दनिष्यन्दितेन प्रणयवचनमकरन्देन मकरन्देन्दीवरमानन्दयितुं द्वारमारचयति—**यद्येवं तत्कथय कथं नु ते कालो गच्छतीति**। **यद्येव**मिति अस्माकं विधेयासि चेदित्यर्थः। **तत** तस्मात्, **कथय** वञ्चनं मा कृथा इति भावः। **नुः** प्रश्नद्योतकमव्ययम्। 'प्रश्ने विकल्पे नुः स्विच्च' इति वैजयन्ती। **कथं** केन प्रकारेण ते रात्रिन्दिवमतिक्रामतीति पृच्छसे, उत्कण्ठादुःखावकुण्ठितचित्तत्वादिति यावत्।

अथ भङ्ग्या कालक्षेपप्रकारमाह --- **निशमय** प्रियसखि ! शृणिवत्यर्थः। **मम** हि बुद्धरक्षितापक्षपातप्रत्ययेन प्रथममेव तस्मिन् जने अविरलोत्कण्ठामनोरथं हृदयमासीत्। **बुद्धरक्षितायाः** पक्षपातेन स्नेहेन यः **प्रत्ययः** तद्गुणेषु विश्वासः तेन, **प्रथममेव** दर्शनात् प्रागेव **अविरलया** निरन्तरया **उत्कण्ठया** प्राप्त्याशया

---

१. 'बुद्ध– सोहणं' क. झ. पाठः. २. 'आ भणादि' क. झ. ञ. पाठः. ३. 'मद– सहि ! विधेआह्मि' ट. पाठः. ४. 'म्पदं सहीणं' ज. पाठः. ५. 'सहीए' छ. पाठः. ६. 'सहि मम बुद्ध' क. ङ. ज. झ. ञ, 'सहि बुद्ध' ख. छ. ट. पाठः. ७. 'जणे अदिभूमिं गओ अणुराओ। अवि अ तस्सिं जणे भीरुदुव्वरन्तकादुद्दलकण्ठ' क, 'जणे अदिभूमिं गओ अणुराओ। तह अविरलुक्कण्ठ' छ, 'जणे भरिदुव्वरन्तकोदुद्दलकण्ठ' झ. ञ. पाठः.

---

१. 'तदुक्तमु' क. पाठः.

आसि । तदो विधिणिओअदुव्वुत्तदंसणा अ दुव्वारदारुणआसंसङ्गदुःख-सन्दावढज्जन्तचित्तविहडन्तजीविआसंसाविअंभिआपुव्वसव्वङ्गसङ्कलिद-मअणहुअवहुद्दामदाहदूसहआसदुम्मणाअन्तपरिअणा पच्चाशांमोक्खमत्त-सुलहमिच्चुणिव्वाणपडिऊलबुद्धरक्खिदावअणवड्ढिदावेसवइअरविसंठुला इमं जीअलोकपरिवट्टणमणुभवामि ।

(निशम्य प्रियसखि । मम हि बुद्धरक्षितापक्षपातप्रत्ययेन प्रथममेव तस्मिन् जने अविरलोत्कण्ठामनोरथं हृदयमासीत् । ततो विधिनियोगदुर्वृत्त-दर्शना च दुर्वारदारुणायाससङ्गदुःखसन्तापदह्यमानचित्तविघटमानजीविताशंसा-विजृम्भितापूर्वसर्वाङ्गसङ्कलितमदनहुतवहोद्दामदाहदुस्सहायासदुर्मनायमानपरि-जना प्रत्याशामोक्षमात्रसुलभमृत्युनिर्वाणप्रतिकूलबुद्धरक्षितावचनवर्धितावेश-व्यतिकरविसंस्थुला इमं जीवलोकपरिवर्तनमनुभवामि ।)

---

मनोरथः सङ्कल्पसन्तानो यस्मिन्नित्यनेन 'असन्दृष्टाकारयोरसंस्कृतयोरपि दूती-प्रत्ययात्' इति वात्स्यायनेनेत्युक्तं निदर्शितमिति वेदितव्यम् । ततो विधि-नियोगदुर्वृत्तदर्शना च दुर्वारदारुणायाससङ्गदुःखसन्तापदह्यमानचित्तविघटमान-जीविताशंसाविजृम्भितापूर्वसर्वाङ्गसङ्कलितमदनहुतवहोद्दामदाहदुस्सहायासदुर्म-

---

१. 'णिओअणिव्वुत्त' क. ख. घ. ङ. छ. झ. ञ, 'णिओइअचिर-णिउत्त' ज. पाठः. २. 'णा भविअ दुव्वार' क. ख. घ. ङ. ज. झ. ञ. पाठः. ३. 'णाणङ्गदुःख' क. झ. ञ. पाठः. ४. 'सदुःख' ज. पाठः. ५. 'सन्दाविदुक्कण्डिअ-चित्त' क, 'सन्दावइज्जन्त' ख. घ, 'सन्दावसाणढज्जन्त' ङ, 'सन्दाविदकुङ्गतचित्त' झ. ञ. पाठः. ६. 'आ संभाविअद्धि । विअम्भिपुव्व' क. झ. ञ, 'आसङ्काविअम्भि' घ, 'आसंसादूरविअम्भि' छ, 'आसा दूरविअम्भि' ज. पाठः. ७. 'सङ्गसंज्वलित' क, 'सङ्गसङ्गमिळिअ' छ, 'सङ्गप्पज्जलणमअण' ज, 'सङ्गप्पज्जालिद' झ. ञ. पाठः. ८. 'हुद्दामदूसहा' क. पाठः. ९, 'शाविमोक्ख' क. ख. ज. झ. ञ. पाठः. १०. 'मरण-णिव्वाण' ख. पाठः. ११. 'णविवड्ढिदा' ज. पाठः. १२. 'वत्तणणु' क. ख. ङ. छ. ञ. पाठः.

---

१. 'नः इत्युक्तं' ख. ङ. छ. ज. झ. पाठः. २. 'निदर्शनं वेदि' ग. पाठः. ३. 'निर्वृत्त' ख. ग. ङ. झ. पाठः. ४. 'ताशाविजृ' क. पाठः. ५. 'जृम्भितपूर्व' ख. ग, 'जृम्भिपूर्व' ङ. झ. पाठः. ६. 'द्दामदुस्स' क. ग. छ. ज. पाठः.

नायमानपरिजना प्रत्याशामोक्षमात्रसुलभमृत्युनिर्वाणप्रतिकूलबुद्धरक्षितावचनवर्धि-तोवशव्यतिकरविसंस्थुला इमं जीवलोकपरिवर्तमनुभवामि । विशेषनियोगेन ईश्वरस्याज्ञया सम्पादितं अर्थात् तस्य दर्शनं यस्याः, शार्दूलावस्कन्दसमये यदृच्छयोपनतत्वात् । दुर्वारदारुणायासेन निष्प्रतीकारक्रूरशरीराभिघातेन सङ्गदुःखसन्तापेन स्नेहदुःखज्वरेण दह्यमानहृदयतया विक्षिप्यन्ती प्राणधारणप्रार्थना यस्याः । सङ्गदुःखेत्यालम्बनविभावसम्पदुक्ता । विजृम्भितेन पूर्वस्मादधिकं प्रसृतेनेति स्तम्भकम्पाद्यनुभावग्लान्यादिव्यभिचारपोष उक्तः । अपूर्वेण अननुभूतपूर्वेणेत्यनभ्यासादसह्यवेगत्वं प्रकाश्यते । सर्वाङ्गसङ्कुलितेन सकलशरीरव्यापेन मदनहुतवहोद्दामदाहेन दुस्सहो य आयासः कुसुमशयनतलविवेष्टनोत्थानपर्यटननिषदनादिकं क्षणे क्षणे शरीरक्लेशः तेन दुर्मनायमानः विषीदन् परिजनो यस्याः । प्रत्याशा कालेन प्राप्स्यत इति बुद्धिः, तन्मोक्षमात्रे तस्याः खण्डन एव सुलभस्य अकृच्छ्रेण प्राप्यस्य, प्रत्याशयैव प्राणानां धार्यमाणत्वात् , मृत्युनिर्वाणस्य मरणसुखस्य प्रतिकूलेन विरोधिना बुद्धरक्षिताया वचनेन, एवं कृते एवं भविष्यति, अद्य भविष्यति, श्वो वा भविष्यतीति प्रत्याशाजनकेनेत्यर्थाद् , वर्धितस्यावेशस्य तद्विषयनिर्बन्धस्य व्यतिकरेण मिश्रणेन ;

"अतः परतरं नान्यन्ममास्तीति त्वरान्विता ।
एकाग्रा मानसी वृत्तिरावेश इति कीर्तितः ॥"

इति दिवाकरः; विसंस्थुला चञ्चला अन्यतरकोटिपरिग्रहासमर्था इत्यर्थः । इमं इदानीमप्यनुभूयमानं जीवलोकपरिवर्तं मर्त्यलोकस्य पूर्वावस्थातोऽन्यथाभावम् ।

"यानि स्म रमणीयानि तया सह भवन्ति मे ।
तान्येवारमणीयानि जायन्ते मे तया विना ॥"

इति रामायणोक्तप्रकारमनुभवामीत्यर्थः ।

---

१. 'तावेगव्यतिकर' ख. पाठः. २. 'योपगत' ज. पाठः. ३. 'निष्प्रतीघातक्रूर' • पाठः. ४. 'द्दामदहनेन' क ख. पाठः. ५. 'तलवेष्टन' ग. पाठः.

संङ्कप्पसिविणएसु अ मणोरहुम्मादमोहिदा पेक्खामि तं जणं । तह पिअसहि! मुहुत्तमुदूढविह्मअविसंघलुव्वेल्लवित्थरन्तरत्तणेत्तपुण्डरीअत्तणविहाविओव्वेअडामरप्परूढमेरअदप्पं णिज्झाआमि. ।

(सङ्कल्पस्वप्नयोश्च मनोरथोन्मादमोहिता पश्यामि तं जनम् । तथा प्रियसखि! मुहूर्तमुदूढविस्मयविशृङ्खलोद्वेल्लद्विस्तीर्यमाणरक्तनेत्रपुण्डरीकत्वविभावितोद्वेगडामरप्ररूढमैरेयदर्पं निध्यायामि ।)

---

सङ्कल्पस्वप्नयोश्च मनोरथोन्मादमोहिता पश्यामि तं जनम् । सङ्कल्पे ध्याने स्वप्नावस्थायां च, मनोरथोन्मादमोहिता तमेवमालिङ्गामि, एवं चुम्बामि, तेन सह एवं प्रणयकुपिता वर्तिष्य इत्यादिरूपा चिन्तैव उन्मादो भ्रान्तिः अपरमार्थतया तेन विचित्रीकृतेति पश्यामीत्यत्र हेतुः । साक्षात्कारबुद्धिमेव द्योतयितुं पश्यामीत्युक्तिः । दर्शनप्रकारमेवोपपादयति—तथा प्रियसखि! मुहूर्तमुदूढविस्मयविशृङ्खलोद्वेल्लद्विस्तीर्यमाणरक्तनेत्रपुण्डरीकत्वविभावितोद्वेगडामरप्ररूढमैरेयदर्पं निध्यायामि । तथेति तथाभावः श्रूयतामित्यर्थः । मुहूर्तं कञ्चित्कालं उदूढो विस्मयो येन, अनेन स्तिमितत्वमुक्तम्, विशृङ्खलोद्वेल्लत् निरवग्रहचपलं विस्तीर्यमाणं विकसद् रक्तं अरुणं नेत्रपुण्डरीकं यस्य, तद्भावस्तथाविधनेत्रपुण्डरीकत्वम् । अनेन बहुमानभञ्जितरञ्जितत्वं व्यज्यते । अत आह— तेन विभावितः प्रकाशित उद्वेगः उद्भूतो मदवेगः, तेन डामरः भयङ्करः, प्ररूढः समग्रः, स्वकार्यकरणाद् दृढीभूतः, मैरेयदर्पः मधुपानजनितो विकारविशेषो यस्य,

---

१ 'सङ्कप्पाचिन्ताए सिविण' ज. पाठः. २. 'सिविणन्तरेसु' क. ज. झ. ञ. पाठः. ३. 'हुद्दाममोहिदा' ट. ड. पाठः. ४. 'पेक्खामि अ तं' क. ब. पाठः. ५. 'णं । सो वि पिअ' क. झ. ञ. पाठः. ६. 'त्तणिव्वूड' क. झ. ञ 'त्तसमुग्गूढ' ख. पाठः. ७. 'विसंठुलुव्वेल्लळ' क. ख. छ. ज. झ. ब. ट. पाठः. ८ 'थरथरा-अन्त' ख. घ. छ. 'वित्थारिपेरन्तणालरत्त' ज. पाठः. ९. 'न्तलालिदणत्त' क. झ. पाठः. १०. 'ताण्डवुब्भडप्परूढ' क. ञ. झ. ञ. पाठः. ११. 'असद्बुण्णिदं विअ चिरं णिज्झाअदि' क. ब, 'अदप्पं चिरं णि' ख. घ. छ, 'अप्पदुम्मन्तसीलं णिव्वण्णेदि' ज, 'अदप्पं विअ चिरं णिज्झाअदि मं ।' झ. पाठः.

---

१. 'तथाभावि श्रूयतां' क. ग. छ. ज पाठः. २. 'अत्र आह' क. पाठः.

किञ्च कबलिदारविन्दकेसरकसाअकण्ठकलहंसघोसघग्घरक्खलिद-गम्भीरभारदीभरिदकण्णविवरं[1] पिए! मदअन्तिए[2]! त्ति[3] वाहरदि[4]। अह वाहरन्तो[5] कोवुव्वुत्तुत्तरीअञ्चलावलंबणपराहवसमुत्तरङ्गणीसासधमधमाअन्तहिअअं[6] समुत्तासेदि[7]।

(किञ्च कबलितारविन्दकेसरकषायकण्ठकलहंसघोषघर्घरस्खलितगम्भीर-भारतीभरितकर्णविवरं प्रिये मदयन्तिके! इति व्याहरति। अथ व्याहरन् कोपोद्वृत्तोत्तरीयाञ्चलावलम्बनपराभवसमुत्तरङ्गनिश्वासधमधमायमानहृदयां समुत्त्रासयति।)

---

"प्रीतिनिर्वृतिनिघ्नानामरागविषयेऽपि यः।
प्रवृत्तिं कुरुते भावः पुंसां दर्पः स उच्यते॥"

इति दिवाकरः। मैरेयदर्पग्रहणं स्वप्ने मैरेयपानदर्शनस्य भविष्यन्मङ्गलसूचकत्वात्।

"पौष्करे स्वर्णपात्रे वा घृतपायसभोजनम्।
दधिक्षीराशनं पानं मैरेयस्यामृतस्य वा॥"

इति शुभस्वप्नाधिकारे गुरुदेवः। रागिण्या गुणदोषविचारमूढया स्वसम्भोगानुगुण्येन[1] सङ्कल्पात्[2], सङ्कल्पेऽपि मैरेयग्रहणोपपत्तावपि तु तस्य द्विजश्रेष्ठस्य ताच्छील्यात्,

"सुरा वै मलमन्नानां पाप्मा च मलमुच्यते।
तस्माद् ब्राह्मणराजन्यौ वैश्यश्च न पिबेत् सुराम्॥"

इति द्विजादेर्निषेधात्। निध्यायामि पश्यामि। 'निध्यानमवलोकनम्' इति वैजयन्ती।

किं च कवलितारविन्दकेसरकषायकण्ठकलहंसघोषघर्घर-

---

१. 'गग्गदगम्भीर' छ. पाठः. २. 'रणीहादणिब्भरिअ' छ. पाठः. ३. 'रं मे पिए' क, 'रं पि पिए' ख. पाठः. ४. 'ए एहि त्ति' क, 'ए त्ति मं वा' घ. ङ. छ. ज. झ. ट. पाठः. ५. 'ववहरइ' छ. पाठः. ६. 'अध अ पप्फुरन्तपओहरुच्छलदुत्तरीअअंसुअञ्चलावलम्बणपरिभवेण ससम्भमुत्तरङ्गधमधमा' क. ञ, 'अध अ पप्फुरन्तपओहरुच्छलदुत्तरीअञ्चलावलम्बणपरिभवेण ससम्भमुत्तरङ्गिदमधमा' ख. पाठः ७. 'णावराहेण विसमुत्तरङ्गधमधमा' छ, 'णपराहवेण ससम्भमुत्तरङ्गधमधमा' ज. पाठः. ८. 'अं मं सम्' क. छ. झ. ञ. पाठः.

---

१. 'संरम्भानुगुण्येन' क. छ, 'संरम्भरागानुगुण्येन' ग, 'सम्भोगानुकूल्ये' ज. पाठः. २. 'कल्पनात्' क. ग. छ. ञ. पाठः.

सहसा विसज्जिअंसुहोवसरिदं तक्खणकठोरकोमळतण्णाअन्त-बाहुबन्धणाववारिअपओहरुग्गमं विहडन्तमेहळावळअसन्दाणिज्जन्त-

स्खलितगम्भीरभारतीभरितकर्णविवरं 'प्रिये मदयन्तिके' इति व्याहरति। आस्वादितैः कमलकिञ्जल्कैः कषायकण्ठस्य तु वररसप्रसादितकण्ठनालस्य, अरविन्दकेसराणां कषायरसत्वात्। तथा कषायद्रव्यस्कन्धे 'पद्मापद्मक-पद्मपुष्पनागकेसरे'त्यादिना सङ्ग्रहे गणितत्वात्,

'तत्राद्या मारुतं घ्नन्ति त्रयस्तिक्तादयः कफम्।'

इति तिक्तकटुकषायाणां वैद्यके कफहरत्ववचनात्, 'चूताङ्कुरास्वादकषाय-कण्ठः' इति कुमारसम्भवे प्रयोगाच्च। कलहंसस्य हंसविशेषस्य घोषवद् घर्घरा अस्पष्टा स्खलिता मध्ये मध्ये निरुद्धनिर्गमा। घर्धरात्वं स्खलितत्वं च मैरे-यविकारात्। गम्भीरनिर्ह्रादिनी महापुरुषसम्बन्धित्वात्, 'त्रिगम्भीरः षडुन्नतः' इति सामुद्रिकवचनात्, भारती वाक् तया भरितं पूरितं कर्णविवरं श्रवण-रन्ध्रं यथा भवति तथा, व्याहरति कथयति। अथ व्याहरन् कोपोद्वृत्तो-त्तरीयाञ्चलावलम्बनपराभवसमुत्तरङ्गनिश्वासधमधमायमानहृदया समुत्त्रासयति। कोपेन कौमारदूषणोपक्रमजनितेनागमनविलम्बहेतुकेन वा उद्वृत्तां परावृत्तां, तदानीमुत्तरीयाञ्चलावलम्बनरूपेण परिभवेण, कुलकुमारीजनस्य स्तनांशुका-कर्षणानौचित्यात्, समुत्तरङ्गैरुपर्युपरि प्रवर्त्तमानैः निश्वासैः, धमधमेति वेपमान-प्रकारानुकरणं धमधमायमानं हृदयं यस्याः। समुत्त्रासयति यदि मम प्रतिकूलं वर्तसे ततो नखविलेखदन्तक्षतादिभिर्दूषयित्वा सखीभ्यो दर्शयिष्यामीति भीष-यतीत्यर्थः। 'अप्रतिपद्यमानां च भीषयेत्। अहं तव दन्तपदमधरे करिष्यामि, स्तनपृष्ठे वा नखपदम्।' इत्यादिवात्स्यायनवचनात्।

सहसा विसृष्टसुखापसृतां तत्क्षणकठोरकोमलार्द्रीभवद्बाहुबन्धना-पवारितपयोधरोद्गमां विघटमानमेखलावलयसन्दान्यमानव्यापृतोरुप्रतिषिद्ध-

१. 'अंसुअप्पसरिदं' क. ग, 'अंगुळिआपसारिअकोवादो तक्खण' छ. 'अभोसारिअतक्खण' ज, 'अंसुअमोसरिअ' झ. पाठः. २. 'कमलदण्डाअमाणबाहु' क. ज. झ. ञ., 'कण्टकितकमळनाळकोमळद्दाअमाण' छ. पाठः ३. 'ळबहुळतण्णा' क. पाठः. ४. 'बन्धणोवारिअ' ख. घ. ङ. च. ट, 'बन्धणापरिवारिअ' छ. पाठः. ५. 'विहडन्त-विभळमे' ख. छ, 'विकसन्तमे' ग, 'विहडन्तबीहगे' च, 'विहडन्तविझळमे' ज. पाठः.

१. 'विरुद्धमार्गा। घर्घर' क. पाठः. २. 'परिवर्तमानै' क. ग. छ. ज. पाठः. ३. 'कठोरक्षमकोमला' ज. पाठः.

वाबुडोरुपडिसिद्धविप्पदीवगमणं पडिऊलाविणिहित्तसव्वपओरपअत्त-णिव्वत्तिअमुहुत्तकोवावराअदुक्खपरुसीकदहिअअं सिणिद्धपुणरुत्तपह्मल-ळोअणविभाविदासेसचित्तसारं उवहसिअ विउणबाहुदण्डावेट्ठणिव्वेट्ठणि-व्वत्तिअं पिअसहि ! परूढसद्दूळकरुहोरप्फाविअडपत्तावलीपसाहणुत्ताण-वक्खत्थळनिट्ठुराणिवेसणीसहं कदुअ सावेअविहुअमत्थआविद्धकबरी-विणिहिदकरपरिग्गहाअग्गिदुण्णमिअणिच्चळमुहाववअवसच्छन्दविळासिअ-विअड्ढवअणकमळो वामकपोलमूलविरणिहित्तविप्फुरन्तपुञ्जिदाहर-संमुग्गममणुहरप्फंसणिप्फरपुळइअसरीरसो उल्लसिदसज्झसाणन्दविसम-सम्भमवळणमोहमन्थरघुम्मन्तचेअणं किं पि किं पि दुव्विणीदसाहसा-णुरूवव्ववसाओ मं अब्भत्थेदि णामेत्ति ।

विप्रतीपगमनां प्रतिकूलविनिहितसर्वाकारप्रयत्ननिर्वर्तितमुहूर्तकोपोपरागदुःख-परुषीकृतहृदयां स्निग्धपुनरुक्तपक्ष्मललोचनाविभाविताशेषचित्तसारां उपहस्य द्विगुणबाहुदण्डावेष्टनिश्लेष्टनिवर्तितां प्रियसखि ! प्ररूढशार्दूलकररुहवज्रविकट-

१ 'पीवरोरु' क. ज. झ. ञ, 'पअडोरु' ख. पाठः. २. 'ऊलवादिणिं पि मं अच्चाअरपअत्त' क, 'ऊलवादिणिं पि सव्व' ज, 'ऊलवादिणिं पि अच्चाअरपअत्त' झ. ञ. पाठः. ३. 'सव्वाआर' ख. घ. च, 'सव्वादर' छ. ज. पाठः. ४. 'आरणिव्व-त्तिअ' च. पाठः. ५. 'पक्खलोअण' क. ज. झ. ञ. पाठः. ६. 'विळोअण' ट. पाठः. ७. 'सारं मं उवहसिदि । दिउण' क. झ. ञ. पाठः. ८. 'विअणिअबाहु' छ. ज. पाठः. ९. 'वन्धावट्ठ' ञ. पाठः. १०. 'सद्दूलकठोरकर' क. ज. झ ञ. पाठः. ११. 'करप्पहारविअड' क छ. ज. झ. ञ. पाठः. १२. 'पत्ताळि' च. पाठः. १३. 'णिवेसणासाहसं' च, 'णिवेसणं सअं कदुअ' छ. पाठः. १४. 'आव ' क, 'आवविद्ध' ज. पाठः. १५. 'विद्धाविहुरविणिहिद' ट. पाठः. १६. 'परिग्गहपुञ्जीकिदुण्ण' ञ. पाठः. १७. 'विकासिदविअड्ढ' क, 'विळासाविदविअड्ढ' ख, 'विळासाविअड्ढ' ङ. च, 'विळासविअड्ढ' छ, 'विआसविअड्ढ' झ. ञ. पाठः. १८. 'वामगण्डविर' छ, 'वामगण्डमूल' झ ञ. पाठः. १९. 'वप्फुरन्त' क. ज. झ. ञ. पाठः. २०. 'समुग्गदमणु' क. झ. ञ, 'समुग्गमणु' ख. ङ. च. छ. ट. पाठः. २१. 'हरसचअसारासदमणहरुक्कसिदसरीर' ज. पाठः. २२. 'णिप्फरुल्लसिअसरीर' क, 'णिप्फरुद्धूसाविअसरीर' ख. ङ. च ट, 'णिप्फरुद्धूधूसरीर' छ. पाठः. २३. 'सम्भममोह' ख. घ. च. ट, 'सम्भवमणहरसंवलणमोह' ज. पाठः. २४. 'भमन्तलो-अणं' क. ख. झ. ञ, 'भमन्तचेअणं' घ. च. छ. ज. ट. पाठः. २५. 'किं पि दु' क. च. छ. झ. ञ. पाठः. २६. 'अणब्भत्थणीअं अब्भत्थेदि ।' क. झ, 'अब्भत्थेदि एणं ।' छ, 'अब्भत्थेदि । एव्वं णाम पिअसहि !' ख. ञ. पाठः.

१. 'पक्ष्मलविलोचन' क. ग. छ. ज. पाठः

(सहसा विसृष्टसुखापसृतां तत्क्षणकठोरकोमलार्द्रीभवद्बाहुबन्धनापवारितपयोधरोद्गमां विघटमानमेखलावलयसन्दान्यमानव्यापृतोरुप्रतिषिद्धविप्रतीपगमनां प्रतिकूलविनिहितसर्वाकारप्रयत्ननिर्वर्तितमुहूर्तकोपोपरागदुःखपरुषीकृतहृदयां स्निग्धपुनरुक्तपक्ष्मललोचननिभावितशेषचित्तसारां उपहस्य द्विगुणबाहुदण्डावेष्टननिश्चेष्टनिवर्तितां, प्रियसखि!, प्ररूढशार्दूलकररुहवज्रविकटपत्रावलीप्रसाधनोत्तानवक्षस्थलनिष्ठुरनिवेशनिस्सहां कृत्वा सावेगविधुतमस्ताकाविद्धकबरीविलिहितकरपरिग्रहाभिमूलोन्नमितनिश्चलमुखावयवस्वच्छन्दविलासितविदग्धवदनकमलो वामकपोलमूलचिरनिहितविस्फुरत्सुम्भितावरसमुद्गमनोहरस्पर्शनिर्भरपुलकितशरीरशोभां उल्लसितसाध्वसानन्दविषमसम्भ्रमवलनमोहमन्थरद्दूर्णमानचेतनां किमपि किमपि दुर्विनीतसाहसानुरूपव्यवसायो मामभ्यर्थयते नामेति ।)

---

पत्रावलीप्रसाधनोत्तानवक्षःस्थलनिष्ठुरनिवेशनिस्सहां कृत्वा सावेगविधुतमस्तकाविद्धकबरीविनिहितकरपरिग्रहाभिमूलोन्नमितनिश्चलमुखावयवस्वच्छन्दविलासितविदग्धवदनकमलो वामकपोलमूल[1]चिरनिहितविस्फुरत्सुम्भितावरसमुद्गमनोहरस्पर्शनिर्भरपुलकितशरीरशोभां उल्लसितसाध्वसानन्दविषमसम्भ्रमवलनमोहमन्थरद्दूर्णमानचेतनां, किमपि किमपि दुर्विनीतसाहसानुरूपव्यवसायो मामभ्यर्थयते नामेति । सहसेति अत्यन्तोपरोधो मा भूदिति, [विसृष्टां] विसर्जितां, विमुक्तोत्तरीयामिति यावत्, सुखेन शीघ्रं परतो[2]ऽपसृतां धावितां, तत्क्षणे तदीयस्पर्शसमये कठोरयोः कण्टकितत्वेन कर्कशयोः कोमलयोः मृदुतया अवसन्नयोः आर्द्रीभवतोः स्विन्नयोः—'तण्णाआ' आर्द्र, 'बहुतण्णापसरन्तमवकुसुमरओ' इतिवत्—बाह्वोर्बन्धनेन स्वस्तिकब[3]न्धेन अपवारितः छादितो हठाश्लेषभयेन पयोधरोद्गमः स्तनमुकुलं यया । विघटमानेन विगलता मेखलावलयेन वृत्ताकारेण काञ्चीपाशेन सन्दान्यमानाभ्यां बध्यमानाभ्यां व्यापृताभ्यां गमनाय प्रवर्तमानाभ्यां, अथवा भावचिह्नेन[4] स्फुरिताभ्यां[5] ऊरुभ्यां प्रतिषिद्धं निवारितं

---

१. 'मूलनिहित' ग. पाठः. २. 'पुरतोऽपसृतां' ज. पाठः. ३. 'बन्धनेन' ग. पाठः. ४. 'भावचिह्नत्वेन' ज. ङ. झ. पाठः. ५. 'स्फुटिताभ्यां' ङ. ज. पाठः.

1787

निप्रतीपगमनं पराङ्मुखगमनं यस्याः । प्रतिकूलविनिहितं तदभिलषित-विरुद्धतया कृतं, न तु प्रतिकूलतया स्थितमिति तथात्वस्य बकानाटितत्वं ध्वन्यते, सर्वप्रकारप्रयत्ननिर्वर्तितेन प्रबलविरचितभ्रुकुटीभीषणत्वादिप्रकाशितेन मुहूर्त-कोपोपरागेण क्षणमात्रकोपरञ्जितत्वेन दुःखपरुषीकृतं कृच्छ्राद्रूक्षितं कृतं हृदयं यया । स्निग्धाभ्यां स्नेहगुणविशिष्टाभ्यां पुनरुक्तपक्ष्मलाभ्यां पूर्व-सान्द्राभ्यां तदालोकनकुतूहलाद् द्विगुणपक्ष्मलाभ्यां लोचनाभ्यां विभावितः तस्मै प्रकाशितः अशेषः समग्रः चित्तसारो मनसोऽनुरागरूपः सारो यस्याः; अथवा चित्तस्य सारो बलमिति विपरीतलक्षणया एतावदस्या हृदयस्य बलं न किञ्चिदिति कर्णेजपाभ्यां लोचनाभ्यां कथितमित्यर्थः; अथवा बहिर्नाटित एव कोपो न हृदयपूर्वकः, तस्मात् स्वैरमभियुज्यतामिति प्रेरित इवेत्यर्थः । कुट्ट-मिताख्यो भावोऽत्र सूचितः ।

'रसानन्दात् कुट्टमिते कुप्येत् केशाधरग्रहे ।'[3]

इति धनिकः । उपहस्य मद्भावपरिज्ञानाद्विहस्येत्यर्थः । प्ररूढा किणीभूता [शार्दूलकररुहवज्राणां] शार्दूलनखकुलिशानां विकटा विशाला या पत्रावली व्रणरेखादिन्यासविशेषः सैव प्रसाधनं विभूषणं यस्य, तस्मिन् उत्ताने विस्तारिते वक्षःस्थले निष्ठुरनिवेशनेन निर्दयनिवसनेन, निस्सहां निष्पन्दां कृत्वा, सावेगं सक्रोधं विधुतेन मस्तकेन शिरसा विद्रायां गलितबन्धतया पतितायां कबर्यां केशपाशे विनिहितस्य करस्य परिग्रहेण हठसङ्ग्रहेण अभि-भूतस्य उन्नमितस्य मुखस्य—'ओअग्गिअ' अभिभूत, 'ओअग्गइतुमजसो' इति सेतुप्रयोगात्— अवयवेषु एकदेशेषु, ललाटनयनकपोलोष्ठान्तर्मुखेष्वित्यर्थः, स्वच्छन्दविलासितं स्वेच्छया व्यापारितं, निवारकाभावात् । विदग्धं निमितक-स्फुरितकघट्टितकेषु कन्याचुम्बनेषु शिक्षितमित्यर्थः, [वदनकमलो] मुखपद्मं यस्य । "बलात्कारेण नियुक्ता मुखे मुखमाधत्ते न विचेष्टते तन्निमितकम्" इत्यादि कामसूत्रक्रमस्यात्र योजनं वेदितव्यम् । वामकपोलमूले चिरनिहितस्य विस्फुरतः पुञ्जितस्य कुड्मलितस्य अधरसमुद्गस्य ओष्ठसम्पुटस्य मनोहरेण स्पर्शेन [पुलकिता] रोमाञ्चिता शरीरशोभा यस्याः; "उच्छूनकं प्रवाल-मणिश्च कपोले कर्णपूरचुम्बनं दशनच्छेद्यमिति सव्यकपोलमण्डनानि"

१. 'अतः बहिः' क. ङ. झ. पाठः. २. 'नाटित एव' ग. क. झ. पाठः. ३. 'सानन्दान्तः कुट्टमितं कुप्येत् केशाधरग्रहे' इति मुद्रितपाठः ४. 'कुड्मलीकृतस्य' ज. पाठः.

पिअसहीसमक्खं सव्वं अणुभविअ झत्ति सुण्णारण्णसण्णिहं पुणो वि मन्दभाइणी विभावेमि जीअलोअं ति ।

(प्रियसखीसमक्षं सर्वमनुभूय झटिति शून्यारण्यसन्निभं पुनरपि मन्दभागिनी विभावयामि जीवलोकमिति ।)

---

इति वचनात्; वामकपोलग्रहणं स्त्रीणां वामभागस्य कामकलाधिष्ठानत्वाच्च । "दन्तोष्ठसंयोगाभ्यासनिष्पादनात् प्रवालमणेः सिद्धिः, तदेव पीडनादुच्छूनकं" इति वचनात्तदर्थं विस्फुरत्पुञ्जिताधरेत्याद्युक्तिः । उल्लसितेन उद्भूतेन साध्वसेन कन्यात्वजनितेन कम्पेन आनन्देन प्रियसमागमहेतुकेन परमसुखेन च विषमो बहुविधः सम्भ्रमो व्याकुलत्वं तेन यो मोहः कर्तव्यापरिज्ञानं तेन मन्थरं मन्दं [घूर्णमाना] भ्रमन्ती चेतना बुद्धिर्यस्याः । किमपीति अनुचितत्वादव्यपदेश्यत्वं, वीप्सया बहुविधत्वं च द्योत्यते; स्वमनोरथानुरूपानालिङ्गनचुम्बनविशेषान् सम्भोगविशेषांश्चेत्यर्थः । तत्र हेतुमाह — दुर्विनीतसाहसानुरूपव्यवसाय इति । दुर्विनीतानामविवेकिनां यत् साहसमविचारितानुष्ठानं तदनुरूपः तत्सदृशो व्यवसायो निश्चयो यस्येति मदानुकूल्यमन्तरेणापि स्वयमेव स्वाभिलषितेऽसौ प्रवर्तत इति द्योतयति । अभ्यर्थयते नामेति अभ्यर्थनस्य विडम्बनत्वाभावशब्देन कोपोपगमः कुत्सनं वा व्यज्यते इति ।

प्रियसखीसमक्षं सर्वमनुभूय झटिति शून्यारण्यसन्निभं पुनरपि मन्दभागिनी विभावयामि जीवलोकमिति । [इतिः] प्रकारे, एकः प्रकारः कथितः, अन्येऽपि प्रकारभेदाः क्षणे क्षणे अनुभूयन्त इत्यर्थः । प्रियसखीसमक्षं बुद्धरक्षितादीनां सन्निधाविति स्वप्नसङ्कल्पयोरनियतकालभावित्वमाह, सर्वं वृत्तान्तम्, [अनुभूय] साक्षात्कृत्य, झटिति, तन्मध्ये प्रबोधव्याक्षेपयोः सम्भवादद्भुतत्वं

---

१. 'सहि समक्खं' क. ज. झ. ञ. पाठः. २. 'अ तदो झत्ति' क. ञ. पाठः. ३. 'झत्ति पडिबुद्धा सुण्णा' छ. ज. झ. ञ. पाठः. ४. 'सुण्णसण्णिभं' घ. पाठः.

---

१. 'अत्र' ञ. पाठः. २. 'मविचारतोऽनुष्ठानं' क. पाठः. ३. 'सदृशोऽध्यवसायो' क. ख. ग. घ. ङ. छ. ञ. पाठः. ४. 'इवेत्यर्थः ख. पाठः.

लवङ्गिका—(विहस्य) सहि मदअन्तिए! फुडमाचक्खेहि—अवि तस्सिं अवसरे सविब्भमं ईसिहासविअसन्तबुद्धरक्खिदाविलोअण-णिरूविदं परिअणादो वि गोआणिज्जं दे आसणमसूरअं सअणीअ-पच्छदपटो वा होदि किं ण वेत्ति।

(सखि! मदयन्तिके स्फुटमाचक्ष्व—अपि तस्मिन्नवसरे सविभ्रममीषद्धास-विकसद्बुद्धरक्षिताविलोचननिरूपितं परिजनतोऽपि गोपनीयं ते आसनमसूरकं शयनीयप्रच्छदपटो वा भवति किं न वेति।)

---

प्रकाश्यते, शून्यारण्यसंनिभं निर्जनवनसादृश्यादुद्वेगकरं, पुनरपीति पूर्वं प्रबुद्धावस्थाया दुःखहेतुत्वात् सैवावस्था पुनरप्यनुभूयत इति प्रतीयते, मन्दभागिनीति स्वभाग्यं प्रत्यसूया, विभावयामि पश्यामि, जीवलोकं मर्त्यलोकमिति दैन्यं च व्यज्यते।

अथ तां तस्मिन्नर्थे स्थिरयितुं ग्राम्यमप्यग्राम्यपरिहासत्वेन पृच्छति—सखि मदयन्तिके! स्फुटमाचक्ष्व—अपि तस्मिन्नवसरे सविभ्रममीषद्धासविकसद्-बुद्धरक्षिताविलोचननिरूपितं परिजनतोऽपि गोपनीयं ते आसनमसूरकं शयनीय-प्रच्छदपटो वा भवति किं न वेति। अपिः प्रश्ने, तस्मिन्नवसरे स्वप्रसङ्कल्प-समागमसमये, सविभ्रमं सविलासमिति परिजनापरिज्ञानाय व्याजप्रयोगः, ईषद्धासेन मन्दहासेन विकसद्भ्यां बुद्धरक्षिताविलोचनाभ्यां निरूपितं दृष्टं, परिजनादपि रक्षणीयं, रहस्यभेदभयाद्, आसनमसूरकं आसिकार्थं मसूरबीजवद् वृत्तोत्तुङ्गमसृणं पट्टोपधानम्—'नातिदूरे भूमौ वृत्तास्तरणमसूरकं

---

१. 'लव — सहि' क. छ. पाठः. २. 'मवेहि' ख, 'माचक्खिअ भाते—तस्सिं' छ. पाठः. ३. 'अध तस्सिं' क. झ. ज. पाठः. ४. 'सरे सिणेहविब्भमुम्मील-हास' क. झ. ञ, 'सर सिणेहविब्भमुज्जिअहास' ज. पाठः. ५. 'लोअणात् णिरू' क. पाठः. ६. 'उज्जं मअणमासणमूअअं सुक्किळविन्दुसअणीअपच्छदपटं होदि' छ. पाठः. ७. 'दे णिबंधमसूलं सअणिज्जं पच्छद' झ. पाठः. ८. 'पच्छदवडो वारिदं होदि' क, 'पच्छदवडावारिअं होदि' अ. पाठः.

---

१. 'भूता इति' क. पाठः. २. 'मसूरं' क. झ. पाठः. ३. 'परिज्ञानाद्व्याज-प्रयोगः' क. ग. छ, 'परिज्ञानाय यद्व्याज', ४. 'स्वर्गोपधानं' झ. पाठः.

मदयन्तिका — अइ असिलिट्ठपरिहाससीले ! अवेहि ।

(अयि अश्लिष्टपरिहासशीले ! अपेहि ।)

बुद्धरक्षिता — सहि मदअन्तिए ! मालदीपिअसही इअं एव्व ईरिसाइं जाणादि ।

(सखि मदयन्तिके ! मालतीप्रियसखी इयमेव ईदृशानि जानाति ।)

मदयन्तिका — मा क्खु एव्वं मालदिं उवहस ।

(मा खल्वेवं मालतीमुपहस ।)

---

आकर्षफलकं द्यूतफलकं च' इति वात्स्यायनवचनात्, 'मसूरकोपधानानि' इति हर्षचरितोक्तेश्च — शयनीयप्रच्छदपटः शयनतूलीतलास्तरणवस्त्रं, वेति विकल्पने, आसनशयनयोरनियमात् । अपि भवति किं वा न भवतीत्या-चक्ष्वेत्यन्वयः ।

सासूयमाह — अयि अश्लिष्टपरिहासशीले ! अपेहि अनुचितनर्म-शीले ! परतोऽपसरेति ।

तस्या वैलक्ष्यमपनयति — सखि मदयन्तिके ! मालतीप्रियसखी इयमेव ईदृशानि जानाति । मालत्या मदनवेदनासाक्षिणीत्वादियं लवङ्गिका । एवकारेण न तु वयमिति व्यतिरेको ध्वन्यते । ईदृशानि वस्तूनि ग्राम्याणी-त्यर्थः ।

मालतीश्रवणभयादाह — मा खल्वेवं मालतीमुपहस । एवमित्य-विनयद्योतनेन तदुपहासो मम न प्रिय इति भावः ।

---

१. 'मद — (सासूयं) अयि' घ, 'मद — अचिट्ठ' ट. पाठः. २. 'असम्बद्धपरिहास' क. ज. झ. म, 'सुल्लिट्ठपरिहास' छ. पाठः. ३. 'हि । ण तुए सह मन्तिस्सम् । बुद — ' क. पाठः. ४. 'सही क्खु ईरिसाइं एव्व मन्तिदुं जाणादि ।' क. झ. ब. पाठः. ५. 'मद — सहि ! मा' क. झ. ब. पाठः. ६. 'अवहस' छ. पाठः.

बुद्धरक्षिता — सहि मदअन्तिए ! पुच्छिस्सं दाणिं किं पि जइ ण मे वीसासभङ्गं करेसि ।

(सखि मदयन्तिके! प्रक्ष्यामीदानीं किमपि यदि न मे विश्वासभङ्गं करोषि ।)

मदयन्तिका — किं पुरो वि पणअभङ्गेण किदावराहो अअं जणो जेण एव्वं मन्तेसि । पिअसहि! तुमं लवङ्गिआ अ सम्पदं मे हिअअं ।

(किं पुरोऽपि प्रणयभङ्गेन कृतापराधोऽयं जनः येनैवं मन्त्रयसि । प्रियसखि! त्वं लवङ्गिका च साम्प्रतं मे हृदयम् ।)

---

सुहृद्भावेन तां लवङ्गिकासाक्षिकं स्वाभिमते वस्तुन्यवतारयितुमुपायं प्रयुङ्क्ते — सखि मदयन्तिके! प्रक्ष्यामीदानीं किमपि यदि न मे विश्वासभङ्गं करोषि । विश्वासस्य विस्रम्भस्य भङ्गं विघातं परमार्थाकथनाद् यदि न करोषि ।

विस्रम्भं व्यतिरेकमुखेन द्रढयति — किं पुरोऽपि प्रणयभङ्गेन कृतापराधोऽयं जनः येनैवं मन्त्रयसि । पुरः पूर्वमपि, प्रणयभङ्गेन याच्ञाया विघातेन कृतापराधः किं एवमिति यदि करोषीति यदर्थगर्भं मन्त्रयसि कथयसि यस्माद्, अतोऽयं जनः कृतापराधः किमिति सम्बन्धः । विस्रम्भे उपपत्तिमाह — प्रियसखि! त्वं लवङ्गिका च साम्प्रतं मे हृदयम् । साम्प्रतमिदानीमिति मालतीसम्बन्धेनास्मद्गृहमनुप्रविष्टा यदा तदैव त्वमिव लवङ्गिकापि मे हृदयवद्विश्वास्येति तात्पर्यम् । अदग्धदहनन्यायेन बुद्धरक्षितायास्तु पूर्वमेव विश्वास्यतायाः सम्प्रतिपत्तेर्लवङ्गिकाया विश्वास्यत्वस्यैव विधेयत्वाद्, यावदप्राप्तं तावत एव प्रतिपाद्यत्वात् ।

---

१. 'दाणिं दे किं पि' क. ख. ञ. पाठः. २. 'मद — सहि पु' क. पाठः. ३. 'पुणो वि' क. ख. ङ. च. छ. ज. झ. ञ. पाठः. ४. 'जदो' ङ. पाठः. ५. 'भणेसि' क. पाठः. ६. 'तुमं वि लव' ख. ग. ज. पाठः. ७. 'अ एव मे सम्पदं मम हिअअं ।' क, 'अ मे' ग. पाठः.

---

१. 'प्रवक्ष्यामि' क. ख. छ. ज. झ. पाठः. २. 'परमार्थकथनाद्' ख. ग. झ. पाठः.

**बुद्धरक्षिता**— जइ एव्वं ता कहेहि । जइ दे कहं पि मअरन्दो पुणो वि दंसणपहं ओदरदि, तदो किं तुए कादव्वम् ।

(यद्येवं तत् कथय । यदि ते कथमपि मकरन्दः पुनरपि दर्शनपथमवतरति, ततः किं त्वया कर्तव्यम् ।)

**मदयन्तिका**— एक्केकावअवणिसङ्गणिच्चले चिरं लोअणे णिव्वाबइस्सम् ।

(एकैकावयवनिषङ्गनिश्चले चिरं लोचने निर्वापयिष्यामि ।)

**बुद्धरक्षिता**— अध सो सम्महबलक्कारिदो कन्दप्पजणणिं तुमं रुप्पिणिं विअ पुरुसोत्तमो सअंगाहेण सहधम्मचारिणिं करेदि, का तदो पडिवत्ति ?

---

पुनर्ह्रीकारपुरस्सरं स्वाभिमतं भङ्ग्या सूचयन्ती तस्या हृदयं प्रकाशयति— यद्येवं तत्कथय । यदि ते कथमपि मकरन्दः पुनरपि दर्शनपथमवतरति, ततः किं त्वया कर्तव्यम् । कथमपि अस्मत्प्रयत्नादित्यर्थः । कर्तव्यं करिष्यत इत्यर्थः ।

कर्तव्यमाह — एकैकावयवनिषङ्गनिश्चले चिरं लोचने निर्वापयिष्यामि । मुखाद्यङ्गेषु तस्य प्रत्येकं निषङ्गेण नितरां बन्धेन निश्चले विषयान्तरमनवगाहमाने निर्वापयिष्यामि चन्द्रादिदाहकद्रव्यदर्शनतप्तत्वादमृतसरसीव निमज्य शीतलीकरिष्यामीत्यर्थः ।

अथ पर्वक्रमेण तस्य स्वयङ्ग्राहमुद्भावयन्ती तत्रानुकूलयति अनुद्वेगाय— अथ स मन्मथबलात्कारितः कन्दर्पजननीं त्वां रुक्मिणीमिव पुरुषोत्तमः स्वयङ्ग्राहेण सहधर्मचारिणीं करोति, का ततः प्रतिपत्तिः । अथेति पक्षव्यावृत्तौ ।

---

१. 'जइ दे कहं पि' क. ख. ज. झ. ब. पाठः. २. 'एव्वं कहेहि' ब. पाठः. ३. 'एक्कक्कमावअव' भ., 'एक्कावअव' च. पाठः. ४. 'अवपङ्गणिस्सङ्ग' छ. पाठः. ५. 'सङ्गलग्गणिच्चले' क. झ. ब, 'सग्गलग्गणिच्चले' ज. पाठः. ६. 'णिच्चबे णिव्वाव' ख. पाठः. ७. 'बुद्ध— सो' छ, 'बुद्ध— जइ सो' झ. पाठः. ८. 'सो वि सम्मह' क. झ. ब. पाठः. ९. 'कारिदो जइ कन्दप्प' ज. म. पाठः. १०. 'जणणिं रुप्पिणिं' छ. पाठः. ११. 'त्तमो सहधम्म' ख. पाठः. १२. 'सअंगाहसहधम्म' घ, 'सअंगाहधम्म' च. पाठः. १३. 'सधम्म' क. पाठः. १४. 'पडत्ति' क. पाठः.

---

१. 'अस्मात् प्र' क. छ. पाठः. २. 'प्रत्येकनिषङ्गेण' ख. ग. झ. 'प्रत्यङ्गनिषङ्गेणे' ब. पाठः.

(अथ स मन्मथबलात्कारितः कन्दर्पजननीं त्वां रुक्मिणीमिव पुरुषोत्तमः स्वयङ्ग्राहेण सहधर्मचारिणीं करोति, का ततः प्रतिपत्तिः ?)

मदयन्तिका—(निश्वस्य) कीस तुए एत्तिअं[1] आसासिआह्मि[3]।
(कस्मात्त्वया एतावदाशासितास्मि।)

बुद्धरक्षिता — सहि! केहेहि[5]। (सखि! कथय।)

लवङ्गिका — सहि! कहिदं[6] जेव्व हिअआवेअसूअएहिं दीहणिसासेहिं।

(सखि! कथितमेव हृदयावेगसूचकैर्दीर्घनिश्वासैः।)

---

तद्दर्शने तव प्रवृत्तिरास्तां तावत्। स पुनः [मन्मथबलात्कारितः] कामेन हठात् प्रेरितः। तत्र हेतुः — कन्दर्पजननीं कामस्य हेतुभूतामिति तव दर्शने कस्य सचेतसः स्मरशरज्वरज्वलनज्वाला[1] झटिति न प्रसरतीति चाटुभिस्त्वां वशयति; कन्दर्पस्य प्रद्युम्नस्य जननीं मातरमिति च। रुक्मिणीदेवी विदर्भराजस्य भीष्मकस्य पुत्रीं पुरुषोत्तमो भगवान् वासुदेवः, उपमानेनाभिजनादिगुणसामग्र्यादन्योन्यानुरूप्यादशेषभुवनश्लाघनीयसम्बन्धत्वं द्योतयति, स्वयङ्ग्राहेण पित्राद्यनुमतिमन्तरेण स्वयमेव पाणिग्रहणसाहसेन, भगवतापि रुक्मिण्या गान्धर्वानुगृहीतराक्षसविवाहेनोढत्वात्, सहधर्मचारिणीं धर्मपत्नीं करोतीति काका यद्यर्थो लभ्यते, ततः अनन्तरं प्रतिपत्तिः प्रवृत्तिः का, तवेत्यर्थात्।

तावतः सुकृतस्यात्मन्यसम्भाव्यत्वमालोच्याह— निश्वस्येति भाग्याभावशङ्काजनितावेगसूचकं दीर्घोच्छ्वासं मुक्त्वेत्यर्थः। कस्मात्त्वया एतावदाशासितास्मि। कस्मात् केन हेतुना। एतावत् स्वयङ्ग्राह इति यत्, एतत्परिमाणं सुकृतमिति शेषः। आशासिता सम्भाविता।

तया निगदेनैवालपयितुमाह— सखि कथयेति।

किं वाचा करिष्यते। भावस्तावत् परिज्ञातः। एवं भङ्ग्यन्तरेणेत्याह— सखि! कथितमेव हृदयावेगसूचकैर्दीर्घनिःश्वासैरिति। आवेगो नैतावन्मम भाग्यमिति, अतस्तदनुवादे किं विचार्यत इत्यर्थः।

---

१. 'कीस मं एत्तिअं' क. ख, 'किं एत्तिअं' ज, 'किं मं एत्तिअं' ञ, 'कीह तुए ए' ट. पाठः. २. 'एदोवन्तं' ट. पाठः. ३. 'आसासेध' क, 'आसासेदि' ख. ञ. पाठः. ४. 'बुद्ध— कहिदं एव्व' ट. पाठः. ५. 'कहेहि कहेहि।' छ. पाठः ६. 'लव— कहिदं' क. ख. पाठः.

---

१. 'ज्वरज्वाला' ख. ग. ङ. घ. झ, 'ज्वरज्वलज्वाला' ज. पाठः

मदयन्तिका — सहि ! का अहं इमस्स तेण जेव्व[1] अत्ताणं[2] पणीकदुअ[3] मिच्चुकवलणादो कड्ढिदस्स तस्स जेव्व केरअस्स अत्तणो सरीरअस्स ।

(सखि ! का अहमस्य तेनैव आत्मानं पणीकृत्य मृत्युकवलनात् कृष्टस्य तस्यैव स्वभूतस्य केरकस्य आत्मनः शरीरकस्य ।)

लवङ्गिका— सरिसं म[4]हाणुभावदाए । (सदृशं महानुभावतायाः ।)

बुद्धरक्षिता[5] — सहि ! सुमरेहि[6] एदं[7] । (सखि ! स्मर एतत् ।)

तस्याः संशयं निगदेन निरस्यति — सखि ! का अहमस्य तेनैवा[1]त्मानं पणीकृत्य मृत्युकवलनात् कृष्टस्य तस्यैव स्वभूतस्य [केरकस्य] — केरकशब्दः प्राकृते समस्तोऽसमस्तोऽपि तदीयमाह, 'परकेरएहिं तस्स केरओ' इत्यादिप्रयोगदर्शनात् — आत्मनः शरीरकस्य । का किंशब्दः सम्बन्धमाह, कीदृशसम्बन्धविशिष्टेत्यर्थः । अस्येत्यभिनयेन क्षुल्लकत्वमाह । स्वस्वामिभावसम्बन्धोऽस्मिन्[3] विद्यत इत्याशङ्क्य परिहरति — तेनैवेत्येवकारः सम्बन्धप्रसङ्गं व्यावर्तयति । आत्मानं स्वशरीरं पणीकृत्य मूल्यं कृत्वेति तस्य गौरवमाह । मृत्युकवलनात् मृत्योर्व्याघ्ररूपस्य यमस्य भक्षणात् कृष्टस्य बलादपहृतस्य तस्यैव स्वभूतस्येति न खलु लोके रत्नादिभिरुत्कृष्टैर्द्रव्यैः केनचित् क्रीतं घटपटादि विक्रेतुस्स्वं कदाचिद् भवतीति भावः । आत्मनः मम शरीरकस्य कुत्सितस्याल्पस्यानुकम्पनीयस्य वा देहस्य ।

स्वैर्याय तदुक्तिं चमत्करोति — सदृशं महानुभावतायाः । अभिजनादिगुणविशिष्टतायाः अनुरूपम्, इदं वचनमिति शेषः, गुणपक्षपातः कृतज्ञता च येन द्योत्यते तद्वचनमित्यर्थः ।

अवसरे स्मारयितुं तदुक्तं साक्षिसन्निधौ द्रढयति, पश्चाल्लज्जया विसंवादस्य सम्भाव्यत्वात्—सखि ! स्मर एतत् इदानीं त्वयोक्तम् ।

१. 'स्स एव्व' ट. पाठः. २. 'अत्ताणअं' क. झ. ज. पाठः. ३. 'कदुअ दुट्ठसद्दूलकवळादो' क. झ; 'कदुअ दुट्ठसद्दूलकवळणादो' ञ. पाठः. ४. 'सरिसं क्खु महा' ञ. पाठः. ५. 'बुद्ध—सुमरेहि' क. ज. झ. ञ. पाठः. ६. 'सुमरिहसि' क, 'सुमरेसि' छ. ज. ब. पाठः. ७. 'हि सुमरेहि एदं' ट. पाठः. ८. 'एदं वअणं ।' क. ज. झ. ञ. पाठः.

१. 'वमात्मानं' ग. पाठः. २. 'कृष्टस्यैतस्यैव' ङ. पाठः. ३. 'स्वस्वामिसम्बन्धो' क. ग. ङ. ज. पाठः.

मदयन्तिका — कहं दुदीअणाडिआविच्छेदपडुपडहो ताडी-अदि ? ता दाणिं णन्दणं णिब्भच्छिअ सपादपडणं वा अब्भत्थिअ मालदीए उवरि अणुऊलइस्सं ।

(कथं द्वितीयनाडिकाविच्छेदपटुपटहस्ताड्यते ? तदिदानीं नन्दनं निर्भर्त्स्य सपादपतनं वा अभ्यर्थ्य मालत्या उपर्यनुकूलयिष्यामि ।)

(उत्थातुमिच्छति ।)

(मकरन्दो मुखमुत्पाट्य हस्ते गृह्णाति ।)

मदयन्तिका — सहि मालदि! किं पबुद्धासि ?

(सखि मालति ! किं प्रबुद्धासि ?)

---

अथ विवक्षितसंविधानाय कथाविच्छेदे तस्याः प्रस्थानं सूचयति कविः— कथं द्वितीयनाडिकाविच्छेदपटुपटहस्ताड्यते । रात्रेर्द्वितीयस्या नाडिकाया विरामसूचकः पटुः स्पष्टशब्दः पटह आनकस्ताड्यते, तद्वादकेनेत्यर्थात्, राजमन्दिरेषु नाडिकाविच्छेदज्ञानाय तथाचरणात् । तदिदानीं नन्दनं निर्भर्त्स्य सपादपतनं वाभ्यर्थ्य मालत्या उपर्यनुकूलयिष्यामि । तत् प्रदोषस्य प्रौढत्वात् निर्भर्त्स्य त्वया तदभिप्रायमजानता कदर्थिता मम प्रियसखी मालतीति तर्जयित्वा, अथवा त्रपापरवशतया तया कृतमपराधं मदर्थे क्षमस्वेति प्रणामपुरस्सरमनुनीय मालत्या उपरि मालतीविषये अनुकूलयिष्यामि अनुकूलं करिष्यामि ।

मुखमुत्पाट्य अवकुण्ठनांशुकापनयनेन प्रकाश्येत्यर्थः । उद्घाट्येत्यपि पाठे स एवार्थः । हस्ते गृह्णाति करतले सखीं गृह्णाति, मदयन्तिकामित्यर्थात् ।

मालतीबुद्ध्या एव पृच्छति — सखि मालति ! किं प्रबुद्धासि विगतनिद्रासि ।

---

१. 'कहं बिअ णाडिआ' छ. पाठः. २. 'अपहरनाडिआ' क. झ. ञ, 'अआम विच्छेद' ज. पाठः. ३. 'विच्छेदपडहो' क. ख. झ. ञ, 'विच्छेदसूअओ पडु' छ. पाठः. ४. 'ता जाव णन्दणं' क. ख. ज. झ. ञ, 'ता दाव णन्दणं' घ. ङ. च. छ. पाठः. ५. 'उत्थाय गन्तुमिच्छति' झ. ञ. पाठः. ६. 'मुद्घाट्य' क. ख. घ. छ. झ. ञ. पाठः. ७. 'ट्य तां हस्ते' ज. पाठः. ८ 'हस्तेन गृ' क. ख. छ. झ. ञ. पाठः. ९. 'खि विबुद्धासि ?' क. झ, 'दि प' ज. ञ. पाठः. १०. 'पडिबुद्धासि' ख. घ. छ. ज. ञ. पाठः.

---

१. 'रात्रौ' ख. पाठः. २. 'हस्तं गृह्णाति' ख. पाठः.

(विलोक्य सहर्षं ससाध्वसं च ।)

अह्मो अण्णं जेव्व किं पि एदं वट्टदि । (अम्मो अन्यदेव किमप्येतद् वर्तते ।)

मकरन्दः —

रम्भोरु ! संहर भयं क्षमते विकार-
मुत्कम्पिनः स्तनभरस्य न मध्यभागः ।
इत्थं त्वयैव कथितप्रणयप्रसादः
सङ्कल्पनिर्वृतिषु संस्कृत एष दासः ॥ २ ॥

---

विलोक्य स्फुटं निरीक्ष्य, सहर्षं प्रियतमदर्शनात्, ससाध्वसं अचिन्तितोपनतत्वात् मौग्ध्याच्च । अह्मो इत्याश्चर्ये । अन्यदेव किमप्येतद् वर्तते । अन्यत् प्रस्तुतान्मालतीवृत्तान्तादपरं, किमपि अनिरूपितम् । एतदनुभूयमानं वस्तु ।

तस्याः साध्वसमपनयति—रम्भोर्वित्यादि । रम्भोरु रम्भा कदलीकाण्डः तत्सदृशावूरू यस्याः, भयं स्त्रीस्वभावसुलभं सहसादर्शनोपनतं साध्वसं संहर परित्यज । विपक्षे बाधकमाह— विकारमुच्छ्वासजनितं क्षोभं, उत्कम्पिनः अन्तर्भयादुत्कम्पनशीलस्य स्तनभरस्य पीनोत्तुङ्गतया दुर्वहस्य स्तनस्य । मध्यभागः अवलग्नदेशः तनीयस्त्वादिति भावः । तथाप्यपरिचितस्य दर्शने भयमुपपन्नमित्याशङ्क्याह—इत्थमनन्तरोक्तेन प्रकारेण 'बुद्धरक्षितापक्षपातप्रत्ययेन' इत्यारभ्य 'जीवलोकपरिवर्तमनुभवामि' इत्यन्तेन प्रकारेण त्वयैव न पुनः सखीमुखेन कथितः प्रणयोऽनुरागातिशयः तद्रूपः प्रसादोऽनुग्रहो यस्मिन् । सङ्कल्पनिर्वृतिषु सङ्कल्पशब्देन स्वप्नोऽप्युपलक्ष्यते, तस्याप्यन्तःकरणधर्मत्वात्, सङ्कल्पस्वप्नसमागमसुखेषु, 'सङ्कप्पसिविणएसु अ पेक्खामि तं जणं' इत्यादिना 'विभावेमि जीवलोअं' इत्यन्तेन प्रपञ्चितासु, संस्कृतः परिचितो दास एषः अतो न भयस्यावकाश इत्यर्थः । अत्र पूर्वार्धे

---

१. 'अण्णं किं पि' ख, 'अण्णं एदं एव्वं वट्टइ' ज. पाठः. २. 'विसोढुं' क. ख. ज. पाठः. ३. 'उत्कम्पनं स्तन' क, 'उत्कम्पितं स्तन' ख. ज. पाठः. ४. 'स्तनतटस्य' ज पाठः. ५. 'संस्तुत' ङ. ख. छ च अ. झ. ज. ट पाठः.

---

१. 'प्रकृतान्मालती' क. ग छ. ज. पाठः. २. दर्शनोपनीतं' क. ग. छ. ज. पाठः. ३. 'प्रकारेण' ख. ङ झ. पाठः. ४. 'संस्तुतः' ख ग. ङ छ. झ. पाठः.

बुद्धरक्षिता—(मदयन्तिकामुखमुन्नमय्य, संस्कृतमाश्रित्य)

प्रेयान्मनोरथसहस्रवृतः स एष
सुप्तप्रमत्तजनमेतदमात्यवेश्म ।
प्रौढं तमः कुरु कृतज्ञतयैव भद्र-
मुत्क्षिप्तमूकमणिनूपुरमेहि यामः ॥ ३ ॥

---

अतिशयोक्तिरलङ्कारः, उत्तरार्धे विभावना, विशेषोक्तिर्वा; सम्बन्धे असम्बन्धाभिधानात्, असंस्कृतत्वरूप कारणमन्तरेण कार्यस्य भयस्योपनिबन्धनात्, संस्कृतत्वात्स्वकारणसम्भवेऽपि भयाभावरूपकार्यानुदयनिबन्धाद्वा ॥ २ ॥

अथ हृदयनिर्विशेषा बुद्धरक्षिता पूर्वोपकारस्मारणेन तामुपसान्त्वयति—मुखमुन्नमय्येति सान्त्वनारम्भः ।

प्रेयानित्यादि—मनोरथसहस्रवृतः बहुभिर्मनोरथैः प्रार्थितः, स इति निरतिशयप्रेमास्पदत्वं ध्वन्यते, सः प्रेयानेव पुरो वर्तते । रक्षिपुरुषभयमपीदानीं ते नास्तीत्याह— सुप्तप्रमत्तजनं सुप्ताः केचित् प्रमत्ताः उत्सवसंविधानव्याकुलतया अन्तःपुररक्षणेऽनवहिताः केचिज्जनाः प्रतिहारादयो यस्मिन्, एतदित्यभिनयेन तथात्वं दर्शयति, अमात्यवेश्म नन्दनमन्दिरम् । कालोऽप्यनुकूल इत्याह—प्रौढं तमः परिणतं, सान्द्रमिति यावत् । अनेन चन्द्रोदयात् प्रागवस्था कथ्यते, अनन्तरं चन्द्रोदयस्य वक्ष्यमाणत्वात्,

'तिमिरनिकरमुग्धैरैन्दवः प्रादुप्रकाशः' (VIII. 1)

इति । कृतज्ञतया तत्कृतपरमोपकारस्मरणेन, सापि त्वया परिपालनीयेति भावः । एवकारो भिन्नक्रमः । भद्रं कल्याणं, अस्माकं सर्वेषामित्यर्थात्, कुर्वेव असंशयं कुरु । गमनसमये नूपुरध्वनिर्जनान् बोधयिष्यतीत्याशङ्क्याह—

---

१. 'संस्कृतेन' च. पाठः २. 'तयैकभद्र' क. पाठः.

---

१. 'असंस्तुतस्य' ख ग घ. ङ. झ. पाठः. २. 'संस्तुतत्वात्' ख. ग. घ. ङ. झ. पाठः. ३. 'स्मरणेन' क. ग. छ. ज. पाठः.

मदयन्तिका — बुद्धरक्खिदे ! कहिं दाणिं अह्मेहिं गन्तव्वं ? (बुद्धरक्षिते ! क्वेदानीमस्माभिर्गन्तव्यम् ? )

बुद्धरक्षिता — जहिं जेव्व मालदी । (यत्रैव मालती ।)

मदयन्तिका — किं णिव्वुत्तसाहसा मालदी ?

(किं निर्वृत्तसाहसा मालती ?)

बुद्धरक्षिता — अह इं ? अण्णं च । तुमं भणासि 'का अहं इमस्स तेण जेव्व अत्ताणं पणीकदुअ—' इत्यादि पठति । (पृष्ठम् ४३३)

(अथ किं ? अन्यच्च । त्वमभाणीः :—'का अहं अस्य तेनैव आत्मानं पणीकृत्य —' इत्यादि पठति ।)

---

उत्क्षिप्तमूकमणिनूपुरं जङ्घामूलोत्सारितमणिनूपुरं यथा तथा, यामः गच्छामः एहि तदर्थमनुकूला भवेत्यर्थः । अत्र परिकरोऽलङ्कारः ॥ ३ ॥

'याम' इति गन्तव्यस्थलसूचनात् तद्विशेषं पृच्छति—बुद्धरक्षिते ! क्वेदानीमस्माभिर्गन्तव्यम् ? अस्माभिरिति मकरन्दादीनां सङ्ग्रहः ।

प्रतिहस्तिप्रदर्शनेन प्रोत्साहयितुमाह—यत्रैव मालतीति । तत्र गन्तव्यमिति सम्बन्धः ।

विहारिकोद्यान इत्यपि वक्तुं शक्यत्वात्तदुक्त्यानुमायाह—किं निर्वृत्तसाहसा मालती । निर्वृत्तसाहसा पित्राद्यतिलङ्घनेन कृतमाधवाभिगमनेत्यर्थः ।

अथ किं तथैवेत्यर्थः । अन्यच्चेति 'प्रेयान्मनोरथसहस्रवृतः' (VII 3.) इत्यादिभिस्संगृहीतैर्हेतुभिः समुच्चयत्वे 'अस्माभिर्गन्तव्य'मित्यादेः प्रसक्ततो मध्येऽवतारात् अपरमपि भद्रकरणे कारणमस्तीत्यर्थः । त्वमभाणीः 'का अहं इमस्स

---

१. 'मद — सहि बुद्ध' क. ख. च. छ. झ. ञ. ट. पाठः. २. 'कहिं उण अ' क. झ, 'कहिं पुणो दाणिं' ज. ञ. पाठः. ३. 'जहिं पुव्वं जेव्व' क. पाठः. ४. 'मालदी गआ ।' ज. पाठः ५. 'अण्णं च भणामि ।' क. पाठः.

---

१ 'स्थलसूचनात्' क. पाठः. २. 'समुच्चीयते । अस्माभि' क, 'समुच्चयः । क्व अस्माभि' ख. ङ. झ. पाठः. ३. 'आदिप्रसक्त' क. ग. ङ. ज, पाठः.

(मदयन्तिका अश्रूणि पातयति ।)

बुद्धरक्षिता — दिण्णं क्खु अत्ताणं पडिवज्जसुअ पिअसहीए।
(दत्तं खल्वात्मानं प्रतिपद्यस्व प्रियसख्या ।)

मकरन्दः —

अद्योर्जितं विजितमेव मया किमन्य-
दद्योत्सवः फलवतो मम यौवनस्य ।

तेण जेव्व अत्ताणं पणीकदुअ' इत्यादिकस्य ससाक्षिकस्य प्रत्ययकरस्य वचनस्याकरणे तवासत्यदोषश्च लोकद्वयविरोधी भविष्यतीति भेदप्रयोगः।

अश्रूणि पातयतीति बाष्पपातस्य प्रसादचिह्नत्वात् कथनम् ।

'सव्याजं हसितं मया धृतिहरो बाष्पस्तु मुक्तस्तया ।'

इत्यादिप्रयोगाद् बन्धुजनानुसरणजनितं चाश्रु मन्तव्यम् । पातयतीत्यावेग-प्रशमः ।

तदभिप्रायवेदिनी सख्याह—दत्तं खल्वात्मानं प्रतिपद्यस्व प्रियसख्या। खलुरवधारणे । दत्तं उदकपूर्वत्वाद्दानस्य अश्रुभिरेव जलैर्दत्तमित्यर्थः। आत्मानं स्वां प्रियसख्येति बान्धवनिरपेक्षं स्वयैव दत्तमित्यनेन स्वाभाविको अनुरागो गुणविशेषपक्षपातः कृतज्ञतेत्यादिभिर्निमित्तैः प्राणेभ्योऽपि त्वया शब्दादियमुपलालनीयेति द्योतयति । प्रतिपद्यस्व प्राप्नुहि, बहुमन्यस्वेति वा। 'प्रतिपत्तिस्तु गौरवे प्राप्तौ' इति केशवस्वामी ।

तद्वचनं सबहुमानमङ्गीकरोति—अद्येत्यादि । ऊर्जितमतिशयितं यथा तथा इति क्रियाविशेषणम् , मया विजितमेव सर्वस्मादुत्कर्षेण स्थितमेव, अन्यत् किमुच्यत इति शेषः। फलवतः अभिजनादिभिरनुरूपायाः प्रेयस्या लाभात् सप्रयोजनस्य यौवनस्य तारुण्यस्योत्सवः कल्याणं, स्वाभिमतसम्भोगसम्पत्त्या । विजयोत्सवयोर्हेतुमाह—प्रसादसुमुखेन अनुग्रहवशाच्छोभनमुखेन दैवेन महाद्भुतप्रभावेन इत्यनेन तस्य किमशक्यं नामेति चमत्कारः । बान्धव-

१. 'बुद्ध— महाब्भाअ दिण्णं' क. ख. घ. च. छ. ज. झ. ञ. ट. पाठः. २. 'क्खु अत्ता पिअ' क. झ, 'वखु सअं अप्पा पिअ' ज. ञ. पाठः. ३. 'अत्यूर्जितं' क. पाठः. ४. 'यदन्यद्' घ. पाठः.

१. 'जनितं पातं 'मन्तव्यं' पाठः. २. 'साभिमत' ख. ङ. छ. ज. पाठः ३. 'दैवेन' ज. पाठः.

यस्य[1] प्रसादसुमुखेन समर्पितेयं
देवेन बान्धवधुरा मकरध्वजेन ॥ ४ ॥

तदनेन पक्षद्वारेण निर्गत्य साधयामः ।

(निभृतं परिक्रामन्ति ।)

---

धुरा पित्रादीनां दानाधिकृतानां धूर्भारो यस्य । समासान्तविधेरनित्यत्वात् 'ऋक्पूरब्धूः' [५-४-७४] इत्यादिना अप्रत्ययाभावः । मकरध्वजेन कामेन यस्य मम समर्पिता दत्तेति यत्तस्मात्तेन मया विजितं ईदृशस्य भागधेयस्यान्यसिद्धसम्भाव्यत्वात, 'प्रियसख्या दत्तमात्मान'[1]मित्युक्तेः । काममूलत्व[2]गर्भीकारात् मकरध्वजेनेत्युक्तिः । इयमिति रूपशीलमाधुर्यादिविशिष्टताभिनयेन तस्या जययौवनोत्सवोपपत्तिः प्रकाश्यते । परस्परानुरागस्य रूपादिगुणानां च सामानाधिकरण्यमतिदुर्लभम् । मया भाग्यवशाल्लब्धं, अत एतदुपलालने कः सन्देहावकाश इति सखीशङ्कां निराकरोति । अतिशयोक्तिरलङ्कारः ॥ ४ ॥

तद् यस्मादेतल्लाभावधिरेवं नन्दनगृहावास, एषा च लब्धा, तस्माद् , अनेनेति समीपगतत्वं पक्षद्वारेण वासगृहपार्श्वद्वारेण, महाद्वारनिर्गमे कैश्चित् परिज्ञायेत , अतस्तत्परिहारायेति भावः ।

'द्वाः स्त्री द्वारं पक्षकस्तु पक्षद्वारम् ।'

इति वैजयन्ती । साधयामः स्वाभिमतं पूरयामः , गच्छाम इत्यस्य अग्राम्येण प्रकारेणोक्तिः ।

निभृतम् निश्शब्दम् ।

---

१. 'अथ प्रसाद' छ. 'अन्यो प्रसाद' ज. पाठः. २. 'समुद्धृतैव' छ, 'समर्पितेयं' छ, 'समुधृतेयं' ब, 'समुद्धृतेयं' झ. ज. पाठः. ३. 'दैवेन' च. ट. पाठः. ४. 'द्वारेण विनिर्गत्य' क, 'द्वारेण साध' ज. पाठः. ५. 'परिक्रामति' घ. ङ. छ. पाठः

---

१. 'विशेषताभिनयेन' ज. पाठः. २. 'कथं तस्य' क. छ. ज. पाठः. ३. 'पक्षतिस्तु' ग. पाठः.

मकरन्दः — अहो निशीथिनीसञ्चाररमणीयता[1] राजमार्गस्य[2]। सम्प्रति हि[3]—

प्रासादानामुपरि वलभीजालवातायनेषु[4]
प्राप्तामोदः[5] परिणतसुरागन्धसंस्कारगर्भः[6]।

निशीथिनीसञ्चाररमणीयता रात्रिसञ्चरणे मनोहरता, निशीथनिःसम्बाधरमणीयतेत्यपि पाठः। 'मध्यरात्रनिशीथौ द्वौ' इत्यमरः। रात्रेर्गाढतया जनसम्मर्दराहित्येन कामिजनहृदयङ्गमत्वमित्यर्थः। राजमार्गस्य नगरमध्यमहावीथ्याः। अनेन राजमार्गप्राप्तिरपि सूच्यते।

रमणीयत्वमुपपादयति—संप्रति हि। प्रासादानामित्यादि—प्रासादानां राजवेश्मसौधानाम्, 'प्रासादो देवभूभुजाम्' इत्यमरः, उपरि ऊर्ध्वभागे वलभीजालवातायनेषु कूटागारसमूहस्य गवाक्षेषु। 'कूटागारन्तु वलभी' इति वैजयन्ती। तेषां सम्भोगसाधनत्वात् तत्सङ्ग्रहणम्। 'सम वधूभिर्वलभीयुवानः' इत्यादिमाघोक्तेः। प्राप्तामोदः लब्धहर्षः, सोपस्कारकपरिमलसम्पत्त्या। तथात्वमेव समर्थयति—परिणतसुरा पुराणमदिरा तस्या गन्धसंस्कारो गन्धवासना गर्भे उदरे यस्य, माल्यामोदी मालायां साधूनां पुष्पाणामतिनिर्हारी गन्धो यस्यास्ति मुहुर्बहुशः उपहितस्फारकर्पूरवासः स्फारस्य समृद्धस्य मुखवासपटवासाद्यर्थस्य कर्पूरस्य वासः सौरभ्यवासना, स उपहितः आहितो यस्मिन्, वातो वायुः अभिमतवधूसन्निधानं अभीष्टानां स्त्रीणां तत्रावस्थानं

१. 'निशीथनिस्सञ्चाररमणीयता' क. ज. झ. ञ, 'निशीथनिस्सम्बाधरमणीयता' घ, 'निशीथिनीसम्पातरमणीयता' छ. पाठः. २. 'ता मार्गस्य' क. पाठः. ३. 'स तथा हि सम्प्रति —' क. झ. ञ. पाठः. ४. 'वलभीतुङ्गवाता' क. छ. ज. झ. ञ. पाठः. ५. 'प्रान्तावृत्तः परि' क. झ. ञ पाठः. ६. 'परिचितसुरा' क, 'परिमलसुरा' ब. पाठः.

माल्यामोदी मुहुरुपहितस्फारकर्पूरवासो
वातो यूनामभिमतवधूसन्निधानं व्यनक्ति ॥ ५ ॥

(इति निष्क्रान्ताः सर्वे ।)

इति मालतीमाधवे नन्दनविप्रलम्भो नाम

॥ सप्तमोऽङ्कः ॥

---

व्यनक्ति प्रकाशयतीति तत्समर्थाचरणात्प्रयोगः । अगूढव्यङ्ग्यो लक्षणामूलोऽयं ध्वनिः । अतो रमणीये काले प्रियतमाप्राप्त्या दिष्ट्या वर्धामह इति हर्षो व्यज्यते । अत्रोदात्तमलङ्कारः, समृद्धिमद्वस्तुवर्णनात्; अनुमानं च, वातलिङ्गेन वधूसन्निधानस्यानुमीयमानत्वात् । अत्र केषाञ्चिदाढ्यानां समीपे मृष्टं भुक्तवतस्तद्दत्तमाल्याङ्गरागभूषितस्य हृष्टस्य बहिर्निर्गत्य तेषां त्यागभोगादिकं वर्णयतः सुजनस्य, अथवा तेषामविनयं पिशुनयतो दुर्जनस्य समाधिरनुसन्धेयः इत्यशेषमतिमङ्गलम् ॥ ५ ॥

मालतीमाधवस्येत्थं सप्तमाङ्कार्थचर्चनम् ।
पूर्णज्योतिःप्रसादेन चक्रे पूर्णसरस्वती ।

॥ सप्तमोऽङ्कः ॥

---

१. 'रुपचित' क. ख. घ. च. छ. ज. झ. ञ. ट पाठः. २. 'स्सार' ट पाठः. ३. 'वायुर्यूनां' क. छ. झ. ञ. पाठः. ४. 'मभिनववधू' क. झ. ञ. पाठः.

---

१. 'ततो' क. ग. छ. ज. पाठः.

## अथ अष्टमोऽङ्कः ।

(ततः प्रविशत्यवलोकिता ।)

अवलोकिता — बन्दिदा मए[1] भअवई णन्दणावास[2]पडिणिउत्ता । ता जाव[8] माळईमाहवसआ[3]सं गच्छामि । (परि[4]क्कम्याग्रतो विलोक्य) एदे[5] क्खु माळईमाहवा णि[6]व्वत्तिदगिह्मदिअसावसाणमज्जणा दीहिआतडसिळातळं अलं[7]करेन्ति । ता उ[9]वसप्पामि ।

(वन्दिता मया भगवती नन्दनावासप्रतिनिवृत्ता । तद्यावन्मालतीमाधवसकाशं गच्छामि । (परिक्रम्य अग्रतो विलोक्य) एतौ खलु मालतीमाधवौ निर्वर्तितग्रीष्मदिवसावसानमज्जनौ दीर्घिकातटशिलातलमलङ्कुरुतः । तदुपसर्पामि ।)

(इति निष्क्रान्ता ।)

॥ प्रवेशकः ॥

---

अथ प्रवेशकमारभते — ततः प्रविशत्यवलोकितेति । वन्दिता मया भगवती नन्दनावासप्रतिनिवृत्ता । तद्यावन्मालतीमाधवसकाशं गच्छामि । वन्दिता अभिवादितेति गुरुवन्दनस्य प्रतिदिनं व्रतत्वेनानुष्ठेयत्वादुक्तिः[1] । नन्दनस्य आवासाद् गृहात् प्रतिनिवृत्तेति 'णन्दणं आपुच्छिअ णिआवसहं गआ' इत्युक्तं सङ्घटयति । यावदिति वाक्यालङ्कारे, अवधारणे वा । मालतीमाधवयोः विहारोद्यानवर्तिनोरित्यर्थात्, सकाशं समीपमेव गच्छामीत्यर्थः । अत्र मदयन्तिकापहरणरात्रेः पूर्वस्य दिवसस्य वृत्तान्तः कविना कथ्यते क्रमेण तद्रात्रि[2]कालसङ्घटनायेति मन्तव्यम् । एतौ खलु मालतीमाधवौ निर्वर्तितग्रीष्मदिवसावसानमज्जनौ दीर्घिकातटशिलातलमलङ्कुरुतः । तदुपसर्पामि । निर्वर्तितमनुष्ठितं

---

१. 'मए जाव भअ' क. पाठः. २. 'वसहपडि' छ. ज. पाठः. ३. 'आसं जेव्व गच्छ' क पाठः. ४. 'क्कम्य) णिव्वत्तिद' क, 'क्रम्य) एदे' ङ. छ. ज. झ. ञ. पाठः. ५. 'एदे दे माळई' घ, 'एदे दे पाराणिउसिदगिम्ह'ज, 'एद दे णिव्व' झ. ञ. पाठः. ६. 'णिव्वुत्त' ख. घ. ङ. च. छ. पाठः. ७. 'करेन्ति माळईमाहवा' झ. पाठः. ८. 'जाव उव' क, 'ता जाव उव' झ. ञ. पाठः. ९. 'उवसप्पिस्सं' क. झ, 'पविसामि' च. पाठः.

---

१. 'नुष्ठितत्वादुक्तिः' क. पाठः. २. 'तद्रात्रिसङ्घट' क. ग. छ. ज. झ. पाठः

(ततः प्रविशतो मालतीमाधवावुपविष्टौ अवलोकिता च ।)

माधवः — (सानन्दं) वर्तते हि मन्मथप्रौढिसुहृदो निशीथस्य यौवनश्रीः । तथाहि—

ग्रीष्मदिवसस्यावसाने सायङ्काले मज्जनं शिरःस्नानं याम्यां । पूर्वप्रस्तुतस्य वसन्तस्यापगमाद् ग्रीष्मोक्तिः । दीर्घिकायाः क्रीडावाप्याः तीरगतं स्फटीकमणिकुट्टिमं शैत्यहेतोर्विभूषयतः, तदधिवासाच्छिलातलस्य शोभातिशयसम्पत्तेः ।

"उद्यानसलिलक्रीडा छायाकिसलयास्तराः ।
धारागृहं मणिगृहं मृणालमणिकुट्टिमे ।
इत्यादयः स्युः संसृष्टा ग्रीष्मे रागप्रदीपनाः ॥"

इति वचनात्, 'सुभगसलिलावगाहाः, परिणामरमणीयाः' इत्यादिभिश्च । ग्रीष्मर्तोः सायं स्नानस्य शिलातलस्य च ग्रहणमुद्दीपनत्वातिशयात्

"सरितः पुलिनं वेला कान्तारारामभूधराः ।
दिवा विहारदेशाः स्युः"

इति वचनाद् दीर्घिकातटस्य ग्रहणम् ॥

॥ प्रवेशकः ॥

उपविष्टाविति 'सिलातलं अलङ्करेन्ती'त्युक्तं घटयति । अवलोकिता चेति तस्या अप्युपस्सृतत्वम् ।

सानन्दमित्यनुकूलकालसम्पत्तेः । वर्तत इति वर्तमानसामीप्याल्लट् । वर्तिष्यत इत्यर्थः । मन्मथप्रौढिसुहृदो मदनस्य प्रभावसम्पादने मित्रभूतस्य । निशीथस्येति 'निशीथस्त्वर्धरात्रकः' इत्युक्तोऽपि निशीथशब्दोऽत्र रात्रिमात्रमाह, अर्धरात्रस्यैव यौवनत्वात् । यौवनश्रीः मध्ययामस्य लक्ष्मीः, तदानीं गगनशिखरगतातपसमयहिमकरकरनिकरपरिलसितभुवनतया, दिनम्मन्यत्वाल्लोकोत्तरसम्भोगसाहाय्यं रात्रेरिति भावः ।

१. 'प्रविष्टौ माल' क, 'प्रविशन्त्युपविष्टाः मालतीमाधवावलोकिताः ।)' घ. पाठः. २. 'माध—(स्वगतं सानन्दं )' क. पाठः. ३. 'प्रौढसुहृदो' क. ज. झ. ञ. पाठः.

१ 'अप्युपसृष्टत्वं' ज. पाठः. २. 'प्रौढसुहृदो' क. पाठः. ३. 'प्राभव' ङ. ञ. पाठः.

दलयति परिशुष्यत्प्रौढतालीविपाण्डु-
स्तिमिरनिकरमुद्यन्नैन्दवः प्राक् प्रकाशः ।
वियति पवनवेगादुन्मुखः केतकीना-
मभिनव इव सान्द्रो माकरन्दः परागः ॥ १ ॥

भविष्यन्तीं श्रियमेवानुमित्या साधयति— दलयतीत्यादि । परिशुष्यत्प्रौढतालीविपाण्डुः परिशुष्यन्ती न तु परिशुष्का इति ईषत्पाण्डुत्वायोक्तिः, प्रौढा परिणता ताली राजतालीपत्रिकेव विपाण्डुर्विरूपधावल्या, उदयरागमिलितत्वात् । तिमिरनिकरं तमःसमूहं दलयति शकलीकरोति । उद्यन्नुद्गच्छन् । न पुनरदलयदिति न पुनरुदित इति विपाण्डुत्वे हेतुः । ऐन्दवः इन्दुसम्बन्धि, 'तस्येदं' (४-३-१२०) इत्यण्प्रत्ययः, प्राक् पूर्वदिग्भागे प्रकाशः आलोकमात्रं, न पुनः किरणकलापः, तस्याप्युक्तत्वात् ; 'अनन्तरं चासन्नचन्द्रोदयजन्मना विरलविरलेनालोकेन वसन्तवनराजिरिव कुसुमरजसा धूसरतां वासवीदिगयासीद्' इति कादम्बर्युक्तवत् ; उन्मुखः ऊर्ध्वगमनोद्यतः अभिनवः तत्कालविकासाभवत्वेन स्फुटधवलः सान्द्रो निरन्तरः माकरन्दः मकरन्देन पुष्परसेन रक्तः । 'तेन रक्तं रागाद्' (४-२-१) इत्यण्, न पुनः 'तस्येद'मिति,

'मकरन्दः पुष्परसः परागः सुमनोरजः ।'

इत्यभिधानाद् द्वयोः पृथग्द्रव्यत्वात् ।

"अपसर मधुकर ! दूरं
परिमलबहलेऽपि केतकीकुसुमे ।
इह नहि मधुकणलाभो
भवति परं धूलिधूसरं वदनम् ॥"

इत्यादिषु केतकीकुसुमस्य मध्वभावः प्रतिपाद्यते, कथमत्र माकरन्देत्युक्तिः ? उच्यते — कुसुमत्वाविशेषादस्यापि मधुसद्भावोऽस्त्येव । न तु कुन्दमाकन्दादिवत् तस्य प्रभूतत्वं, परागस्यैवाधिक्यात् । 'अपसर मधुकरे'त्यत्रापि

१. 'निचय' घ. पाठः. २. 'नां प्रचलित इव' क. छ. ज. झ. ञ. पाठः. ३. 'मन्दमन्दः परागः' क, 'स्फारस्फारं परागः' ज, 'मन्दं मन्दं परागः' ञ. पाठः. ४. 'गः ॥ तत्कथं' क. पाठः.

१. 'कुसुमत्वादिविशेष' ख. ग. छ. ञ. पाठः २. 'विशेषत्वाद्' ख. पाठः.

(स्वगतं) तत् कथं वामशीलां मालतीमुपावर्तये । भवत्वेवं तावत् । (प्रकाशं) प्रिये मालति ! प्रत्यग्रसायन्तनस्नानसविशेषशीतलां अत्र भवतीं निदाघसन्तापशान्तये किञ्चिद् विज्ञापयामि । तत् किमिति नित्यमन्यथैवं मां सम्भावयसि ।

---

न मध्वभावः प्रतिपाद्यत, तल्लाभस्यैव निषिध्यमानत्वात् । तत्र हेतुः धूलीपालीधूसरितेवदनत्वम् । अतो न कश्चिद् विरोधः । परागस्य पुष्परजसः स्वतो भावरूपस्य रागानुविद्धत्वप्रतिपादनायात्र माकरन्दत्वोक्तिः, अन्यथोदयराग-रूपितस्यैन्दवप्रकाशस्योपमानत्वानुपपत्तेः । अतः शोभनसस्याङ्कुरदर्शनादिव सस्यसमृद्धिर्भाविनी यौवनश्रीरनुमीयत इत्यर्थः । अत्रोपमालङ्कारः ॥ १ ॥

स्वगतम् । तत् यस्मादेतदानुकूल्यमन्तरेण महाव्यसनतयेयं परिणंस्यते तस्माद्, वामशीलां नवोढत्वान्मुग्धत्वाच्च प्रेमपरवशत्वेऽपि त्रपया प्रतिकूल-माचरन्तीमित्यर्थः, उपावर्तये स्ववशे करोमि, 'प्रयोज्यस्योपावर्तनं' इति कामसूत्रप्रसिद्धेः । भवतु तथा सा वर्तताम् , एवं तथाप्येवं क्रियमाणे फल-सिद्धिर्भविष्यतीति स्वमतिनिर्णयः । एवमिति वक्ष्यमाणप्रकारः । तावदिति प्राथम्ये, तस्याप्यन्यथात्वे क्रियान्तरं प्रयोक्ष्यामह इति भावः । प्रकाशम् । प्रत्यग्रसायन्तनस्नानसविशेषशीतलां अयातयामेन दिनावसानमज्जनेन पूर्वस्मा-दधिकं शिशिरशरीरां, पूर्वमेव चन्द्रचन्दनादिभ्योऽपि मदङ्गनिर्वापणाय पर्याप्तशैत्यत्वात् । निदाघसन्तापशान्तये ग्रीष्मदिवसोष्मस्वेदशमनार्थं किञ्चित् किमपि वक्ष्यमाणं वस्तु विज्ञापयामि साभ्यर्थनं वदामीत्यर्थः । तत् तस्मात् सन्तप्तरक्षणस्यौचित्यादित्यर्थः, किमिति किमर्थं नित्यं सर्वदा, ह्रीस्त्रिर्वा त्रपा सम्भाविता भवतु नाम, कदाचिद् वयमपि दयनीया इति भावः, अन्यथैव प्रार्थितार्थप्रतिलोमेनैव मां सम्भावयसि सत्करोषीति त्वत्प्रातिलोम्यमपि मम

---

१. 'तं) कथं' घ. छ. पाठः. २. 'कथं हि वाम' ख. घ. ङ. पाठः ३. 'स्नानविशेष' क. घ. च. ज. पाठः. ४. 'ताप' क. पाठः. ५. 'शान्तये विज्ञ' क. झ. पाठः. ६. 'किमित्यन्यथैव' ज, 'किमिव्ययानिमित्तमन्यथैव' झ. ञ. पाठः. ७. 'व सम्भाव' ङ. झ. पाठः.

---

१. 'धूलीधूसरि' ख. ञ. पाठः. २. 'त्वम् । अतो' क. ग. छ. ज. पाठः. ३. 'रागाविद्ध' ञ. पाठः. ४. 'पादनयात्र' ख. ञ, 'पादनायामत्र' ज. पाठः. ५. 'अथ' ज. पाठः. ६. 'प्रतिरूपमाचर' ग. पाठः. ७. 'दिवसावसान' ज. पाठः. ८. 'दिवसोत्थखेद' क, 'दिवसोत्थस्वेद' ग, 'दिवसोत्थवेदनाशमन' ज. पाठः.

निश्चयोतन्ते सुतनु ! कबरीबिन्दवो यावदेते
यावन्मध्यः स्तनमुकुलयोर्नार्द्रभावं जहाति ।
यावत्सान्द्रप्रतनुपुलकोद्भेदवत्यङ्गयष्टि-
स्तावद्गाढं वितर सकृदप्यङ्कपालीं प्रसीद ॥ २ ॥

हृदयरसायनमिति द्योतयति । अथवा मामन्यथैव अन्यः कश्चिदयं त्रपाविषयो न पुनरस्मदीयो दास इति गणयसि किमर्थमित्यर्थः ।

विज्ञापनप्रकारमेवाह — निश्चयोतन्त इत्यादि । निश्चयोतन्ते नितरां गलन्ति । सुतनु शोभनशरीरे इत्यामन्त्रणेन स्वत एव त्वं स्पर्शनामृतेन मामुज्जीवयितुं शक्ता, किं पुनरस्मिन् काले प्रत्यग्रस्नानशीतलेति प्रकाश्यते । कबरीबिन्दवः स्नानार्द्रमुक्तस्य केशहस्तस्य सलिलशीकराः, यावद् यस्मिन् कालावधौ ; स्तनमुकुलयोः नवाङ्कुरितयोः स्तनयोः मध्योऽन्तरालदेशः, तस्य किञ्चिन्निम्नतया झटिति शोषाभावाद् , आर्द्रभावं न जहाति न मुञ्चतीति दीर्घायुष्यसूचकमुत्तमलक्षणं चैतत्सूचयति कविः ; सान्द्रो निरन्तरः प्रतनुः सूक्ष्मः पुलकोद्भेदो रोमाञ्चप्ररोहः तद्वती तद्विशिष्टा, शिशिरपवनसम्पर्काद् , अङ्गयष्टिः करचरणादिसन्निवेशः ; तावत् तस्मिन् कालावधौ, गाढं दृढं यथा सकृदपि एकवारमपि, क्रियासमभिहार एव मम मनोरथः स तावन्न शक्यश्चे-न्मा भूदित्यर्थः, अङ्कपालीमालिङ्गनं वितर देहि । वितरेत्यनेन तव न कश्चि-दायासः, अस्माकं तु महान् निधिलाभोऽयमिति द्योतयति ।

'आलिङ्गनमपि क्रोडीकरणं चाङ्कपाल्यपि ।'

इति वैजयन्ती । प्रसीद कारुण्यं कुरु, अनन्तरक्षणेऽभिलषितस्य निदाघ-सन्तापात्यन्तशमनस्यानुपपत्तेरिति भावः । अत्रौत्सुक्यं व्यज्यते । अतिशयो-क्तिरलङ्कारः ॥ २ ॥

१. 'निश्चोतन्ते' क. ख. ग. पाठः. २. 'यायान्मध्यः' ख. पाठः. ३. 'स्तनयुगलयो' क. पाठः. ४. 'योरार्द्रभावं' ख. ङ. ज. पाठः.

१. 'केशवेशस्य' ङ. पाठः. २. 'शुद्ध्वसूचक' ग. ङ. ज. पाठः.

अयि मालति ! निरनुक्रोशे !

जीवयन्निव समूढसाध्वस-
स्वेदबिन्दुरधिकण्ठमर्प्यताम् ।
बाहुरैन्दवमयूखचुम्बित-
स्यन्दिचन्द्रमणिहारविभ्रमः ॥ ३ ॥

---

निरनुक्रोशे कारुण्यरहिते ।

"..................करुणा तु दया कृपा ।
घृणानुकम्पानुक्रोशः कारुण्यं च ........॥"

इति वैजयन्ती ।

पूर्वोक्तस्याशक्यत्वमाशङ्क्य किञ्चिदर्वाचितपर्वणि प्रार्थनामाविष्करोति — जीवयन्निवेत्यादि । जीवयन् प्राणयितुमिच्छन्निति हेतौ शता, इवेत्युत्प्रेक्षाद्योतकं, सन्तापदग्धतया मोमुह्यमानं मां जीवयितुमिवेत्यर्थः । उत्प्रेक्षणे निमित्तमाह — समूढसाध्वसस्वेदबिन्दुः समन्तादूढो धृतः साध्वसेन नवसङ्गमभयेन जनितश्रमजलकणो येन । जलबिन्दुसेकस्याश्वासनसाधनत्वाज्जीवयन्निव न तु जीवयन्त्येवेति तव निरनुक्रोशत्वेऽपि बाहोस्तावन्मयि दया दृश्यत एवेति द्योतयति । अधिकण्ठं कण्ठे, कण्ठ एव, तद्गतानां प्राणानां निवारणीयत्वाद्, अर्प्यतां दीयतां, त्वयेति शेषः । बाहुः भुजलता, एकवचनेन जीवने द्वितीयनिरपेक्षस्यैव तस्य पर्याप्तिः प्रकाश्यते । स्वेदबिन्दुदर्शनदशायामुपमिमीते — ऐन्दवमयूखचुम्बितस्यन्दिचन्द्रमणिहारविभ्रमः चन्द्रसम्बन्धिभिः किरणैः संश्लिष्टत्वाद् जलबिन्दुक्षरणशीलस्य चन्द्रकान्तगुलिकाविरचितस्य हारस्य विलास इव विलासो यस्य । हारशब्दोऽत्र लक्षणया यष्टिमात्रमाह,

'हारावलीव हरिनीलमयी विभाति ।'

---

१. 'अयि निरनु' क. छ. झ. ञ. पाठः. २. 'निरनुरोधे !' क. छ. झ. ञ. पाठः. ३. 'जीवयन्मम' छ. पाठः.

---

१. 'साशङ्कयत्व' क. ङ. छ. पाठः. २. 'दर्वाचिपर्वणि' क. ग, 'दर्वाचीनपर्वणि' ख. पाठः. ३. 'मामुज्जीवयितुं' झ. पाठः. ४. 'बिन्दुवहदर्शन' ङ. पाठः. ५. 'मुपमीयते' ग, ञ. पाठः.

अथवा दूरे तावदेतत् । कथमालापसंविभागमात्रस्याप्यभाजनमयं जनो भवत्याः ।

दग्धं चिराय मलयानिलचन्द्रपादै-
र्निर्वापितं तु परिरभ्य वपुर्न नाम ।
आमत्तकोकिलरुतव्यथिता तु हृद्या-
मद्य श्रुतिः पिबतु किन्नरकण्ठि! वाचम् ॥ ४ ॥

इत्याचार्यप्रयोगात्, 'सूत्रिका मौक्तिकैः कृता', 'हारो मुक्तावली स्त्री स्यात्' इति हारशब्दस्य मुख्यवृत्त्या मुक्तावल्यामेव वृत्तेः । मसृणस्निग्धधवलशीतलतनुवृत्तायतत्वादिभिश्चन्द्रमणिहारसाम्योक्तिः । अत्रोत्प्रेक्षा उपमा चालङ्कारः ॥ ३ ॥

तत्राप्यशक्यतया निराशोऽर्थान्तरं प्रार्थयते — अथवेति पूर्वोक्तं व्यावर्तयति । तत्र हेतुः — दूरे तावदेतत् असत्कृतं प्रार्थनं दूरे विप्रकृष्टे देश एव, दुर्लभविषयत्वादिति भावः । कथमित्याश्चर्ये । आलापसंविभागमात्रस्य वक्तव्ये स्थले विशङ्कं सम्भाषणदानस्य, अपीति स्पर्शनमन्तरेण दूरस्थितयापि तस्य शक्यत्वात् सुलभत्वं प्रकाशयति, अभाजनं अपात्रं अयं जन इति त्वत्स्नेहविस्रम्भयोर्भाजनत्वेन लोके प्रसिद्ध इत्यर्थः । भवत्याः तव ।

आलापसंविभागस्यापि परमोपकारित्वमुपपादयति — दग्धं चिरायेत्यादि । चिराय बहुकालं मलयानिलचन्द्रपादैः दक्षिणमारुतेन चन्द्रकिरणैश्च । दग्धत्वोक्तिर्झटिति निर्वापणस्यौचित्यादुपेक्षणस्यानौचित्यं ध्वनयति । निर्वापितं शीतलीकृतम् । तुर्भिन्नक्रमो व्यावृत्तौ । वपुस्त्विति सम्बन्धः । न नाम नैव, परिरभ्य आलिङ्ग्य, परिरम्भणमन्तरेण निर्वापणस्याशक्यत्वात् । तस्य च त्रपाविघ्नितत्वात्तत्र मैव भूत्, सम्भावितमेव तदित्यर्थः । नामशब्दः सम्भावनायाम् । आमत्तकोकिलरुतव्यथिता समन्तादमन्दमाकन्दमकरन्दपानमत्तानां

१. 'तावत् । कथं' छ. पाठः. २. 'विभागस्य' क. ख. घ. ङ. च. छ. ज. झ. ञ. ट. पाठः. ३. 'निर्व्यापितं' क. पाठः. ४. 'तत्र परि' ब. ञ. ट, 'तन्न परि' छ. पाठः.

१. 'प्रार्थ्यमानं' ज. पाठः. २. 'दानस्यतस्या, अपीति' ख. ङ. झ. ञ. पाठः. ३. 'ध्वनति' क. ख. ग. ङ. छ. झ. ञ. पाठः. ४. 'विहितत्वात्' ख. ग. ङ. छ ज. झ. ञ. पाठः. ५. 'अत्र मैव' क, 'तत्तु मैव' ग. ङ. छ. झ, 'तत्तु मैवं भूत्' ञ. पाठः. ६. 'समन्तादमन्दमकरन्द' क, 'समन्तान्मकरन्द' ञ. पाठः.

अवलोकिता— अइ अणिव्वहणसीले ! जं दाणिं मुहुत्त-न्तरिअमोहवा वि दुम्मणाअन्ती मम पुरदो भणासि—'चिराअदि अज्जउत्तो । अवि णाम अइरेण तं पेक्खे । जेण विच्छदिआसेसरसद्दसं विसुमरिद-विग्घमवलोअअन्ती एव्वं भणिस्सं, तह भणिस्सं, दिउणावेट्ठपरिरम्भेण संभाविस्सं' ति । तस्स अअं परिणामो ?

---

कोकिलानां रावैः कदर्थिता । मलयानिलकोकिलकृतग्रहणं नचिरातीते वसन्त-समये विरहदुःखस्यानुभूतत्वात् । हृद्यां मनोहराम् । श्रुतिः श्रोत्रेन्द्रियम् । किन्नरकण्ठि किन्नराणां अश्वमुखानां देवगायकानां कण्ठ इव कण्ठो यस्याः । काकितन्त्रकीसन्दष्टकपिलकाकलिप्रमुखदोषरहितश्रोत्रकनिभकन्तः कण्ठ इत्यर्थः, 'किमिदं किन्नरकण्ठि ! सुप्यते' इतिवत् । अयं हृद्यत्वे हेतुः— श्रुतिस्तु हृद्यां वाचं पिबतु आस्वादयत्विति प्रार्थनायां लोट् । श्रुतिस्त्विति तुशब्देन सर्वेन्द्रियाह्लादकारिणो गरीयसः परिरम्भोपकारस्याकरणेऽपि श्रोत्रमात्रस्याप्या-ह्लादनेनानुग्रहः कर्तव्यः, लघीयस्तया शक्यस्याप्युपकारस्याकरणे नृशंसत्व-प्रसक्तेरिति भेदप्रयोगः । अत्रौत्सुक्यं भावः प्रकाश्यते । अतिशयोक्तिरल-ङ्कारः ॥ ४ ॥

अथ सखी वैदग्ध्यान्मिथ्यावचनोपन्यासेन तामालापयितुमुपायं प्रयुङ्क्ते— अयि अनिर्वहणशीले ! यदिदानीं मुहूर्तान्तरितमाधवापि दुर्मनायमाना मम पुरतो भणासि—'चिरायत्यार्यपुत्रः । अपि नामाचिरात् तं प्रेक्षे । येन विच्छर्दिता-

---

१. 'अव— (उपसृत्य) अइ' क झ. ञ. पाठः. २. 'मुहूत्तं अदिट्ठमाहवा' क 'मुहुत्तमेत्तन्दरिअ' ज. पाठः. ३. 'माहवा दुम्मणा' क. ज, झ ञ. पाठः. ४ 'कंचि-रेण' क. झ, 'अइरात्' घ. च, छ, 'किअचिरेण' ञ. पाठः. ५. 'पेक्खिस्सं' क. ख. ज. झ ञ. पाठः. ६. 'जेण पुणो वि' ज. ञ. पाठः. ७. 'विवाड्डुआसेस' ज. पाठः. ८. 'सद्दसा' क. ज. झ. ञ. पाठः. ९. 'सुमरिदणिमेसविग्घ' क. छ. ज. झ. ञ पाठः. १०. 'अन्ती एव्व दिउणा' छ. पाठः. ११. 'स्सं, दिउणा' क. छ. च. ज. झ. ञ. ट. पाठः. १२. 'दुउणाविअणपरि' क. ज, 'दिउणिओविडुणपरि' ज. पाठः. १३. 'संभावए त्ति', 'सम्भावअस्सि' त्ति' झ. ञ. पाठः. १४. 'तस्सि सम्पदं दे अअं' क, 'तस्स सम्पअं काअं' ख. घ. छ. च छ, 'स एव्व अअं' ज, 'तस्स दे सम्पअं अअं' झ. ञ. पाठः.

---

१. 'गायनानां' ग, छ. छ. झ झ. ञ. पाठः. २. 'श्रावक' ख. पाठः.

(अयि अनिर्वहणशीले ! यदिदानीं मुहूर्तान्तरितमाधवापि दुर्मनाय-माना मम पुरतो भणसि—'चिरायत्यार्यपुत्रः । अपि नामाचिरात् तं प्रेक्षे । येन विच्छर्दिताशेषसाध्वसं विस्मृतविभ्रममवलोकयन्ती एवं भणिष्यामि, तथा भणिष्यामि, द्विगुणावेष्टपरिरम्भेण सम्भावयिष्यामी'ति । तस्यायं परिणामः ?)

---

शेषसाध्वसं विस्मृतविभ्रममवलोकयन्ती एवं भणिष्यामि, तथा भणिष्यामि, द्विगुणावेष्टपरिरम्भेण सम्भावयिष्यामी'ति । तस्यायं परिणामः ? अयि हे ! । अनिर्वहणं प्रक्रान्तस्यापरिसमापनं शीलं यस्याः । तथात्वमेव समर्थयति—इदानीमनन्तरातीते काले, न पुनर्युगान्तरे, मुहूर्तमन्तरितः सन्ध्योपासनाद्यर्थं प्रचलितत्वेन तिरोहितो माधवो यस्याः, विघटितदर्शन इति यावत् । अपिशब्दो क्षणमात्रान्तरितत्वे किं पुनः कथयाम इति द्योतयति । दुर्मनायमाना शोचन्ती मम पुरतः सन्निधौ, न तु पुरुषान्तरस्य, भणसि कथयसीति यदा यदा अन्तरितत्वं तदा तदा तथोक्तिः सूच्यते । भणनप्रकारमाह — चिरायति बहुकालं विलम्बते । आर्यपुत्र इति साध्वीनां भर्तृविषय उपचारशब्दः । 'पतिस्त्वार्य आर्यपुत्रः' इति वैजयन्ती । अपि नामेति सम्भावना । अतिस्नेहस्य पापशङ्कितत्वात् अचिरदर्शने त्वया किं क्रियत इत्यत्राह— येन यस्मात् विच्छर्दिताशेषसाध्वसं परित्यक्तसमग्रोत्कम्पं विस्मृतविघ्नं चिरदर्शनाभावोद्वेगेनानिरूपितो लज्जारूपो दर्शनप्रत्यूहो यथा तथेति क्रियाविशेषणम् , अवलोकयन्ती आर्जवेन पश्यन्ती, एवं भणिष्यामि तथा भणिष्यामीति उक्तानां प्रकाराणामशक्यवर्णनत्वद्योतनाय सङ्ग्रहः । भणिष्यामीत्युक्तेः चिरविलम्बासहतया सेर्ष्यत्वात् केदानीं युष्माभिर्गतमित्युक्तेर्मकरन्दं द्रष्टुं गतोऽस्मीत्यादि यदि वदति ततस्तस्मिन् मिथ्यान्यत्र कुत्रापि विनोदनार्थं गतमित्याद्युक्तिप्रत्युक्तिकाविरचनापि द्योत्यते । द्विगुणावेष्टः भुजलतयोर्द्विगुणितयोरावेष्टः, शृङ्खलयेव नरितो बन्धनं, तेन यः परिरम्भः आश्लेषस्तेन सम्भावयिष्यामि चिरविलम्बदण्डत्वेन प्रयुक्तत्वात्तस्य मत्प्रभीतस्य प्रसादद्योतनेन प्रीतिं करिष्यामीत्यर्थः । इति मम पुरतो भणसीत्यन्वयः । तस्य वचनस्य अयमनुभूयमानो मौनपरिग्रहानालोकनादिरूपः परिणामः फलं अवसानं वा ।

---

१. 'ष्यामि, अथवा भणिष्यामि, द्विगुणा' ग. पाठः. २. 'मन्तरातीते' क. ङ. पाठः. ३. 'सुख मक' ग. छ. पाठः. ४. 'विनोदार्थं' ख. च. ज. पाठः.

(मालती सासूयमिव तां पश्यति ।)

माधवः— (अपवार्य) अहो भगवत्याः प्रधानान्तेवासिन्याः सर्वतोमुखं वैदग्ध्यम् । अक्षयस्सुभाषितरत्नकोशः । (प्रकाशम्) प्रिये ! सत्यमवलोकिता वदति ?

(मालती मूर्धानं चालयति ।)

माधवः — शापितासि मम अवलोकितालवङ्गिकयोश्च जीवितेन यदि न कथयसि ।

---

सासूयं सकोपं, इवेत्यहृदयपूर्वकत्वोक्तिः ।

अपवार्य स्वगतम् । अहो इति हर्षे । भगवत्याः कामन्दक्याः प्रधानान्तेवासिन्याः प्रतिभागुणादातिशय्याया इत्यनेन सद्गुरूपदेशस्य प्रतिभागुणस्य च सामर्थ्ये किं नाम न सम्भाव्यत इति द्योतयति. सर्वतोमुखं सर्वासु क्रियासु सकलासु कलासु च मुखमाभिमुख्यं यस्य, वैदग्ध्यं प्रागल्भ्यम् । अक्षयः अवसानरहितः सुभाषितरत्नकोशः शोभनानां अवसरोपयुक्तत्वाद्रसावहानां भाषितानामेव रत्नानां, अनर्घत्वाच्छोभावहत्वाच्च रत्नत्वारोपः. कोशो निधिः । अजानन्निव पृच्छति — सत्यं परमार्थं, वदतीति काका असत्यं वा वदतीति सूच्यते ।

मूर्धानं शिरः चालयति सत्यत्वनिषेधाभिनयेन तिर्यक् शिरः कम्पयतीत्यर्थः ।

स्ववचनोत्तरत्वेन मूर्धचालनस्य लाभात् किञ्चिल्लब्धावकाश आह— शापिता शापं प्रत्ययं कारितासि, मम जीवितेन प्राणैः अवलोकितालवङ्गिकयोश्च, जीवितेनेति सम्बन्धः, अस्मात्त्रयात् परस्य स्नेहविस्रम्भभाजनभूतस्य कस्यचिदभावाद् यदि न कथयसि सत्यमिदमनयोक्तमसत्यं वेति वाचा यदि

---

१. '(स्वगतं)' क. ङ. ज. पाठः. २. 'प्रथमान्तेवासिन्याः' ज. पाठः. ३. 'अक्षयश्च सुभा' क. ग, 'अक्षय्यस्सुभा' ङ. ज. पाठः. ४. 'रत्नसारसंस्करणम्' ज. पाठः. ५. 'प्रिये ! अपि सत्य' ख. ङ. पाठः ६. 'तिर्यङ्मूर्धानं' क. पाठः. ७. 'मया' क. पाठः. ८. 'यदि वाचा न' क. ङ. ज. 'यदि वा न' ख, 'यदि मे न' ज. पाठः.

---

१. 'अजानन्निवेव' क. ज. 'अज्ञा इवेव' ख. ङ. ग. ज. पाठः. २. 'असत्यं वद' ख. ग. पाठः. ३. 'सत्यत्व निषे' क. ग. ङ ज. पाठः.

मालती— णाहं किं[1] पि[2] भणामि। (नाहं किमपि भणामि।)

(इत्यर्धोक्ते[3] लज्जां नाटयति।)

माधवः — अहो! अनवसितार्थमन्थरस्य वचसश्चारुता।

न कथयसि न पुनरभिनुैैः। ततोऽस्माकं जीवितशापव्यतिक्रमस्त्वया कृतो भविष्यतीत्यर्थः। जीवितेन शापितासीति तृतीयाप्रयोगः, शपथमात्रे विवक्षणात्। 'श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमान' (१-४-३४) इति चतुर्थी न प्रयुक्ता, ज्ञीप्स्यमानत्वाभावात्।

"दर्दरेण च ते देवि! शपे मूलफलेन च।
मलयेन च विन्ध्येन मेरुणा मन्दरेण च॥"

इति श्रीरामायणे,

'स्वाध्यायेन शपे शपे परशुना पत्या पशूनां शपे।'

इत्यादिप्रयोगदर्शनाच्च।

तदुपायप्रयोगस्य फलं दर्शयति — नाहं किमपि भणामीति। अनया मदुक्तित्वेन यदुपन्यस्तं तत्र किञ्चिदपि मया न भणितं, मिथ्यैवानयो[1] विज्ञप्तम्। इति विवक्षितेऽनुक्ते अर्धोक्ते एकदेशस्य वचने कृत इत्यर्थात्, लज्जां नाटयतीति पूर्वमार्जवेन तन्मिथ्यावचनासहतया झटिति वक्तुमुपक्रान्ते पुनर्मध्ये स्वाभाविकी लज्जा हठनाक्रान्तवतीत्यर्थः। विहृताख्यश्चायं भावः,

'प्राप्तकालं न यद् ब्रूयाद् व्रीडया विहृतं[3] हि तत्।'

इति वचनात्॥

अहो इति हर्षे। अनवसितार्थमन्थरस्य असमाप्ताभिधेयतयानुल्बणस्य वचनस्य मधुरता। 'कथमालापसंविभागस्याप्यभाजनमयं जनो भवत्या' इत्यारभ्य 'अहो अनवसितार्थमन्थरस्य वचसश्चारुते'त्यन्तेन प्रकरणेन इदमनुसन्धातव्यं — '[4]दृष्ट्वा चिरं स्थित्वा निर्बध्यमाना शिरः कम्पयेत्। संस्तुता चेत् सखीमनुकूलामुभयतो विस्रब्धामन्तरा कृत्वा कथायोजनम्। तस्मिन्प्रयो-

१. 'किं पि ण भणामि' घ, 'किं पि ण जाणामि' च. पाठः. २. 'जाणामि' क. च. छ. ज. झ. ञ. पाठः. ३. 'क्तौ' ट. पाठः.

१. 'न' ख. पाठः. २. 'पा जल्पि' ख. ङ. ञ. पाठः. ३. 'विधृतं' ख. पाठः. ४. 'दृष्ट्वा' इति मुद्रितपाठः.

(सहसा निरूप्य) अवलोकिते ! किमेतत् ?

बाष्पाम्भसा मृगदृशो विमलः कपोलः
प्रक्षाल्यते झपदि गजत एष यस्मिन् ।
गण्डूषपेयमिव कान्त्यमृतं पिपासु-
रिन्दुर्निवेशितमयूखमृणालदण्डः ॥ ९ ॥

मुखी विहसेत् । तां चानिवादिनीमपनुदंत विनिदेश । सा तु परिहासार्थमिदं अनयाभिहितमित्यनुक्तमपि ब्रूयात् । तत्र तामपनुद्य नैवमहं ब्रवीमित्यव्यक्ताक्षरमनवासितार्थं ब्रूयात्' इति कामसूत्रोक्तमालापप्रयोजनमुदाहृतमिति ।

अथ तस्या मुखे विकृतिमुपलक्ष्य सभय आह — सहसेति भयानुभावः, निरूप्य विलोक्य । किमेतत् किं निमित्तमेतदिति ।

निर्दिष्टं तस्यै दर्शयति — बाष्पाम्भसेत्यादि । मृगदृश इति, न तु मृगदृशेति, षष्ठ्या मनसो द्रवीभावात् स्वयमेव झटिति नेत्रजलस्य प्रवृत्तिः द्योत्यते । विमलः स्वत एव निष्कलङ्कः । प्रक्षाल्यते धाव्यत इति प्रतियत्नाभावात् प्रक्षालनस्य कैमर्थक्यं प्रकाश्यते । झपदीति परिहासमध्ये प्रसक्तत्वादज्ञायमानकारणत्वं द्योतयति । एष उदयमानः । गण्डूषपेयं गण्डूषेण मुखकुहरपूरणेन पातुं शक्यं, अतिबहलतया घनेन कपोलकुहरं पूरयितुं पर्याप्तमित्यर्थः, 'श्रुतिचुलुकलेह्येन मधुना' इति, 'श्रवणाञ्जलिपुटपेयम्' इत्यादिवत् । 'कृत्यैरधिकार्थवचने' (२-१-३३) इति समासः । कान्त्यमृतं लावण्यातिशयरूपं पीयूषं पिपासुः पातुमिच्छुः । निवेशितमयूखमृणालदण्डः निवेशितः अन्तर्निहितः मयूखः किरणः तद्रूपो वृत्तायतविमलकोमलमृणालदण्डो येन, यस्मिन् कपोले । उदयदशायामाभिमुख्येन निवेशितमयूखमृणालदण्डः इन्दुरुत्प्रेक्ष्यते । गण्डूषपेयं कान्त्यमृतं पिपासुरिवेति यथा व्याध्यादिभिः क्षीणः कश्चित् स्वाप्यायनाय रसायनं उपयुङ्क्ते, एवं चन्द्रोऽपि न्यूनगुणः स्वाभिवृद्धये कान्त्यमृतं पिपासतीवेत्युत्प्रेक्षया चन्द्रादधिकलावण्यत्वं कपोलस्य द्योत्यते । मयूखे मृणालत्वारोपो वैद्यकोक्तेषु सलिलपानसाधनेषु मृणालस्यान्यतमत्वात्, प्राशस्त्याच्चेति मन्तव्यम् ;

१. 'अवलोक्य' ख. पाठः. २. 'प्रक्षाल्यते' ङ. पाठः.

१. 'मनुवदेत्' ज. पाठः. २. 'परिहासार्थं' क. ङ. ज. पाठः. ३. 'अन्ययाभिहितं' ख. ग. घ. ज. झ. ञ. पाठः. ४. 'तामनूद्य' झ. पाठः. ५. 'श्रुतिचुलुक' ङ. पाठः.

अवलोकिता — सहि ! किं दाणिं उच्चालिदबाहुप्पीळमन्थरं रोदीअइ ।

(सखि ! किमिदानीमुच्चलितबाष्पापीडमन्थरं रुद्यते ।)

मालती — सहि ! केच्चिरं पिअसहीए लवङ्गिआए असण्णिहाण-दुःखमणुभविस्सं । पउत्तिलाहो वि से दुल्लहो ।

(सखि ! कियच्चिरं प्रियसख्या लवङ्गिकाया असन्निधानदुःख-मनुभविष्यामि । प्रवृत्तिलाभोऽप्यस्याः दुर्लभः ।)

माधवः — अवलोकिते ! किं नाम ?

अवलोकिता — तुह जेव्व उवण्णासेण एसा लवङ्गिअं सुमरिअ ताए पउत्तिलाहणिमित्तं उत्तम्मइ ।

(तवैवोपन्यासेन एषा लवङ्गिकां संस्मृत्य तस्याः प्रवृत्तिलाभनिमित्त-मुत्ताम्यति ।)

---

'नयननलिनिनालानीतं पिबन्ति रसं प्रियाः ।'

इत्यमरुकोक्तेश्च ॥ ५ ॥

सखि ! किमिदानीमुच्चलितबाष्पोत्पीडमन्थरं रुद्यते । प्रवृत्ताश्रुसमूह निश्शब्दमन्दं च किं निमित्तं त्वया रोदनं क्रियत इति ।

तत्र निमित्तमाह— कियच्चिरं प्रियसख्या लवङ्गिकाया असन्निधान-दुःखमनुभविष्यामि । किंपरिमाणं दीर्घकालं असान्निधानदुःखं दूरावस्थानाद् अदर्शनजनितं क्लेशम् । प्रवृत्तिलाभोऽप्यस्या दुर्लभः, वृत्तान्तस्य किं करोतीति रूपस्य लाभो ज्ञानमपि दुष्प्रापं, वर्तत इति शेषः ।

अपवा तत्कर्णमूले मन्दमुक्तस्य व्यक्तीभावाय पृच्छति— किं नाम ? निमित्तमुक्तमिति शेषः ।

विवृणोति—तवैवोपन्यासेन एषा लवङ्गिकां संस्मृत्य तस्याः प्रवृत्ति-लाभनिमित्तमुत्ताम्यति दुःखिता भवति ।

---

१. 'आअ – (जनान्तिकं) के' क. पाठः. २. 'सुदुल्लहो' क. पाठः. ३. 'भगवत ! ' ख. पाठः. ४. 'तुह जेअ' ख. पाठः. ५. 'सनधोवण्णासेण' क. ग. घ, 'कअणोवण्णासेण' ज. पाठः. ६. 'सुमरिअ' क. ख. पाठः. ७. 'पउत्तिणिमित्तं' क. ख. च. छ. ज, 'पउत्तिलंभणिमित्तं' क. पाठः.

---

१. 'दीर्घं कालं' ख. ग. पाठः. २. 'बाष्पोऽत्पात' ख. छ. पाठः.

माधवः — नन्विदानीमेव मया कलहंसकः[1] प्रेषितः[2]—'गच्छ त्वं । प्रच्छन्नमुपगम्य[3] नन्दनावासं प्रवृत्तिमुपलभस्वे'ति[4][5] । (साशंसं)[6] अवलोकिते! अपि नाम बुद्धरक्षिताप्रयत्नः फलोदर्क[7] एव मदयन्तिकां प्रति स्यात् ?

अवलोकिता — महाभाअ ![8] पुढमं जेव्व सद्दूलणहरोल्लिहिअस्स[9] मअरन्दस्स मोहविच्छेअ[10]पिअ[11]णि[12]वेदिआए[13] भअवदीणिउत्तेण भवदा[14] मालदीए समं जीविदेण हिअअं पसादीकअं । सङ्कप्पिअं जइ[15] तस्स

'तवैवोपन्यासेन, 'अवलोकितालवङ्गिकयोश्च' इति वचनेन नात्र खेदः कर्तव्य इत्याह — ननुत्सम्मतौ, त्वयापि तदन्वेषणं मया कृतं ज्ञातमेवेत्यर्थः प्रेष्यमाणः सन् दृष्ट[1] एव ; ननु किमर्थं प्रेषित इति मया ज्ञातमित्यत्राह[2]— प्रच्छन्नं तत्रत्यैरविदितं यथा तथा, नन्दनावासं नन्दनस्य गृहं, प्रवृत्तिमित्यविशेषोक्तेः प्रतारितस्य नन्दनस्य प्रतारणानां[3] मकरन्दलवङ्गिकाबुद्धरक्षितानां चेति सिद्ध्यति । इति एवमुक्त्वेति शेषः । साशंसं सप्रार्थनम् । अपि नामेति सम्भावनाद्योतकमव्ययम् । फलोदर्कः उदर्के उत्तरकाले फलं प्रयोजनं यस्य ।

'उदर्के उत्तरे काले यच्च स्यात् फलमुत्तरम् ।'

इति वैजयन्ती । मदयन्तिकां प्रति लक्षीकृत्य, स्यादिति सम्भावनायां लिङ् ।

अथ दण्डापूपिकया तस्य सन्देहं वैदग्ध्यान्निराकरोति — प्रथममेव शार्दूलनखरस्पृष्टस्य मकरन्दस्य मोहविच्छेदप्रियनिवेदिकाया[4] भगवतीनियुक्तेन भवता मालत्याः समं जीवितेन हृदयं प्रसादीकृतं । आल्लिखिअं स्पृष्टम्,

1. 'मया तत्र कल' झ. ञ. ट. पाठः. २. 'प्रहितः प्रच्छन्न' क. 'प्रेषितः प्रच्छन्नं' झ. ण पाठः. ३. 'प्रच्छन्नः सन्निपत्य' क. पाठः. ४. 'मुपगम्य' ख. ग. पाठः. ५. 'वासप्रवृत्ति' ख. झ. न. 'वसथं प्रवृत्ति' ७ 'वसथप्रवृत्ति' ञ. पाठः. ६. 'साशङ्कं' छ. पाठः. ७. 'सफलोदर्क' क. झ. ञ पाठः. ८. 'अत्र— जुदो सन्देहो महाणुभावस्स । महा' क. झ. ञ. पाठः. ९. 'रालाङ्छिदस्स' क. ञ. झ. ण. 'रोल्लणस्स' छ. पाठः १०. 'मोहविरामसमहूसवं णिवे' क. ख. ग, 'मोहविरमणं णिवे' छ. पाठः. ११. 'सं णिवे' ञ. पाठः. १२. 'णिवेदअन्तीए' क. छ. ञ. झ. ण. पाठः. १३. 'भअवईए णि' क. छ. ज. झ. ञ. पाठः. १४. 'भअवदा' क. ड. छ. पाठः. १५. 'अं ता जइ' ख. घ च. ड. ट, 'अं को वि' ञ. पाठः. १६. 'जइ को वि तुमं मद' क. झ. ञ. पाठः.

१. 'न दृष्ट' क. ज. पाठः. २. 'ज्ञातमेवेत्यत्राह' ज. पाठः. ३. 'प्रकरणान्तर' क. ख. छ. ज. पाठः. ४. 'निवेदितायाः' क. पाठः.

एव्व को वि मदअन्तिआलम्भेणं[1] वड्ढावेदि[2] तस्स किं दाणिं पारितोसिअं[3] भविस्सदि।

(महाभाग! प्रथममेव शार्दूलनखरस्पृष्टस्य मकरन्दस्य मोहविच्छेद-प्रियनिवेदिकाया भगवतीनियुक्तेन भवता मालत्याः समं जीवितेन हृदयं प्रसादीकृतम्। साम्प्रतं यदि तस्यैव कोऽपि मदयन्तिकालाभेन वर्धयति तस्य किमिदानीं पारितोषिकं भविष्यति।)

माधवः[4]— अनुयोक्तव्यमनुयुक्तोऽस्मि[5]। (हृदयमवलोक्य) इयमस्ति मालतीप्रथमदर्शनाभिषङ्गसाक्षिणः[6] कामकाननालङ्कारिणः[7] लक्ष्मीवतः केसरतरोः प्रसवमाला[8]।

'चिरसम्माणिअणिद्दो विरहालुक्खिअसमुद्दद्दिण्णुकण्ठो।'

इत्यादिसेतुक्तप्रयोगात्। साम्प्रतं यदि तस्यैव कोऽपि मदयन्तिकालाभेन वर्धयति तस्य किमिदानीं पारितोषिकं भविष्यति। तस्यैव मकरन्दस्यैव कोऽपि अस्मासु कश्चिद्, वर्धयति, 'दिष्ट्या वर्धसे'[1] इति प्रियं निवेदयिष्यतीत्यर्थः। वर्तमानसामीप्यद्योतको लट्प्रयोगः। तस्य वर्धयितुः पारितोषिकं प्रीतिदायकम्। कोऽपीत्युक्त्या मालती चोदयति।

उद्धट्टितज्ञ आह[2]— अनुयोक्तव्यं प्रष्टुं योग्यं अनुयुक्तोऽस्मि पृष्टोऽस्मि। हृदयं स्ववक्षःस्थलं। मालतीप्रथमदर्शनाभिषङ्गसाक्षिणः[3] मालत्यास्तत्पूर्वे मदनोद्यानकृते सन्दर्शने योऽभिषङ्गः कामदुःखं तस्मिन् साक्षिणः साक्षात्कारवतः, तदालवालपरिसरावस्थाने सञ्जातत्वाद् यदि कश्चिदस्मिन्नर्थे विवदते

१. 'लाहेण' ङ, ढ, 'लाहो व' ज. पाठः. २. 'ण सुहं व' छ. पाठः. ३. 'तदा किं दाणि तस्स पारि' ज. पाठः. ४. 'माधवः— अनयानुयो' क. पाठः. ५. 'व्यमेवानुयुक्तो' ञ. पाठः. ६. 'साक्षिणी' ख. च. ज. पाठः. ७ 'ङ्कारस्य' क. ख. ग. घ. ङ. ज झ. ञ. ट. पाठः ८. 'प्रसूनमाला' ञ. पाठः.

१. 'वर्धयसि इति' च. पाठः. २. 'उद्घाटित आह' ज. पाठः. ३. 'तस्य साक्षिणः' क. ख. पाठः.

प्रेम्णा मद्ग्रथितेति या* प्रियसखीहस्तोपनीतानया[1]
विस्तारिस्तनकुम्भकुड्मलभरोत्सङ्गेन सम्भाविता ।
सम्प्राप्ते त्वथ पाणिपीडनविधौ मां प्रत्यपेताशया[2]
या मय्येव[3] लवङ्गिकेत्यवगते[4] सर्वस्वदायः[5] कृता ॥ ६ ॥

तर्हि बकुलतरुः प्रष्टव्य इति द्योतयन् तदानीमेकाकिनः स्वैकस्वानुभवैकगम्य-मवस्थाविशेषमनुसन्धत्ते । **कामकाननालङ्कारिणः** मदनोद्यानशोभातिशय-जनकस्य, वृक्षान्तरेभ्यो[3] विशिष्टगुणत्वात्, **लक्ष्मीवतः** दैवसम्पन्नस्य **केसरतरोः** बकुलपादपस्य **प्रसवमाला** पुष्पमालिका ।

लक्ष्मीवत्त्वमेवोपपादयति—**प्रेम्णेत्यादि** । **प्रेम्णा** स्नेहेन । तत्र हेतुः—**मद्ग्रथितेति** मया विरचितेत्यनेन हेतुना यत् प्रेम तेन **प्रियसखीहस्तोपनीता** प्रियसख्या लवङ्गिकाया हस्तेनोपनीता समीपं प्रापिता । **अनयेति** मालत्या अभिनयेन निर्देशः । **विस्तारिस्तनकुम्भकुड्मलभरोत्सङ्गेन** विस्तारितुं क्षणे क्षणे विपुलीभवितुं[4] शीलं ययोः स्तनरूपयोः कुम्भकुड्मलयोः कलशशिशुकयोः[5] । 'स्तनकलशकिशोरकौ कथञ्चित्' इति माघोक्तवल्लाक्षणिकः प्रयोगः । तथा च मुरारिः—'तारकेश्वरकिशोरशेखरः' इति । भरो[6] भारः, तस्योत्सङ्गेन मध्येन, **सम्भाविता** निरन्तरोद्वहनेनोपलालिता, तस्याः प्रभवभूतस्य लक्ष्मीवत्त्वे कस्य विमतिरिति भावः । न तावदेव; ततः परमपि श्लाघ्यत्वे कारणमस्तीत्याह—**तुर्विशेषे, पाणिपीडनविधौ** नन्दनविवाहार्थेऽनुष्ठाने । पाणिपीडनं विवाहः,

"पाणिपीडनविधेरनन्तरं शैलराजदुहितुर्हरं प्रति ।"

इति कुमारसम्भवोक्तेः । **मां प्रति** मामुद्दिश्य **अपेताशया** त्रुटितप्राप्त्याशया **लवङ्गिकेति** लवङ्गिकेयमिति अनेन प्रकारेणावगते ज्ञाते, मरणानुमत्यै पादप्रणामे

* 'वा' छ. ज. पाठः. १. 'नीता स्वयं' ख, 'नीतेति वा' छ. ज. पाठः. २. 'सम्प्राप्ते सति पाणि' छ, 'सम्प्राप्तेऽप्यथ पाणि' ज. पाठः. ३. 'मय्येवाथ लव' छ. पाठः. ४. 'स्याधिगते' छ. पाठः. ५. 'दायीकृता' क. झ. ध. पाठः.

१. 'किना स्वानु' क, 'किनां स्वानु' छ. ञ. पाठः. २. 'स्वानुभवैक' क. ग. छ. ज. पाठः. ३. 'भ्योऽपि विशिष्ट' ज. पाठः. ४. 'विस्फुटीभवितुं' ङ. पाठः. ५. 'कलशमुकुलयोः' ज. पाठः. ६. 'भरभाजस्तस्यो' ग. पाठः.

अवलोकिता — सहि! वल्लहा क्खु दे इअं बउळमाला जदो अवहिदा पुळोएसि ।

(सखि! वल्लभा खलु ते इयं बकुलमाला यतोऽवहिता प्रलोकयसि ।)

मालती — सहि मं उवहससि ?

(सखि! मां उपहससि ?)

---

कृत लवङ्गिकास्थाने च मयि स्थिते इत्यर्थः । सर्वस्वदायः सर्वस्य स्वस्य धनस्य दानं, यथा मुमूर्षुः कश्चित् स्वयमेवार्जितं यत्रकुत्रचित् सङ्गृहीतं समग्रं स्ववित्तं पुत्रादिषु समर्पयति अप्रमादेनेदं रक्षणीयमिति तथा । 'एसा वि मालदीणिव्विसेसं दट्ठव्वा । सव्वदा हिअएण धारणीए त्ति' सादरं समर्पितेत्यर्थः[1] । कृतेति मालाया उद्देश्यत्वाद्विधेयस्य सर्वदायत्वस्य तत्र विश्रान्तेः स्त्र्यन्तः पाठः । अत्र पूर्वार्धे स्नेहाख्यः, उत्तरार्धे दैन्याख्यश्च भावः प्रकाश्यते । अप्रस्तुतप्रशंसालङ्कारः , कार्यमुखेन लोकोत्तरस्यानुरागस्य प्रकाशनात् ॥ ६ ॥

सखि ! वल्लभा खलु ते इयं बकुलमाला यतोऽवहिता प्रलोकयसि । वल्लभा अतिप्रिया, खलुरवधारणे, यतः यस्मादवहिता एकाग्रा प्रलोकयसि प्रकर्षेण पश्यसि, इमामित्यर्थात् । अनयोक्तिभङ्ग्या गाढालिङ्गनतृष्णया वल्लभस्य च वक्षःस्थलं मालाव्याजेन पश्यसि । मम पुरतो लज्जां च नाटयसि । अहो ते प्रच्छन्नकामुकीत्वमिति व्यज्यते ।

तदुक्तिभङ्गिमवगच्छन्ती आह — सखि! मामुपहससीति । उपहससि किमपि हृदये निधाय परिहससि । किमिति काका सूचयति ।

---

१. 'अव — सहि मालदि ! वल्लहा' क. झ. ञ, 'अव — वल्लहा' ट. पाठः. २. 'माला । एसा दाणिं परस्स हत्थं गमिस्सदि । माल—' ज. पाठः. ३. 'तदो' क. झ. ञ, 'जं अवहिदा' च. ट. पाठः. ४. 'दा भव । जधा एसा सहसं जेव्व दाणिं परहत्थगदा ण भविस्सदि त्ति । माल—' क, 'दा भव । मा दाणिं एस सहसं जेव्व परहत्थगदा भविस्सदि त्ति । माल—' झ. ञ. पाठः. ५. 'अवलोएसि' छ. पाठः. ६. 'माल — पिअं पिअसहो मे उव' क. झ. ञ, 'माल — पिअं पिअसही उव' ज. पाठः. ७. 'उवदिससि' क. 'उवदिसदि । अवलोइदे ! उभअं वि तुमं एव्व उवदिस ।' ज. 'उवदिसदि' झ. ञ. पाठः.

---

१. 'समर्पितेत्यर्थः' ख. ग. घ. ज. झ. ञ. पाठः.

**अवलोकिता** — कहं पदसद्दो विअ?

(कथं पदशब्द इव?)

**माधवः** — (नैपथ्याभिमुखमवलोक्य) अये! कलहंसकः प्राप्तः।

**मालती** — दिट्ठिआ वड्ढह मदअन्तिआलाहेण।

(दिष्ट्या वर्धध्वे मदयन्तिकालाभेन।)

**माधवः** — (सहर्षं परिष्वज्य) प्रियं प्रियं नः।

(बकुलमालां कण्ठे ददाति।)

---

चरणसञ्चरणशब्दाकर्णननाटितकेनाह — **कथं पदशब्दः** क्षितितले चरणविन्यासजनितो ध्वनिः। इवशब्दस्तर्कद्योतकः।

तदीयं कार्यसिद्धिद्योतकं मुखप्रसादादिचिह्नमालोक्य सहर्षं आह — अये इति हर्षद्योतकमव्ययम्। **प्राप्तः** नन्दनावासादागतः।

प्रियतसहर्षवचसा कार्यसिद्धिं निश्चित्य हर्षवशतिरस्कृतत्रपायन्त्रणा प्रागेव मनस्यवलोकितावचनेन वर्तमानं दिष्टिवृद्धिमङ्गलं करोति — **दिष्ट्या वर्धध्वे मदयन्तिकालाभेन**, भाग्येन पूर्णमनोरथा भवथ सख्युर्मदयन्तिका-प्राप्त्येत्यर्थः।

सहर्षमिति सखीसन्निधावपि हर्षादिहेतुकत्वे परिष्वङ्गस्यौचित्यमाह। 'परिष्वज्य ददाति न पुनर्दत्वा परिष्वजत' इत्युक्त्या चोरेणेव प्रमत्तावस्थायां परधनलुण्ठनस्य, चिराभिलषितस्य त्रपाविघ्नितस्य परिष्वङ्गस्य अवसरलाभे दाक्ष्यात् झटित्यनुष्ठितत्वं प्रकाशयति। **प्रियं नः** अस्माकमभिलषितं, सिद्धमिति शेषः। वीप्सया हर्षं द्योतयति।

**बकुलमालामिति** पूर्वमेव तस्याः पारितोषिकत्वेन कल्पितत्वात्।

---

१. 'दृष्ट्वा' ख. घ. च. छ. पाठः. २. 'वड्ढसि' क. ङ. छ. ज. झ. ञ. पाठः. ३. 'ज्य प्रियायाः कण्ठे बकुल' छ. पाठः. ४. 'प्रिये! प्रियं' ख. घ. पाठः. ५. (आत्मनः कण्ठादवतार्य बकुलमालां ददाति।)' क. झ. ञ. पाठः. ६. 'ति।) माल —' छ. पाठः.

---

१. 'नाटितेनाह', २. 'मालक्ष्य' क. पाठः. ३. 'हर्षविवश' ज. पाठः. ४. 'दिष्ट्येत्यादिमङ्गलं' क. पाठः. ५. 'ष्वज इत्यु' ङ. ञ. पाठः.

  

**अवलोकिता** — णिव्वूढो क्खु भअवदीसम्भावणाभारो बुद्धरक्खिदाए।

(निर्व्यूढः खलु भगवतीसम्भावनाभारो बुद्धरक्षितया।)

**मालती**—(सहर्षं) अह्महे! दिट्ठिआ पिअसही लवङ्गिआ दीसइ।

(अह्महे! दिष्ट्या प्रियसखी लवङ्गिका दृश्यते।)

(इत्युत्तिष्ठति।)

(ततः प्रविशति सम्भ्रान्तः कलहंसकः, मदयन्तिका, लवङ्गिका, बुद्धरक्षिता च।)

**लवङ्गिका** — परित्ताअदु परित्ताअदु महाभाओ। अद्धमग्गे

---

बुद्धरक्षितां चमत्करोति — **निर्व्यूढः** खलु भगवतीसम्भावनाभारो बुद्धरक्षितया। **भगवत्याः** कामन्दक्याः सम्भावना एतत्कार्यं साधयितुमियं प्रगल्भत इत्यूहः, 'सामन्तसम्भावनयैव धीरः' इतिवत्; अथवा सत्कारः, 'सम्भावयामास यथाक्रमेण' इतिवत्; तद्रूपो भारो भर्तव्यो गुरुः पदार्थः **निर्व्यूढः** प्रापणीयां भूमिं प्रापित इति लक्षणया फलपर्यन्ततां नीत इत्यर्थः।

**अह्महे** इत्याश्चर्यद्योतकमव्ययम्। एवमचिरेण दर्शनस्यासम्भावितत्वादाश्चर्यत्वम्। **उत्तिष्ठति** प्रत्युद्गमनेन सम्भावयितुमासनाच्चलतीत्यर्थः।

**सम्भ्रान्तः** सम्भ्रमो व्याकुलता, तद्वान्। चकारेण सम्भ्रान्ता इति विपरिणामेन योजना।

**परित्रायतां परित्रायतां महाभागः**। वीप्सया भयसम्भ्रमो द्योत्यते। कुतः कस्मात्त्रातव्य इत्यत्राह — **अर्धमार्ग** एव नगररक्षिपुरुषाभियोगो मकरन्दस्य

---

१. 'माल — पिअ' छ. पाठः. २. 'अह्महे पिअ' क. घ. झ. ञ, 'अह्मेहिं वि पिअ' ख. ज. पाठः. ३. 'आ वि दी' क. ज. झ. ञ. पाठः. ४. '(सर्वे उत्तिष्ठन्ति।)' क., '(इत्युपतिष्ठति।)' घ. पाठः. ५. '(प्रविश्य सम्भ्रा' ङ. झ. पाठः. ६. '(प्रविशन्ति सम्भ्रा' क. ञ. पाठः. ७. 'सम्भ्रान्ताः कलहंसकमदयन्तिकाबुद्धरक्षितालवङ्गिकाः४)' क. झ. ञ. पाठः. ८. 'मग्गे क्खु णअर' क. ज. झ. ञ. पाठः.

---

१. 'उद्गमनेन सम्भावयति।' झ पाठः. २. 'या सम्भ्रमो' क. ख. ग. छ. ज. पाठः.

एव्व णअररक्खिपुरुसाभिओओ मअरन्दस्स जादो । तक्कालमिलिदेण कलहंसएण सह अह्मे अणुप्पेसिदाओ ।

(परित्रायतां परित्रायतां महाभागः । अर्धमार्ग एव नगररक्षिपुरुषाभियोगो मकरन्दस्य जातः । तत्कालमिलितेन कलहंसकेन सह यमनुप्रेषिताः ।)

कलहंसकः — जंधा इदोमुहं पवुत्तेहिं पि कळअळो सुदो तह जाणामो अण्णं पि उवगदं पाइक्कसेण्णं ति ।

(यथा इतोमुखं प्रवृत्तैरपि कलकलः श्रुतः तथा जानीमः अन्यदप्युपगतं पादातसैन्यमिति ।)

---

जातः । अर्धमार्गे मार्गस्य समेऽंशे मध्ये इत्यर्थः । नगररक्षिभिः पुररक्षणाधिकृतैः पुरुषैरभियोगः उपरुद्धत्वं कोऽयं केयं कुतः क गम्यत इति विचार्यमाणे अयं मकरन्दो मालतीवेषेण नन्दनं विप्रलभ्य तन्मन्दिरमनुप्रविश्य तद्भगिनीमपहृत्य ततो माधवसमीपं निशि प्रयातीति परमार्थस्य परिज्ञानात् चोरङ्कारमाक्रुश्यानुद्रुतः तैरभिभूयमानो मकरन्दस्तेभ्यो रक्षणीयो भवतेत्यर्थात् । तर्हि कथं भवत्यः सम्मर्दात् परिभ्रश्यागता इत्यत्राह — तत्कालमिलितेन कलहंसकेन सह वयमनुप्रेषिताः । तत्काले अभियोगसमये इत आगत्य सङ्गतेन दर्व मदयन्तिकादयः अनुप्रेषिता मकरन्देन प्रस्थापिता इत्यर्थात् ।

लवङ्गिकोक्तिमुपोद्बलयति साहाय्यत्वरार्थम्— यथा इतोमुखं प्रवृत्तैरपि कलकलः श्रुतः तथा जानीमः अन्यदप्युपगतं पादातसैन्यमिति । इतोमुखं इमं प्रदेशमुद्दिश्य प्रवृत्तैः प्रस्थितैः, अह्मेहिं इत्यनन्तरोक्तेरस्माभिरिति सिद्ध्यति । कलहंसवचनत्वात् पुल्लिङ्गनिर्देशः । अपिशब्देन पूर्वं कस्यचित् पादातसैन्यस्य दृष्टत्वं द्योतयति । यथा येन प्रकारेणेति पूर्वोत्तरकलकलयोर्विरलाविरलत्व-

---

१. 'जादो । तदो तक्काल' क. ख. घ. च. ज. झ. ञ. ट. पाठः. २ 'सहिदा अह्मे' क. झ, 'समं अह्मे' छ. ज ञ. पाठः. ३. 'अह्मे इह अणु' क. घ. च. ट. पाठः. ४. 'अह एत्तोमुहं' घ. छ पाठः. ५. 'मुहागदेहिं अह्मेहिं महन्तो जोधकलकलो' क, 'मुहागदेहिं अह्मेहिं कळअळो' ज, 'मुहागदेहिं पि महन्तो कळअळो सुदो । अह्मेहिं तधा' झ. ञ. पाठः. ६. 'आअदो विअ कळ', ७. 'सुणीआदि तह' छ. पाठः. ८. 'तक्केमि' क. ख. घ. ङ. च. छ. ज. झ. ञ. ट. पाठः. ९ 'पारकअं बलं' क. ज. झ. ञ, 'पाइक्कं ति' ख. घ. च, 'णअररक्खिबलं ति' छ. पाठः.

**मालत्यवलोकिते** — हद्धि ! हद्धि ! समं एव्व हरिसुव्वेअसंभेदो उवणदो ।

(हा धिक् ! हा धिक् ! सममेव हर्षोद्वेगसम्भेद उपनतः ।)

**माधवः**—सखि मदयन्तिके! स्वागतम् । अप्यनुगृहीतमस्मद्गृहं भवत्या । ननु वत्यः स्वस्था भवन्तु । एकाकिनो बहुभिरभियोग इति यत्किञ्चिदेतद्वयस्यस्य ।

---

विशेषस्य सुबोधत्वात्, तथा तेन प्रकारेण जानीमः अनुमिमीमहे । अन्यत् पूर्वागतव्यतिरेकेण उपगतं राजाज्ञया प्राप्तम् । पाइक्कशब्दः पदातिवाची ।

"रहसन्दाणिअतुरअं तुरङ्गमोरत्थलक्खलिअपाइक्कं ।
पाइक्कावलिअगअं गअभज्जन्तरहसंकुलं वलइ वलं ॥"

इति सेतुप्रयोगात् ।

हा धिक् ! हा धिक् ! सममेव हर्षोद्वेगसम्भेद उपनतः । हर्षस्य मदयन्तिकालाभात्, उद्वेगस्य दुःखक्षोभस्य च रक्षिपुरुषाभियोगश्रवणात्, सम्भेदो मिश्रता, उपनतः प्राप्तः ।

धीरतया विगतसम्भ्रमः औचित्यानुल्लङ्घनाय नववधूं सत्करोति — सखीति सुहृद्भार्यात्वादामन्त्रणम् ; 'तव कृष्ण! प्रिया सखी' इति महाभारतोक्तेः । स्वागतं शोभनमागमनं, तवासीदिति शेषः । अनुगृहीतं श्लाघ्यसम्बन्धायास्तवानुप्रवेशेन शोभितम्, अस्मद्गृहमस्माकं भवनमित्युक्तिः प्राणनिर्विशेषस्य सुहृदो मकरन्दस्यापि स्वपितरावेव पितरौ स्वगृहमेव च गृहं, स्वस्यापि तत्पितरावेव तद्गृहमेव चेति प्रकाशयितुम् । अथ तासामुद्वेगमुपपत्त्या शमयति—ननुरवधारणे । भवत्यः मदयन्तिकादयः स्वस्था निर्विकाराचित्ताः ।

---

१. 'समकालं जेव्व' क. पाठः. २. 'स्वागतमेह्येहि । अनु' क. ख. ञ, 'स्वागतम् । अनु' ङ. छ. ज. पाठः. ३. 'भस्मत्कुलं' घ. पाठः. ४. 'ननु स एवासौ । मा भूत् परिभवोद्वेगः । किमित्यस्वस्था भवती ? एका' क, 'ननु स एवासौ । किमत्यस्वस्थस्था भवती ? एका' ख ञ. पाठः. ५. 'इति न किञ्चित्' क. पाठः. ६. 'वयस्यस्य । पश्य — हरे' क. छ. पाठः.

---

१. 'पूर्वागमव्यति' ग. पाठः. २. 'उपगतः' ख. ञ. पाठः. ३. 'लङ्घनया नव' क. ख. ग. छ. पाठः. ४. 'कृष्णा प्रिया' ञ. पाठः. ५. 'श्लाघ्यायास्तव' ज. पाठः.

हरेरतुलविक्रमप्रणयलालसस्याहवे
स एव भवति क्वणत्कररुहप्रचण्डः सखा ।
स्फुरत्करटकोटरस्खलितदानसिक्तानन-
द्विपेश्वरशिरःस्थितास्थिदलनैकवीरः करः ॥ ७ ॥

तासामस्वास्थ्यहेतुमाशङ्कामुद्भाव्य परिहरति — एकाकिनोऽसहायस्य बहुभिः विरुद्धपुरुषैरभियोगः सन्निरुद्धत्वमित्ययं प्रकारो ननु भवतीनामाशङ्कास्पद-मित्यर्थः । एतदिदं वस्तु । वयस्यस्येत्यर्थान्तरसङ्क्रमितवाच्येन ध्वनिना बलवत्त्वं कृतश्रमत्वं धीरत्वं च ध्वन्यते । यत्किञ्चिदिति क्षुद्रत्वादवज्ञापदम् । अतः इयं शङ्का न कर्तव्येति भावः ।

उक्तमर्थं दृष्टान्तेन समर्थयति — हरेरित्यादि । हरेः सिंहस्य अतुल-विक्रमप्रणयलालसस्य तुला लक्षणया सादृश्यं तद्रहितस्य विक्रमस्य पर-परिभवस्य प्रणये प्रणयने, प्रयोग इत्यर्थः, लालसस्य कौतुकिनः आहवे युद्धे सहायत्वेन यः प्रसिद्धः स एव नान्यः कश्चिदित्यर्थः, क्वणत्कररुहप्रचण्डः असितपाषाणकुट्टनप्रवृत्तनिशितटङ्कसङ्घातरणितशङ्कावहं शब्दायमानैः नखैर्भयङ्करः सखा सहायः भवति । क्वणत्कररुहत्वहेतुमाह — स्फुरति शोभमाने करटकोटरे कपोलकुहरे ।

'करटो दुर्दुरूटे स्याद्बिल्वे काकेभगण्डयोः ।'

इति वैजयन्ती । स्खलितेन गिरितट इव निर्झरेण कठिनविषमविकटतया[1] अविश्रम्य[2] प्रवृत्तेन दानेन मदजलेन । 'दानं हस्तिमदेऽपि च' इति वैजयन्ती । सिक्ताननानामभिवृष्टमुखानां द्विपेश्वराणां गजयूथपतीनां शिरसि स्थितस्य कठिनस्यास्थ्नो दलने विदारणे एकवीरः अद्वितीयः विक्रान्तः, एतत्कार्यं कर्तुं द्वितीयस्याभावात्, करो हस्तः । अतोऽस्यापि हस्तमात्र एवापेक्षा, न पुनः साधनान्तरे । बहुषु च तृणवत्प्रतिपत्तिरित्यर्थः । अत्र व्यतिरेकमुखो दृष्टान्तो ऽलङ्कारः, सर्वेषां बिम्बप्रतिबिम्बभावेन निर्देशात् ॥ ७ ॥

१. 'साहसस्याहवे' छ, 'लालसस्साहसे' ज. ञ. पाठः २. 'एव' क. ट. पाठः ३. 'स्फुटत्' ख. ङ. ज. ञ पाठः. ४. 'स्थिरास्थि' ख. घ. च. छ ज. ट. पाठः.

१. 'विकटविषमस्थतया' ञ. पाठः. २. 'तया विश्रम' क. ख. ग. छ. ज. पाठः.

तदहमपि विक्रान्तिपूतं[1] विलसतः प्रियसुहृदः[2] प्रत्यनन्तरी-[3]भवामि ।

(इति विकटं परिक्रम्य[4] कलहंसकेन सह निष्क्रान्तः ।)

**अवलोकितालवङ्गिकाबुद्धरक्षिताः** — अवि णाम अणहा[5] णिअत्तिस्सन्ति[6] एदे[7] महाणुभावा ।

(अपि नाम अनघौ निवर्तिष्येते एतौ महानुभावौ ।)

**मालती** — सहीओ बुद्धरक्खिदाअवलोइदाओ ! तुरिअं गदुअ भअवदीए इमं वुत्तन्तं णिवेदेह[8] । तुमं पि पिअसहि लवङ्गिए[9] ! तुरिअं

---

तद्[1] यस्मान्न सहायापेक्षा तस्माद्, अहमपीत्यपिना साहाय्यावकाशो न विद्यत इति द्योत्यते । विक्रान्तिपूतं[2] विक्रमेण शुद्धं, निर्व्याजत्वाद्, विलसतः क्रीडतः[3], प्रियसुहृद इति तथापि स्नेहकातरतया तद्विक्रमावलोकनकुतूहलाच्च, प्रत्यनन्तरीभवामि समीपवर्ती भवामीति द्योतयति ।

**विकटं** स्वभावगतेः परित्यागेन विकृतम् ।

अपि नाम अनघौ निवर्तिष्येते एतौ महानुभावौ । एतौ माधवमकरन्दौ **अनघौ** अघं व्यसनं तद्रहितौ, 'दुःखैनोव्यसनेष्वघम्' इति वैजयन्ती ।[4] सुलभा-पायत्वात् संग्रामस्य[5] अपायशङ्कित्वाच्च स्नेहस्येयं सम्भावना ।

तद्वचनेन विषण्णा आह—सख्यौ ! बुद्धरक्षितावलोकिते ! त्वरितं गत्वा भगवत्यै इमं वृत्तान्तं निवेदयतम् । इमं रक्षिपुरुषाभियोगरूपम् । कामन्दक्याः

---

१. 'विक्रमानुरूपं' क, 'विक्रान्तिपूर्वकं' ख, 'विक्रान्तप्लुतं' झ. ञ. पाठः. २. 'प्रियस्य सुहृदः' ख. घ. च. पाठः. ३. 'प्रत्यन्तरी' ग. घ, 'प्रत्यनन्तरो' झ. ञ. पाठः. ४ 'परिक्रामन्' क पाठः. ५. 'अणाहदा' क. झ. ञ, 'अप्पडिहदा' छ. ज. पाठः. ६. 'पडिणिअत्ति' क. ख. घ. ङ. च. छ. ज. झ. ञ. ट. पाठः. ७. 'एदं' छ. ज. झ. ञ. पाठः. ८. 'कहेध' झ. पाठः. ९. 'ए विण्ण' ञ. पाठः.

---

१. 'कुतः यस्मात् सहा' क. छ. ज. पाठः. २. 'विक्रान्तपूतं' ङ. झ. ञ. पाठः. ३. 'विक्रमणेन' ग. ङ. पाठः ४. 'इति सिंहः । सुलभा', ५. 'सहायस्यापाय' झ. पाठः.

विण्णवेहि अज्जउत्तं 'जइ दाव तुह्माणं अह्मे अणुकम्पणीआओ तदो अप्पमत्ता परिक्कमेहि' त्ति ।

(सख्यौ बुद्धरक्षितावलोकिते! त्वरितं गत्वा भगवत्यै इमं वृत्तान्तं निवेदयतम् । त्वमपि प्रियसखि लवङ्गिके! त्वरितं विज्ञापयार्यपुत्रं 'यदि तावद्युष्माकं वयमनुकम्पनीयास्ततोऽप्रमत्ताः पराक्रमध्वमि'ति ।)

**सर्वाः** — तह । (तथा ।)

(इति निष्क्रान्ताः ।)

**मालती** — हद्धि! हद्धि! ण आणीअदि कहं वेला गमीअदु त्ति । भोदु । पिअसहीए लवङ्गिआए पडिणिउत्तिमग्गं ओलोअन्ती चिट्ठिस्सं ।

'शापादपि शरादपि' प्रतिकर्तृत्वं निश्चित्येयमुक्तिः । त्वमपि प्रियसखि लवङ्गिके! त्वरितं विज्ञापयार्यपुत्रं 'यदि तावद्युष्माकं वयमनुकम्पनीयास्ततोऽप्रमत्ताः पराक्रमध्व'मिति । युष्माकमिति बहुवचनं भर्तृगौरवात् । यद्यनुकम्पनीया रक्षणीयाः । वयमिति बहुवचनेन भवदपाये नाहं जीवामि । आवयोर्निधने कुलद्वयं तत्सम्बन्धिनश्च विनङ्क्ष्यन्तीति द्योतयति । युष्माकमिति 'कृत्यानां कर्तरि वा' (२-३-७१) इति षष्ठी । ततस्तेन हेतुना, अप्रमत्ताः अवहिताः पराक्रमध्वं शत्रुमध्ये शौर्यं प्रकाशयतेति । अन्यथा परशस्त्रापातप्रसङ्गादिति भावः । अत्र शङ्काख्यो भावो भयानकरसश्च द्योत्यते ।

सर्वा इति अवलोकिताबुद्धरक्षिते लवङ्गिका च ।

निष्क्रान्ताः । मदयन्तिकामालत्यौ तिष्ठत इत्यर्थः ।

भयशङ्काजनितारतिव्याकुलिताह — हा धिक्! हा धिक् । न ज्ञायते कथं वेला गमनीयेति केन प्रकारेण कालो नीयतामिति । भवत्विति

१. 'त्ति । (निष्क्रान्ता लवङ्गिकाबुद्धरक्षितावलोकिताः ।)' क. ख. ग. 'त्ति । (मालतीमदयन्तिकावर्जं सर्वाः तथेति निष्क्रान्ताः ।) ज. पाठः. २. 'अदि लवङ्गिआ किं चिराअदि कहं एत्तिआ वेला' क, 'अदि कहं इयदी वेला अतिक्कमेम' ज. पाठः. ३. 'भोदु । पिअसहि मदअन्तिए ! पिअ' क पाठः. ४. 'णिअट्टमाणाए मग्गं' छ. पाठः. ५. 'मग्गमणुगामिस्सं' क. पाठः.

१. 'कुलं तत्' क. ज. पाठः. २. 'श्च नङ्' क. ख. ग. छ. ज. पाठः. ३. 'शस्त्रपात' ङ. झ 'शस्त्रावपात' ज. पाठः.

(हा धिक्! हा धिक्! न ज्ञायते कथं वेला गमनीयेति । भवतु । प्रियसख्याः लवङ्गिकायाः प्रतिनिवृत्तिमार्गमवलोकयन्ती स्थास्यामि ।)

(परिक्रामन्ती साशङ्कं)[1]

कइं फुरिदं क्खु मे अवामलोअणेण ।

(कथं स्फुरितं खलु मे अवामलोचनेन ।)

(उपविशति ।)

---

कस्यचित् कालक्षेपोपायस्य चिन्तितत्वम् । तदेवाह — प्रियसख्या लवङ्गिकायाः प्रतिनिवृत्तिमार्गमवलोकयन्ती स्थास्यामि । प्रियतमसकाशं प्रेषितत्वात् तद्वृत्तान्तश्रवणत्वरया लवङ्गिकाया ग्रहणम् । प्रतिनिवृत्तिमार्गमिति दूरतो दत्तदृष्टित्वात्तत्रैवाहितचित्ततया किञ्चिदरत्युपशमं सूचयति । परिक्रामन्ती मदयन्तिकासकाशादन्यतो गच्छन्तीति । अत्र बुद्धरक्षितादीनां निष्कान्तत्वान्मदयन्तिकाया विप्रकर्षाच्च एकाकिनीत्वं नायिकायाः कविना प्रतिपादितं छिद्रान्वेषिण्या कपालकुण्डलायाः अवकाशलाभार्थमिति मन्तव्यम् । अथ

'धीरः प्रशान्तः सापायधर्मकामार्थसाधकः ।'

इति प्रकरणनायकस्य लक्षितत्वाद् दुःखशबलसुखप्राप्तिं माधवस्य प्रतिपाद्‌यितुं प्रियतमाप्राप्तिनिर्वृतस्यास्य निरतिशयं दुःखहेतुमवतारयति मतिबलविजितसुरगुरुमतिविभूतिर्भवभूतिः । साशङ्कमिति किन्तु समापतिष्यत्यमङ्गलमित्याशङ्कासहिता, प्रियतमापायशङ्काया मनसि प्रागेव वर्तमानत्वात् । कथं स्फुरितं

---

१. '(परिकामति ।) मद — (साशङ्कं)' क, '(परिक्रम्य सा)' ख, (परिकामति । सा) घ. ङ. च. छ. ज. झ. ञ. पाठः. २. 'सातङ्कं' ख च. छ. झ. ञ. पाठः. ३. 'कइं) फुरिदं' ख. घ. च. ज. झ, ञ. पाठः. ४. 'फुरिदं वामेदरेण लोअणेण' क, 'फुरिदं क्खु मे वामेअरेण लोअणेण' छ. झ, 'फुरिदं मे वामं अवामलोअणेण' ञ. पाठः. ५. 'णअणेण' ज. पाठः.

---

१. 'तमाह' क. पाठः. २ 'प्रियसकाशं' ख. ग. पाठः. ३. 'सकाशं प्रति प्रेषित' ज. पाठः. ४. 'दारत्युप' ङ. छ. ज. झ पाठः. ५. 'शमनं' ङ. झ. पाठः. ६. 'प्राप्तिसौख्य' क. ङ. छ. झ. ञ. पाठः. ७. 'शयदुःख' क. पाठः.

(प्रविश्य)

कपालकुण्डला — आः पापे! तिष्ठ तिष्ठ ।

मालती — (सत्रासं) हा अज्जउत्त – । (हा आर्यपुत्र – ।)

(इति वाक्स्तम्भं नाटयति)

कपालकुण्डला — (सक्रोधहासं) नन्वाक्रन्द आक्रन्द ।

---

खलु मे अवामलोचनेन दक्षिणनयनेन स्फुरितं, भावितं स्पन्दितं; भावे निष्ठा । कथयिति दैवस्य झटिति प्रातिकूल्यं सम्भाव्याश्चर्यत्वमनुसन्धत्ते । स्त्रीपुंसयोः क्रमेण वामदक्षिणाक्ष्यादिस्फुरणस्य शुभसूचकत्वाद्व्यत्यासे त्वशुभसूचकत्वाच्च अवामग्रहणम् । उपविशति विषादविवशतया क्षितौ निषीदतीत्यर्थः ।

प्रविश्य न तु प्रविशतीत्युक्तिः छिद्रलाभे झटिति प्रविष्टत्वं द्योतयति । अनेन 'माधवापकारं प्रत्यभिनिविष्टा भवामी'ति पूर्वोक्तं सङ्घटयति । आ इति कोपे । पापे इति स्वगुरुवधपातकमूलत्वात् । तिष्ठ तिष्ठेत्युक्त्या करालायातनदृष्टाया दुष्टाया दर्शनात् सभयमपसरणोद्योगः प्रकाश्यते, अन्यथा उपविष्टायास्तिष्ठेत्युक्त्यनुपपत्तेरुत्तिष्ठेति वक्तव्यम् ।

हा आर्यपुत्र । आर्यपुत्रेति परित्राणाय क्रन्दनारम्भः । वाक्स्तम्भः वाचोऽप्रसरणं, तत्प्रभावात् त्रासाद्वा ।

सक्रोधहासं क्रोधेन यो हासः तदीयचेष्टावैयर्थ्याद्विडम्बनहसितं तत्सहितम् । ननुः प्रश्ने, किमाक्रन्दसीत्यर्थः । तर्हि आक्रन्दाक्रन्द, पतिरिति वक्ष्यमाणत्वाद् अर्थात् पतिमिति सिद्ध्यति, आह्वयाह्वयेत्युपहासे वीप्सा । वाक् तावन्मया स्तम्भिता, कथमिदानीं त्वया क्रन्द्यत इति भावः ।

---

१. (ततः प्रविशति भीषणवेषा अम्बरयानेन कपालकुण्डला ।) कपा—' ख. घ. च, '(ततः प्रविशति कपालकुण्डला ।) 'कपा—' ज, '(ततः प्रविशति अतिभीषणवेषा अम्बरयानेन कपालकुण्डला ।) कपा—' ट. पाठः. २. '(विलोक्य सत्रासं)' छ, '(सभयं)' ट. पाठः. ३. 'इत्यर्धोक्ते वाक्' क. झ. म. पाठः ४. '(सक्रोधं)' क. ष, (सक्रोधं सहासं च)' छ. पाठः.

---

१. 'सरणोद्यमः' ख. पाठः. २. 'सारण' ग. छ. पाठः.

त्वद्वत्सलः क्व नु तपस्विजनस्य हन्ता
कन्याविटः पतिरसौ परिरक्षतु त्वाम् ।
श्येनावपातचकिता नववर्तिकेव
किं चेष्टसे ननु चिरात् कबलीकृतासि ॥ ८ ॥

---

स्वप्रवृत्तेः सकारणत्वख्यापनाय पूर्ववैरमुद्घट्टयति — त्वद्वत्सल इत्यादि । त्वद्वत्सलः त्वयि स्निग्ध इति त्वन्मूलत्वात् मद्गुरुवधस्य त्वन्निरसनेनैव तन्निरसनमपि कृतं भविष्यतीति द्योतयति । तपस्विजनस्य प्रशस्ततपोविशिष्टस्य पुरुषस्येति तस्य लिङ्गित्वादवध्यत्वं ध्वनति । 'ब्राह्मण्याः स्त्रियः कन्याया मम बधोपक्रमे हतश्चेत् कोऽपराधः' इति चेत् तत्राह — हन्तेति । तथापि त्वद्रक्षणमेव युक्तं न पुनस्तस्य देवतोपहाररूपस्वधर्मोचितस्य वध इति भावः । दोषान्तरमपि तस्य दण्ड्यत्वे हेतुरित्याह — कन्याविटः पित्रा स्वयं अप्रत्तायाः कुमार्या भोक्ता । विट इत्यनेन रसमात्रशरणत्वं धर्मानपेक्षत्वं च द्योतयति । पतिः पश्चात् बलात्कारेण कामन्दक्यादियत्नैश्च भर्ता कृत इत्यर्थः । पतिः क्व नु कस्मिन् देशे, वर्तत इति शेषः । असौ स त्वां परिरक्षतु । कामचारकरणे सम्प्रश्ने वा लोट् । सोत्प्रासं चेदं वचनम् । तस्यासन्निधानं परिच्छिद्यैवाहमागता, तत् क्व नु त्वं, क्व चासाविति भावः । तदेव स्पष्टीकरोति — ननुरामन्त्रणे । चिराद् बहोः कालात्, एवंविधोऽवकाशः कदा भविष्यतीति सदा जागरणेन प्रतीक्षितत्वादित्यर्थः । कबलीकृतासि कबलं ग्रासः कृतासि न तु क्रियसे करिष्यसे वेति प्राणपरित्याजने न कश्चिदिदानीं संशय इति ध्वनति । अतः श्येनावपातचकिता सुपर्णाया अवपातेनाक्रमणेन त्रस्ता ।

'व्याघ्राटस्तु भरद्वाजः क्षिप्रः श्येनः सुपर्णकः ।
श्येनायां प्राचिका' ... ... ... ... ॥

---

१. 'त्वद्वल्लभः' ज. पाठः. २. 'क्व स तपस्वि' क. झ. ध. पाठः, ३. 'रक्षति त्वाम्' क. घ. पाठः. ४. 'चकिता वनवर्तिकेव' क. झ. ञ, 'चकितानववर्तिकेव' च. ज. पाठः. ५. 'ननु मया कबली' ज. पाठः.

---

१. 'अप्रदत्तायाः' क. पाठः. २. 'तमेव' क, ख, ग, ङ, झ, ज. पाठः

यावत् श्रीपर्वतमुपनीय तिलशश्चैनां निकृत्य दुःखमारिणीं करोमि ।

(इति मालत्या सह निष्क्रान्ता ।)

मदयन्तिका — अहं पि मालदिं अणुगमिस्सं । (परिक्रम्य) सहि मालदि !

---

इति वैजयन्ती । नववर्तिका बालवर्तिका । नवग्रहणं भीरुत्वदौर्बल्यातिशयं सूचयति । 'वर्तिका चैवं वराटश्चेति विष्किराः' इति सङ्ग्रहे विष्किराख्यपक्षिजातिभेदत्वेनोक्ता । 'श्येनो वर्तिकामुल्लापयते' इति वृत्तावप्युदाहृतम् । किं चेष्टसे किमर्थं व्याप्रियसे । उपमानेन वर्तिकापि क्षणं स्फुरति, न तु श्येनातो मुच्यते, प्रतीकाराभावात्; तथा त्वमपीति द्योतयति । अत्र परिकर उपमा बालङ्कारः ॥ ८ ॥

यावद्वाक्यालङ्कारेऽवधारणे वा । श्रीपर्वतमुपनीयेति कामन्दक्यादीनां दूरत्वे निवारणाशक्त्यर्थमुक्तिः । 'सिरिपव्वदादो आअदस्स' इति श्रीपर्वतस्यैव नियतनिवासस्थानतया पूर्वं सूचनाच्च । 'सा दाणिं सौदामिणी समासादिअच्चरिअमन्तसिद्धिप्पहावा सिरिपव्वदे कावालिअं वदं धारेदि' इति प्रथमाङ्कोक्तत्वात् मालतीपरित्राणोपयुक्तं संविधत्ते । तिलशः तिलवत् सूक्ष्मः सूक्ष्मः खण्डो यथा भवति तथा निकृत्य छित्वा । दुःखमारिणीं अतिकृच्छ्रानुभवेन मर्तुं शीलं यस्याः । चित्रवधयोग्यत्वाद् गुरुवधनिमित्ततयेति भावः । मालत्या सहेति मालतीमुत्क्षिप्य गगनतलोत्पतननाटितकेन निष्क्रान्तेत्यर्थः ।

अहमपि मालतीमनुगमिष्यामि । अहमपि मालती तावल्लवङ्गिकामनु-

---

१. 'नीय लवशो लवश एनां' क. झ. ञ, 'नीय पर्वशस्तिलशश्चैनां' ख. घ, 'नीय तिलशस्तिलशो निकृत्य' ङ, 'नीय प्रतिपर्व तिलश एनां' ज. पाठः. २ 'कृत्य निकृत्य दुःख' ख. घ. च. छ. पाठः. ३. 'मारणां' क. झ. ञ. पाठः ४. 'मालतीमादाय' ख. ङ, 'मालतीं गृहीत्वा' च. ट, 'मालतीमाक्षिप्य' झ. ञ. पाठः. ५. 'मालदिं जेव्व अणु' क. ख. ग. घ. च. छ. ज. झ. ञ. ट. पाठः. ६. '(निष्क्रम्य)' च. ट. पाठः. ७. 'पिअसहि' क. पाठः.

---

१. 'भीरुत्वादौर्बल्य' ज. पाठः. २. 'कया माल' क. ख, 'कथायें माल' घ. पाठः. ३. 'पपात्ति' ख. पाठः. ४. 'सूक्ष्मः खण्डो' ग. घ. पाठः.

(अहमपि मालतीमनुगमिष्यामि । (परिक्रम्य) सखि मालति!)

(प्रविश्य)

**लवङ्गिका** — मदअन्तिए! लवङ्गिआ क्खु अहं।

(मदयन्तिके! लवङ्गिका खल्वहम्।)

**मदयन्तिका** — अवि सम्भाविदो तुए महाणुभाओ।

(अपि सम्भावितस्त्वया महानुभावः।)

**लवङ्गिका** — णहि णहि। सो क्खु उज्जाणावरोहणिग्गमादो जेव्व कलकलं सुणिअ सावक्खेवदूरणिक्खेवाविद्धवि अडोरुदण्डणिब्भरं

गता। अहमपि मालतीमनुगमिष्यामीत्यनेन मालतीहरणवृत्तान्तस्य अपरिज्ञानत्वं ध्वनति। सखि मालतीति तस्याः सन्निहितत्वाभिप्रायेणामन्त्रणम्।

मदयन्तिके! लवङ्गिका खल्वहम्।

अपि सम्भावितस्त्वया महानुभावः। अपिः प्रश्ने। सम्भावितः मालतीवचनेन सत्कृतः। महानुभावः माधवः।

नहि नहि, सम्भावित इति सम्बध्यते। वीप्सया विषादो ध्वन्यते। स खल्वुद्यानावरोहनिर्गमादेव कलकलं श्रुत्वा सावक्षेपदूरनिक्षेपाविद्धविकटोरुदण्डनिर्भरं प्रधाव्य परानीकं प्रविष्टः। उद्यानावरोहः उद्यानस्योन्नतस्थलत्वात् तत्सोपानाद् योऽवरोहोऽवतरणं तेन यो निर्गमो वीथ्यां निष्क्रमणं तत एव प्रधाव्य पलाय्येति सम्बन्धः। तस्य हेतुः — कलकलं श्रुत्वा सैन्यसङ्कुलध्वनिं श्रुत्वेति। सावक्षेपेण चित्तवैय्याकुलीसहितेन दूरनिक्षेपेण अन्योन्यविप्रकृष्टेन पदन्यासेन आविद्धाभ्यां कम्पिताभ्यां विकटाभ्यां विशालस्वभावाभ्यां ऊरुदण्डाभ्यां, निर्भरं गुरुतरमिति प्रधावनक्रियाविशेषणं, परानीकं

१. 'लव — सहि मद' क. ङ. ज. झ. ञ. ट. पाठः. २. 'आ अहं।' क. ङ. पाठः. ३. 'लव — सहि। सो क्खु' छ. पाठः ४. 'णवाडोवणिग्गमादो' क. पाठः. ५. 'सावक्खेवावविद्धविअडोरु' क. ख, 'साधिक्खेवं दूर' ज. पाठः. ६. 'णिद्दुरं' ज. पाठः.

१. 'विक्षेप' क. ख. ग. छ. ज. पाठः. २. 'पदन्यासविद्ध' क. पाठः. ३. 'दूरविक्षेपेण' क. [illegible]

पधाविअ पराणिअं पविट्ठा । तदो पडिणिउत्तह्मि मन्दभाइणी । सुणामि अ घरे घरे गुणाणुराअणिब्भरस्स पोरलोअस्स 'हा माहव! मअरन्द! साहसिअ' त्ति परिदेवणाओ । महाराओ वि किल वहुआणं विप्पलम्भवुत्तन्तं सुणिअ सञ्जाअमच्छरावेओ तक्खणविसज्जिआणेअपाइक्कणिवहो चन्दादवेण सोहसिहरट्ठिदो पेक्खदि त्ति मन्तीअदि ।

शत्रुबलम् । अनेन सुहृद्गतभावपरवशत्वं वीररसश्च ध्वन्यते । ततः प्रतिनिवृत्तास्मि मन्दभागिनी । ततस्तत्प्राप्तेरशक्यतया । मन्दभाग्येति विषादः । शृणोमि च गृहे गृहे गुणानुरागनिर्भरस्य पौरलोकस्य 'हा माधव ! मकरन्द ! साहसिके'ति परिदेवनाः । माधवमकरन्दगतसौशील्यादिगुणविषयेण स्नेहेन पूर्णस्य पौरलोकस्य पुरभवजनस्य, तयोः तत्र चिरसंवासात् । हेति विषादे, द्वयोर्वेह्वीभिरभियोगे व्यसनं निश्चितमित्यर्थः । साहसिकेति व्यसनागमहेतुसूचनम् । मालतीमदयन्तिकाहठहरणरूपस्य अविचारितकारित्वस्य राजामात्यकोपहेतुत्वादप्रतीकारत्वमनर्थस्येति भावः । इतिशब्दः प्रकारे, एवंप्रकारा इत्यर्थः । परिदेवना विलापवचनानि । सुणामि अ घरे घरे इत्यादि वर्णसंहारः, सर्ववर्णवचसा नायकगुणस्तवात् । महाराजोऽपि किल वध्वोर्विप्रलम्भवृत्तान्तं श्रुत्वा सञ्जातमत्सरावेगः तत्क्षणविसर्जितानेकपादातनिवहः चन्द्रातपेन सौधशिखरस्थितः प्रेक्ष्यत इति मन्त्र्यते । महाराजः पद्मावतीश्वरः । अपिशब्दाद्राज्ञा विज्ञातोऽयमर्थः, अतोऽनर्थोदर्क इति द्योतयति । किलेति वार्तायाम् । वध्वोर्मालतीमदयन्तिकयोः विप्रलम्भवृत्तान्तं प्रतारणरूपां प्रवृत्तिं, मालतीवेषभूषितेन मकरन्देनैव द्वयोः कन्ययोरपहारे द्वारीकरणात्, सञ्जातमत्सरावेगः उद्भूताक्षमाक्षोभः, स्वकृतस्य दानस्यान्यथाकरणात् । विसर्जि-

१. 'काअरस्स' क. पाठः. २. 'हा महाणुहाव माहव' क. झ. ञ. पाठः. ३. 'किल एदाणं मन्तिधीआणं विप्प' क, 'किल मन्तिवहूणं विप्प' ख, 'किल मन्तिधीआणं विप्प' घ. ज. झ. ञ. पाठः. ४. 'मच्छराभिक्खेवो तक्खण' क. झ. ञ. पाठः. ५. 'विसज्जिदपोढपाइक्कणिवहो' क, 'विसज्जिदाणेअपोढपदाइणिवहो' ज. ञ, 'विसज्जिदाणेअपोढपाइक्कणिवहो' झ. पाठः.

१. 'संवादाद्' ग. ज. झ, 'सम्पादात्' ङ. झ. पाठः. २. 'कापहरण' क, 'काहरण' ख. ग. ज, 'काहठाहरण' झ पाठः. ३. 'वर्णगुणवचसा' ज. पाठः. ४. '...ं प्रतारणरूपं श्रुत्वा' झ. पाठः. ५. 'किलशब्दो वार्ता' क. पाठः. ६. 'रूपां वृत्तिं' ज. ञ. पाठः.

(नहि नहि । स खलूद्यानावरोहनिर्गमादेव कलकलं श्रुत्वा सावक्षेप-दूरनिक्षेपाविद्धविकटोरुदण्डनिर्भरं प्रधाव्य परानीकं प्रविष्टः । ततः प्रतिनिवृत्तासि मन्दभागिनी । शृणोमि च गृहे गृहे गुणानुरागनिर्भरस्य पौरलोकस्य 'हा माधव! मकरन्द! साहसिके'ति परिदेवनाः । महाराजोऽपि किल वध्वोर्विप्रलम्भवृत्तान्तं श्रुत्वा सञ्जातमत्सरावेगस्तत्क्षणविसर्जितानेकपादातनिवहश्चन्द्रातपेन सौधशिखरस्थितः प्रेक्ष्यत इति मन्व्यते ।)

**मदयन्तिका** —हा! हदह्मि मन्दभाइणी ।

(हा हतास्मि मन्दभागिनी ।)

**लवङ्गिका** — सहि! मालदी उण कहिं?

(सखि! मालती पुनः क?)

**मदयन्तिका** — सा क्खु पुठमं जेव्व दे मग्गमोलोइदुं पसरिदा । पच्छादो अहं णे अ तं पेक्खामि । सा णाम उज्जाणगेहणं पविट्ठा भवे?

तानेकपादातनिवहः 'गच्छत गच्छत । दुराचारौ ब्रह्मबन्धू हते'ति भूयो भूयः प्रेषिता असङ्ख्याः पादातसमूहा येन ।

"आततायिनमायान्तमपि वेदान्तपारगम् ।
जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत् ॥"

इति वचनाद्, अनयोश्च दारहरत्वेन आततायित्वादिति भावः । चन्द्रातपेन प्रेक्षणे करणभूतेन, मध्याह्न इव स्पष्टदृश्यसकलवृत्तान्तत्वात् । मन्व्यते कथ्यते, पौरलोकेनेति शेषः ।

राज्ञा परिज्ञातत्वादव्यभिचरितं व्यसनं निश्चित्याह — हा हतास्मि मन्दभागिनी ।

अदर्शनात् पृच्छति — सखि! मालती पुनः क । पुनःशब्दो व्यावृत्तौ, अयं वृत्तान्तस्तावदास्ताम्, इदं तु कथयेत्यर्थः ।

सा खलु प्रथममेव ते मार्गमवलोकयितुं प्रसृता । पश्चादहं न च तां पश्यामि । प्रथममेव ममाग्रत एवेति, अनन्तरितत्वमाह । पश्चात् तस्या

१. 'हदह्म मन्दभाइणीओ' ख. घ. च. पाठः. २. 'ण तं' क. छ. ज, झ. ञ. पाठः. ३. 'अवि णाम' क. ञ. ञ, 'मअणुजाण' छ; 'सा णाम' ज. पाठः. ४. 'गहणे' क. ख. घ. च. छ. झ. ञ. ट. पाठः.

(सा खलु प्रथममेव ते मार्गमवलोकयितुं प्रसृता। पश्चादहं न च तां पश्यामि। मा नाम उद्यानगहनं प्रविष्टा भवेत्?)

लवङ्गिका — सहि! तुरिदं अण्णेसह्म। अदिकादरा मे पिअसही। उपवणट्ठिइं इमस्सिं अवसरे सा ण करेइ।

(सखि! त्वरितमन्विष्यावः। अतिकातरा मे प्रियसखी। उपवनस्थितिं अस्मिन्नवसरे सा न करोति।)

लवङ्गिकामदयन्तिके — (त्वरितं परिक्रामन्त्यौ) सहि मालदि! णं भणामो सहि मालदि त्ति।

(सखि मालति! ननु भणामः सखि मालतीति।)

(इतस्ततः परिभ्रमतः।)

---

अनुपदं अहं प्रसृता प्रवृत्तेति सम्बद्ध्यते। चकारस्तुल्यकालत्वाददर्शनस्य आश्चर्यत्वं द्योतयति। मा नाम उद्यानगहनं प्रविष्टा भवेत्? उद्यानस्य गहनं तरुलतानिविडतया सतिमिरं प्रदेशं, त्वदनुगमनमार्गापरिज्ञानादिति भावः। प्रविष्टा भवेन्नामेति काका प्रश्न आक्षिप्यते। सम्भावनायां लिङ्। नामशब्दोऽपि सम्भावनाद्योतकः। 'मा नो ना प्रतिषेधे'।

सभयाह — सखि त्वरितमन्विष्यावः। तत्सम्भावनामुपपत्त्या निराकरोति — अतिकातरा मे प्रियसखी। उपवनस्थितिमस्मिन्नवसरे सा न करोति। अतिकातरा अत्यन्तभीरुः। मे प्रियसखीति तच्छीलं मयैव ज्ञायते संवासात्, न तु त्वयेति द्योतयति। अस्मिन्नवसरे निशीथे परिजनरहिते च काले इत्यर्थः। उपवनस्थितिं इति तिमिरबहुलतया भयजनकत्वम्।

सखि मालति! ननु भणामः सखि मालतीति। ननु भणाम इति पूर्वस्मादुच्चैः शब्देनाह्वयावः, तथापि त्वं प्रतिवचनं न ददासीति सेर्ष्यं वचनम्।

---

१. 'णो पिअ', २. 'सही। इमस्सिं' क. पाठः. ३. 'उपवणट्ठिदा इम' ज, 'उवट्ठिदाणत्थे इम' झ. ञ. पाठः. ४. 'धारेदि अत्ताणं।' क. ज. झ. ञ. पाठः. ५. 'त्वरिततरं' ख. च. छ. ट. पाठः. ६. 'परिक्रम्य' क. झ. ञ. पाठः. ७. 'भणामि' क. ज. झ. ञ. पाठः. ८. 'परिक्रमतः' क, 'परिक्रामतः' ग. ङ. छ. ज. झ. ञ. पाठः.

---

१. 'कालरूप इत्यर्थः' क. ग. छ. ज. पाठः.

1787

(प्रविश्य हृष्टः ।)

कलहंसकः — दिट्ठिआ कुसलेण[3] म्हि [4]णिग्गदो [5]सङ्कट्ठदुग्गमादो । हीमाणहे ! पेक्खामि विअ णिम्मलणिरन्तरुद्धुव्वन्तुत्तरङ्गकरवालधारापडिफलिदचन्द[10]किरणजाल[11]पिञ्जरीभवणसीलदंसणं मदलीला-

हृष्टः हर्षं नाटयन्निति यावत् । दिष्टया कुशलेनास्मि निर्गतः सङ्कट्टदुर्गमात् । दिष्टया दैवानुकूल्येनेति हेतौ तृतीया । कुशलेन अक्षतशरीरत्वादिना अभ्युदयेनेत्युपलक्षणे । सङ्कट्टदुर्गमात् जनसम्मर्देन सञ्चरितुमशक्यात् प्रदेशात् । 'हीमाणहे!' इति हीन[1]पात्राणां हर्षाश्चर्य[2]वचनेन देशीपदम् । पश्यामीव निर्मलनिरन्तरोद्धूयमानोत्तरङ्गकरवालधाराप्रतिफलितचन्द्रकिरणजालपिञ्जरीभवनशीलदर्शनं मदलीलाकलितकामपालविकटभुजदण्डाविद्धहलहेलाकर्षणतरलितोद्वेल्लिततरङ्गकलिन्दकन्यकास्रोतःसन्निभं विशृङ्खलावपतितनिर्दयावमर्दमकरन्दव्यतिकरक्षोभविह्वलं प्रतिनिवर्तनोद्धतसमस्तगगनावकाशविकमत्क[illegible]कलं पादातसमूहम् । पश्यामीव पुरतो वर्तमानमनुभवामीवेति । [illegible]ऽतिक्रान्तत्वात् । निर्मलानां शाणोत्तेजितत्वेन निष्कलङ्कानां निरन्तरं निर्भरं उद्धूयमानानामुत्कम्प्यमानानां[3] खाड्गिकबाहुल्यात् उत्तरङ्गाणां उद्गततरङ्गाणां, कम्पनवेगेन[4] स्फुरितवलीभङ्गत्वात् , करवालानां खड्गानां धारासु सुखतैक्ष्ण्येषु प्रतिफलितेन चन्द्रकिरणजालेन पिञ्जरीभवनशीलं दर्शनं यस्य, पिञ्जरवर्णतया

१. 'प्रहृष्टः' क. घ. झ. ञ, 'धृष्टः' च. पाठः. २. 'कुसलम्हि' ख. पाठः. ३. 'ण अहो' क. झ. ञ. पाठः. ४. 'णिग्गदा सगरसङ्कट्ट' क, 'णिग्गदा सङ्कट्ट' झ. ञ. पाठः. ५. 'सङ्कट्टमग्गादो' ज. पाठः. ६. 'रुद्धूदधोदतरवारिधारा' क. झ. ञ, 'रुव्वुत्ततरवारिधारा' ज. पाठः. ७. 'तरवारि' च. पाठः. ८. 'वारिधारा' क. ख. घ. च. ज. झ. ञ. पाठः. ९. 'पडिप्फलिद' च, 'परिप्फुरिद' झ. ञ. पाठः. १०. 'किरणुज्जलविड्डुरिकिळदंसणं' क. झ. ञ. पाठः. ११. 'पिञ्जरिक्किळदंसणं' ख. घ. ङ. च, 'पिञ्जरिअदंसणं' छ, 'पिञ्जरिअभीसणदंसणं' ज. पाठः.

१. 'नीचपात्राणां' क. पाठः. २. 'हर्षाश्चर्यवचनेन' ज. पाठः. ३. 'नानां खाड्गिकानां मध्यादुत्तरङ्ग' क, 'नानां बाल्हीकया मध्यादुत्तरङ्ग' ख. ग. छ. ञ, 'बाल्हिकबाहुल्यादुत्तरङ्ग' ञ. पाठः. ४. 'कम्पनेन' क, 'कम्प्यमानत्वे गगनस्फुरित' ख. ग. पाठः.

कलिंदकामपालविअडभुअदण्डाविद्धहलहेलाकड्डणतरलिउव्वेल्लिअतरङ्ग-कलिन्दकण्णआसो तसण्णिहं णिसिखलंवपडिअणिद्दआमद्दसअरन्दच्चइअर-क्खोभविह्हलं पडिणिवत्तगुग्गदसमत्थंगअणावआसंमोसङ्कुन्तकलकलं पा-

दृश्यमानमित्यर्थः । नीलसितवर्णयोः खड्गधाराचन्द्रकिरणयोर्मेलनात् पिञ्जरवर्णत्वोक्तिः ।

'सितनीलसमायोगात् कडारो नाम जायते ।'

इति दिवाकरः, 'पीतरक्तस्तु पिञ्जरः । बभ्रुः कडारः कपिलः' इति वैजयन्ती । मदलीलाकलितस्य वारुणीमदजनितविलासयुक्तस्य कामपालस्य बलभद्रस्य,

'रेवतीरमणो रामः कामपालो हलायुधः ।'

इत्यमरः, विकटेन विस्तृतेन भुजदण्डेनाविद्धं हलं सीरं यत्, तेन हेलया अनायासेन यत् कर्षणमाकृष्टिस्तेन तरलितं व्याकुलीकृतं, अत एवोद्वेल्लिततरङ्गं यत् कलिन्दकन्यास्रोतो यमुनायाः प्रवाहः तत्सदृशमित्यनेन बलीयसोऽपि व्याकुलत्वं बहुधा पलायनं बहलनीलत्वेन दूरतो निशि प्रकाशनत्वं च बोध्यते । अत्र च पुराणकथानुसार्यते । यथा —

"समदाकान्तिघर्माम्भःकणिकामौक्तिकोज्ज्वलः ।
आगच्छ यमुने स्नातुमित्याह मदविह्वलः ॥
तस्य वाचं नदी सा तु मन्वाना मत्तभाषितम् ।
नाजगाम ततः क्रुद्धो हलं जग्राह लाङ्गली ॥
गृहीत्वा तां तटे तेन चकर्ष मदविह्वलः ।
पापे ! नायासि नायासि गम्यतामिच्छयान्यतः ॥

१. 'हेलाविब्भलिदुद्वेलदुदोलिअकलिन्द' क, 'हेलाविरिथारिदुद्धत्थुभिदकलिन्द' ज, 'हेलाविक्खुभिदुव्वेलिदतरङ्गकलिन्द' झ. ञ. पाठः. २. 'तणआ' क. छ. ज. झ. ञ. पाठः. ३. 'विअडविसं', ४. 'लुप्पडिद' क. झ. ञ. पाठः. ५. 'पडिजोधपडिवत्त' क, 'पडिजोहपडिणिवुत्तणुद्धअसमत्थ' ज, 'पडिजोहिपरिवत्त' झ. ञ. पाठः. ६. 'वअणन्नणावआस' क. ख. घ. च. छ. ज. झ. ञ. पाठः. ७. 'विअसत्' क, 'वोसरन्त' क, 'विसमलिद' ञ. पाठः. ८. 'पारक्ककलसमूहं' क, 'पारक्कसमूहं' ज. ञ. पाठः.

१. 'दीप्यमानं' ञ. पाठः. २. 'हेलासंयुक्तस्य' क. पाठः. ३. 'प्रकाशनं चो' क. ख. ग. छ. ज. पाठः. ४. 'तदा तेन' ञ. पाठः.

इक्कसमूहं[1] । सुमरामि अ भीसणभुअवज्जपञ्जरजज्जरिद[3]पल्लत्थसुभड-[4]सत्थविमुक्कविविहाउहोवमद्दोसारिअसेण्णविअडोवसारइरिक्कमग्गसञ्चारणि-[8]म्मिदविसमसाहसं[9] णाहमाहवं[11] ॥

(दिष्ट्या कुशलेनास्मि निर्गतः सङ्कटदुर्गमात् । हीमाणहे ! पश्यामीव निर्मलनिरन्तरोद्धूयमानोत्तरङ्गकरवालधाराप्रतिफलितचन्द्रकिरणजालपिञ्जरीभवनशीलदर्शनं मदलीलाकलितकामपालविकटभुजदण्डाविद्धहलहेलाकर्षणतरलितोद्वेल्लिततरङ्गकलिन्दकन्यकास्रोतःसन्निभं विशृङ्खलापतितनिर्दयावमर्दमकरन्दव्यतिकरक्षोभविह्वलं प्रतिनिवर्तनोद्धतसमस्तगगनावकाशविकसत्कलकलं पादातसमूहम् । स्मरामि च भीषणभुजवज्रपञ्जरजर्जरितपर्यस्तसुभटसार्थविमुक्तविविधायुधोपमर्दापसृतसैन्यविकटापसारव्यतिरिक्तमार्गसञ्चारनिर्मितविषमसाहसं नाथमाधवम् ।)

---

सा क्रुष्टा[1] तेन सहसा मार्गं सन्त्यज्य[2] निम्नगा ।
यत्रास्ते बलदेवोऽसौ प्लावयामास तद्वनम् ॥"

इति श्रीविष्णुपुराणवचनात् । विशृङ्खलावपतितस्य गत्यभावात् शरीरपरित्राणयन्त्रणारहितं प्रत्यभियुञ्जानस्य, अत एव निर्दयः कारुण्यरहितः अवमर्दः शत्रुजनविमर्दनं यस्य,

"अपि पञ्चशतं शूरा निघ्नन्ति[3] महतीं चमूम् ।
अपि वा पञ्च षट् सप्त मरणे कृतनिश्चयाः ॥"

---

1. 'हं । अवि अ सुम' क, 'हं । दाणिं वि पेक्खामि विअ । सुम' ञ. पाठः २. 'वज्जखचिनपञ्जरपज्जत्थसमरविमुहसुभड' ज. पाठः. ३. 'तावसरिदसुभड' क, 'तोवसण्णसुहड' झ, 'तावसन्नसुभड' ञ. पाठः. ४. 'हत्थावलुत्तविविहाउहणिअहघातिदासेसरिपुसे' क. ञ, 'हत्थावलुत्तविविहाउहोवहत्थअसेसरिपुसे' ज, 'हत्थावलुत्तविविहाउहोपमद्दसमोसारिअसे' झ. पाठः. ५. 'त्थपरिमुक्कविविहा' ख. पाठः. ६. 'सेणाहद्दविअ' क, 'सेणिअणिअरं पाइक्करिक्कमग्ग' झ, 'सेण्णदत्तविअड' ञ. पाठः ७. 'सारपाइक्कसुण्णमग्ग' क, 'साररिक्कमग्ग' ञ. पाठः. ८. 'णिअत्तिद' क, 'णिव्वत्तिद' ज. झ. ञ. पाठः. ९. 'विसमसमरसाहसं' क. ङ. ञ. पाठः. १०. 'साहसववसाअं' च. पाठः. ११. 'णाहं माहवं' ग. ङ. छ. ज. पाठः.

---

१. 'आकृष्टा' क. पाठः. २. 'तेन सा मार्गं निजं सन्त्यज्य' ख. ग. ङ. ञ. पाठः ३. 'निघ्नन्ति' ख. पाठः

अहो ! गुणाणुराओ णरिन्दस्स । जं दाणिं सोहसिहरट्ठिदो[1] पेक्खिअ दिण्णपडिहारविणओवण्णासपडिसमिदं[2][3] विरोहो सोमेकरसो[4]

इति महाभारतोक्तेः । मकरन्दस्य व्यतिकरक्षोभेण वृत्तान्तजनितेन सम्भ्रमेण विह्वलं परवशम् । अनेन भमस्य न सेनापत्यादियत्नाद्वा लज्जया वा[1][2][3] पुनर्वर्तनम् । प्रतिनिवर्तने उद्धत उद्भूतः, समस्ते गगनावकाशे विकसन् व्याप्य वर्तमानः कलकलः उत्साहसूचकसिंहनादकोलाहलो यस्य, पादातसमूहं पश्यामीवेति । स्मरामि[4] च भीषणभुजवज्रपञ्जरजर्जरितपर्यस्तसुभटसार्थविमुक्तविविधायुधोपमर्दापसृतसैन्यविकटापसारव्यतिरिक्तमार्गसञ्चारनिर्मितविषमसाहसं नाथमाधवम् । भयङ्करेण भुजरूपेण वज्रपञ्जरेण वज्ररत्नघटितकुलायेन, परशस्त्राभेद्यत्वात् स्वयं परबलभेदनत्वाच्च वज्रपञ्जररूपेण, जर्जरितैः प्रहारशतशकलितैः पर्यस्तैरवपातितैः सुभटसार्थैर्वीरसमूहैः विमुक्तानां विविधानां आयुधानां खड्गादीनामुपमर्देन सम्बाधेन अपसृतैर्दूरं पलायितैः सैन्यैः सेनाचरैर्विकटापसारे विस्तृतनिर्गमस्थले व्यतिरिक्ते जनशून्ये मार्गे सञ्चारेण निर्यन्त्रणप्रवर्तनेन, पूर्वं जनसम्मर्देन स्वैरविक्रमस्यानवकाशात्, निर्मितं विषममन्यैर्दुष्करं साहसं स्वशरीरापेक्षाशून्यं विक्रमणं येन । नाथमाधवं स्मरामि अनुसन्दधामि चेत्यन्वयः । अत्र वीररसो ध्वन्यते । सात्वती च वृत्तिरनुसन्धेया, 'वीरे सात्वती'ति,

"विशोका सात्वती सत्त्वशौर्यत्यागदयार्जवैः ।"

इति च वचनात् । एवमन्यत्राप्यनुसर्तव्यम् ।

अहो ! गुणानुरागो नरेन्द्रस्य । यदिदानीं सौधशिखरस्थितः प्रेक्ष्य दत्तप्रतिहारविनयोपन्यासप्रतिशमितविरोधः[5][6] सौम्यैकरसः उपनीय नाथमाधवमरविन्दमुखं च मकरन्दं वारं वारं निवारितनिजलोककलकलोऽभिजनं ज्ञात्वा

1. 'सिहरट्ठिदावत्तिण्णपड्हिार' क, 'सिहरन्तरट्ठिदो' ग, 'सिहरावदिण्णपडिहार' ज. ञ, 'सिहरन्तारिदावदिण्णपड्हिार' झ. पाठः. २. 'दो दिण्ण' छ. पाठः. ३. 'पडिसामिद' ख. घ. च. झ, 'पसामिद' ज. ञ. पाठः. ४. 'विरोहसङ्कटोवणीदे माहवमअरन्दमुहचन्दे वारं' क, 'विरोहसङ्कटो उवणीदमाहवमअरन्दमुहचन्दे वारं' ज. झ. ञ. पाठः.

१. 'यदा प्रतिनिवर्तने भमस्य' ङ. झ. ञ. पाठः. २. 'त्यादिवचनाद्वा' क. पाठः. ३. 'वा धावनम् । निवर्तने' ख. ग. पाठः. ४. 'स्मरामीव' ङ. ञ. पाठः. ५. 'कलापेन' क. पाठः. ६. 'प्रशमित' क. ख. म. ङ. ञ. पाठः.

उवणीअ णाहमाहवं अरविन्दमुहं च मअरन्दं वारं वारं णिवारिअणिअलोअकेलकलो अभिजणं जाणिअ णिव्वुत्तबहुमाणो फुरन्तमच्छरवेलक्खमसीमलिणिअमुहे भूरिवसुणन्दणे महुरवअणोवण्णासेण— 'किं

निर्वृत्तबहुमानः स्फुरन्मत्सरवैलक्ष्यमषीमलिनितमुखौ भूरिवसुनन्दनौ मधुरवचनोपन्यासेन "किमिदानीं युवयोर्भुवनाभोगभूषणमहानुभावाभ्यां नवदर्शनगुणाभिरामाभ्यां जामातृभ्यां अपरितोषः?" इति प्रतिबोध्य गतोऽभ्यन्तरं राजा। अहो आश्चर्यभूतः गुणानुरागः शौर्यादिषु गुणेषु पक्षपातः, कृतमहापराधयोरपि सत्कारादिति भावः। सत्कारमेवाह— यदित्यादिना। दत्तस्य प्रहितस्य प्रतिहारस्य द्वारपालस्य विनयोपन्यासेन अस्मदीयावेतौ महाकुलीनावज्ञानादपराद्धौ। तत् क्षम्यतां भवद्भिरिति स्वान् प्रति अस्मदीयैरज्ञानाद्यदपकृतं तन्मर्षणीयं भवद्भ्यामित्यादिशति। देवेत्येवंरूपेणानुद्धतवचनेन तौ प्रतिशमितः [विरोधः] परस्परकलहो येन। सौम्यैकरसो विप्रलम्भश्रवणसञ्जातमत्सरावेगवर्जनेन प्रसादैकस्वभावः। उपनीय स्वसमीपमानीय। अरविन्दमुखमित्यनेन सौकुमार्यसौन्दर्योपलक्षणेन तयोर्दर्शने द्विगुणानुरागत्वं सूचयति। वारं वारं भूयोभूयः। निवारितो निषिद्धो निजलोकस्य स्वसैन्यजनस्य कलकलो बहुबन्धुवधामर्षजनितो 'वध्येतां वध्येता'मित्यादिकोलाहलो येन। अस्य सर्वस्य हेतुमाह— अभिजनं ज्ञात्वा तत्रभवतो विदर्भराजमन्त्रिणो देवरातस्यैकपुत्रोऽयम्, अयं च तस्य समानान्वयजात इति पार्श्वचरमुखतो महाकुलप्रसूतिं ज्ञात्वेत्यनेन भूरिवसोरुपायप्रयोगं सूचयति कविः। निर्वृत्तबहुमानः सम्भूतचमत्कारः स्फुरन्मत्सरवैलक्ष्यमषीमलिनितमुखौ उन्मिषद्भ्यां मदनुरोधमन्तरेण मद्दुहिता हृतेति कोपेन भूरिवसोः, लोकापहास्येन मिथ्यापरिणयेन

१. 'वारं सब्बारिदसिणिद्धलोअणो कलहंसआदो अभिजणं' क. झ. ञ, 'वारं वरिअणिअलोअ' छ, 'वारं पसारिदसिणिद्धलोअणो कलहंसआदो अभिजणं' ज. पाठः २. 'कलहो' ख. पाठः. ३ 'अ बबहुमाणं णिव्वत्तिअकलहो फुरन्त' ग. पाठः. ४. 'णिवत्तिअमहग्घबहु' क, 'णिव्वत्तिअमहाबहु' ख. घ. च, 'णिउत्तमहाबहु' छ, 'णिव्वत्तिअ महग्घगुरुबहु' ज. झ. ञ. पाठः. ५. 'फुरिदमच्छर' क, 'पप्फुरन्तमच्छर' झ. ञ. पाठः. ६. 'मइलमुहे' ग. ञ, 'मइलिदमुहे' ख. झ. पाठः. ७. 'अमच्चभूरिवसु' ट. पाठः. ८. 'महुरोवण्णासेण' झ. पाठः.

१. 'तत् क्षम्यतां युवाभ्यामित्या' क. पाठः. २. 'प्रशमित' छ. झ. ञ. पाठः ३. 'मत्सरत्रपावर्जं' क. पाठः.

दाणिं तुह्माणं भुअणाभोअभूसणमहाणुभावेहिं णवदंसणगुणाभिरामेहिं जामादुएहिं अपरितोसो?' त्ति पडिबोहिअ गदो अब्भन्तरं राआ। इमे अ माहवमअरन्दा आअदे त्ति जाव। अहं पि भअवदीए इमं वुत्तन्तं निवेदेमि।

(अहो! गुणानुरागो नरेन्द्रस्य। यदिदानीं सौधशिखरस्थितः प्रेक्ष्य दत्तप्रतिहारविनयोपन्यासप्रतिशमितविरोधः सौम्यैकरसः उपनीय नाथमाधवमरविन्दमुखं च मकरन्दं वारं वारं निवारितनिजलोककलकलो अभिजनं ज्ञात्वा निर्वृत्तबहुमानः स्फुरन्मत्सरवैलक्ष्यमर्षीमलिनितमुखौ भूरिवसुनन्दनौ मधुरवचनोपन्यासेन 'किमिदानीं युवयोः भुवनाभोगभूषणमहानुभावाभ्यां नवदर्शनगुणाभिरामाभ्यां जामातृभ्यामपरितोषः?' इति प्रतिबोध्य गतोऽभ्यन्तरं राजा। इमौ च माधवमकरन्दावागताविति यावत्। अहमपि भगवत्या इमं वृत्तान्तं निवेदयामि।)

(इति निष्क्रान्तः।)

---

मां विप्रलभ्य मद्भगिनी हृतेति लज्जया च नन्दनस्य वैवर्ण्यजनकत्वात् कज्जलरूपाभ्यां विवर्णीकृतमुखत्वमित्यर्थः। अथवा द्वयोरपि मात्सर्यवैलक्ष्ये साधारणे, स्वकन्याहरणवञ्चितत्वं तयोस्तुल्यत्वात्। अनेनामात्यभूरिवसोः स्वहृदयसम्मत्यभावाभिनयवैदग्ध्यं व्यञ्जयति कविः।

'विलक्षं चेष्टते चित्रं यत्तद्वैलक्ष्यमुच्यते।'

इति भावप्रकाशः[1]। मधुरवचनोपन्यासेन हृदयप्रसादनस्य वाक्यस्य प्रस्तावेन। तद्वचनप्रकारमाह—किमिदानीमित्यादि। भुवनाभोगस्य लोकविस्तारस्य भूषणभूतो महानुभावो महाभिजनत्वादिमाहात्म्यं ययोः, नवदर्शनैरीदृशानां गुणानामन्यत्रादृष्टपूर्वतया इदंप्रथमदर्शनैः गुणैः, अभिरामाभ्यां

---

१. 'दाव' ख. पाठः. २. 'भूसणेहिं महाणुभावेहिं अभिअणदंसण' क. पाठः. ३. 'एव्वं दंसणिज्जगुणा' ज. 'णवजोव्वणगुणा' झ. ञ. पाठः. ४. 'हिं णवचन्ददंसणरमणीएहिं जामा' क. पाठः. ५. 'एहिं परि' क. ज. पाठः. ६. 'इमे वि माहव' क. ज. झ. ञ, 'इमे माहव' छ. पाठः. ७. 'णाहमाहव' घ. पाठः. ८. 'न्दा आअच्छन्दि' क. ज. झ. ञ. 'न्दा वट्टन्ति त्ति' छ. पाठः. ९. 'एदं' क. ख. पाठः. १०. 'विण्णवेमि' घ. पाठः.

---

१. 'भावः' ख. ग. ङ. छ. झ. ञ. पाठः

(ततः प्रविशतो माधवमकरन्दौ ।)

**मकरन्दः—** अहो प्रेयसः सर्वपुरुषातिशायि निर्व्याजमूर्जितं तेजः । तथा हि—

दोर्निष्पेषविशीर्णसञ्चयदलत्कङ्कालमुन्मथ्नतः
प्राग्वीराननुपत्य तत्प्रहरणान्याच्छिद्य विक्रामतः ।

सुन्दराभ्यां, अथवा नवदर्शनाभ्यां यौवनविशिष्टदर्शनाभ्यां, 'गुणाभिरामाभ्यां च नवा स्त्रियः' इत्यादिवत्, जामातृभ्यां मालतीमदयन्तिकयोर्वराभ्यां अपरितोषोऽतृप्तिः किमर्थम् ? इति एवंरूपेण । 'जामाता दुहितुः पतिः' इत्युक्तेऽपि नन्दनस्य जामातृत्वोक्तिः, 'ज्येष्ठो भ्राता पितृसमः' इति वचनादनुजायाः पुत्रीतो विशेषाभावादिति मन्तव्यम् । प्रतिबोध्यमानः क्षोभशमनज्ञानवन्तौ कृत्वा अभ्यन्तरमन्तःपुरं गतो यद् यस्मात्तस्मादहो गुणानुरागो नरेन्द्रस्येत्यन्वयः । सम्पाताख्यं सात्वतीवृत्त्यङ्गं चेदम् ।

"मन्त्रार्थदैवशक्त्याद्यैः सम्पातः सन्धिभेदनम् ।"

इति वचनात्, दैवशक्त्या राज्ञो नन्दनाद् भिन्नत्वोक्तेः । इमौ च माधवमकरन्दावागताविति यावत् । भगवत्या इमं वृत्तान्तं निवेदयामि । तदनुग्रहादेव तयोः समृद्ध्यागमादिति भावः ।

इमाविति सूचितत्वात् प्रवेशः । प्रेयसः प्रियतमस्य माधवस्येत्यर्थात् । सर्वान् पुरुषानतिशयितुमतिक्रमितुं शीलं यस्य । निर्व्याजं छलप्रयोगरहितं, धर्ममनतिक्रम्य वृत्तत्वात् । न्यस्तशस्त्रस्रस्तवस्त्रमुक्तकेशत्यक्तवाहपराभिषक्तादिवर्जं प्रवृत्तमित्यर्थः । ऊर्जितं उत्साहविशिष्टम् । तेजः परपरिभवाक्षमः प्रतापः । तथात्वं समर्थयति— तथाहि ।

दोर्निष्पेषेत्यादि—दोर्निष्पेषेण त्वरया निरायुधत्वेनैव निर्गमाद् बाहुरूपेण प्रहरणेन यत् सञ्चूर्णनं तेन विशीर्णसञ्चयं भिन्नसंहति दलत्कङ्कालं त्रुटच्छरीरास्थि च यथा तथा । प्राक् पूर्वं समरारम्भे वीराननुन्मथ्नतः शूरान् क्षोभयतः अनुपत्य पश्चाद् धावित्वेत्यनेन तेषां पलायनारम्भः प्रतीयते, तत्प्रहर-

१. 'गलत्', २. 'ननुपात्य' छ. ज. पाठः.

१. 'गुणानां च' क. पाठः २. 'पुत्रीकाविशेषाभावात्' ज. पाठः. ३. 'सम्पाताख्यं' क. म. ज, 'पताकाख्यं' ज, पाठः. ४. 'सम्पात्यः' क. छ. ज. म. ज. पाठः.

उद्वेल्लद्धनरुण्डखण्डनिकराकीर्णस्य सङ्ख्योदधे-
र्द्वेधा स्तम्भितपत्तिपङ्क्तिविकटः पन्थाः पुरस्तादभूत् ॥ ९ ॥

माधवः— वयस्य! नन्वनुशयस्थानमेतत् । पश्य—

अद्यैवेन्दुमयूखखण्डखचितं पीतं निशीथोत्सवे
यैर्लीलापरिरम्भदायिदयिताग्ण्डूषशेषं मधु ।

---

तानि तेषामायुधानि आच्छिद्य हठाद्धृत्वा विक्रामतः अभिमुखेषु पराक्रमं प्रयुञ्जानस्य, प्रेयस इति पूर्ववाक्यादायाति । उद्वेल्लद्भिर्नृत्यद्भिः घनैर्निरन्तरैः रुण्डैः कबन्धैः खण्डैः शिरःपाणिपादादिशकलैर्बहुभिः कीर्णस्य व्याप्तस्य सङ्ख्योदधेः समरसागरस्य, विपुलभीषणत्वात् सागरत्वारोपः, द्वेधा उभयपार्श्वयोर्द्वेधा स्तम्भितया स्तम्भवद् भयान्निष्पन्दं स्थितया पत्तिपङ्क्त्या पदातिश्रेण्या विकटो विस्तृतः पन्था मार्गः पुरस्तात् पुरोभागे । पुरस्तादित्यनेन यतो यतो गम्यते ततस्ततस्तथाभावः, पृष्ठतः पुनस्तेषां प्रतिनिवर्तनेन सकलकलं मिलितत्वं, पुनः परिवृत्य विलोकने पलायनं च द्योत्यते । प्रेयसः पुरस्तात् सङ्ख्योदधेः पन्था अभूदित्यन्वयः । सङ्ख्योदधेरित्यनेन तुङ्गतरङ्गभङ्गिसङ्कटे तरङ्गमालिनि निरवग्रहं विहरतस्तिमिङ्गिलादेः समाधिः सूच्यते । अत्र वीररसः प्रतीयते । अतिशयोक्तिरलङ्कारः ॥ ९ ॥

नन्वित्यादि । अनुशयस्थानं हन्त मयैवं न विक्रान्तमिति पश्चात्तापस्यास्पदः ।

'पश्चात्तापे त्वनुशयो दीर्घद्वेषानुबन्धयोः ।'

इति वैजयन्ती । एतन्मदीयं चेष्टितम् । पश्य निरूपय ।

अद्यैवेत्यादि—इन्दुमयूखखण्डखचितं सौधशिखरावस्थानेन मणिचषकवर्तिनि मधुनि प्रतिफलतामिन्दुमयूखानामपि तस्मिन् पीयमाने स्वयं खण्डीभूय पीयमानत्वप्रतीतिरिन्दोर्मयूखानां खण्डैः खचितं सम्बद्धमित्युक्तिः,

'इन्दुं चषकसङ्क्रान्तमुपायुङ्क्त यथामृतम् ।'

---

१. 'उद्वेल्लद्वरिरुण्ड' क. पाठः. २. 'संख्योदधेः' क. ञ. झ. न. पाठः. ३. 'भूत् ॥ वयस्य' ञ. पाठः. ४. 'माध— नन्व' क. ख. घ झ. ञ. पाठः. ५. 'निचितं' ञ. पाठः.

---

१. 'मधुचषक' न. पाठः.

सम्प्रत्येव भवद्भुजार्गलगुरुव्यापारभग्नास्थिभि-
र्गात्रैस्ते कथयन्त्यसारविधुरान् प्रायेण संसारिणः ॥ १० ॥

स्मर्तव्यं तु सौजन्यमस्य नरपतेः। यदपराद्धयोरप्यनपराद्धयोरिव कृतोपसदनं चेष्टितवान्। तदेहि मालतीसमक्षमेव मदयन्तिकाहरणवृत्तान्तं विस्तरतः कथ्यमानं अनुभवावः।

इति भर्तृकाव्योक्तवत्। निशीथोत्सवे मध्यरात्रानुष्ठेये रतोत्सवे निमित्ते, रत्युद्दीपनत्वान्मधुपानस्य। 'निमित्तात् कर्मसंयोगे सप्तमी वक्तव्या' (वा० २-३-३६) इति सप्तमी। लीलापरिरम्भदायिनीनां अन्तरान्तरा विलासालिङ्गनप्रदानशीलानां दयितानां प्रियतमानां गण्डूषात् मुखपूरणोपयुक्तात् शेषमन्यत् अद्यैव यैः पीतं सम्प्रत्येव ते कथयन्तीति तुल्यकालत्वद्योतनायैवकारः। भवद्भुजार्गलयोस्त्वद्बाहुपरिघयोः।

'कवाटमररं तुल्ये तद्विष्कम्भोऽर्गलं न ना।'

इत्यमरः। गुरुणा महता व्यापारेण निष्पेषादिना कर्मणा भग्नान्यस्थीनि येषां तैर्गात्रैः शरीरैः करणभूतैर्हेतुभूतैर्वा असारविधुरान् सारो बलं तद्रहिततया नित्यदुःखितान्, सारविधुरानिति वा पाठः, साररहितानित्यर्थः। प्रायेण बाहुल्येनेति यत्रकुत्रचिद् यदाकदाचिद् यः कश्चित् सारवान् भविष्यति न वेति द्योतयति। संसारिणो जननमरणादिप्रबन्धतरङ्गिते प्रवृत्तिपथे वर्तमानान्। कथयन्तीति तत्समर्थाचरणे प्रयोगः। अत्रापि वीररसो ध्वन्यते। अत्र विरोधो निदर्शना चालङ्कारः, हर्षदैन्ययोर्भावयोर्विरुद्धयोरुपनिबन्धनात्, स्वस्वहेत्वन्वयस्य क्रियैव कथनाच्च ॥ १० ॥

स्मर्तव्यं स्मरणीयं, यावज्जीवं मनसानुसन्धेयमिति भावः। तुल्यो-

१. 'व्याघात' छ. पाठः. २. 'संस्मर्तव्यं' छ. पाठः. ३. 'राधितौ' क. ख. पाठः. ४. 'व नौ कृतो' क. ख. छ. ज, 'व नौ साम्प्रतं चेष्टि' झ. ञ. पाठः. ५. 'कृतप्रसादमधिष्ठितवान्' क. पाठः. ६. 'क्षमधुना मद' क. ख. घ. च छ. ज. झ. ञ. ट. पाठः. ७. 'कामी: कलहंसेन स्ववृत्तान्तं' क. पाठः ८ 'मानं श्रोतुमिच्छामि। अन्यच्च—कथ' क., 'मानं श्रोतुमिच्छामि। तथा च—कथ' झ. ञ. पाठः ९. 'सः। (पुरोऽवलोक्य) कथं शून्या इवामी प्रदेशाः। मक—नूनं शङ्क आवयोः समरसङ्कटोद्वेगेन व्याकुलत्वादितस्ततो भ्रमन्त्यस्ता अत्रैवात्मानं विनोदयन्ति। माध—कथयति' ज. पाठः.

१. 'भर्तृकाव्योक्त' ख. पाठः. २. 'त्सवे रत्यु', ३. 'विधुतानिति वा' ४. 'स्थीनि यो' ज. पाठः.

कथयति त्वयि सस्मितमालती-
वलितलोलकटाक्षपराहतम् ।
वदनपङ्कजमुल्लसितत्रपा-
स्तिमितदृष्टि सखी नमयिष्यति ॥ ११ ॥[3]

वृत्तौ, अस्माभिरसंशयं महानपराधः कृत एव, तथाप्यस्य सौजन्यात् स तिरोहित इति द्योतयति । सौजन्यं पूजितस्य जनस्य भावः, अनसूयया गुणानुरक्तत्वम् । अपराद्धयोः अपराधं अनिष्टं कृतवतोः । 'राध साध संसिद्धौ' इत्यस्मादपपूर्वात् कर्तरि निष्ठायां रूपम् । अनपराद्धयोरित्यपराधाभावमात्रं न प्रतिपद्यते, किन्तु कृतोपकारयोरित्यर्थः सामर्थ्यात् समर्प्यते, अपराधाभावमात्रे प्रत्युपकारस्य गरीयसोऽनुपपत्तेः । आवयोर्विषय इत्यर्थात् सिद्ध्यति । कृतोपसदनं कृतप्रावण्यं, 'विविवदुपसन्नाय शिष्याय' इत्यादिषूपसदनस्य प्रावण्यवाचकत्वदर्शनात्, चेष्टितवान् आचरितवानिति 'अभिजणं जाणिअ णिव्वत्तिअ बहुमाणो' इत्यादिपूर्वोक्तमनुस्मार्यते । तद् यस्मादेवं निर्विघ्नमनोरथाः स्मः तस्मादित्यर्थः । एहीति त्वरां द्योतयति । मालतीसमक्षमेव मालत्याः सन्निधावेव मदयन्तिकाया हरणस्य मोषणस्य वृत्तान्तमुपायानुष्ठानरूपप्रवृत्तिं विस्तरतः शब्दप्रपञ्चेन कथ्यमानं, त्वयेति शेषः, अनुभवामः सुष्ठु जानीमः । बहुवचनेन मालत्यवलोकितादिसहित आत्मा परामृश्यते ।

मालतीसमक्षमित्युक्तेः सप्रयोजनत्वं निरतिशयरसावहत्वादित्याह— कथयतीत्यादि । कथयति वदति सति सस्मितायाः यथा चोरस्य चोरान्तरदर्शनेन समानयोगक्षेमत्वबुद्ध्या हर्षो जायते तथा स्वसाहसतुल्यसाहसतया हृष्टत्वान्मन्दहासविशिष्टाया इत्यर्थः,[1] मालत्या वलितैस्तिर्यग्भिः लोलैः प्रतिनिरीक्षणैस्तरलैः कटाक्षैः पराहतं अवलेपेन सोपालम्भं, पतनाद्दण्डैरिव ताडितं, उल्लसितत्रपास्तिमितदृष्टि पूर्वं स्वयं धैर्यभावनया मालतीचापलोपलम्भात् पश्चात् स्वयं साहसानुष्ठानाद् उद्भूतया लज्जया अस्तिमिता चञ्चला दृष्टिर्यस्य, 'क्षणमभिमुखैर्लज्जालोलैः' इत्यादिषु लज्जानुभावत्वेन लौल्यस्य प्रसिद्धेः । अथवा स्तिमिता मालत्यामसूयया निश्चलं निबद्धेत्यर्थः । सखीति मित्रभार्यात्वादुक्तिः । नमयिष्यति अधोमुखं करिष्यतीति लज्जानुभावः,

१. 'वलित' क. पाठः. २. 'त्रप' ज. पाठः. ३. 'ति ॥ (इति परिक्रामतः।) अय' क. ञ. ज, 'ति ॥ (उभावप्युद्यानप्रवेशं नाटयतः ।) अय' छ. पाठः.

१. 'मन्दहासविशिष्टायाः' क. पाठः.

अयमसावुद्यानवाटः ।

(प्रविशतः मदयन्तिकालवङ्गिके ।)

मदयन्तिकालवङ्गिके—सहि मालदि! सहि मालदि! (सहसावलोक्य) दिट्ठिआ पुणो वि महाणुभाआ दीसन्ति ।

(सखि मालति ! सखि मालति! (सहसावलोक्य) दिष्ट्या पुनरपि महानुभावौ दृश्येते ।)

माधवमकरन्दौ—भवत्यौ ! क्व सा मालती ?

उभे—पदसद्देण मन्दभाइणीओ विप्पलद्धम्ह ।

(पदशब्देन मन्दभाग्ये विप्रलब्धे स्वः ।)

'एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी ।'

इत्याद्युक्तेः । अत्र हास्यरसो व्यज्यते । अनुमानमलङ्कारः ॥ ११ ॥

अयं पुरोवर्ती, असौ सः यत्र मालती वर्तत इत्यर्थः ।

प्रविशतः प्रवेशमभिनयत इत्यर्थः । प्रकृतं मालत्यन्वेषणमेवानुसन्धत्ते ।

सखि मालतीति । विलोक्यतामिति शेषः । दिष्ट्या पुनरपि महानुभावौ दृश्येते । दिष्ट्या भाग्यादिति अन्यथा स्नेहवशेन निरूपितत्वादर्थः ।

क्व सा मालती । सेति या युवाभ्यामन्विष्यते, अथवा तृषिताभ्यामिवाभ्यां या दिदृक्षितेत्यर्थः ।

पदशब्देन मन्दभाग्ये विप्रलब्धे स्वः । अथयुवयोः पदन्यास-

---

१. '(प्रविशतो माधवमकरन्दौ ।) माध—कथं शून्या एव प्रदेशाः । मक—वयस्य ! नूनमस्मद्व्यतिरेकोद्वेगपर्याकुलत्वादितस्ततः परिभ्रमन्त्य आत्मानमत्रैवोद्यानगहने विनोदयिष्यन्ति । तदेहि पश्यावः । (उभौ परिक्रामतः ।) लव—सहि' क, '(प्रवेशं नाटयतः ।)' ज, (प्रविशतः।) माध—कथं शून्य एव दीर्घिकाप्रदेशः। मक—वयस्य! नूनमस्मद्व्यतिकरोद्वेगपर्याकुलत्वादितस्ततः परिभ्रमन्त्य आत्मनोऽत्रैव ('आत्मानम् अत्रैव' ञ.)उद्यानगहने विनोदयन्त्यो भविष्यन्ति । तदेहि पश्यावः । (उभौ परिक्रामतः ।) लवङ्गिकामदयन्तिके—' झ. ञ. पाठः. २. 'लव—सहि मदआन्तिए! मालदि! (सह' क. पाठः. ३. 'मालदि! (विलोक्य)' ग. ङ. पाठः. ४. 'विलोक्य)' छ, 'विलोक्य सहर्षं)' ज, 'वलोक्य सहर्षं)' ञ. पाठः. ५. 'वि एदे महा' क, 'वि अण्णमहा' ख, वि अणहा महा' घ. छ. ट, 'वि अ दे महा' ज, 'वि एदे अणाहदा महा' झ. ञ. पाठः. ६. 'माध—क्व' ख, ग. ङ. पाठः. ७. 'क्व मालती' च. झ. ञ. ट. पाठः. ८. 'उभे—कुदो मालदी? पद' क. घ. ङ. च. छ. ज. झ. ञ, 'लव—पद' ग. पाठः. ९. 'ण अम्हे विप्पलद्धाओ मन्दभाइणीओ' क. छ. ज. झ. ञ, पाठः.

माधवः—हे भवत्यौ! कथंकथमपि सहस्रधैव विध्वंसते इव हृदयं, यतः स्पष्टमभिधीयताम् ।

मम हि कुवलयाक्षीं प्रत्यनिष्टैकबुद्धे-
रविरतमनुबन्धोत्कम्प एवान्तरात्मा ।
स्फुरति च मम चक्षुर्वाममेतच्च कष्टं
वचनमिह भवत्योः सर्वथा हा! हतोऽस्मि ॥ १२ ॥

ध्वनिना मालती समायातीति बुद्ध्या वञ्चिते स्वः, यतो मालतीति भवन्तावाहूतवत्याविति भावः ।

मन्दभाग्ये इत्युक्त्या साशङ्क आह—हे भवत्यौ कथंकथमपि अतिप्रयत्नेन सहस्रधा बहुमुखचिन्ताव्याकुलत्वात् विध्वंसते इव विशीर्यत इव । एवेति वा पाठः । न विध्वंसत इति वा पाठः । अतियत्नेन धार्यते अन्यथा विध्वंसत एवेति भावः । यतः यस्मादेवमतः स्पष्टं व्यक्तं तद्वृत्तान्तः [अभिधीयतां] कथ्यतामन्यतरकोटिनिर्णयायेति यावत् ।

अथ दुर्निमित्तेनैवामङ्गलस्य सूचितत्वात् किं वा भवत्योरभिधानपुनरुक्तेनेत्याह—मम हीत्यादि । कुवलयाक्षीं इति मालतीमुद्दिश्य अविरतानिष्टैकबुद्धेः अभिजनरूपशीलमाधुर्यनिरतिशयप्रेमत्वादिभिरीदृशस्य त्रिभुवनरत्नस्य स्वप्नलब्धस्येव लाभश्चिरमस्माकं न भविष्यति, तादृशस्य सुकृतस्यासम्भावितत्वाद् इत्यनिष्टे अपाये येन केनापि कारणेनात्यन्तनाशे एकस्मिन्नेव बुद्धिर्मनो नित्यं यस्य, अन्तरात्मा हृदयं अनुबन्धोत्कम्पः अविच्छिन्न उद्भूतः कम्पः

१. 'माध कथं' क. घ. पाठः, २. 'पि विध्वं' क. पाठः. ३. 'सहस्रधेव' ख, 'सर्वथैव' छ. पाठः. ४. 'व ध्वंसत' छ. पाठः. ५. 'ते मे हृ' क. ज. ञ, 'ते हृ' छ, 'ते नो हृ' झ. पाठः. ६. 'अतः' क. ख. च. छ. झ. ञ., 'ततः' ज. पाठः. ७. 'समभि' क, 'स्फुटमभि' ज. पाठः. ८. 'द्रवति हृदयमन्तस्त्रस्यतीवान्तरात्मा' क, 'भृशतरमनु' ख. घ. 'रविकलमनु' छ, 'भृशमयमनुबद्धोत्कम्प' झ. ञ. पाठः. ९. 'हि' क. पाठः. १०. 'खलु चक्षुः' क. ख. घ. ज. झ. ञ. पाठः. ११. 'चक्षुःस्पष्टमेतच्च' क. पाठः, १२. 'वामं' क. पाठः. १३. 'वचनमपि' ज. पाठः.

१. 'व्याकुलतया विध्वं' ख. ग. ज. पाठः २. 'वं ततः' ख. पाठः. ३. 'निर्वहणायेति' ज. पाठः.

मदयन्तिका—ताए क्खु इदो णिग्गदे महाणुभावे अवलोइदं बुद्धरक्खिदं च भअवदीसआसं विसज्जिअ, अप्पमादणिमित्तं अज्जउत्तं विण्णवेहि त्ति लवङ्गिआ अणुप्पेसिदा। तदो उत्तम्ममाणा ताए मग्गं ओलोइदुं अग्गदो पेसरिआ। पच्छादो अहं ण अ तं पेक्खामि। तदो अह्मेहिं एत्थ विडपन्तराइं विइणिआइं दाव तुह्मे दिट्ठेत्ति।

(तया खल्वितो निर्गते महानुभावे अवलोकितां बुद्धरक्षितां च भगवतीसकाशं विसृज्य, अप्रमादनिमित्तमार्यपुत्रं विज्ञापयेति लवङ्गिकानुप्रेषिता। तत उत्ताम्यन्ती तस्या मार्गमवलोकयितुमग्रतः प्रसृता। पश्चादहं न च तां पश्यामि। तत आवाभ्यामत्र विटपान्तराणि विचितानि तावद् यूयं दृष्टा इति।

अद्य पतिष्यत्यद्य पतिष्यतीति प्रतीतिजनकं चलनम्, एवेति तत्फलस्यामङ्गलस्याव्यभिचारमवधारयति,

"सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः।"

इति महाकविवचनात्। वामं चक्षुश्च स्फुरतीति पुरुषस्य वामाक्षिस्पन्दनस्यामङ्गलसूचकत्वात्। अनेन शारीरमपि दुर्निमित्तमस्तीत्युक्तम्। एतच्च मन्दभाग्ये विप्रलब्धे इत्येवंरूपं भवत्योर्वचनं च कष्टं दुःश्रवम्। इह अस्मिन् विषये सर्वथा सर्वप्रकारेण मानसेन शारीरेण चानिमित्तेन तदनुगुणेन च भवत्योर्वचनेनेत्यर्थः; हतोऽस्मि, नष्टोऽस्मि, तादृशरत्नभ्रंशादिति भावः। व्यसनात् प्रियाविरहरूपाद् गर्भनिर्भिन्नबीजार्थाभिमर्शनरूपोऽवमर्शसन्धिरयं, स्पष्टमभिधीयतामित्युक्तेः॥ १२॥

स्पष्टमभिधत्ते — तया खल्वितो निर्गते महानुभावे अवलोकितां बुद्धरक्षितां च भगवतीसकाशं विसृज्य, अप्रमादनिमित्तमार्यपुत्रं विज्ञापयेति लव-

१. 'तदो क्खु' क., 'ताए इदो' झ. ञ. पाठः. २. 'णिण्णिग्गदे' ज. पाठः. ३. 'एताए' क. छ. झ. ञ. पाठः. ४. 'ए मम मग्गं' ख. पाठः. ५. 'परिट्ठिदा' क. पाठः. ६. 'आ माळदी। पच्छा' ज. पाठः. ७. 'अह्मे तं पेक्खामो' झ, 'अहम्। तदो ण' ज. ञ. पाठः. ८. 'हिं मग्गिदा एत्थ छ. ज, 'हिं जाव विडप' झ. पाठः,

१. 'वामनयनचलनस्य' क. पाठः. २. 'र्थानवमर्शनरूपो' ख, 'र्थाभिमर्शरूपो' ग. 'र्थाभिमर्शनरूपो' ङ. झ. ञ. पाठः.

**माधवः**—हा प्रिये ! मालति !

किमपि किमपि शङ्के मङ्गलेभ्यो यदन्यद्
विरमतु परिहासश्चण्डि ! पर्युत्सुकोऽस्मि ।
कलयसि कलितोऽहं वल्लभे देहि वाचं
भ्रमति हृदयमन्तर्विह्वलं निर्दयासि ॥ १२ ॥

---

ङ्गिकानुप्रेषिता । तत उच्चाम्यन्ती तस्या मार्गमवलोकयितुमग्रतः प्रसृता । पश्चादहं न च तां पश्यामि । तत आवाभ्यामत्र विटपान्तराणि विचितानि तावद् यूयं दृष्टा इति । तावत् तस्मिन् कालावधौ, स्पष्टाभिधानात् ।

निर्णीततदपायः परिदेवयते—हा प्रिये मालतीत्याकाशे लक्ष्यं बद्ध्वोक्तिः ।

किमपीत्यादि— किमपि किमपि अनाख्येयं तद्वस्तु शङ्के चिन्तयामि । वीप्सया व्यसनहेतूनां दिव्यानां मानुषीणां च विपदां शङ्कनीयत्वमाह । किमित्यनाख्येयत्वमित्याह । मङ्गलेभ्योऽन्यदिति, अमङ्गलस्याशुभस्य झटिति तत्त्वमविज्ञाय वक्तुमयुक्तत्वात् । 'अन्याराद्' (२-१-२१) इत्यादिना पञ्चमी । उत्तरवाक्ये यच्छब्दोपादानात् तत्किमपि किमपीति पूर्वस्मिन् तच्छब्दः सामर्थ्यादायाति । शङ्क इति मम स्नेहादाशङ्कामात्रमेतत् । तव तु कल्याण्यास्तन्न सम्भवतीति द्योत्यते । तर्हि कथमदर्शन इति चेत्तत्राह — **परिहासः** क्रीडा आत्मान्तर्धानरूपा **विरमतु** निवर्ततामिति प्रार्थने लोट् । प्रसक्तस्यैव प्रतिषेध्यत्वात् त्वं तु मत्तोऽन्तर्धाय परिहससि । न वञ्चनावसरोऽयमिति भावः । 'व्याङ्परिभ्यो रमः' (१-३-८३) इति परस्मैपदम् । **चण्डि !** कोपने इति 'चिरायित'मिति 'तव मयीर्ष्या विद्यते' इति परिहासस्य हेतुर्ध्वन्यते । 'चण्डी तु कोपना' इत्यमरः । अथ विरमणस्य हेतुमाह — **पर्युत्सुकोऽस्मि** क्षणान्तरितेन त्वद्दर्शनेनोत्सुकोऽस्मि यतः अतो विरमत्वित्यर्थः । पुनः प्रकारान्तरेण विकल्पयति — **कलयसि** मददर्शने किमयं करिष्यतीति जिज्ञाससे । काका किमिति प्रश्न आक्षिप्यते । तत्कलनमपि नेदानीं कर्तव्यमि-

---

१. 'तावदस्मिन् काला' ज. पाठः. २. 'लक्ष्यं' ज. पाठः. ३ 'दैवीनां' ख पाठः. ४. 'न्तर्धा, विरमतु' ख. ग. पाठः. ५. 'ससि । तस्य वचना' क. ञ. ज. पाठः. ६. 'मिति यावत् ।' ज. पाठः. ७. 'इत्याभिधानान्तरम् । अथ' ञ. पाठः.

उभे — हा पिअसहि ! कहिं गदासि ?

(हा प्रियसखि ! क गतासि ?)

मकरन्दः — किमित्यविज्ञाय वयस्य ! वैक्लव्यमवलम्बसे ।

माधवः — सखे त्वमपि किं न जानासि माधवस्नेहदुःस्थिताया-स्तस्याः कातर्यचेष्टितानि ।

---

त्याह — कलितः यावान् यश्चास्मि तावान् स च त्वया ज्ञातोऽहम् । भूतनिर्देशेन महामांसविक्रयादिप्रवृत्तावात्मनिरपेक्षस्त्वद्दर्शनैकधन इति पूर्वमेव त्वया अहं परिच्छिन्नः । तत् किमिदानीं पिष्टपेषणेनेत्यर्थः प्रकाश्यते । देहि वाचं दर्शनदानात् पूर्वमेव सकलदुःखनिर्वापणीं सुधावृष्टिमिव 'अत्राहं स्थिता । मा भैषी'ति वाचं वितरेति । वाचोऽप्यदानात् सोद्वेग उपालभते — अन्तः शरीराभ्यन्तरे विह्वलं परवशं हृदयं भ्रमति किंकर्तव्यतामूढं सञ्चरति । इमां मदवस्थां ज्ञात्वापि वाङ्मात्रेणापि मां न सम्भावयसि । अतः किमन्यत् । निर्दयासि आर्तविषयेऽनुकम्पारहितासीति । अत्र करुणरसो व्यज्यते । अप्रस्तुतप्रशंसालङ्कारः अदर्शनरूपकारणमुखेन कार्यस्य स्वजीवितपरित्यागस्य सूचितत्वात् ॥ १३ ॥

हा प्रियसखि ! क गतासि ।

किमिति किमर्थं अविज्ञाय, तत्त्वमिति शेषः, वैक्लव्यं विक्लवस्याधीरस्य भावं अवलम्बसे अङ्गीकरोषि ।

कथं वैक्लव्यं नावलम्ब इत्याह — त्वमपीति नगरदेवतागर्भगृहे येनाऽपरोक्षीकृतानि स त्वमपीत्यर्थः । माधवस्नेहदुःस्थितायाः नन्दनपरिणयप्रस्तावे

---

१. 'कहिं क्खु सि' ख, 'कहिं सि' घ. च. झ. ञ. ट, 'कहिं एव्व गदा सि' छ. पाठः. . 'वलम्बयंते' क ख. ग. ज. झ. ज, 'वलम्बते' छ. पाठः. ३. 'मत्स्नेह' छ. पाठः. ४. 'दुःखितायाः' क. ख. च. छ. ज झ. ञ. ट. पाठः ५. 'विचेष्टितानि' ञ. पाठः.

---

१. 'पेषणमित्यर्थः' क. ग. पाठः. २. 'निवारणीं' ख. पाठः. ३. 'तत्त्वविदग्धं च' क. ख. ग. छ. ज. पाठः. ४. 'त्वमित्यर्थः' क. पाठः.

मकरन्दः — अस्त्येतत् । किन्तु भगवतीपादमूलगमनमप्याशङ्क्यते । तदेहि । तत्र तावत् पश्यामः ।

उभे — एदं पि संभावीअदि ।

(एतदपि सम्भाव्यते ।)

माधवः — एवं भवतु ।

(परिक्रामन्ति ।)

---

मद्विषयेण स्नेहेन विवशहृदयायाः । कातर्यचेष्टितानि अप्राप्तिभयजनितानि मरणाध्यवसायकरणपरिदेवितलवङ्गिकाप्रणामादीनि कर्माणि । अतस्तानि स्मरतो मे कुतः शान्तिरिति भावः ।

अस्त्येतत् । एतत्त्वयोक्तं वस्त्विति सर्वं मया प्रत्यक्षीकृतम् । किन्तु विशेषोऽप्यस्ति । भगवतीपादमूलगमनमप्याशङ्क्यते । भगवत्याः कामन्दक्याः पादमूलं प्रति गमनं परबलाभियुक्तयोरावयोर्विजयाशासननिमित्तं तस्योपपत्तेराशङ्क्यते । तत्रापि न निश्चयः, तथापि सर्वथा विचारणीयमिति भावः । विहारोद्यानवर्तिन्या भगवतीविहारस्यासन्नत्वात्तदाशङ्कोपपत्तिः । तत् तस्माद् एहि असम्भ्रान्त आगच्छ । तत्र भगवतीपादमूले, तावदवधारणे, पश्याम एव, तामिति शेषः । आश्वासनार्थमवधारणम् ।

एतदपि सम्भाव्यते । एतन्मकरन्दोक्तं वस्तु सम्भाव्यते उत्प्रेक्ष्यते । गत्यन्तरस्यासम्भाव्यत्वादिति भावः ।

किञ्चिदाश्वस्तत्वात् तत्सम्भावयन्नाह — एवं भवत्विति ।

---

१. 'माशङ्क्यते' ख. घ. च. ट. पाठः. २. 'गच्छावः' छ. ज. पाठः. ३. 'एवं पि' क. झ, 'एदं सं' घ. 'इदं पि' ञ. पाठः. ४. 'एवं नाम भवतु' क, 'एवमस्तु' ख. घ. ट, 'एवं नामास्तु' ज. झ. ञ. पाठः ५. '(सर्वे परि' क. पाठः. ६ 'क्रामति' ख. छ. ज. ञ. पाठः.

---

१. 'पादतलगमन' क. ". पाठः. २. 'विजयाशासनिमित्त' ग. पाठः. ३. 'एतत्वं तद् सम्भा' क. ग. ङ. छ. ञ. झ. ञ. पाठः. ४. 'तत्सर्वं सम्भा' ख, तत्तत्र भाव ग. क ङ. पाठः. ५. 'सम्भावनादाह' ख. ङ. झ. ज, 'भावनादाह' घ. छ. ज. पाठः.

**मकरन्दः** — (विचिन्त्य स्वगतम् ।)

याता भवेद् भगवतीभवनं सखी नो
जीवन्त्यथैष्यति न वेत्यभिशङ्कितोऽस्मि ।
प्रायेण बान्धवसुहृत्प्रियसङ्गमादि
सौदामिनीस्फुरणचञ्चलमेव सौख्यम् ॥ १४ ॥

(इति निष्क्रान्ताः सर्वे ।)

इति मालतीमाधवे मालत्यपहारो नाम
अष्टमोऽङ्कः ॥

---

विचिन्त्येति मनःक्षोभकरमनिमित्तमनुसन्धायेत्यर्थः ।

यातेत्यादि — याता गता भवेत्, सम्भावनायां लिङ् । नः सखी मालती । अथेति पक्षव्यावृत्तौ । याता भवतु मा वा, जीवन्ती एष्यति नैष्यति वा इति । अस्मिन् प्रकारत्रयं—किं भगवत्या भवनं याता भवेद्, अथ जीवन्ती अत्रागमिष्यति, न वेति । अस्मिन्नर्थे अभिशङ्कितोऽस्मि अत्यन्तशङ्काकुलहृदयोऽस्मि । न पुनस्तत्र गतैवेति वा सुखेनागमिष्यतीति वा मनसो मे निश्चय इत्यर्थः । किमेष्यतीति किं न वैष्यतीति किमिति सर्वत्र काका वितर्क आक्षिप्यते । मनःक्षोभेणैव किमप्यमङ्गलं निश्चित्य विधिविलसितस्य वैषम्यमुत्प्रेक्षते— प्रायेणेति, बाहुल्येन एकान्ततोऽत्यन्ततश्च सुखानुभूतेः क्वचिदेव कस्यचिदेव निरवधिकसुकृतराशेः सम्भाव्यत्वमिति भावः । बान्धवसुहृत्प्रियसङ्गमादि बान्धवा मातापितृसम्बन्धाः सुहृदो मित्राणि प्रिया भर्तृभार्यादयः तैः सङ्गमः सहावस्थानं, कार्ये कारणोपचारस्तत्कार्यमित्यर्थः, स आदिः प्रकारो यस्य, कारणं वा । आदिशब्देन गृहक्षेत्रवित्तादिसङ्ग्रहः । सौख्यं सुखं स्वार्थे तद्धित·

---

१· 'मक — याता' छ, 'मक —(स्वगतं) याता' ज· पाठः· २· 'आत्मगतं ।' क· पाठः. ३· 'याता नु सा भग' क, 'याता नु तद्भव' ·· पाठः. ४. 'सा' छ पाठः. ५. 'जीवत्यथै' ग. पाठः. ६. 'न चेत्याम' क· पाठः. ७· 'त्युपशाङ्कि' पाठः· ८. 'सुहृज्जनसङ्ग' ख. ग. घ· छ. ट· पाठः.

प्रत्ययः । सौदामिनीस्फुरणचञ्चलं सौदामिनी विद्युत्' तस्या विलसितमिवास्थिरमिति लोकस्वभावकथनेनास्माकमपीयं दशा भवति चेत् कथं निवार्यतामिति मतिः प्रकाश्यते । अत्रार्थान्तरन्यासोऽलङ्कारः, सामान्येन विशेषस्य समर्थ्यमानत्वात् । सौदामिनीस्फुरणचञ्चलमित्यनेन 'नासूचितस्य प्रवेशः' इति न्यायादनन्तराङ्के विष्कम्भपात्रत्वेन प्रविशन्त्याः सौदामिनीसंज्ञायाः पूर्वप्रस्तुतायाः कामन्दकीशिष्याया योगिन्याः प्रवेशमपि सूचयति रससंविधानप्रपञ्चोदञ्चनचञ्चुः कविविरिञ्चि इत्यशेषमतिमङ्गलम् ॥ १४ ॥

मालतीमाधवस्येत्थमष्टमाङ्कार्थचर्चनम् ।
पूर्णज्योतिःप्रसादेन चक्रे पूर्णसरस्वती ॥

॥ अष्टमोऽङ्कः ॥

---

## अथ नवमोऽङ्कः ।

(ततः प्रविशति सौदामिनी ।)

**सौदामिनी** — एषास्मि सौदामिनी, भगवतः श्रीपर्वतादुपेत्य पद्मावतीं, उपश्रुत्य तत्र मालतीविरहिणः संस्तुतप्रदेशदर्शनासहिष्णोः संस्त्यायं परित्यज्य सह सुहृद्वर्गेण बृहद्द्रोणीशैलकान्तारप्रवेशं माधवस्य अधुना तदन्तिकमनुप्रयामि । भोस्तथाहमुत्पतिता यथा सकल एष गिरिनगरग्रामसरिदरण्यव्यतिकरश्चक्षुषा परिक्षिप्यते ।

---

अथ निर्वहणसन्ध्युपयोगिनीं योगिनीं विष्कम्भपात्रत्वेन प्रवेशयति,

"बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम् ।
ऐकार्थ्यमुपनीयन्ते यत्र निर्वहणं तु तत् ॥"

इति । तस्य च सन्ध्यादीनि चतुर्दशाङ्गानि । ततः प्रविशति सौदामिनीति ।

एषास्मि सौदामिनी । अस्मीत्यहंशब्दपर्यायोऽव्ययं, 'त्वामस्मि वच्मि विदुषाम्' इत्यादिप्रयोगात् । सौदामिनीति नामकथनं स्वस्याः कामन्दकी-सम्बन्धेन मालतीमाधवानुग्रहस्यावश्यकर्तव्यत्वं द्योतयितुम् । भगवत इति परमेश्वरपरिग्रहेण सिद्धिक्षेत्रतया चोपचारशब्दप्रयोगः । अथवा भगवतः परमेश्वरस्येति सम्बन्धे षष्ठी । श्रीपर्वतात् पूर्वप्रस्तुतात्, 'सिरिपव्वदे काबालिअं वदं धारेदि' इति वचनं सङ्घटयति । तत्र पद्मावत्यां संस्तुतप्रदेशदर्शना-सहिष्णोः संस्तुतानां प्रियतमासाहित्येनानुभूतानां मदनोद्यानादीनां दर्शनं

---

१. 'दुत्पत्य' छ. ज, झ. ञ पाठः. २. 'वतीमुपसृत्य' क. छ. ट, 'वतीं, तत्र' ज, 'वतीमुपाश्रिता । तत्र' झ, 'वतीमुपाश्रिता । माल' ञ. पाठः. ३. 'णः माधवस्य सं' ग. ङ. ज. पाठः. ४. 'स्थानं' क. पाठः. ५. 'प्रदेशं' क. च. ज. झ. ञ, 'अनुप्रवेशं' ख. पाठः. ६. 'शं परिभ्रतो माधवस्याधुनान्तिक' क, 'शं माधवस्य' तद' घ, 'शमुपश्रुत्याधुना तद' ञ, 'शं अधितिष्ठतो माधवस्याधुनान्तिक' झ. ञ. पाठः. ७. 'एव' ज. पाठः.

---

१. 'पात्रेण' ज. पाठः. २. 'यथा तथा' क. ग. छ, 'यथातथं' ज. पाठः. ३. 'एकार्थ' क. ख. ग. छ. 'ऐकार्थ्यं' ङ. पाठः. ४. 'प्रयोगदर्शनात्' ख. पाठः. ५. 'वश्यं कर्त' ङ. पाठः.

(पश्चाद्विलोक्य)

पद्मावती विमलवारिविशालसिन्धु-
पारासरित्परिकरच्छलतो बिभर्त्ति ।

सोढुमशक्तस्य, तद्दर्शनस्य क्षतक्षारवद् अरुन्तुदत्वादिति भावः । सुहृद्वर्गेण मकरन्दादिबन्धुसमूहेन । बृहद्द्रोणीति कस्यचित् पद्मावतीसन्निकृष्टस्य देशस्य संज्ञा, तत्रत्यः शैलो बृहद्द्रोणीशैलः, तस्य कान्तारो दुर्गं वनं—'कान्तारो वर्त्म दुर्गमम्' इत्यमरः—तस्य प्रवेशः भृगुपतनादिभिः शरीरपरित्यागहेतवे इत्यर्थः, प्रवेशमुपश्रुत्य लोकतः श्रुत्वा तदन्तिकं माधवस्य समीपं अनुप्रयामि उद्दिश्य गच्छामीत्यनेन तद्दर्शनैकव्यग्रतां प्रतिपादयति । भो इति लोकोक्त्य-नुसारी विस्मयद्योतकः । तथा तेन प्रकारेण उत्पातिता गगनशिखरमुड्डीना यथा येन प्रकारेण । एष इति यावदर्थं प्रवृत्तेः स्वाजिगमिषितप्रदेशवर्तित्वस्या-भिनयः, न तु भूमण्डलमात्रगतत्वस्य, समुद्रद्वीपाद्यप्रसङ्गात् । गिरिः बृहद्द्रोणी-शैलादिः, नगरं पद्मावती, ग्रामः तत्समीपगतोऽग्रहारः, सरितः पारासिन्धु-लवणादयः, अरण्यं बृहद्द्रोणीवनादि, व्यतिकरः तेषां वृत्तान्तः, परिक्षिप्यते कवलीक्रियते करतलामलकवत्, 'गङ्गास्रोतःपरिक्षिप्तम्' इत्यादिप्रयोगात् । अनेन बुभुत्सितस्य माधववृत्तान्तस्य तदन्तःपातित्वात् कैमुतिकन्यायेन सुबोधत्वं द्योतयति ।

परिक्षेपफलमाह—पश्चाद्विलोक्येति । पुरस्ताद्वेगेन प्रतिष्ठमानत्वात् पश्चादित्युक्तिः, पृष्ठतः परिवृत्यावलोक्येत्यर्थः ।

पद्मावतीत्यादि—पद्मावती नगरी विमलवार्योः स्वच्छसलिलयोः विशालयोः विस्तृतयोः सिन्धुपारयोः सरितोः परिकरः ताभ्यां गात्रिका-बन्धं,

"विवेकः स्यात् परिकरः पर्यस्तिपरिवारयोः ।
प्रगाढगात्रिकाबन्धे समूहारम्भयोरपि ॥"

इति वैजयन्ती । तद्व्याजेन उत्तुङ्गानां सुच्छूितानाम् सौधानां उधया श्वेतानां मौलिकानां सुरमन्दिराणां हरिहरहिरण्यगर्भादिदेवताप्रासादानां गोपुरद्वाराणां

१. 'ससुहृद्वर्गो मकरन्दादिबन्धुसहितः' ज. पाठः. २. 'त्यागयेत्यर्थः' ए. झ, 'त्यागायेत्यर्थः' ज. पाठः. ३. 'बुभुक्षितस्य' ख. पाठः. ४. 'विवृत्य' पाठः. ५. 'आलिप्तानां' क. पाठः.

उत्तुङ्गसौधसुरमन्दिरगोपुराट्ट-
सङ्घट्टपाटितविमुक्तमिवान्तरिक्षम् ॥ १ ॥
(अन्यतो विलोक्य)
सैषा विभाति लवणा ललितोर्मिपङ्क्ति-
रभ्रागमे जनपदप्रमदाय यस्याः ।

पुरद्वाराणां अट्टानामट्टालयसञ्ज्ञानां मञ्चविशेषाणां च । 'सौधोऽस्त्री सुधया श्वेतम्', 'गोपुरं स्यात् पुरद्वारम्', 'अट्टालयोऽट्टः क्षौमोऽस्त्री' इति च वैजयन्ती, सङ्घट्टेन संभूय दृढाघातेन पाटितं खण्डितं अत एव विमुक्तं स्वस्थानभ्रंशात् परितः पातितं अन्तरिक्षं आकाशम् । आकाशस्य विभुद्रव्यत्वात् सर्वमूर्तद्रव्यस्य संयुक्तत्वेऽप्यत्रान्तरिक्षशब्देन बालैस्तलमलिनताद्यध्यासेन गृह्यमाणमुपरि दूरतो दृश्यमानं नभो विवक्ष्यते । अन्यथोत्तुङ्गत्ववचनवैयर्थ्याद्घटनानुपयोगाच्च,

"नभःस्पृशं दीप्तमुदारवर्ण-
मुवाच चैनं गगनस्पृशा रघुः ।"

इत्यादिप्रयोगात् । विमलत्वादिर्विशालत्वे उत्प्रेक्षानिमित्तम्, 'स्वच्छविपुलत्वान्नभसः', 'शरद्गगनतलमिव विलीनम्' इत्यादिप्रयोगात् । सौधाभ्यन्तरेणोर्ध्वमन्तरिक्षस्यादर्शनं च व्यङ्ग्यम् । सापह्नवोत्प्रेक्षात्रालंकारः, छलशब्देनापह्नवस्य इवशब्देनोत्प्रेक्षायाश्च प्रतिपादनात्,

"यत्रोल्लसत्फेनततिच्छलेन
मुक्ताट्टहासेव विभाति सिप्रा ।" इतिवत् ॥ १ ॥

अन्यतो विलोक्याह— सैषेत्यादि । सेति प्रसिद्धिं परामृशति । एषेति पुरोवर्तित्वं, लवणेति काचिन्नदी, ललिताः शोभनाः ऊर्मिपङ्क्तयः तरङ्गमाला यस्याः । अनेन झंझामारुतावतारतरलितसलिलत्वं द्योत्यते । अत्र हेतुः— अभ्रागमे अभ्राणां मेघानामागमनकाले, प्रावृडारम्भ इत्यर्थः । अनेन पूर्वप्रस्तुतस्यानन्तरं प्रावृट्कालारम्भः सूच्यते,

१. 'क्षम् ॥ अपि च—सैषा' क. ज. झ. ञ, 'क्षम् ॥ सैषा' ख. ग. ङ च. छ. पाठः. २. 'चलितोर्मि' छ, 'वलितोर्मि' ञ. पाठः.

१. 'तुङ्गवचन' ख. ग. ज. पाठः.

गोगर्भिणीप्रियनवोलपमालभारि-
सेव्योपकण्ठविपिनावलयो भवन्ति[1] ॥ २ ॥

स[2] एष भगवत्याः सिन्धोर्दा[3]रितरसातल[4]ः प्रपातः ।

---

'भवन्ति ककुभः कादम्बिनीश्यामलाः'

इति वक्ष्यमाणस्य घटनार्थम् । जनपदप्रमदाय राष्ट्रस्य हर्षं कर्तुम् 'देशे जने जनपदः' इति वैजयन्ती । 'प्रमदसम्मदौ हर्षे' (३-३-६८) इति निपातनम् । 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः'(२-३-१४) इति चतुर्थी । तत्र हेतुमाह--गोगर्भिणीप्रियनवोलपमालभारिसेव्योपकण्ठविपिनावलय गवां गर्भिण्यः आपन्नसत्त्वाः । 'चतुष्पादो गर्भिण्या' (२-१-७१) इति तत्पुरुषसमासः । तासां गर्भदौहृदत्वेन प्रिया नवोलपाः बालदर्भाः । 'उलूकस्तूलपो दर्भः' इति वैजयन्ती । सरससुकुमारत्वान्नवोलपग्रहणम् । तेषां माला उभयतटकच्छरेखयोः प्ररूढा रा[1]जिः, तां भर्तुं शीलं यासाम् । 'इष्टकेषीकामालानां चिततूलभारिषु' (६-३-६५) इति ह्रस्वः । सेव्याः ऋतुसम्बन्धित्वात् ग्रीष्मोष्मणो वृष्टिपातोद्वेगस्य विरहेण नातिशीतोष्णतया विलासिभिरुपास्याः । उपकण्ठविपिनावलयः समीपवनरेखाः इत्यनेन गोगर्भिणीपोषणेन[2] भविष्यत्पुष्टिसूचकत्वात् तदात्वसु[3]खसेव्यत्वाच्च जनपदप्र[4]मदहेतुत्वम् । अत्र स्वभावोक्तिरलङ्कारः, समृद्धिमद्वस्तुवर्णनमुदात्तं वा ॥ २ ॥

सः पावनत्वेन प्रसिद्धः, भगवत्या इति महानदीत्वेन पूजाशब्दप्रयोगः, सिन्धोः सिन्धुपारेति प्रस्तुतायाः । दारितरसातलः लीलापातविदलितधरणितलः, प्रपतत्यस्मिन्निति प्रपातः, स्वप्रभवभूताद् गिरेरधोभागपतनप्रदेशः, 'गङ्गाप्रपातान्तविरूढशष्पम्' इतिवत् ।

---

१. 'विभान्ति' क. पाठः २. 'न्ति ॥ (अन्यतोऽवलोक्य)' क. झ. ञ, 'न्ति ॥ (अन्यतो विलोक्य)' छ. ज. पाठः. ३ 'असौ भग' क. झ. ञ. पाठः. ४. 'तलप्रायस्तटप्रपातः' क. 'तले प्रपातः' ग, 'तलस्तटप्रपातः' छ. ज. झ. ञ, पाठः.

---

१. 'राशिः' ख. पाठः २. 'पोषणे भवि' ज. पाठः. ३. 'सुखसूचकत्वाच्च' ख. पाठः. ४. 'प्रमोद' क. ज. पाठः.

यत्रत्य एष तुमुलध्वनिरम्बुगर्भ-
गम्भीरनूतनघनस्तनितप्रचण्डः ।
पर्यन्तभूधरनिकुञ्जविजृम्भणेन
हेरम्बकण्ठरसितप्रतिमानमेति ॥ ३ ॥

एताश्चन्दनाश्वकर्णसरलपाटलप्रायतरुगहनाः परिणतमालूरसुरभयोऽरण्यभूमयः स्मरयन्ति खलु तरुणकदम्बजम्बूवनावनद्धान्धकारगुह-

जलपतनवेगशब्दस्य भुवनभीषणत्वमाह—यत्रत्य इत्यादि। यत्रत्यः यस्मिन् प्रदेशे जातः, 'अमेहक्वतसित्रेभ्य एव' इति त्यप्, तुमुलध्वनिःसङ्कुलशब्दः अम्बुगर्भतया अन्तर्गतजलतया गम्भीरं गुरुतरं नूतनस्य नवस्य घनस्य मेघस्य स्तनितं गर्जितं तद्वत् प्रचण्डः क्रूरः। पर्यन्तभूधरनिकुञ्जविजृम्भणेन समीपगतानां पर्वतानां गह्वरेषु प्रतिध्वनिरूपेण व्याप्तत्वात्, हेरम्बो गजाननः तस्य कण्ठरसितेन कण्ठगर्जितेन, कण्ठरसितस्य (वा) प्रतिमानं साम्यम्। 'प्रतिमानं प्रतिकृतिं प्रतिच्छायम्' इति हलायुधः। अत्र भगवतो गणपतेरसुरसमरसंरम्भादिषु प्रवर्तमानानां कण्ठगर्जितानामुपमानत्वेन महानदीप्रपातध्वनेरपि त्रिभुवनविवरपूरकत्वमखिलमङ्गलसाधनत्वं च ध्वन्यते। उपमालङ्कारः ॥ ३ ॥

'सर्जोऽश्वकर्णः', 'सरळे पूतिकाष्ठकम्' इति वैजयन्ती। एतद्बहुलैस्तरुभिरन्यैश्च वन्यैः गहना निबिडाः परिणतमालूरसुरभयः पक्वैर्बिल्वफलैर्विकसितैर्बिल्वपुष्पैर्वा सुगन्धयः। 'बिल्वे शाण्डिल्यशलूषौ मालूरश्रीफलौ' इत्य

१. 'तुमुलो ध्वनि' क, 'विपुलध्वनि' ख. ग. च पाठः. २. 'म्भमाणेहेरम्ब' क, 'म्भणेषु हेरम्ब' घ. ट. 'म्भमाणो हरम्ब' छ. झ. ञ. पाठः. ३. 'एताश्च यन्दन' झ. ञ. पाठः. ४. 'कर्णकेसरपाटल' झ. ञ. पाठः. ५. 'परिणमन्मालूर' ख. पाठः. ६. 'योऽरण्यगिरिभूमयः' क. छ. ज झ. ञ, 'यो गिरिभूमयः' ख. ट. पाठः. ७. स्मारयन्ति' घ. च. छ. ज. झ. ञ. ट. पाठः. ८. 'यन्ति तास्तरुण' छ. 'यन्ति तरुण' ज. ९. 'वनावबद्ध' १०. 'गुहागिरिनिकुञ्ज' ज पाठः.

* 'बल्गुजलपतन' क, भृगुपतन' ज पाठः. १. 'भूधराणां' ज. पाठः. २. 'कार्यां' क. छ. ज. झ. पाठः. ३. परिणमन्मालूर' ज. पाठः. ४. 'सुरभयः' क. ख. पाठः.

निकुञ्जगुञ्जद्गम्भीरगद्गदोद्गारगोदावरीमुखरितविशालमेखलाभुवो दक्षिणारण्यभूधरान् । अयं च मधुमतीसिन्धुसम्भेदपावनो भगवान् भवानीपतिरपौरुषेयप्रतिष्ठः सुवर्णविन्दुरित्याख्यायते ।

(प्रणम्य)

---

धरः । अरण्यभूमयः वनस्थल्यः स्मरयन्ति बुद्धिस्थान् कुर्वन्ति । अवनद्धान्धकारेषु अनश्यत्तिमिरेषु गुरुषु महत्सु निकुञ्जेषु लतागह्वरेषु गुञ्जत् प्रतिध्वनिबहलनिर्ह्रादमानो गम्भीरो गुरुः गद्गदो विकटतटशिलास्फालस्खलननिरुद्धनिर्गमघोषस्रोतःप्रसरो यस्यास्तया गोदावर्या मुखरिता वाचालिता विशाला विस्तीर्णा मेखलाभुवस्तत्प्रदेशा येषां तान् । दक्षिणारण्यभूधरान् विन्ध्यदक्षिणभागरूपदक्षिणापथवर्तित्वाद्दक्षिणारण्यमिति दण्डकारण्यमुच्यते, 'तस्यां तु दण्डकारण्यान्तःपाती'ति विन्ध्याटवीसम्बन्धित्वेन दण्डकारण्यस्य कादम्बर्यादिप्रसिद्धेः ;

प्रत्युद्व्रजन्तीव समुत्पतन्त्यो
गोदावरीसारसपङ्क्तयस्त्वाम् । ',

'अत्रानुगोदम्' इत्यादिभिर्दण्डकारण्यसम्बन्धित्वेन च गोदावर्याः प्रतिपादनात् तत्सम्बन्धिनो विन्ध्यमाल्यवदृश्यमूकान् पर्वतान् । मधुमतीसिन्धुसम्भेदपावनः मधुमतीति काचिन्नदी, सिन्धुः प्रस्तुता, तयोः सम्भेदः सङ्गमप्रदेशः प्रयागवत्, तस्य पावनः शुद्धिहेतुः । भवानीपतिः पार्वतीवल्लभः इत्यनेन देव्याः सकलपुरुषार्थमातुः साङ्गत्येन भुक्तिमुक्तिप्रदत्वं तस्य क्षेत्रस्य द्योत्यते । भवानीपतिरित्यत्र पत्यन्तरप्रतीतिरिति यत् कैश्चिदुक्तं तदविचारिताभिधानम् ;

'शिवा भवानी रुद्राणी शर्वाणी सर्वमङ्गला'

---

१. 'कुञ्जगम्भीर'. २. 'गद्गदोद्गार' क. झ. ञ. पाठः. ३. 'द्गारिगोदा' च. ट, 'द्गारघोरघोषगगोदा' ज. पाठः. ४. 'वरीरवमुखरित' क. ख. छ. पाठः. ५. 'तस्निग्धविशाल' झ. ञ. पाठः.

---

१. 'अनुबद्ध' ज. पाठः. २. 'निश्चलतिमिरेषु' ख. ग, 'चलत्तिमिरेषु' ङ. छ. झ. पाठः. ३. 'तस्यास्तु' क, 'तस्यां च' ङ. छ. झ, 'तस्याश्च' ञ. पाठः. ४. 'सङ्गमेन' ख. ग, 'सङ्गत्वेन' ज. पाठः.

इति नैघण्टुकैरुमागौर्यादिपदवद् योगरूढ्या संज्ञात्वेन पठितत्वात्, महाकविभिः शतकृत्वः तत्र तत्र प्रयुक्तत्वात्,

"नृत्तारम्भे हर पशुपतेरार्द्रनागाजिनेच्छां
शान्तोद्वेगस्तिमितनयनं दृष्टभक्तिर्भवान्या।"

इत्यादावतिप्रसङ्गात्। तथाहि भवस्य पत्नीति, 'इन्द्रवरुणभवशर्व'(४-१-४९) इत्यादिसूत्रेण आनुकि, 'पुंयोगादाख्यायाम्' (४.१.४८) इति ङीपि च भवानीशब्दसिद्धिः। अतो 'भवान्या दृष्टभक्तिः पशुपते'रित्यत्रापि पत्यन्तर-प्रतीतेर्दुर्वारत्वाद् भवस्येत्येव वक्तव्यादुत्तरङ्गोऽतिप्रसङ्गः, 'भगिनीपतिः', 'दुहितुः पतिः' इत्यादिप्रयोगभङ्गप्रसङ्गात्; भवानीपतिरित्यत्र भवस्य पत्न्याः पति-र्भव एवेति सामञ्जस्येन प्रतीतेरवारितत्वात्, संयोगाद्यैरर्थविशेषस्मरणस्य स्वोक्तस्य वैयर्थ्यापाताच्च। 'भवानीजारः' इत्युक्ते हि पत्यन्तरप्रतीतिरित्यलमतिविस्तरेण। अपौरुषेये पुरुषेण कृतत्वमन्तरेण भक्तानुग्रहाय स्वयमाविर्भूते लिङ्गे प्रतिष्ठा सन्निधानं यस्य,

"वनपर्वतनद्यब्धितीर्थक्षेत्रगतान्यपि।
दर्शनस्पर्शनार्चाभिर्येषां सिद्धिरनुत्तमा।
विद्यात् स्वयम्भुलिङ्गानि येषु नित्यं स्थितः शिवः॥"

इति सिद्धान्तसारोक्तेः। सुवर्णबिन्दुरिति नाम्ना कनकवर्णत्वात्, सूक्ष्मत्वाच्च,

"अथ स्वयम्भुलिङ्गानि झर्झराणि कृशानि च।
ह्रस्वानि वातिदीर्घाणि नानावर्णाकृतीनि च'॥

इति तत्रैवोक्तेः, आख्यायते पुराविद्भिः कीर्त्यते।

प्रस्तुतस्य बन्धुकार्यस्याविघ्नपरिसमापनाय परमेश्वरं सप्रणाममार्यया स्तौति—

"प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः।"

इत्युक्तेः। प्रणम्य वाङ्मनःकायैः प्रह्वीभूय।

१. 'सामञ्जस्य न तत्प्रती' क, 'सामञ्जस्येन न प्रती' ख. छ. झ पाठः.

जय देव ! भुवनभावन !
जय ! भगवन्नखिलवरद ! निगमनिधे ! ।
जय रुचिर ! चन्द्रशेखर !
जय मदनान्तक ! जयादिगुरो ! ॥ ४ ॥

जयेत्यादि—देव ! क्रीडादीनां दीव्यत्यर्थानां समवायस्थलभूत ! तदेव विवृणोति—भुवनभावन ! भुवनानां सत्ताप्रद ! सद्रूपे ह्यसतः कल्पितत्वमिति भावः । भगवन् ! निरतिशयज्ञानैश्वर्यादिगुणेत्यनेन सर्वज्ञत्वादिको भुवनभावनत्वे हेतुरुक्तः । अखिलवरद ! व्रियन्ते प्रार्थ्यन्त इति वराः पुरुषार्थाः, अखिलान् समस्तान् धर्मार्थकाममोक्षान् दातुं शीलं यस्य । अनेन सकलनिष्कलाभ्यां स्वरूपाभ्यां सर्वानुग्राहकत्वमुक्तम् । तत्र हेतुः—निगमनिधे इति । निगमानां वेदानां निधानभूत ! स्वाज्ञाभूतवेदार्थानुष्ठाने हि परमेश्वरस्य प्रसादो वरदत्वं चेति भावः,

"वर्णाश्रमाचारवता पुरुषेण परः पुमान् ।
विष्णुराराध्यते; पन्था नान्यस्तत्तोषकारकः ॥",
"वेद एव द्विजातीनां निःश्रेयसकरः परः ।"

इत्यादिस्मृतिभ्यः । रुचिर ! लीलाविग्रहेण मनोहर ! चन्द्रशेखर ! चन्द्रः शेखरः आपीडमाला यस्य; मदनान्तक ! नेत्रानलेन कामस्यान्तकर; इत्येताभ्यामग्नीषोमाभ्यां निजाश्रयाभ्यां जगदाप्यायनशोषणहेतुत्वं द्योत्यते, भक्ताभक्तविषयमनुग्रहनिग्रहपरत्वं च । आदिगुरो ! ब्रह्मादीनामपि सर्वविद्योपदेशाचार्येत्यनेन 'यो ब्रह्माणं विदधाति पूर्वम्' इत्यादिकां श्रुतिं,

"अष्टादशानामेतासां विद्यानां भिन्नवर्त्मनाम् ।
आदिकर्ता कविः साक्षात् शूलपाणिरिति श्रुतिः ॥"

इति स्मृतिञ्चानुसन्धत्ते । अनेन प्रवृत्तिनिवृत्तिरूपमार्गद्वयप्रवर्तकशास्त्रप्रवक्तृत्वेन सर्वव्यवहारहेतुत्वं सर्वलोकवन्द्यत्वं च ध्वनयति । जयेति प्रार्थने

१. 'जयतु भुव' ट. पाठः. २. 'पावन' छ. पाठः. ३. 'न ! वरद भगवन्नखिलभुवनानिधे' ख. पाठः. ४. 'नखिलनिगम' क, 'अखिलनिगम' च. छ. पाठः. ५. 'द जयनिगम' ट. पाठः. ६. 'जय जगदादिगुरो' क, 'जयादिपरमगुरो' घ. च. ट. पाठः

१. 'वश्यत्वं' ग. पाठः.

(गमनमभिनीय)

अयमभिनवमेघश्यामलोत्तुङ्गसानु-
र्मदमुखरमयूरीमुक्तसंसक्तकेकः[1] ।
शकुनिशबलनीडानोकहस्निग्धवर्ष्मा
वितरति बृहदोणीपर्वतः[2] प्रीतिमक्ष्णोः[3] ॥ ५ ॥

दधति कुहरभाजामत्र[4] भल्लूकयूना-
मनुरसितगुरूणि स्त्यानमम्बूकृतानि ।

---

लोट्प्रयोगो भक्तिपराधीनत्वं द्योतयति । अन्यथा स्वत एव सर्वोत्कर्षेण वर्तमानं परमेश्वरं प्रत्यकिञ्चित्करत्वादनुचितत्वाच्च ॥ ४ ॥

अयमभिनवेत्यादि । 'सानुः प्रस्थस्तटं भृगुः' इत्यमरः । नवमेघदर्शनजनितेन मदेन हर्षेण मुखराभिर्वाचालाभिः मयूरीभिः शिखिनां स्त्रीभिः मुक्ताः प्रवर्तिताः संसक्ताः अविच्छिन्नाः केका यस्मिन् । 'केका वाणी मयूरस्य' इत्यमरः । शकुनिभिः पक्षिभिः शबला नानावर्णाः, शकुनीनां नानावर्णत्वाद्वर्षारम्भे नीडारम्भसंरम्भाच्च, नीडाः कुलाया येषु तैः अनोकहैः वृक्षैः स्निग्धो वर्ष्मा देहो यस्य ।

"वर्ष्म न स्त्री शुभाकारे सौम्ये देहप्रमाणयोः ।"

इति वैजयन्ती । बृहदोणीपर्वतः बृहद्द्रोणीदेशवर्ती गिरिः पूर्वप्रस्तुतः । प्रीतिं वितरति ददाति, अन्विष्यमाणमाधवदर्शनोपयुक्तत्वाद्रमणीयत्वाच्चेत्यर्थः । स्वभावोक्तिरलङ्कारः ॥ ५ ॥

पुनर्वर्णयति— दधतीत्यादि । कुहरभाजां कन्दरवर्तिनां अत्र अस्मिन् पर्वते भल्लूकयूनां तरुणतया दृप्तानामृक्षाणां अनुरसितगुरूणि प्रतिध्वनिबहलीभूतानि । स्त्यानं सान्द्रतां, 'स्त्यै ष्ट्यै सङ्घातशब्दयोः' इति धातोर्ल्युट् । अम्बूकृतानि सनिष्ठीवानि, (खनितानि हिता इत्यर्थः ?), तज्जातिस्वभावात् ;

---

१. 'संरक्तकेकः' छ पाठः. २. 'बृहदश्मा पर्वतः' क. छ. ज. झ. ञ. पाठः. ३. 'क्ष्णोः । अपि च— दधति' क. झ. ञ. पाठः. ४. 'जां मत्त' क, 'जां यत्र' ख. घ. पाठः.

शिशिरकटुकषायः स्त्यायते सल्लकीना-
मिभदलितविकीर्णग्रन्थिनिष्यन्दगन्धः ॥ ६ ॥

कथं मध्याह्नः । तथाहि सम्प्रति —

कार्ष्मर्यात् कृतमालमुद्गतदलं कोयष्टिकष्टीकृते
तीराश्मन्तकशिम्बिचुम्बनमुखा धावन्त्यपः पूर्णिकाः ।

---

"कुहरविहरमाणप्रौढभल्लूकहिक्का-
चयचकितकिरातत्रस्तशल्ला वनान्ताः ।"

इति मुरारिसूक्तवत् । 'अम्बूकृतं सनिष्ठीवं' इति वैजयन्ती । शिशिरकटुकषायः शिशिरः शीतलः, अनुग्रः कटुः, सुरभिः कषायः तुवररसद्योतकश्च । स्त्यायते सान्द्रीभवति । सल्लकीनां लताविशेषाणां, 'सल्लकी तु गजप्रिया' इत्यमरः । इभदलितविकीर्णग्रन्थिनिष्यन्दगन्धः गजैः कबलार्थं भग्नानां प्रभूतत्वा-न्मध्येऽर्धजग्धमुक्तानां ग्रन्थीनां, सामर्थ्यात् पल्लवाङ्कुरपर्वणां, 'परुः पर्वः पुमान् ग्रन्थिः' इत्युक्तेः, रसस्रुतेः परिमलः । वाक्यद्वयेन क्रूरत्वं हृद्यत्वं चाह । अत्र स्वभावोक्तिरलङ्कारः ॥ ६ ॥

कथं मध्याह्नः : कथमिति साध्यसाधनव्यग्रतया मार्गगतविचित्र-वस्तुदर्शनव्याक्षेपाच्च कालातिक्रमो न ज्ञात इति विस्मयत्वं द्योतयति ।

मध्याह्नत्वमेवोपपादयति— तथाहि सम्प्रति— कार्ष्मर्यादित्यादि ।

"कार्ष्मर्यो गोपभद्रा स्यात् कार्ष्मरी कृष्णवृन्तिका ।"

इति वैजयन्ती । कार्ष्मर्यात् पूर्वाह्णे सेवितात्, ग्रीष्मोचितस्य प्रावृषि विरलितदलसञ्चयत्वाद् विरलच्छायतयेति भावः । कृतमालं आरग्वधम् ।

---

१. 'विशीर्ण' च. ट. पाठः. २. 'न्धः ॥ (ऊर्ध्वमवलोक्य) कथं' क झ, 'न्धः ॥ अपि कथं' छ, 'न्धः ॥ (ऊर्ध्वमवलोक्य) अये कथं' ज. ञ. पाठः. ३. 'तथाह्यत्र सम्प्रति' क. च. झ. ञ. ट, 'तथाहि —' छ. पाठः. ४. 'कार्ष्मर्याः कृत' क. घ. च. ज. झ. ञ. ट, 'कार्ष्मर्या कृत' ख. पाठः. ५. 'तलं' ज. पाठः. ६. 'चुम्बिन' क. झ. ञ, 'चुम्बित' ज. पाठः. ७. 'नविधौ' च. पाठः.

---

१. 'भयचकित' क. ख. पाठः. २. 'इत्यमरः' झ. पाठः. ३. 'णाम् ।

"गन्धिनी गजभक्ष्या तु सुवहा सुरभी रसा ।
महेरणा कुन्दुरुकी सल्लकी ह्लादिनीति च ।" इत्यमरः । ६अ' झ. पाठः.

दात्यूहैस्तिमिशस्य[1] कोटरवति स्कन्धे निलीय स्थितं
वीरून्नीडकपोतकूजितमनु[2] क्रन्दन्त्यधः कुक्कुटाः[3] ॥ ७ ॥

"आरग्वधो राजवृक्षः शम्याकचतुरङ्गुलाः ।
आरेवतव्याधिघातकृतमालसुवर्णकाः ॥"

इत्यमरः । तत्र हेतुः — उद्गतदलं सर्वतः पल्लवितम् । कोयष्टिकः शिखर्याख्यः पक्षी, जलचरः । 'कोयष्टिः शिखरी समौ' इति वैजयन्ती । टीकते गच्छति, रविकरतापशान्तये इत्यर्थः,

'तपति प्रावृषि सुतरामभ्यर्णघनागमो दिवसः'

इत्युक्तेः । 'टीकृ गतौ' इति धातुः । तीराश्मन्तकशिम्बिचुम्बनमुखाः अप इति जलाशयस्य वक्ष्यमाणत्वात् तटगतानां अश्मन्तकानां आम्रोटाख्यवृक्षविशेषाणां,

'.........शफर्या श्लक्ष्णपत्रकः ।
शिखीन्द्राश्मन्तकाम्रोटा.........'

इति वैजयन्ती, शिम्बिः फलकोशी तां चुम्बति धारयति पश्चाद् भक्षणाय मुखत्रोटी येषाम् ।

"शिम्बिका मुद्गमञ्जल्यवनमुद्गमकुष्ठकाः ।"

इति वाहटः । धावन्ति शीघ्रं व्रजन्ति, अपः नद्यादिजलानि, पूर्णिकाः पक्षिविशेषाः । दात्यूहैः कालकण्ठैः, 'दात्यूहे कालकण्ठकः' इति वैजयन्ती । तिमिशस्य,

'.........नेमीये त्वतिमुक्तकः ।
चित्रकृत् तिमिशो नेमी......'

इति वैजयन्ती । कोटरवति विकटरन्ध्रविशिष्टे । 'निष्कुटः कोटरो न स्त्री' इति वैजयन्ती । स्कन्धे शाखाप्ररोहस्थाने ।

"अस्त्री प्रकाण्डः स्कन्धः स्यान्मूलाच्छाखावधिस्तरोः ।"

इत्यमरः । निलीय संश्लिष्य, आत्मानं रविकिरणेभ्योऽन्तर्धायेत्यर्थः । स्थितमिति भावे निष्ठा, स्थितिर्गतिनिवृत्तिः कृतेत्यर्थः । वीरुधि नीडं यस्य तस्य कपोतस्य कूजितमनु शब्दस्यानन्तरं, लक्षीकृत्य वा, मध्याह्ने तेषां कूजनस्वभावात् , [क्रन्दन्ति] कूजन्ति शब्दायन्ते, अधः अधोभागे स्थिताः ।

१. 'स्तिनिशस्य' क. ज. झ. ञ. पाठः. २. 'वीरुन्नद्ध' छ. पाठः. ३. 'कुक्कुभाः' ज. झ. पाठः.

तद्भवतु । माधवमकरन्दावन्विष्य यथाप्रस्तुतं साधयामि[1] ।

(इति निष्क्रान्ता ।)

॥ विष्कम्भकः[2] ॥

(ततः प्रविशतो[3] माधवमकरन्दौ ।)

मकरन्दः — (सकरुणं निश्वस्य[4])

न यत्र प्रत्याशामनुभवति[5] नो वा रहयति
प्रविक्षिप्तं[6] चेतः प्रविशति तु[7] मोहान्धतमसम् ।

---

'लता प्रतानिनी वीरुद्गुल्मिन्युलपमित्यपि ।'

इत्यमरः । 'पारावतः कलरवः कपोतः' इति तेषां विशेषः ।

"………हारीते मद्गुः कारण्डवः प्लवः ।
तित्तिरिः कुक्कुटो लावो … … ……"

इति चामरः ॥ ७ ॥

भवत्विति कामचारकरणे लोट्, किमस्माकं कालदैर्घ्यापेक्षयेति भावः । तत्र हेतुमाह – यथा यथावत् सुष्ठु इत्यर्थः, प्रस्तुतं प्रकृतमर्थं, मालतीवृत्तान्तकथनेन समाश्वासनादिरूपमिति यावत् । 'तद्भवतु । माधवमकरन्दावन्विष्य यथाप्रस्तुतं साधयामी'ति सन्धिः, पुनःप्रस्तुतबीजागमानां[1] विष्कम्भकार्यसिद्धेः तां समापयति — निष्क्रान्तेति विष्कम्भकः ।

॥ इति विष्कम्भकः ॥

अथाङ्कमारभमाणो विष्कम्भसूचितस्य[2] बृहद्द्रोणीशैलकान्तारप्रविष्टस्य मकरन्दसहितस्य माधवस्य प्रवेशनमाह — तत इत्यादि । **सकरुणं** सशोकम् ।

सुहृदवस्थादर्शनाद् अनुभूयमानमवस्थाविशेषमनुसन्धायाह – **न यत्रे**त्यादि । यत्र यस्यां प्रत्याशां अद्य श्वः परश्वो वा द्रक्ष्यत इति मालती-

---

१. 'सान्त्वयामि' क, 'सम्पादयामि' ङ. पाठ. २. 'शुद्धविष्कम्भः' ज. पाठः. ३. 'शति माधवो मकरन्दश्च' क. ग. ङ ज. पाठः. ४. 'स्य) भवतु । न यत्र' च, 'स्य) तद्भवतु । न यत्र' ट. पाठः. ५. 'मनुपतति' क. छ. ज झ. पाठः. ६. 'प्रातिक्षिप्तं' क. ज. पाठः. ७. 'च' क. ज. झ. ञ. पाठः.

---

१. 'बीजागमनात् ।' ज. पाठः. २. 'शचितस्य' क. छ. ज. पाठः.

अकिञ्चित्कुर्वाणाः पशव इव तस्यां[1] वयमहो
विधातुर्वामत्वाद्विपदि परिवर्तामह इमे ॥ ८ ॥

**माधवः[2] — हा प्रिये[3] मालति! क्वासि? कथमविज्ञाततत्त्व-[4]मद्भुततमं झटित्यपसृतासि[5]? नन्वकरुणे प्रसीद। सम्भावय माम्।**

---

विषयामाशां नानुभवति (नशब्दादिवदेव लभ्यः[1]), कस्यचित् प्रमाणस्यासिद्धेरिति भावः। रहयति नो वा अथवा न त्यजति। विपर्यये विनिश्चयः। शेषे एतावदेवात्र विश्रमस्थानमित्यर्थः। मोहान्धतमसं मूर्च्छारूपं गहनं तमः, 'ध्वान्ते गाढेऽन्धतमसम्' इत्यमरः, प्रविशति अवगाहते। किञ्चिदेकं, अप्यर्थोऽध्याहार्यः, गुरुं लघुं वोपायमकुर्वाणा अप्रयुञ्जानाः, अगोचरत्वात्।

"अकिञ्चिदपि कुर्वाणः सौख्यैर्दुःखान्यपोहति।"

इति उत्तररामचरितोक्तवत्। समस्तपदं चैतत्। पशव इव यथा गवादयः कूपादिपतिताः उद्धरणोपायापरिज्ञानात्तत्रैव दुःखमनुभवन्तो विवर्तन्ते तथेत्यर्थः;

"पश्वादयोऽन्ये विख्यातास्तमःप्राया ह्यवेदिनः।
उत्पथग्राहिणश्चैव तेऽज्ञाने ज्ञानमानिनः॥"

इति श्रीविष्णुपुराणवचनात्। 'पश्वादिभिश्चाविशेषात्' इति सुखप्रेप्सादुःखपरिजिहीर्षयोस्तदुपायापरिज्ञानस्य च पश्वादिष्वप्याचार्यैः प्रतिपादनात्। अहो इत्यस्य स्वप्नेऽप्यचिन्तितस्य वस्तुन आपतितत्वे विस्मयं द्योतयति। तत्र हेतुः — विधातुर्वामत्वाद् दैवस्य प्रातिकूल्यात्, न पुनः पौरुषापराधाद्, विपदि व्यसने परिवर्तामहे सर्वतो वर्तामहे, आवर्तनेन तिष्ठाम इति वा। इमे इति द्रष्टॄणां स्पष्टं दृश्यवैवर्ण्यादिकत्वमभिनयति। अत्र विरोध उपमातिशयोक्तिश्चालङ्कारः॥ ८॥

आकाशे प्रियतमामभिमुखीकृत्याह — हा प्रिये! क्वासि? कस्मिन देशे वर्तसे? अविज्ञाततत्त्वं अपसारणकारणपारमार्थ्य[3]मविदितं यथा,

---

१. 'तस्या वय' क. पाठः. २. 'माध— प्रिये' छ, 'माध — (आकाशे) हा प्रिये!' ट. पाठः. ३. 'ये क्वासि' ग पाठः. ४. 'मज्ञात' ङ. पाठः. ५. 'तत्त्वं झटिति' क, 'तत्त्वमद्भुतं' ख. झ. ञ. पाठः. ६. 'झटिति पर्यवसितासि' क ज. झ. ञ, 'झटित्यपक्रान्तासि' छ पाठ.

---

१. 'शब्दातिकट्ट्लभ्यः' ख. झ. पाठः. २. 'मोहिनः' ज. पाठः. ३. 'सार्थ्य' क. ख. ग. पाठः.

प्रियमाधवे किमसि मय्यवत्सला
ननु सोऽहमेव यमनन्दयत् पुरा ।
स्वयमागृहीतकमनीयकङ्कण-
स्तव मूर्तिमानिव महोत्सवः करः ॥ ९ ॥

वयस्य मकरन्द! दुर्लभः पुनर्जगति तावतः स्नेहस्य सम्भवः ।

---

अत एवाद्भुततममत्याश्चर्यं यथा तथा चेति क्रियाविशेषणम् । झटिति शीघ्रं अदत्तप्रतीकारकालं अपसृता इतो देशात् सत्वरैव पलायिता कथं केन प्रकारेण । ननुः प्रश्ने । अकरुणे! दयारहिते! प्रसीद दयां कुरु, सम्भावय सत्कुरु, त्वद्दर्शनस्यैव सम्भावनातिशयत्वात् ॥

अथ करुणास्पदत्वमात्मनः समर्थयति— प्रियमाधवे इत्यादि । प्रियो माधवो यस्याः इति लोकप्रसिद्ध एव तत्र मदनुराग इति द्योतयति । किं किमर्थं, मयीति त्वदेकशरणे निरपराधे चेत्यर्थान्तरसङ्क्रमितवाच्येन ध्वनिना प्रकाश्यते, अवत्सला अननुरागिणी, अदर्शनप्रदानादनुमायोक्तिः । प्रियमाधवत्वमेवोपपादयति — ननुस्संवादे । एवकारो भिन्नक्रमः । अहं स एवेति सम्बन्धः । अनन्दयत् समृद्धमकरोत् । पुरा पूर्वस्मिन् काले, स्वयं पित्राद्यनपेक्षमित्यकृत्रिमस्नेहत्वं ध्वनति । आगृहीतकमनीयकङ्कणः स्वीकृतो रमणीयः कङ्कणो विवाहकौतुकं येन, कामन्दकीविहारिकोद्यान इत्यर्थः । मूर्तिमान् गृहीतशरीरो महोत्सवः निरतिशय उत्सवः कल्याणम् । महोत्सवशब्देन तत्कार्यं सुखं लक्ष्यते । उत्प्रेक्षया चिराभिलषितग्रहणत्वं परमानन्दहेतुत्वं च करस्य प्रकाश्यते । उत्प्रेक्षालङ्कारः ॥ ९ ॥

न केवलमनुरागः, कृतज्ञतापि मां व्याकुलयतीत्याह — तावतः तत्परिमाणस्य, यत्परिमाणो मालत्याः । मद्गत इति तच्छब्देनानुभावः प्रकाश्यते । सम्भव उत्पत्तिः ।

---

१. 'किमिति' ङ. पाठः. २. 'अयमुद्गृहीत' क. पाठः. ३. 'भः खलु जगति' ज. पाठः.

---

१. 'सत्वरमेव' क. पाठः. २. 'उपपत्तिः' ख. ग. ङ. छ. ञ. पाठः.

सरसकुसुमक्षामैरङ्गैरनङ्गमहाज्वर-
श्चिरमविरतोन्माथी सोढः प्रतिक्षणदारुणः।
तृणमिव ततः प्राणान् मोक्तुं मनो विधृतं तया
किमपरमतो निर्व्यूढं यत् करार्पणसाहसम् ॥ १० ॥

अपि च —

मयि विगलितप्रत्याशत्वाद्विवाहविधौ[2] पुरा
विकलकरणैर्मर्मच्छेदव्यथाविधुरैरिव।

उक्तं तस्याः स्नेहमुपपादयति— सरसेत्यादि। सरसमम्लानं कुसुमं तद्वत् क्षामैः, क्षामत्वेन दुर्बलत्वं लक्ष्यते, अनङ्गमहाज्वरः कामजनितो महान् सन्तापः, अविरतोन्माथी अविच्छिन्नमुन्मथनशीलः, प्रतिक्षणदारुणः क्षणे क्षणे वर्धमानत्वान्मोहादिजनकत्वाच्च क्रूरः, सोढः अनुभूतः, मत्प्राप्ति-प्रत्याशयेत्यर्थः। ततः नन्दनप्रदानप्रसङ्गादाशाच्छेदे जात इत्यर्थः। प्राणानिति सर्वस्यापि प्राणेभ्यः प्रियाभावात् तानपि, तृणमिवेति तेषु दयालवस्याप्यभावं द्योतयति, मनो विधृतं हृदये स्थापितं, न तु वाङ्मात्राडम्बरेण नाटित-मित्यर्थः। उक्तं सर्वमास्ताम्। अतः परमस्मात् कार्यादधिकमन्यत् किमस्ति। निर्व्यूढमनुष्ठितं करार्पणसाहसं पित्रादिषु महत्सु बन्धुषु समीपतो वर्तमानेषु तदनुमतिमन्तरेण करस्य दानरूपं साहसं निर्व्यूढमिति यद्वस्तु, अतः परं किमिति सम्बन्धः। यच्छब्दो वाक्यार्थं परामृशति ॥ १० ॥

पुनः प्रकारान्तरेण तदनुरागातिशयं समर्थयति—मयीत्यादि। मयि मद्विषये विगलितप्रत्याशत्वाद् विशेषेण ध्वस्ता प्रत्याशा यस्याः तद्भावाद्, विवाहविधौ नन्दनविवाहप्रस्तावे, विकलकरणैः विकलानि परवशानि करणानि बाह्यान्तराणीन्द्रियाणि येषु, मर्मच्छेदव्यथाविधुरैः मर्माणि प्राणवायोः विशेषतः स्फुरणस्थानानि, तेषां द्वैधीकरणे या व्यथा वेदना तया परवशैः

१. 'तया' ट. पाठः. २. 'विधेः पुरा' क. च. छ. ज. झ. ञ. ट. पाठः. ३. 'करणैः' ख. छ. ज. पाठः.

१. 'बाह्याभ्यन्तर' ख. पाठः

स्मरसि रुदितैः स्नेहाकूतं तथा व्यतनोदसा-
वहमपि यथाभूवं पीडातरङ्गितसम्मदः ॥ ११ ॥

(सावेगम्)

अहो ! नु भोः!

---

इवेत्यान्तरत्वमात्यन्तिकत्वं च दुःखस्य प्रकाश्यते । रुदितैरश्रुविमोक्षणसहितैराक्रन्दैः । विकलकरणत्वं विधुरत्वे कर्तृधर्मः 'पयो दहती'तिवत् कार्ये उच्यते । अथवा विधुरशब्दोऽत्र वैधुर्यवाचकः । धीरगंभीरविधुरादिशब्दानां गुणे गुणिन्यपि वृत्तेः हेतौ तृतीया । व्यथावैधुर्यैर्हेतुभूतैरिवेत्युत्प्रेक्षा । रुदितैरिति करणे तृतीया । स्नेहाकूतं स्नेहतः क्रियमाणं मरणाभिप्रायं, व्यतनोद् विस्तारितवती लोके । अहमपि यस्तव दर्शनेन कृतकृत्यम्मन्यतया सम्मदस्यैव योग्यः सोऽहमपीत्यपिर्विरोधे, पीडातरङ्गितसम्मदः दुःखेन सञ्जाततरङ्गः, अन्तरान्तरा शबलित इत्यर्थः, सम्मदो हर्षो यस्य अभूवं आसम् । दयालुत्वादपायशङ्कया च पीडा, स्वाभिलषितानुलोम्याच्च सम्मद इति विभागः । तत् स्मरसि नन्विति नगरदेवतागर्भगृहे त्वत्साक्षिक एवायं सर्वो वृत्तान्त इति सूचयति । द्वयोरप्रस्तुतप्रशंसालङ्कारः, कार्यमुखेन कारणस्य स्नेहातिशयस्य प्रकाशनात् ॥ ११ ॥

विरोधेन वर्तमानामवस्थामनुसन्दधान आह — अहो इत्याश्चर्ये । नुः प्रश्ने । भो इत्याकाशेऽभिमुखीकृत्य लोकमाह ।

---

१. मनसि' ग. क. छ. पाठः. २. 'रुदितं' ख. पाठः. ३. 'तथाप्यतनोद्' ज. पाठः. ४. 'मानसः' क, छ, ज. झ. ञ. पाठः. ५. 'नु ख भोः' क, 'नु खलु भोः' ख. ग. ङ. च. पाठः.

---

१. 'विधुरैरन्यैः कर्तृ' ख, 'विधुरत्वेकधर्मा' झ. पाठः. २. 'धीरवीरगभीर' ङ. झ. पाठः. ३. 'गम्भीर' ज. पाठः. ४. 'वैधुर्ये हेतु' ङ. झ. पाठः. ५. 'तव भावदर्शनेन' क, 'तद्भावदर्शनेन' ख. ग. पाठः. ६. 'इति भावः' ञ. पाठः. ७. 'कारणमुख्यस्य' झ. पाठः.

दलति हृदयं गाढोद्वेगं द्विधा तु न भिद्यते
व्रजति विकलः कायो मोहं न मुञ्चति वेदनाम् ।
ज्वलयति तनूमन्तर्दाहः करोति न भस्मसात्
प्रहरति विधिः मर्मच्छेदी न कृन्तति जीवितम् ॥ १२॥

---

दलति हृदयमित्यादि — गाढोद्वेगमन्तर्गम्भीरदुःखातिशयं दलति शीर्यते । तुर्विशेषे । न पुनर्द्विधा भिद्यते उभयथा विदीर्य न पुनः पततीत्यर्थः । विकलः अन्यदीयवदवशः, कायः शरीरं, मोहं कृत्याकृत्यप्रतिपत्तिरूपां मूर्च्छां, व्रजति गच्छति । तुर्वाक्यत्रयेऽप्यनुकर्षणीयः । वेदनां दुःखानुभवं तु न मुञ्चतीत्युक्त्या किञ्चित्प्रबोधविशिष्टत्वमाह, अन्यथा सर्वेन्द्रियवृत्त्याघातरूपत्वान्मोहस्य सुखदुःखानुभवतिरस्कृतेः ।

"तीव्राभिषङ्गप्रभवेन वृत्तिं मोहेन संस्तम्भयतेन्द्रियाणाम् ।
अज्ञातभर्तृव्यसना मुहूर्तं कृतोपकारेव रतिर्बभूव ॥"

इत्युक्तेः । 'कायो मोहं न मुञ्चती'त्युक्तिः मोहफलस्य वैकल्यस्य झटिति मनस आधारभूते काये स्फुरणात्, 'शोकमोहौ मनसः' इति मनोमोहस्य श्रुत्या प्रतिपादनात् । ज्वलयति दीप्तं करोति, तनूं शरीरं, ऊकारान्तस्तनूशब्दोऽयम्, अन्तर्दाहः आभ्यन्तरो ज्वरः । भस्मसात् कार्त्स्न्येन भसितं, 'विभाषा साति कार्त्स्न्ये' (५-४-५२) इति सातिः, न तु करोति । सर्वस्यास्य हेतुमाह— प्रहरति बाधते मर्मच्छेदी जीवितं प्राणांश्च तु कृन्तति छिनत्ति । हृदयस्य द्विधा भेदे कायस्य वेदनामोचने दाहस्य भस्मसात्करणे विधेर्जीवितकृन्तने च दुःखस्योच्छेदादुपकारशक्तत्वेऽपि तेषामनुपकारकत्वात् तान् प्रत्यसूया व्यज्यते । अत्रानुक्तनिमित्ता विशेषोक्तिरलङ्कारः, दलनादिकारणसामग्र्येऽपि द्विधा भेदादिकार्यानु(पा?त्पा)दोक्तेः ॥ १२ ॥

---

१. 'गाढोत्क (ण्ठा ? ण्ठं) द्विधा' क. पाठः. २. 'वहति' क. ख. ग. घ. ङ. ज. झ. ञ. ट. पाठः. ३. 'चेतनां' क. ख. ग. घ. ङ. च. छ. ज. झ. ञ. पाठः. ४. 'तनुच्चान्त' ख. पाठः. ५. 'कर्मच्छेदी' झ. पाठः.

---

१. 'कृत्वा कश्चित्प्रबोध' ख. ग. ङ. छ. ज. झ. पाठः. २. 'मनसस्तदाधारभूते' झ. पाठः. ३. 'कर्मच्छेदी' क. ङ. छ. ज. झ. पाठः.

मकरन्दः— वयस्य माधव! निरवग्रहं दहति दैवमिव दारुणो विवस्वान् । इयं च ते शरीरावस्था । तदस्य पद्मसरसः परिसरे मुहूर्तं-मास्यताम् । अत्र हि—

उन्नालबालकमलाकरमाकरन्द-
निष्यन्दसंवलनमांसलगन्धबन्धुः ।
त्वां प्रीणयिष्यति पुरः परिवर्तमान
कल्लोलशीकरतुषारजडः समीरः ॥ १३ ॥

---

तदाश्वासनविनोदनाभिप्रायेणाह — निरवग्रहं अप्रतिबन्धं प्रतिकाराभावादिति भावः, दैवमिवेति सहोक्तिः, दैवं यथास्मान् दहति तथा तेन सह विवस्वान् सूर्योऽपि दहतीत्यर्थः । दारुण इति मार्त्तण्डारम्भमध्याह्नवर्तित्वादुक्तिः । अनेन विष्कम्भसूचितं मध्याह्नत्वमनुसन्दधाति । इयमित्यभिनयेन कालान्तराक्षमत्वं द्योतयति । पद्मसरसः पद्मविशिष्टस्य जलाशयस्य, शाकपार्थिवत्वात् समासः । परिसरे अर्थात् तटतरुच्छायायाम् । हिर्हेतौ ।

उन्नालेत्यादि — उन्नालस्य जलादुपरिनिर्गतदण्डस्य, ग्रीष्मशोषितजलत्वात्, 'उद्दण्डपद्मं गृहदीर्घिकाणां' इत्युक्तवत्, बालस्याजरठत्वात् कोमलस्य कमलाकरस्य पद्मषण्डस्य; यद्यप्याकरशब्द उत्पत्तिस्थानवाचकः तथापि समूहमत्र लक्षयति,

"मरुदुल्लासितसौरभकमलाकरहासकृद्रविर्जयति ।"

इत्यादिप्रयोगात्, माकरन्देन मकरन्दसम्बन्धिना निष्यन्देन धारया यत् संवलनं मिश्रणं, ततो हेतोर्मांसलस्य बहलस्य गन्धस्य बन्धुर्मित्रभूतः । प्राणयिष्यति आश्वासयिष्यति, मोहग्रस्तमिति शेषः । पुरः अग्रे परिवर्त-

---

१. 'मक—निर' ख. पाठः. २. 'स्य निर' क. ज. पाठः. ३. 'वग्रहो दहति' ज. पाठः. ४. 'सज्वलन' क, 'संवलित' ज. पाठः. ५. 'प्राणयिष्यति' क. ख. ज. पाठः ६. 'पुरा' क, 'पुनः' ज. पाठः. ७. 'मानः कल्लोल' क. पाठः.

---

१. 'तदास्वादन' ज. पाठः. २. 'चरितः' क. पाठः. ३. 'तटतरुच्छाया' क. पाठः. ४. 'तमोग्रस्त' क. ग. पाठः.

(परिक्रम्योपविशतः ।)

मकरन्दः—(स्वगतम्) भवतु । एवं तावदाक्षिपामि । (प्रकाशं) वयस्य माधव !

एतस्मिन्मदकलमल्लिकाक्षपक्ष-
व्याधूतस्फुरदुरुदण्डपुण्डरीकाः ।
बाष्पाम्भःपरिपतनोद्गमान्तराले
दृश्यन्तामविरहितश्रियो विभागाः ॥ १४ ॥

भानैः परितः प्रसरद्भिः, अथवा पुरः प्राच्यां दिशि परिवर्तमानः—परितो वीजमानः इति व्यस्तः पाठः—प्रावृडारम्भसूचकः पौरस्त्य इत्यर्थः । कल्लोलानां महतां तरङ्गाणां शीकरतुषारैर्जलबिन्दुकणैः । 'शीकरोऽम्बुकणाः स्मृताः' इत्यमरः । तुषारशब्दोऽपि बिन्दुवाचकः, 'वृक्षस्तुषारैर्गिरिनिर्झराणाम्' इत्यादिप्रयोगात् । तत्र स्थूला बिन्दवः शीकराः, सूक्ष्माः तुषारा इति विवेकः । जडः शीतकः । अत्र काव्यलिङ्गमलङ्कारः, शिशिरपरिमलाघ्राणस्य सलिलशीकरस्पर्शस्य जीवनहेतोः पदार्थतयोपादानात् । स्वभावोक्तिस्तु स्फुटैव ॥ १३ ॥

भवत्विति आश्वासनोपायस्तावत् कृतो भवतु । एवमनेन प्रकारेण तावत् प्रथमं, आक्षिपामि अन्यचित्तं करोमीत्यर्थः ।

एतस्मिन्नित्यादि—एतस्मिन् पद्मसरसि ।

"क्षीरारश्चाप्यसौ राजहंसो रक्तैः पदाननैः ।
मलिनैर्मल्लिकाक्षास्ते धार्तराष्ट्राः सितेतरैः ।"

इति वैजयन्ती । मल्लिकाक्षाणां पक्षैर्व्याधूतानि कम्पितानि स्फुरदुरुदण्डानि चलन्महानालानि पुण्डरीकाणि सिताम्बुजानि येषु । बाष्पाम्भःपरिपतनोद्गमान्तराले नेत्रयोः पूर्वमाविर्भूतस्याश्रुजलस्य यत् परिपतनं गलनं, पश्चादुदेष्यतो यश्चोद्गमो भावी तयोरन्तराले मध्यकाले, तदानीं नेत्रयोर्दर्शनशक्तत्वात् पूर्वोत्तरक्षणयोस्तु बाष्पपिहितत्वादिति भावः । अविरहितश्रियः अपृथग्भूतशोभाः इति दर्शने हेतुः । विभागाः प्रदेशविशेषाः । समृद्धिमद्वस्तुवर्णनादुदात्तमलङ्कारः ॥ १४ ॥

१. 'तावदन्यतः प्रक्षिपामि' क. पाठः. २. 'मल्लिकाख्यपक्ष' क. पाठः.

१. 'इति विद्वः' ख. पाठः २. 'मद्रोऽसौ' ग, घ. पाठः

(माधवः सावेगमुत्तिष्ठति ।)

मकरन्दः—कथमप्रतिपत्तिरेव शून्यमुत्थायान्यतः प्रवृत्तः ? (निश्वस्योत्थाय) सखे! प्रसीद । वैश्य पश्य ।

वानीरप्रसवैर्निकुञ्जसरितामासक्तवासं पयः
पर्यन्तेषु च यूथिकासुमनसामुज्जृम्भितं जालकैः ।
उन्मीलत्कुटजप्रहासिषु गिरेरालम्ब्य सानूनितः
प्राग्भागेषु शिखण्डिताण्डवविधौ मेघैर्वितानीय्यते ॥१५॥

तदुक्तेरुद्दीपनवस्तुप्रदर्शनपरत्वात् प्रत्युत सावेगं मनःक्षोभसहितमित्यर्थः ।

अप्रतिपत्तिः मदुक्तमर्थमबहुमन्यमानः अननुसन्दधान इति वा । शून्यमहृदयं, किञ्चिदनभिसन्धायेत्यर्थः । अन्यतः अन्यस्मिन् प्रदेशे । निश्वस्येति करुणानुभावः ।

पुनर्व्याक्षेप्तुकाम आह — वानीरेत्यादि । वानीरप्रसवैः वेतसपुष्पैः ।

'शीतेऽप्रपुष्पो वानीरो वञ्जुलो वेतसो रथः ।'

इति वैजयन्ती । निकुञ्जसरितां वन्यत्वाद् वनलतामण्डपतिरोहितस्रोतसां नदीनां आसक्तवासं आबद्धाधिवासनं, सुरभीकृतमित्यर्थः, पयः जलं, वर्तत इति शेषः । पर्यन्तेषु तत्तटप्रदेशेषु यूथिकासुमनसां जातिविशेषपुष्पाणाम् ।

'मालत्यां रेवती जातिर्यूथिकायां मनोज्ज्वला ।'

इति वैजयन्ती । 'स्त्रियां सुमनसः पुष्पं' इत्यमरः । उज्जृम्भितं विकसितं, इति भावे निष्ठा । जालकैः समूहैः, कोरकैर्वा । जालं तु जालकम् । कलिका कोरकश्च इति वैजयन्ती । उन्मीलत्कुटजप्रहासिषु विकसद्भिः कुटजपुष्पैर्धवलतया प्रकृष्टहासशीलेषु । 'कुटजो गिरिमल्लिका' इत्यमरः । इतः प्राग्भागेषु

१. 'सोद्वेगं' क. ज. पाठः. २. 'कथं प्रतिपत्तिशून्य' क. च. छ. झ. ञ. ट, 'कथं विप्रतिपत्तिशून्य' ज, 'कथमप्रतिपत्तिशून्य' ट. पाठः. ३. 'मुत्थाप्यान्यतः' क. पाठः. ४. 'य च) सखे' क. झ. ञ. पाठः. ५. पश्य । वानीर' क. ज. पाठः. ६. 'विह' क. पाठः. ७. 'प्राग्भागेषु' क. ज. झ. ञ. पाठः. ८. 'नायते' ञ. पाठः.

अपि च —

जृम्भाजर्जरडिम्बडम्बरघनश्रीमत्कदम्बद्रुमाः
शैलाभोगभुवो भवन्ति ककुभः कादम्बिनीश्यामलाः ।
उद्यत्कन्दलकान्तकेतकभृतः कच्छाः सरित्स्रोतसा-
माविर्गन्धसिलिन्ध्रलोध्रकुसुमस्मेरा वनानां ततिः ॥ १६ ॥

यस्मात् पूर्वप्रदेशेषु गिरेः सानून् तटानालम्ब्य आश्रित्य । 'स्नुः प्रस्थः सानुर-स्त्रियाम्' इत्यमरः । सलिलातिभारसमुद्वहनखेदाद् विश्रमार्थं तटेष्ववकीर्णैरि-त्यर्थः । शिखण्डिताण्डवविधौ परिमण्डलितपिञ्छभारतया रमणीयतरत्व-कथनाय शिखण्डिग्रहणं, 'विशेषणमात्रप्रयोगो विशेष्यप्रतिपत्तौ' इति वचना-द्विशेष्यमयूराग्रहणं, शिखण्डिनां हर्षवशादुद्धतनृत्यारम्भे नटानामिव रङ्गप्रविष्टानां, वितानायते वितानैरुपरि बध्यमानैः विततैश्च दयाल्पैर्वकविशेषैरिव भूयः । क्वापि यक् । अत्र स्वभावोक्तिरुपमोपक्रमोत्प्रेक्षा चालङ्कारः ॥ १५ ॥

जृम्भाजर्जरेत्यादि—जृम्भा जृम्भणं विकासः तया जर्जराणां विशी-र्णदलानां डिम्बानां मुकुलानां डम्बरेण शोभाधिक्येन । 'डिम्बः प्लीहखगाण्डयोः' इति वैजयन्ती । अत्र खगाण्डसाम्याल्लक्षणया मुकुलमुच्यते, 'कदम्ब-गोळाकृतिं' इत्यादिषु गोळशब्दवत् । डिम्भेति वा पाठः; डिम्भशब्देन शिशुवाचिना मुकुलं लक्ष्यते । घनश्रीमन्तः सान्द्रलक्ष्मीविशिष्टाः, कदम्ब-पुष्पा यासु । शैलाभोगभुवः पर्वतविस्तारभूमयः ककुभः दिशः, कादम्बिनी-श्यामलाः, 'कादम्बिनी मेघमाला' इत्यमरः, तया नीलवर्णाः । उद्यत्कन्दल-कान्तकेतकभृतः प्ररोहन्ति कन्दलानि कन्दलीकुसुमानि कान्तानि रमणीयानि केतकानि च भर्तुं शीलं येषाम् ।

'जलप्रायमनूपं स्यात् पुंसि कच्छस्तथाविधः ।'

इत्यमरः । कच्छास्तटसमीपभुवः । आविर्गन्धसिलिन्ध्रलोध्रकुसुमस्मेराः आविर्भूतपरिमलैः सिलिन्ध्राणां लोध्राणां च कुसुमैर्हासशीलाः, तेषां पाटलधवल-स्वभावत्वाद् अधरदन्तप्रभाव्यतिकरसादृश्यमिति । सिलिन्ध्रलोध्रौ वृक्ष-विशेषौ । न तु सिलिन्ध्रशब्देन भूकन्दमत्रोच्यते ।

१. 'सिंहडम्बर' क. पाठः २. 'माविर्भूतसिलिन्ध्रलोध्र' क. ख. पाठः.

१. 'विश्रमार्थं' क. ख. ग. पाठः.

**माधवः**—सखे! पश्यामि । किन्तु दुरालोकरमणीयाः सम्प्रत्य[१,२,३]रण्यभूमयः । तत् किमेतत् । (सास्रं) अथवा किमन्यत् ।[४]

"अलिनारमतालिनी सिलिन्ध्रे
सह सायन्तनदीपपाटलाभे ।",
"अविपुरन्ध्रि सिलिन्ध्रसुगन्धिभिः ।"

इत्यादिमहाकविप्रयोगेषु पाटलवर्णत्वस्य परिमलत्वबहलत्वस्य च प्रतिपादनात् । 'छत्राकश्च सिलिन्ध्रश्च' इति वैजयन्त्यामपि ; स एवोच्यते,[१] अनेकार्थत्वाच्छब्दानाम् । 'सिते लोध्रे महालोध्रः शम्बरश्च' इति वैजयन्ती । ततिर्विस्तारः । भवतीति प्रतिवाक्यं योजनीयम् । अत्र स्वभावोक्तिरलङ्कारः, वानीरप्रसवादीनां वर्षास्वभावत्वोक्तेः ॥ १६ ॥

अथ तदभिप्रेतव्याक्षेपागोचरमवस्थान्तरमवगाढ आह—**सखे पश्यामि**, पुरोवर्तिनां दर्शनमवश्यंभाव्येवेत्यर्थः । **किन्त्विति** पक्षव्यावृत्तौ । **दुरालोकाः** आलोकयितुमशक्याः, तत्र हेतुः—**रमणीयाः** पूर्वावस्थातः शोभनाः, प्रावृडारम्भसम्भृतशोभातिशयत्वात्, तर्हि रम्येषु दोषो गुणेष्वज्ञानं वेति भावः,

"यानि स्म रमरणीयानि तया सह भवन्ति मे ।
तान्येवारमणीयानि जायन्ते मे तया विना ।।"

इति श्रीरामायणोक्तवत् । **तत्** तस्मात् **किमेतत्** सम्प्रति रमणीयानां दुरालोकत्वरूपं वस्तु किं, किं निमित्तमिति न जाने इति वितर्कः । चिन्तितमर्थं निश्चित्याह—**किमन्यत्** अन्यद् वक्ष्यमाणादपरानिमित्तं किं, तदेवेत्यर्थः ।

१. 'दूरालोक' छ. पाठः. २. 'या गिरिभूमयः' ट. पाठः. ३. 'त्यरण्यगिरिभूमयः' ख. छ. झ. ञ, 'ति गिरिभूमयः' ग, 'त्यमू गिरिभूमयः' घ, 'त्यरण्यविभूतयः च, 'त्यरण्यगिरितटभूमयः' ज. पाठः. ४. 'स्रं किम' ग ङ, 'स्रं) अथ किम' ट. पाठः.

१: 'तदेवोच्यते' ख. पाठः.

उत्फुल्लार्जुनसर्जवासितवहत्पौरस्त्यझंझामरुत्-
प्रेङ्खोलस्खलितेन्द्रनीलशकलस्निग्धाम्बुदश्रेणयः।
धारासिक्तवसुन्धरासुरभयः प्राप्तास्त एतेऽधुना
घर्माम्भोविगमागमव्यतिकरश्रीवाहिनो वासराः ॥ १७॥

तदेवाह—उत्फुल्लार्जुनेत्यादि। उत्फुल्लैर्विकसितैः अर्जुनैः ककुभै सर्जैरश्वकर्णैश्च।

'नदीसर्जो वीरतरुः इन्द्रद्रुः ककुभोऽर्जुनः।'

इत्यमरः, 'सर्जोऽश्वकर्णः' इति वैजयन्ती। वासितस्य सुरभीकृतस्य, वहतः वीजमानस्य, पौरस्त्यस्य पुरस्तात् पूर्वस्यां दिशि भवस्य, झंझावातस्य वृष्टि-सहितस्य वायोः, 'झंझावातः सवृष्टिः स्यात्' इति वैजयन्ती, प्रेङ्खोलेन प्रकम्पनेन, मरुदायत्तप्रवृत्तित्वान्मेघानां, स्खलिताः व्याकुलिताः, इन्द्रनील-शकलवत् स्निग्धाः, इत्युपमानेनारूक्षनैल्यविशिष्टत्वं प्रकाश्यते, अम्बुदश्रेणयः मेघमाला येषु। धारासिक्तया वर्षधाराक्षालितया वसुन्धरया भूम्या सुर-भयः घ्राणतर्पणगन्धविशिष्टाः, ग्रीष्मोष्मतप्ताया भुवः प्रथमपतितजलधरपृषत-सेके सौरभोद्गारस्य प्रसिद्धत्वात्, "गन्धश्च धाराहतपल्वलानां", "सद्यः सीरोत्क-षणसुरभिः" इत्यादिवचनैः। प्राप्ता आगताः। ते विरहिजनप्राणहरत्वेन प्रसिद्धाः। एते स्वलक्षणैरिदानीमभिव्यज्यमानाः, अधुनेति चिरादिप्रत्ययासाधारणकारणस्य व्यापिनो नित्यद्रव्यस्य कालस्यावयवित्वेन स्थिरत्वादवयवानां दिवसविशेषाणा-मागमापायित्वेनोक्तिः। घर्माम्भोविगमागमव्यतिकरश्रीवाहिनः घर्मस्य ग्रीष्मकालस्य यो विगमः अम्भसः जलोपलक्षितस्य जलदकालस्य च य आगमो-ऽवतारः तयोर्व्यतिकरः सन्धिः तेन या श्रीः शोभा तद्वहनशीलाः, अथवा शैत्यो-ष्णयोः ऋतुसन्धिजन्ययोर्दुस्सहतया वर्षातपयोः पर्यायेण सम्भवाद् घर्माम्भसः स्वेदजलस्य विगमागमव्यतिकरेण या भोग्यतालक्षणा शोभा तद्वाहिन इत्यर्थः। अत्र स्वभावोक्तिः यथासंख्यं चालङ्कारः ॥ १७ ॥

१. 'गन्धवासित' ब. पाठः. २. 'झंझानिल' क. ज. पाठः. ३. 'लत्स्खलि तेन्द्र' च. ट. पाठः. ४. 'व्यक्ताम्बुद' ख. पाठः. ५. 'एवाधुना' क. घ. छ. ज ट. पाठः.

१. 'नैर्मल्य' ख. झ. पाठः. १. 'प्रत्ययसाधारणस्य' क. पाठः.

हा प्रिये मालति!

तरुणतमालनीलबहलोन्नमदम्बुधराः
शिशिरसमीरधुतघननूतनवारिकणाः ।
कथमवलोकयेयमधुना हरिहेतिमती-
र्मदकलनीलकण्ठकलहैर्मुखराः ककुभः ॥ १८ ॥

उद्दीपनविभावपरिपोषिकलुषितधृतिः स्मृत्वाह—तरुणेत्यादि । तरुणतमालो बालत्वात् स्निग्धवर्णस्तमालतरुः, तद्वन्नीला बहला निरन्तरा उन्नमन्तो न तूलता, इत्यनेन नानार्थस्यारम्भ उपरि चिरकालानुवृत्तिश्च द्योत्यते, अम्बुधरा मेघा यासु । शिशिरेण मेघोदरविनिर्मुक्ततया शीतलेन समीरेण धुताः कम्पिताः विकीर्णा इत्यर्थः, घनाः सान्द्राः नूतनस्य नवाभिवृष्टस्य वारिणः कणा यासु । अवलोकयेयं पश्येयमित्यनवक्लृप्तौ लिङ् । तत्र हेतुः—अधुना त्वद्विरहविरसेऽस्मिन् काले, हरिहेतिमतीः हरिरिन्द्रस्तस्य हेतिरायुधः, इन्द्रधनुरित्यर्थः, अथवा वज्रं, तद्घोषस्यापि विरहिजनदुस्सहत्वात् तद्वतीः । मदकलानां गर्ववशात् सुन्दराणां नीलकण्ठानां मयूराणां कलहैः कलहो युद्धः तदुपलक्षितैः परस्परस्पर्धाबद्धोद्धुरैः केकाकोलाहलैः मुखरा वाचालाः ककुभः दिशः, बहुवचनेन 'दृष्टिं पथिकः क्व पातयतु' इति न्यायेन सर्वपथीनत्वमापदः प्रकाश्यते । 'उन्नमदम्बुधरा', 'हरिहेतिमती'रिति च चक्षुर्दाहदायित्वं, 'घननूतनवारिकणाः' इति स्पर्शेन्द्रियोपतापित्वं, 'नीलकण्ठकलहै'रिति कर्णज्वरहेतुत्वं च प्रकाशयन् 'कथमवलोकयेय'मित्यनेन सर्वेन्द्रियदुःखदायिनीनामासामवलोकनमेव रौरवपतनभैरवं, किं पुनरनुभवनमिति द्योतयति । अत्र वितर्को दैन्यं च ध्वन्यते । स्वभावोक्तिरलङ्कारः ॥ १८ ॥

---

१. 'बहुलो' क. झ. ञ. पाठः. २. 'समीरणावधूतनूतन' क. ज. झ. ञ, 'समीरणावधुतनूतन' ज. पाठः. ३. 'मतो मदकल' क, 'मतीम्मदकल' ख. पाठः.

---

१. 'इत्यनेनार्थस्य' क, इत्यनेन नार्थस्य' ग. पाठः. २. 'तद्घोषणस्यापि' ख. ग. छ. पाठः.

([1]शोकार्तिं नाटयति ।)

मकरन्दः—कोऽप्यतिदारुणो दशाविपाको वयस्यस्य[2] सम्प्रति[3]। (सास्रं) मया पुनरजानता[4] वज्रमयेन[5] किल विनोद[6] आरब्धः[7]। (निश्वस्य) एवञ्च पर्यवसितप्रायैव[9][10] नो माधवस्य[11] प्रत्याशा।

शोकार्तिं

"अभीष्टविरहाच्छापात् पुत्रवित्तादिनाशतः।
सर्वेन्द्रियपरिक्लेशः शोक इत्यभिधीयते॥"

इति भावप्रकाशः, तन्मूलामार्तिम्।

"अश्रुपातो मुखे शोषस्स्वरभेदो विवर्णता।
निश्वासः स्मृतिलोपश्च विलापः स्तब्धगात्रता।
मोहागमोऽभिघातश्च भूपातः परिदेवितम्।"

इत्याद्युक्तवत्कार्यप्रसरमित्यर्थः।

तद्दशां निर्वर्ण्याह—कोऽपि अनिर्देश्यः दशाविपाकः अवस्थायाः परा काष्ठा। पुनःशब्दो विशेषे। अजानता अस्या दशाया एतावत्त्वमविचारयता वज्रमयेन एतद्दर्शनेऽतिघृतविलायं, विलीनत्वाभावात्। कुलिशनिर्मितेनेत्यतिशयोक्तिः। किलेत्यपरमार्थे। विनोदः व्याक्षेपः। विनोदः किल न तु विनोदो नोद एवेत्यर्थः। आरब्धः 'आक्षिपामि—एतस्मिन्मदकले'त्यादिभिरुपक्रान्तः। एवमनेन वर्तमानेन प्रकारेण। चस्त्वर्थे। पर्यवसितप्राया समाप्तकल्पा माधवपक्षपातिनां सर्वेषामस्माकं माधवप्रत्याशा।

"स्त्रीनीचादिषु शोकोऽयं मरणव्यवसायदः।
मध्यमानां भवेच्छोको मुमूर्षा मृतिरेव वा।

१. 'निश्वस्य शोकार्तिं' छ. ज. पाठः. २. 'स्य। (सास्रं) स' ग. ङ. पाठः. ३. 'सम्प्रति हि।' च. ट, 'सम्प्रति वर्तते।' छ. ज. पाठः. ४. 'पुनर्वज्र' क. ख. च. छ. झ. ञ. पाठः. ५. 'वज्रायमाणेन विनो' झ. ञ. पाठः. ६. 'न कोऽपि विनोद' क, 'न पुनर्विनोद' च. पाठः. ७. 'विनोदनं' ङ. पाठः. ८. 'प्रारब्धः' ज. पाठः. ९. 'एवं च किल पर्यवसित' च. ट. पाठः. १०. 'प्रायेव' ज. पाठः. ११. 'माधवं प्रति प्रत्याशा' क. ञ, 'माधवप्रत्याशा' ग. च. छ. ज. ट. पाठः.

(सभयं विलोक्य) कथं प्रमुग्ध एव । मालति ! मालति ! किमपरम् निरनुक्रोशासि ।

अपहस्तितबान्धवे ! त्वया
विहितं साहसमद्य धृष्टया ।
तदिहानपराधिनि प्रिये
सखि ! कोऽयं करुणोज्झितक्रमः ॥ १९ ॥

---

उत्तमानामतिप्रौढो विवेकेनैव शाम्यते ॥'

इत्युक्तनीत्या उत्तमप्रकृतेरस्य शोकः कालतो विवेकेन निर्वापयिष्यति। अत-दुरितैर्मालत्यलाभेऽपि माधवोऽस्माकं परिशिष्यते इति या प्रत्याशा सेत्यर्थः। उत्तमप्रकृतेरपि कारणगौरवाच्छोकादीनां असङ्गत्वं ।

"क्रमवशमपरं न निप्रकुर्यु-
र्विभुमपि तं यदमी स्पृशन्ति भावाः ।"

इति प्रामाणिकवचनाद् , अजादिषु तथादर्शनाच्चेति भावः । सभयं पापशङ्कया भयाविशिष्टम् । प्रमुग्धां मालतीं मूलभूतामाकाशेऽभिमुखीकृत्योपालभेत—किमपरं अन्यत् किं, नून इति शेषः, निरनुक्रोशा निरस्तदयासि ।

अपहस्तितबान्धवे इत्यादि—अपहस्तः हस्तस्य पृष्ठभागः, तेन प्रहारोऽपहस्तत्वेन प्रसिद्धः; 'अपहस्तेन प्रहृतोऽपहस्तितः' इति लक्षणया परिभूते वर्तते , अवज्ञाता बान्धवाः पित्रादयो यया । तत्र हेतुः—विहितं कृतमद्येति अयातयामत्वेनापराधानवकाशः प्रकाश्यते तदेवाह—तत् तस्मात् इह ईदृगवस्थे अस्मिन्नित्याभिनयः, अनपराधिनि प्रणयभङ्गरहिते प्रिये स्वयंवृतवल्लभेति । सखीति विस्रम्भभूमित्वात् स्वेन विनेयत्वं तस्याः प्रकाशयति । किंशब्दः क्षेपे; अयमिति तत्पूर्वत्वं द्योतयति, करुणोज्झितः कृपया रहितः, इत्यनेन 'प्रियतम इति स्नेहेन भवितव्यं, स तावत् त्वयि न दृष्टः; तद् भवतु नाम ; दुःखित इति करुणापि न क्रियत इत्यहो तव नृशंसत्व'मिति प्रतीयते । अत्र विषममलङ्कारः,

---

१. 'एव ! (आकाशे) सखि मालति' क, 'एव । हा सखि मालति !' ज, 'एव । (आकाशे) मालति' झ. ञ. पाठः. २. 'साहसे त्वया' ङ. पाठः. ३. 'साहसमस्व तृष्णया' ङ. पाठः.'

---

१. त्वभावेऽपि' ख. ग. पाठः. २. 'विनेयतास्याः' ग. ज, 'विनयं तस्याः' ङ. झ. पाठः.

कथमद्यापि नोच्छ्वसिति । हन्त ! मुषितोऽस्मि[1] ।

मातर्मातर्दलति हृदयं ध्वंसते[2] देहबन्धः

शून्यं मन्ये जगदविरतज्वाल[3]मन्तर्ज्वलामि ।

सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा

विश्वं मोहः[4] स्थगयति कथं मन्दभाग्यः करोमि ॥ २० ॥

साहसकरणनिष्करुणत्वयोरघटमानयोरेकत्रोपनिबन्धात्[1] ; विभावना च, अपराधाख्यकारणविरहेऽपि करुणोज्झनस्य कार्यस्य प्रतिपादनात् ॥ १९ ॥

अद्यापीति चिरं तथावस्थानात्, नोच्छ्वसिति न श्वासं मुञ्चति, तस्य स्तब्धत्वात्। मुषितः हृतसर्वस्वः, माधवस्यैव सर्वस्वत्वेनाभिमतत्वात् ।

स्वावस्थामनुसन्दधान[2] आह—मातर्मातरित्यादि । सर्वस्यापि जन्तोरार्तिसमये मातृस्मरणस्यावश्यम्भावादाकाशे[3] स्वजननीमभिमुखीकृत्याह मातर्मातरिति ; वीप्सया दुःखसम्भ्रमो व्यज्यते, अथवा मातरिति माधवस्य मातरं, पुनर्मातरिति स्वस्य चाभिमुखयति । दलति भिद्यते । ध्वंसते शिथिलीभवति देहबन्धः शरीरस्य सन्धिबन्धः, अथवा शरीरिणा स्वेन शरीरस्य सम्बन्धः, मर्मणां[4] तुद्यमानत्वात् । शून्यं निर्जनं जगद् अरण्यप्रख्यं अविरतज्वालं अविच्छिन्नदीपकं, 'ज्वलितिकसन्तेभ्यो णः' (३-१-१४०) इति णः, अन्तः देहाभ्यन्तरे ज्वलामि देहनचुंबितजर्जरकाष्ठमिव[5] दीप्ये। सीदत् क्लाम्यत् अन्धे गाढे, 'ध्वान्ते गाढेऽन्धतमसम्' इति वचनात्, तमसि तिमिरे विधुरः परवशः मज्जति समुद्रे इव इवान्तर्निपतति, अन्तरात्मा जीवः मनो वा। विश्वं सर्वं कर्तव्यं जगद्वा, मोहः चित्तव्याकुलता स्थगयति तिरस्करोति । मन्दभाग्यः ईदृशं सुहृदं लब्ध्वा चिरमनेन सह सुखमनुभवितुं यस्य दैवेन न दत्तं सोऽल्पपुण्य[6] इत्यर्थः, कथं करोमि कं प्रकारमस्य प्रकारत्वेनानुतिष्ठामि । अत्र 'शून्यं मन्ये जगदि'ति, 'सीदन्नन्धे तमसी'ति, 'विश्वं मोहः स्थगयती'ति च वाक्यत्रये

१. 'तोऽस्मि दैवेन' क. झ. ञ. पाठः. २. 'ध्वंसते' छ. पाठः. ३. 'दविकलज्वाल' ज. पाठः. ४. 'विश्वङ्मोहः' क. छ. ज. झ. ञ, पाठः.

१. निबन्धनात्' ङ. झ. पाठः. २. 'स्वावस्थानमनु' ग. पाठः. ३. 'शोऽस्य जननीं' क. ङ. छ. झ. पाठः ४. 'अन्तर्मर्मणां' क. पाठः ५. 'ज्वलनचुम्बित' ङ. पाठः. ६. 'जडकाष्ठ'. ङ. पाठः. ७. 'सोऽपपुण्यः' क. ख. ङ. पाठः

कष्टम् ! भो कष्टम् !

बन्धुताहृदयकौमुदीमहो
मालतीनयनमुग्धचन्द्रमाः ।
सोऽयमद्य मकरन्दनन्दनो
जीवलोकतिलकः प्रतीयते ॥ २१ ॥

---

फलैक्येऽपि प्रकारवैचित्र्यात् , करुणरसाक्रान्तस्य वक्तुर्वचनत्वाच्च न पौनरुक्तदोषः । अतिशयोक्तिरलङ्कारः ॥ २० ॥

'दाहोऽम्भःप्रसृतिंपचः' इत्यादिवत् पुनर्मेरोरिव पतनं तस्य निधनमाशङ्कमान आह — भो इत्याकाशे । लोकमभिमुखी कृत्याह— कष्टं अयुक्तम् । वीप्सया ततः परस्य कष्टस्याभावं ध्वनति ।

बन्धुतेत्यादि—बन्धुता बन्धूनां पित्रादीनां समूहः । 'ग्रामजनबन्धुसहायेभ्यस्तल्'(४-२-४३) इति समूहार्थे तल्प्रत्ययः, तलन्तत्वात् नित्यस्त्रीलिङ्गता च । तस्या हृदयस्य कौमुदीमहः आश्वयुजपौर्णमासीप्रयुक्तः उत्सवः, समग्रगुणतया परमानन्दहेतुत्वात् मालतीनयनमुग्धचन्द्रमाः मालत्या नयनयोर्मुग्धो नवोदितश्चन्द्रः, अथवा मुग्धः नित्यकोमल इति व्यतिरेकः । प्रसिद्धस्य चन्द्रस्य मुग्धतायाः कादाचित्कत्वात् शैत्यातिशयहेतुत्वाच्च रूपणम् । मकरन्दनन्दनः मकरन्दस्य नन्दनो यो यः पदार्थः समृद्धिहेतुः स सर्व एवेत्यर्थः । 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः'(३-१-१३४)इति ल्युः । जीवलोकतिलकः जीवन्तीति जीवाः शरीरिणस्तेषां लोक आधारभूतं भुवनं, मनुष्यलोक इत्यर्थः, तस्य तिलकः ललामः उत्तमाङ्गभूषणत्वात् तिलकस्य भूषणान्तरेभ्यश्चूडामणिवद्वैशिष्ट्यात् तद्भावारोपः । प्रतीयते अस्तमयते, अतः परं किं कष्टमित्यर्थः । अत्रोल्लेखोऽलङ्कारः, एकस्य निमित्तवशादनेकधा ग्रहणात् ॥ २१ ॥

---

१. 'पूर्णचन्द्रमाः' क पाठः. २. 'प्रलीयते' क. ख. घ. च. छ. ज. झ. ञ. ट, प्रमीयते' ग. पाठः.

---

१. 'द्राग्भधन' ग. पाठः. २. 'मानमाह' ख. ग. ङ. छ. पाठः.

हा[1] प्रियवयस्य माधव !

गात्रेषु चन्दनरसो दृशि शारदेन्दु-
रानन्द एव हृदये मम यस्त्वमासीः ।
तं त्वां निकामकमनीयमकाण्ड एव
कालेन जीवितमिवोद्धरता हतोऽस्मि ॥ २२ ॥

(स्पृष्ट्वा[2])—

अकरुण ! वितर [3]स्मितोज्ज्वलां दृशमतिदारुण! देहि मे गिरम् ।
सहचरमनुरक्तचेतसं प्रियमकरन्द ! कथं न मन्यसे ॥ २३ ॥

---

आसतां तावदन्ये, ममैवैकस्य सर्वस्वं दैवेनापहृतमित्याह—गात्रेष्वित्यादि । गात्रेषु अङ्गेषु चन्दनरसः चन्दनस्य पङ्कः, अतिशीतकस्पर्शसुखजननात्; दृशि चक्षुरिन्द्रिये शारदेन्दुः शरत्कालभवत्वादपगतमेघावरणश्चन्द्रः, अमृतवर्षणात्; हृदय आनन्द एव मूर्तं सुखमेव, न पुनः सुखसाधनमात्रं; आसीरिति भूतकालनिर्देशात् सा दशा कथावशेषा जातेति द्योत्यते, 'रमणीयः क्षत्रियकुमार आसीद्' इतिवत् । निकामकमनीयं निरतिशयप्रेमास्पदम् । तत्रोपमानमाह—जीवितमिवेति । जीवितं प्राणात्परं प्रेमास्पदतया 'मानभूयमहं सदा भूयासं' इति सर्वस्यापि स्वजीविते आशंसया तदपेक्षयैव पुत्रमित्रकलत्रादिषु स्नेहाद्, 'आत्मनस्तु कामाय सर्वं प्रियं भवति, इत्यादिश्रुत्या । अकाण्डे अनुचिते समये, 'शतायुर्वै पुरुषः' इति श्रुतिविहितस्य पुरुषायुषस्य परिसमाप्तावपि समग्रगुणानां निधनं न लोकेन सह्यते, किमुत नवयौवन इत्यर्थः । उद्धरता बलात्कारतो हरता विलुण्ठयता कालेन सर्वसंहर्त्रा परमेश्वरेण, कालग्रहणं दुर्लङ्घप्रभावत्वसूचनार्थं, 'कालोऽस्मि लोकक्षयकृत् प्रवृद्धः', 'कालो हि दुरतिक्रमः', 'कालस्य हि वशो लोकः' इत्यादिवचनात्, हतः हिंसितः ॥ २२ ॥

जीवितोद्धरणे शवत्वात् स्पृष्ट्वा करेण संस्पृश्य ।

स्नेहोन्मादादुपालभते—अकरुणेत्यादि । अकरुण दयारहित, दुःखितेऽपि मय्यभ्युपपत्त्यभावात्, वितर अर्पय स्मितोज्ज्वलां पूर्ववन्मन्दस्मितेन शोभितां दृशं दृष्टिम् । अतिदारुण अपरिमितस्वजनप्राणपरित्यागहेतुभूत, दुर्व्यवसायत्वात्, गिरं 'भोः प्रियवयस्य! किमेवं वैक्लव्यमवलम्बसे । ननु स्वस्थोऽस्मी'ति

---

१. 'हा वयस्य' क. ख. छ. ज. झ. न. पाठः. २. 'स्पृशन्' क. ज. छ. झ. न, 'दृष्ट्वा' क. पाठः. ३. 'विहितस्मितो' ड. पाठः.

(माधवः संज्ञां लभते ।)

मकरन्दः— (सोच्छ्वासं) अयमचिरधौतराजपट्ट[1]रुचिरमांसलच्छविर्नवजलधरस्तोयशीकरासारेण मे[2] प्रियवयस्यं[3] संजीवयति । दिष्ट्या[4] अयमुच्छ्वसितस्तावत् ।

माधवः — तत् कमत्र[5] विपिने प्रियावार्त्ताहरं करोमि[6] । (विलोक्य) साधु साधु ।

वाचं देहि । मे इति वाक्यद्वयेऽपि सम्बध्यते । सहचरं कदाचिदप्यननुभूतविरहं, अनुरक्तचेतसं स्नेहरञ्जितं मनो यस्य, न पुनर्वाचारम्भणमात्रस्नेहम् । प्रियमकरन्द प्रियः प्रेमभूमिः मकरन्दो यस्येत्यनेन लोकप्रसिद्धत्वमाह । सहचरमेनमनुरक्तचेतसं कथं न मन्यसे केन प्रकारेण नावगच्छसि, कच्चित् कदाचित् कथञ्चित् किञ्चित् कृत्रिमस्नेहत्वं यदि मयि त्वयान्वभावि तर्ह्येवायं तव दारुणकर्मारम्भः शुभं भवतीति भावः ॥ २३ ॥

संज्ञां मूर्च्छाविच्छेदजनितं प्रबोधम् । सोच्छ्वासं आश्वाससहितम् । अचिरधौतः प्रत्यग्रक्षालितः, अचिरधौतत्वोक्तिः स्निग्धतातिशयप्रतिपादनार्थं, राजपट्टः नीलवर्णः पट्टांशुकविशेषः तद्वद् रुचिरा शोभना मांसला बहला छविः कान्तिर्यस्य । तोयशीकरासारेण जलबिन्दूनां वेगवता वर्षेण ।

'आसारः स्यात् प्रसरणे वेगवृष्टौ सुहृद्बले ।'

इति वैजयन्ती । मे प्रियवयस्यमिति अहो अनेन मे परमोपकारः कृत इति द्योतयति, सञ्जीवयति, अत्र नवजलधरेण सञ्जीवनं योगिनीप्रभावजनितं, न तु यादृच्छिकमित्यहो मन्तव्यम्, उपर्यपि 'नूनमस्यायं' इति, 'झटिति पाठ्यमानादिवाम्बुदत' इति च समयोपपन्नत्वप्रतिपादनात् । उच्छ्वसितस्तावत् प्रथमं सञ्जीवितः, तावद्ग्रहणं उच्छ्वसितस्य मालतीलाभमन्तरेण यादृच्छिकत्वेनाविश्वसनीयत्वात्, 'कियानलाभो न विलाभ एव' इति न्यायात् 'इदानीं तावदेतत् सुखमनुभवामः, पश्चाद्यद्भावि तद्भवत्वि'ति सन्तोषं द्योतयति ।

अथ — 'मधुकलनीलकण्ठकलहैर्मुखराः ककुभः ।'

१. 'पट्टमांसल' ट. पाठः २. 'मे वयस्यं' क. घ. ट. पाठः. ३. 'स्यं जीवयति' क. घ. झ. पाठः. ४ 'दृष्ट्या जगदुच्छ्वसितं तावत् ' क, 'दृष्ट्या उच्छ्वसितं तावत्' छ, 'दृष्ट्या समुच्छ्वसितस्तावत्' ज. झ. ञ. पाठः. ५ 'कथमत्र' क. घ ट, 'किमिवात्र' ज, 'किमत्र' ट. पाठः. ६. 'मि । फलभर' ज. पाठः.

फलभरपरिणामश्यामजम्बूनिकुञ्ज-
स्खलिततनुतरङ्गामुत्तरेण स्रवन्तीम् ।
उपरि विघटमानप्रौढतापिञ्छनील:
श्रयति शिखरमद्रेर्नूतनस्तोयवाहः ॥ २४ ॥

---

इति प्रावृडारम्भस्य दुस्सहतामनुसन्धायोन्माधतः प्रियादूतान्वेषणव्यग्रस्यैव मूर्च्छितत्वमासूत्रयन् प्रबुद्धस्य तत्संस्कारवशेनोक्तिमाह — तदिति । तत् तस्मात्, प्रियामन्तरेण ककुभो दुष्प्रेक्षाः, सा च विरहविधुरिता समाश्वासनीये-त्यर्थः । कं जनं, किमिति पाठे किं वस्तु, अत्र अस्मिन् विपिने वने ।

'अटव्यरण्यं विपिनं गहनं काननं वनम् ।'

इत्यमरः । विपिन इति, पुरे जनपदे च परिजनबाहुल्यादनन्वेष्यत्वं विपि-नस्य तु अपरिचितस्थलत्वादन्वेषणीयत्वमाह । प्रियावार्ताहरं प्रियाया दूतं, वार्तां सन्देशं हरति नयतीति वार्ताहरः । साधु साध्विति स्वाभिमत-सम्पत्तेः सहर्षं वचनं, समीचीनं, सम्पन्नमिति शेषः ।

तत्र हेतुमाह — फलभरेत्यादि । फलभरस्य फलसमृद्धेः परिणामेन विपाकेन श्यामेषु नीलवर्णेषु, फलानां नीलवर्णतया, जम्बूनिकुञ्जेषु जम्बूलता-वल्येषु स्खलिताः प्रतिहतवेगाः तनवः कृशाः तरङ्गा यस्याम् । जम्बूग्रहणं प्रावृषि तस्याः फलितत्वप्रसिद्धेः ।

"अङ्गारचूर्णोत्करसन्निकाशैः
फलैः सुपर्याप्तरसैः समृद्धैः ।
जम्बूद्रुमाणां प्रतिभान्ति शाखा
निलीयमाना इव षट्पदौघैः ॥"

इति श्रीरामायणे प्रावृड्वर्णने । स्रवन्तीं वक्ष्यमाणां पाटलावतीं उत्तरेण तस्या उत्तरस्यां दिश्यदूरे । 'एनबन्यतरस्यामदूरेऽपञ्चम्याः' (५-३-३५) इत्येनप्, 'एनपा द्वितीया' (२-३-३१) इति द्वितीया । उपरि ऊर्ध्वभागे, स्वस्ये-

---

१. 'स्खलनतनु' ज. झ. ब. पाठः २ 'उपचितघनमालप्रौढ' क. ज. पाठः

---

१. 'समाश्वसनीये' झ पाठः. २. 'विपिने त्वस्यापरिचित' ग. पाठः. ३ 'फलसत्व' क, 'फलत्व' ग. पाठः.

(सरभससमुत्थाय उन्मुखः कृताञ्जलिः)

कच्चित्सौम्य प्रियसहचरी विद्युदालिङ्गति त्वा-
माविर्भूतप्रणयसुमुखाश्चातका वा भजन्ते ।
पौरस्त्यो वा सुखयति मरुत् साधुसंवाहनाभि-
र्विष्वग्विभ्रत्सुरपतिधनुर्लक्ष्म लक्ष्मीं तनोति ॥ २५ ॥

त्यर्थात्, विघटमानप्रौढतापिञ्छनीलः प्रारब्धविकासं प्रौढं कालपक्वं तापिञ्छं तमालपुष्पं, तद्वन्नीलः स्निग्धश्च, साहचर्यात् । 'कालस्कन्धस्तमालः स्यात्तापिञ्छोऽपि' इत्यमरः । कृष्णगिरिकर्णिका वा । श्रयति विश्रमार्थमालम्बते । शिखरं शृङ्गं अद्रेः पर्वतस्य नूतनः नवोदितः तोयवाहः मेघः । अमुं प्रियावार्ताहरं करोमीति विपरिणामेण योजना ॥ २४ ॥

सरभसं सवेगं सहर्षं वा । 'रभसो वेगहर्षयोः' इति वैजयन्ती । उन्मुखः उन्नमितवदनः, तस्याधोभागवर्तित्वात् । कृताञ्जलिः पूजार्थं हस्तौ समानीय, तस्य दिव्यत्वात् स्वयं सापेक्षत्वाच्च ।

स्वविवक्षितवचनाभिमुख्याय कुशलं पृच्छति — कच्चिदित्यादि । कच्चित् सानुनये प्रश्ने । सौम्य! अदारुणस्वभाव!, सर्वानुग्राहकत्वाद्, इत्युक्तिः स्वाभिमतप्रवृत्त्याख्यानस्याभ्युपगमार्थम् । प्रियसहचरी इष्टा सहसञ्चारणशीला च, प्रियतमा च धर्मपत्नी चेत्यपि स्फुरति, विद्युत् तटिद् आलिङ्गति स्वयं सरागा समाश्लिष्यति । अनुरागस्योभयगतत्वे हि रसावहत्वमिति भावः । आविर्भूतप्रणयसुमुखाः आविर्भूतः सम्भ्रमादिभिः स्वयमेव स्फुरितः, नत्वाविष्कृत इत्यकृत्रिमत्वं द्योतयति, प्रणयः सौहृदं तेन प्रसन्नमुखाः, चातकाः धाराटाख्याः पक्षिणः, तेषां तदेकोपजीविनां अनन्यसाधारणसौहार्दद्रवार्द्रतया तद्ग्रहणम्, भजन्ते सेवन्ते । पौरस्त्यः पुरस्तात् पूर्वस्यां दिशि भवः, तस्यैव प्रावृट्सम्बन्धित्वात्, 'प्रबलपुरोवातताडितशिखण्डः' इत्यादिप्रयोगात्,

१. 'सादरमुत्थाय'; २. 'चर' क. पाठः. ३. 'सुभगा' ग. ङ. छ. ज. पाठ.. ४. 'विश्वं बिभ्रद्' ट. पाठः. ५. 'लक्ष्मीविदेतु ॥' ज. पाठः.

१. 'मुखः' झ. पाठः. २. 'तस्योपरिभाग' क, 'तस्योर्ध्वभाग' ख. ग. पाठः. ३. 'सारङ्गाख्याः' ङ. पाठः.

(आकर्ण्य) अये! अयं प्रतिरवभरितकन्दरानन्दितोत्कण्ठित-नीलकण्ठेन कान्तेन मन्द्रहुङ्कृतेन मामनुमन्यते। यावदर्भ्यर्थये। भगवन् जीमूत!

सुखयति सुखितं करोति साधुसंवाहनाभिः समीचीनैः शरीराबाधपरिहारात् तत्तदभिमतदेशप्रापणैः। विष्वक् सर्वतोदिक्कं बिभ्रद् धारयन्, मरुदधीन-सञ्चरणत्वात् मेघानां, सुरपतिधनुरिन्द्रधनुः, वेत्यत्राप्यनुषज्यते, लक्ष्म चिह्नभूतं लक्ष्मीं शोभां तनोति विस्तारयति, तवेत्यर्थात्। कश्चिच्छब्दो वाक्य-त्रयेऽप्यनुकृष्यते। तनोषीति वा पाठः। वाक्यत्रयं प्रश्नरूपं, चतुर्थं तु वाक्यं चाटुरूपम्। सुरपतिधनुर्लक्ष्म बिभ्रत् त्वं विष्वक् लक्ष्मीं तनोषीत्यहो ते सौन्दर्यसौभाग्यसम्पदिति द्योत्यते। वाशब्दाभावश्चास्यार्थस्य साधकः। अत्रा-प्रस्तुतप्रशंसालङ्कारः, अप्रस्तुतान्मेघवृत्तान्तात् प्रस्तुतस्य दूतवृत्तान्तस्य गम्य-मानत्वात्। अचेतनेन सह प्रश्नोत्तरकानुपपत्तेर्वाच्यस्यासम्भवेऽपि प्रस्तुते तात्पर्यात्, प्रमुख एव तदध्यारोपणप्रतीतेरुन्मत्तवचनत्वाच्च युज्यत एतत्। समा-सोक्तिश्चात्रानुसन्धेया, विद्युदादीनां नायिकादित्वेन प्रतीतेः। अस्मिन्नुन्मत्त-वचनप्रकरणे प्रायोऽप्रस्तुतप्रशंसानुसरणीया ॥ २५ ॥

अथ तद्गर्जितं स्वप्रश्नोत्तरं परिकल्प्य सहर्षमाह — अये इति हर्ष-द्योतकमव्ययम्। प्रतिरवभरिताभिः प्रतिध्वनिपूरिताभिः कन्दराभिः गिरिदरीभिः आनन्दिता हर्षिताः, 'विशेषणे (³विशिष्टे) विधिनिषेधौ विशेषणमुपसङ्क्रामतः' इति न्यायात् कन्दररन्ध्रानुबन्धिभिः प्रतिरवैरानन्दिता इत्यर्थः, उत्कण्ठिताः कदा नु खलु प्रियसुहृदो गर्जितं श्रोष्याम इति चिरकालोत्सुकाः, अथवा उन्नमित-कण्ठाः कृता नीलकण्ठा मयूरा येन। कान्तेन श्रवणसुभगेन मन्द्रहुङ्कृतेन गम्भीरेण गर्जितेन, 'मन्द्रो गम्भीर उच्यते' इति हलायुधः, मां अनुमन्यते पृच्छन्तं मां प्रतिवचनेनानुमोदत इत्यर्थः। तत्सौमुख्येन विवक्षितवचनावकाशं

१. 'अयं प्रति' क. झ, 'अयमयं' घ, 'अये प्रति' ञ. पाठः. २. 'त्कण्ठकलकेकानुबन्धिना हुं' क, 'त्कण्ठिनीलकण्ठ' ख, त्कण्ठनीलकण्ठेन ध्वनिना मामनु' छ, 'त्काण्ठनीलकण्ठकलकेकानुसन्धिना मन्द्र' ज. झ. ञ. पाठः. ३. 'मन्दहुं' ट. पाठः ४. 'दर्थये' क पाठः. ५. 'तनाथ!' छ. पाठः.

१. 'शरीरबाधापरि' क. पाठः. २. 'तरानुप' क, 'त्तरिकानुप' ख. ग. पाठः. ३. 'सविशेषणे' क. ख. ग. पाठः.

दैवात् पश्येर्जगति विचरन् मत्प्रियां मालतीं चे-
दाश्वास्यादौ तदनु कथयेर्माधवस्थामवस्थाम् ।
आशातन्तुर्न च कथयतात्यन्तमुच्छेदनीयः
प्राणत्राणं कथमपि करोत्यायताक्ष्याः स एकः ॥ २६ ॥

लब्ध्वाह — यावद्वाक्यालङ्कारेऽवधारणे वा, अभ्यर्थये याचे, प्रार्थितमर्थ-ममुमिति शेषः । भगवन्निति समग्रैश्वर्यादिसम्पन्नतया कामरूपत्वं च सर्वत्राप्रतिहतगतित्वं च स्वाभिमतानुगुणमाह . जीमूत मेव !

प्रार्थनामाह — दैवादित्यादि । दैवात् मद्भाग्यात् । जगतीत्यनियतदेशत्वं विचरणस्याह । विचरन्निति शत्रा ताच्छील्यं द्योतयति । मत्प्रियां ममेति वर्तमानदशाविशिष्टस्य आत्मनोऽभिनयेन प्रदर्शनं, ईदृशस्य तद्विरहान्मम प्रेयसीं पश्येश्चेदिति सम्भावनायां लिङ् । चेद्ग्रहणेन त्रिभुवनमान्यं भवन्तमस्मिन् कृत्ये नाज्ञापयामि. किन्तु यदृच्छयोपपद्यते चेत्तदानीमेवमनुग्राह्योऽसीति प्रार्थनामेव करोमीति व्यञ्जयति । आदावाश्वास्य 'वत्से मा शुचः । त्वत्सहचरेण त्वां घटयिष्यामी'ति विगतोद्वेगां कृत्वा, तदनु तस्याः समाश्वासनस्यानन्तरं, माधवस्थां माधवे स्थितां, मत्प्रियामित्यत्राभिनयेन दर्शितत्वात् सिद्धत्वेनोक्तिः, अवस्थां स्वल्पावशेषजीवितां दशां, कथयेः इति प्रार्थने लिङ् । आशातन्तुः सूत्रवत् सूक्ष्मा आशा, कथयता अवस्थामाचक्षाणेन, कथयेरिति प्रार्थितस्य कथनस्यानुवादः, अत्यन्तं निश्शेषं [न] उच्छेदनीयः खण्डयितुं योग्यः । त्वद्दर्शनात् पूर्वमेव स नूनं परित्यक्तजीवितो भविष्यतीत्युक्ते नैराश्यात्तस्याः प्राणा झटिति प्रयास्यन्ति । त्वद्दर्शनं यावत् स यथा जीविष्यति तथा मया समाश्वासित इत्युक्ते साशत्वात् सापि जीविष्यतीत्यर्थः,

'जीवइसीए त्ति माहुई उवऊढो ।'

इति सेतूक्तवत् । तदेवाह — प्राणत्राणं प्राणानां रक्षां, अनपायमित्यर्थः, कथमपि कृच्छ्रेण । आयताक्ष्याः त्वद्वचनेन सहर्षविस्मयत्वाद् विकसितनयनाया इति तत्कालविशेषणम् । स आशातन्तुरेव । अत्र दैन्यमौत्सुक्यं च भावौ व्यज्येते । काव्यलिङ्गमलङ्कारः, हेतोर्वाक्यार्थत्वेनोक्तिः ॥ २६ ॥

१. 'विचरन्निच्छया मत्प्रियां चेद्' क. ङ. झ. न. पाठः. २. 'माधवीयामवस्थां' क. घ. ज झ. न. ट. पाठः ३. 'एव' ग. ङ. ट. पाठः.

१. 'द्धत्वेन आत्मनो' ङ. पाठः. २. 'प्रार्थनायां लिङ्' झ. पाठः.

(सहर्षम्[1])

अये ! प्रचलितः । तदन्यतः सञ्चरामि । (परिक्रामति ।)

**मकरन्दः** — (सोद्वेगं[2]) कथमिदानीमुन्मादोपराग[3] एव माधवेन्दु-मास्कन्दति[4] । हा तात ! हा अम्ब ! हा भगवति ! परित्रायस्व[5] । पश्य माधवस्यावस्थाम्[6] ।

---

सहर्षमिति — स्वतः प्रयातं मेघं स्वप्रार्थितार्थसाधनाय प्रस्थितं मत्वा प्रमोदयुक्तमित्यर्थः । अये इति सौजन्यचमत्कारम् । प्रचलितः प्रस्थितः । अन्यतः परस्मिन्[1] देशे ।

सोद्वेगं उन्मादस्य मूर्च्छामरणयोः पूर्वरूपत्वात् सभयमित्यर्थः । उन्मादोपरागः उन्मादरूपं राहुग्रहणम् ।

'उपरागो ग्रहो राहुग्रस्ते त्विन्दौ च पूष्णि च ।'

इत्यमरः ।

"ज्येष्ठस्याभीष्टविरहान्मध्यस्येष्टविघातनात् ।
नीचानां धननाशाद्यैरुन्मादो नाम जायते ॥"

इति लक्षित उन्मादाख्यो भावः । माधवेन्दुं माधवरूपं चन्द्रं, इन्दुत्वारोपा-दुपरागत्वारोपणं च, यथा सकलजगदाह्लादिनः सम्पूर्णमण्डलस्य चन्द्रमसः सैंहिकेयोपघातः सहृदयहृदयसन्तापाय, तथास्योन्माद इति द्योतयितुं, आस्क-न्दति अभिभवति,

'अनवस्थितशय्यास्थोपवेशोत्थितिरोदनैः ।
असत्प्रलापस्खलितकातर्याद्यैः स वर्ण्यते ॥'

इत्युक्तेः, स्वकार्यविजृम्भणे[2]नाक्रामतीत्यर्थः[3] । तातेति देवरात आमन्त्यते, अम्बेति माधवस्य माता । भगवतीति कामन्दकी, परित्रायस्व रक्षेति तस्याः परित्राणसामर्थ्यादुक्तिः । माधवस्येति यस्तव तादृश[4]स्नेहभूमि[5]स्तस्येति ध्वनिना द्योत्यते । अवस्थामुन्मादरूपाम् ।

---

१. 'र्षं) अहो प्रच' क, 'र्षं) प्रच' छ. पाठः. २. '(साकूतं)' झ, '(सावेगं)' क. पाठः. ३. 'रागो माध' क. झ. ञ. पाठः. ४. 'मास्कन्दयति' ट. पाठः ५. 'स्व परित्रायस्व । पश्य' क. झ. ञ, 'स्व माम् । पश्य' ख. ज. पाठः ६. 'माधवावस्थां' क, 'माधवस्यामवस्थां' ख. ग. घ. ङ. पाठः.

---

१. 'अन्यस्मिन् देशे' झ. पाठः २. 'स्वभावविजृ' ख. पाठः. ३. 'नाक्रमतीत्यर्थः' क. ग. ङ. पाठः. ४. 'सदृश' ज. पाठः. ५. 'प्रेमभूमिः' ख. पाठः.

माधवः — धिक् प्रमादः ।

नवेषु लोध्रप्रसवेषु कान्ति-
दृशः कुरङ्गेषु गतं गजेषु ।
लतासु नम्रत्वमिति प्रमथ्य
व्यक्तं विभक्ता विपिने प्रिया मे ॥ २७ ॥

सदृशगुणदर्शनविमोहित आह — धिक् कष्टं, प्रमादः अस्माकमनवधानजनितोऽनर्थः ।

तदेवाह — नवेष्वित्यादि । नवेषु तत्कालविकसितेषु लोध्रप्रसवेषु लोध्रवृक्षपुष्पेषु ।

'नीता लोध्रप्रसवरजसा पाण्डुतामाननश्रीः ।'

इति,

'अभिषिषेणयिषुं भुवनानि यः स्मरमिवाख्यत लोध्ररजश्च यः ।'

इत्यादिभिः शिशिरसम्बन्धित्वेन लोध्रस्य प्रतिपादनेऽपि, अत्र

'आविर्गन्धसिलिन्ध्रलोध्रकुसुमस्मेरा वनानां ततिः ।'

इति, 'नवेषु लोध्रप्रसवेषु कान्तिः' इति च प्रावृषेण्यत्वोक्तिः केषाञ्चिद् वृक्षविशेषाणां वत्सरेऽपि द्विस्त्रिर्वा पुष्पितत्वानुभवात्, कान्तिः लावण्यातिशयः, तस्याः स्मरपाण्डुत्वात्; लोध्रप्रसवग्रहणं 'विशदं कपोलभुवि लोध्ररजः', 'लोध्रद्रुमं सानुमतः प्रफुल्लम्' इत्यादिभिस्तस्य धावल्यप्रसिद्धेः; दृशः दृष्टिव्यापाराः कुरङ्गेषु हरिणेषु; गतं गमनं गजेषु नितम्बादिगौरवाद्यौवनमदनगर्वाच्च लीलालसत्वाच्च; लतासु अशोकलतिकादिषु नम्रत्वं नमनशीलत्वं, स्तनस्तबकावर्जितत्वात्,

'आवर्जिता किञ्चिदिव स्तनाभ्याम्'

इति, 'स्तनाभिरामस्तबकाभिनम्राम्' इत्यादिप्रयोगात्; दृश्यत इति शेषः । इति अनेन हेतुना प्रमथ्य हिंसित्वा व्यक्तं निश्चितं विभक्ता बहुभिरंशीकृता ।

१. 'माध — (द्विपादिकया सर्वतोऽवलोक्य) धिक्' क. पाठः. २. 'कुरङ्गीषु' क. छ. झ. पाठः. ३. 'गजेषु यातम्' क. 'गजेषु यानम्' ख. च. ट. पाठः. ४. 'प्रियास्मिन्' क. पाठः.

१. 'गुणसन्दर्शन' क पाठः. २. 'वत्सरे द्वि' क, 'वत्सरेषु द्वि' ख, 'वत्सरस्य द्वि' ङ. छ. झ. पाठः. ३. 'द्विस्त्रिता पुष्पित' ङ. झ. पाठः.

हा प्रिये मालति !

मकरन्दः —

सुहृदि गुणनिवासे प्रेयसि प्राणनाथे
कथमिह सहपांसुक्रीडनप्रौढसख्ये ।
प्रियजनविरहाधिव्याधिवेगं दधाने
हतहृदय ! विदीर्य त्वं द्विधा न प्रयासि ॥ २८ ॥

---

विपिने इति बन्धुजनविरहान्निवारकाभावः प्रकाश्यते, अचेतनतया तद्गुणापरिज्ञानेन निर्दयत्वं च । मे प्रियेत्यहो ममाधन्यत्वं, सा तावद्विभक्ता अहं तु जीवाम्येवेति ध्वन्यते । अत्रानुमानमलङ्कारः ॥ २७ ॥

विभक्ततां निश्चित्य शोचति — हा प्रिये मालतीति ।

उद्वेलमुन्मादं निरीक्ष्य विषण्ण आह — सुहृदीति विशेषनिर्देशः गुणनिवासे गुणानां विनयमाधुर्यादीनामाधारभूते, प्रेयसि तव नियान्तरेभ्योऽतिप्रिये, प्राणनाथे प्राणानां स्वामिनि, तेषां तदन्वयव्यतिरेकानुविधानात्, सहपांसुक्रीडनप्रौढसख्ये सह समं कृतेन पांसुक्रीडनेन पांसुभिर्मूरेणुभिर्वेदिकादिरूपेण निर्मितेन यत् क्रीडनं विहारः तेन प्रौढं परिणतं सख्यं मित्रभावो यस्मिन् । सख्यमिति यदनेनाशैशवात्सोदरयोरिव प्रवृत्तस्नेहत्वमुच्यते । प्रियजनविरहाधिव्याधिवेगं प्रियस्य जनस्य वल्लभाया विरहेण य आधिः मनःपीडा तद्रूपस्य तन्मूलस्य वा व्याधेर्वेगं रोगस्योज्जृम्भणम् । वेगं दधान इत्यनेनोपर्युपरि विजृम्भणमप्रतीकारत्वात् प्रकाश्यते । हतहृदय! हे नष्टमनः! द्विधा विदीर्य उभयथा भिन्नं भूत्वा, कथमिव न प्रयासि । अत्र हृदयं प्रत्यसूया व्यज्यते । परिकरोऽलङ्कारः ॥ २८ ॥

---

१. 'लति ! (इति मूर्च्छति ।) मक—' क. पाठः. २. 'कथमिव' क. छ. ज ट, 'कथमपि' ज. ब. पाठः. ३. 'व्याधिखेदं' ज. पाठः.

---

१. 'निर्मितेर्येद' ड. ञ. पाठः. २. 'यस्य' ख. पाठः. ३. 'सख्यमि-दिति' ख. ग. ड. छ पाठः. ४. 'विरहे य आधि' क ङ. छ. झ. पाठः. ५. 'स्वं च बोध्यते' क. पाठः.

माधवः[1] — सुलभानुकारः खलु[2] वेधसो निर्माणसन्निवेशः । भवतु । एवं तावत् । (प्रणिपत्य)[3] अयमहं भोः! भूधरार[4]ण्यचारिणः सत्त्वान् विज्ञापया[5]मि । ते[6] मां मुहूर्तमवधा[7]नदानेनानुगृह्ण[8]न्तु भवन्तः!

---

'नवेषु लोध्रप्रसवेष्वि'त्युक्तं प्रतिक्षिपत्युपपत्त्या — सुलभानुकारः सुप्रापोऽनुकारः सदृशतया तत्तदनुसरणं यस्य, खल्विति प्रसिद्ध्यनुभवयोः प्रतिपादनं, गोगवयादिषु तथाभावादिति भावः, वेधसो ब्रह्मण इत्यचिन्त्यशक्तित्वादीश्वरस्यानाश्चर्यत्वमाह, निर्माणसन्निवेशः निर्माणस्य सृष्टेराकारविशेषः । भवतु तथा । तेन प्रियाविभागशङ्का न कर्तव्येति स्वाभिमतं प्रियाजीवितं निर्णीयाह — एवं तावत् इत्थमेव वक्ष्यामीति कर्तव्यपरामर्शः । प्रणिपत्य प्रसादनाय[1] नमस्कृत्य । अयमहमित्यभिनयेन स्वावस्थां प्रदर्शयन्नात्मनो दयाविषयत्वं सूचयति । भो इत्यभिमुखीकरणम् । भूधरारण्यचारिणः पर्वतवनसञ्चरणशीलान्, भूधरारण्यग्रहणं देशस्य वैपुल्येन सत्त्वानामपि बाहुल्यप्रतिपादनार्थम् । सत्त्वान् प्राणिनः । 'सत्त्वोऽस्त्री जन्तुषु क्लीबे व्यवसाये पराक्रमे' इति वैजयन्ती । अविशेषोक्त्या यत्रकुत्रचित् स्थितो यः कश्चिद् यदाकदाचिद् यत्किञ्चित् प्रियासम्बन्धं ज्ञास्यतीति सामान्यतः प्रार्थनं सूचयितुम् । विज्ञापयामि निवेदयामि । प्रणिपातविज्ञापने पूज्यविषये प्रयोज्ये दुःस्थतया सापेक्षत्वाच्च दैन्यं द्योतयितुमिह प्रयुक्ते वेदितव्ये, यथा मालत्या लवङ्गिकायाः पादयोः पतितम् । सत्त्वान् विज्ञापयामीति बहुमानद्योतकः पारोक्ष्य[2]निर्देशः, 'देवः प्रमाणमि'ति, 'यथाज्ञापयति देवः' इत्यादिवत् । ते ये मयार्तेन शरणीकृताः, भवन्तः मान्याः अवधानदानेन यथास्वव्यापारविरमणेन विज्ञाप्यमानेऽर्थे इति प्रस्तुतत्वादैकाग्र्यमवलम्ब्य अनुगृह्णन्तु अनुकम्पन्ताम् ।

---

१. 'माध—(आश्वस्योत्थाय) सुल' क. पाठः. २. 'खलु जगति वेधसो' क. ख. पाठः. ३. '(उच्चैः) अयमहं भोः! (प्रणिपत्य) भूधरा' क. ज. झ. ञ. पाठः. ४. 'रण्यवासिनः' ख. घ. ज. ञ. ट, 'रण्यसञ्चारिणः' छ. पाठः. ५. 'यामि । मुहूर्तं' ज. झ. ञ. पाठः. ६. 'ते, मुहूर्तं' घ. छ, 'तेन मुहूर्तं' ट. पाठः. ७. 'धानेन' घ. पाठः. ८. 'न्तु । भवद्भिः सर्वाङ्ग' क. ङ. पाठः.

---

१. 'प्रसादाय', २. 'परोक्ष' ख. ग. पाठः.

1787

  

भवद्भिः सर्वाङ्गप्रकृतिरमणीया कुलवधू-
रिहस्थैर्दृष्टा वा विदितमथवास्याः किमभवत् ।
वयोवस्थां तस्याः शृणुत सुहृदो यत्र मदनः
प्रगल्भव्यापारश्चरति हृदि मुग्धश्च वपुषि ॥ २९ ॥

कष्टं ! भोः कष्टम् !

विज्ञापनमेवाह — भवद्भिरित्यादि । सर्वाङ्गप्रकृतिरमणीया सर्वेष्वङ्गेषु सर्वैरङ्गैः प्रकृत्या स्वभावतो हृदयङ्गमा । दिव्याङ्गनादिदर्शनेन लक्षणस्यातिव्याप्तिमाशङ्क्य परिहरति — कुलवधूः कुलपालिकेति तस्या अपि सीतादीनामिव परबन्दिग्रहादिकारणेनेहागमनोपपत्तिरिति भावः । इहस्थैः अस्मिन् विपुलोत्तुङ्गे गिरिवनोत्सङ्गे ऋष्यमूक इव स्थितैरिति दर्शनस्य सम्भावितत्वम् । दृष्टा किं वेति सम्बन्धः । अथवा इति दर्शनव्यावृत्तिः, दर्शनं मा नाम भूः, द्रष्टॄणां वचनेन कर्णाकर्णिकयाप्यस्याः सम्बन्धि वृत्तं विदितमभवत् किमिति । पुनरव्यभिचरितलक्षणमाह — वयोवस्थां वयसो जीवनकालस्य विशेषं शृणुत निशमयत । कुलवधूवृत्तान्तः कथमस्माभिरवधीयतामनौचित्यादित्याशङ्क्याह — हे सुहृदः शोभनहृदया इति जितेन्द्रियत्वान्मित्रत्वाच्च भ्रातॄणामिव न कदाचिदनौचितिरिति भावः । यत्र यस्यां प्रगल्भव्यापारः परिणतस्वप्रवृत्तिकः सङ्कल्पादिस्वकार्यसाम्राज्यसम्पादनेन हृदि चरति अनवरतं व्याप्रियते । मुग्धः अपरिणतः, मृदुभूत इत्यर्थः, अत्युदारप्रकृतित्वात् कौमारकानुवृत्तेश्च बहिर्नियन्त्रितस्वकार्यप्रसर इत्यर्थः, अनतिनिर्भरयौवनोपगूढेति यावत् । अथवा रससंरम्भित्वं मनसः सदयोपभोग्यत्वं च वपुषः प्रतिपाद्यते । अप्रस्तुतप्रशंसालङ्कारः, अचेतनेषु चेतनत्वारोपेण व्यवहारात् ॥ २९ ॥

आशाप्रतिघातेन निर्विण्ण आह — कष्टमिति । भोः हे जनाः, इदमयुक्तं पश्यतेति शेषः । वीप्सया क्वचिदन्यत्रेदृशमनुचितमस्माभिर्नानुभूतमिति द्योतयति ।

१. 'ष्टा या विदित' ख. पाठः.

१. 'बन्दिनिग्रहागमनो' ग. पाठः. २. 'कारणेनेहागमनावपत्ति' ख, 'कारणेनेहागमनेऽवपत्ति' ख. छ. झ. पाठः. ३. 'पुनरप्यव्यभि' क. पाठः. ४. 'स्वप्रवृत्तिकः' ज. पाठः. ५. 'नुप्रवृत्तेश्च' क. ख. ग. पाठः.

केकाभिर्नीलकण्ठस्तिरयति वचनं ताण्डवायोच्छिखण्डः
कान्तामन्तःप्रमोदामभिसरति मदभ्रान्ततारश्चकोरः ।
गोलाङ्गूलः कपोलं छुरयति रजसा कौसुमेन प्रियायाः
कं याचे यत्रतत्र ध्रुवमनवसरग्रस्त एवार्थिभावः ॥ ३० ॥

तत्र हेतुमाह — केकाभिरित्यादि । 'केका वाणी मयूरस्य, इत्यमरः । बहुवचनेन पौनःपुन्यं प्रकाश्यते । नीलकण्ठः मयूरः तिरयति अन्तर्हितं करोति । वचनं मदीयविज्ञापनवाक्यम् । ताण्डवाय उद्धतनृत्यं कर्तुं, 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः'(२-३-१४) इति चतुर्थी, उच्छिखण्डः उन्नमितपिच्छभारः । कान्तां प्रियां अन्तःप्रमोदामन्तर्गतहर्षां, तदनुभाव-प्रकाशनाद्, अभिसरति स्वयमभिगच्छति, मदभ्रान्ततारः मधुजनितेन स्मरजनितेन वा मदेन घूर्णिता अक्षिकनीनिका यस्य, [चकोरः] 'चकोरस्तु चलच्चञ्चुरुत्पिबश्चन्द्रिकाप्रियः' इति वैजयन्ती ।

"गोलाङ्गूल इति प्रोक्तः कृष्णवक्त्रस्तु मर्कटः ।"

इति हलायुधः, छुरयति मिश्रयति कौसुमेन नानाविधपुष्पसम्बन्धिना रजसा रेणुना, तस्य परभागशोभाजनकत्वात्, 'विशदं कपोलभुवि लोध्ररजः' इत्यादिवत् । एवं विविधस्वकार्यव्यग्राणामेतेषां मध्ये कं याचे न कश्चिदस्म-द्याच्ञामाद्रियत इत्यर्थः । स्वावस्थयान्यस्याप्यर्थिनोऽवधीरणास्पदत्वमुत्प्रेक्षते — यत्रतत्र यस्मिन्कस्मिंश्चित्, सर्वस्मिन्नित्यर्थः, यदातदा यस्यतस्ये-त्यादिवद् देशे पुरुषे वा विषये । ध्रुवमिति वितर्कद्योतकमव्ययम् । अर्थि-भावः याचकत्वं अनवसरग्रस्त एव अर्थ्यमानस्य पुरुषस्यावज्ञाजनितेना-समयेन ग्रस्तः कबलीकृतः, परिभूत इति यावत्;

'भिक्षुः शिवोऽपि परिभूतिपदं जनस्य'

इत्यादिवचनैः । अथवा तत्र यत्रेति पाठः, तत्र देशे कं याचे यत्रार्थिभावो मदीयोऽनवसरग्रस्त एव वर्तत इत्यर्थः । अत्र स्वभावोक्तिः काव्यलिङ्गम-र्थान्तरन्यासश्चालङ्कारः ॥ ३० ॥

१. 'ताण्डवादुच्छिखण्डः' क. छ. ज. झ. ञ. पाठः. २. 'प्रमोदादभिसरति' क. ज. झ. ञ. ट. पाठः. ३. 'जरयति' ग. घ. पाठः. ४. 'तत्रतत्र' ख. ग. ङ. च. पाठः. ५ 'भावः ॥ अयं च' क. ख. ग. घ. ङ. छ. ज. झ. ञ. पाठः.

१. 'नृत्तं' ज. पाठः. २. 'णां चैतेषां' क. छ, 'णां तेषां' ङ. ज. पाठः. ३. 'परिभूतपदं' ङ. झ. पाठः. ४. 'तत्रयत्रेति' क. ख. ग. पाठः.

(अन्यतोऽवलोक्य)

अयं च —

दन्तच्छदारुणिमरञ्जितकान्तदन्त-
मुन्नाम्य चुम्बति बलीवदनः प्रियायाः ।
काम्पिल्यकप्रसवपाटलगण्डपालि
पाकारुणस्फुरितदाडिमकान्ति वक्त्रम् ॥ ३१ ॥

अन्यतोऽवलोक्य । अयं च — दन्तच्छदेत्यादि । दन्तच्छदस्य अधरस्यारुणिम्ना रक्ततया ताम्बूलरागेणेव रञ्जिता रूषिताः । कान्ताः स्निग्धधवलसूक्ष्मनिशितनिर्विवरतया रमणीया दन्ता दशना यस्य । उन्नाम्य अग्रहस्तेनोर्ध्वीकृत्य । बलीवदनः बलीमुख इति रक्तमुखो हेमवर्णः कपि-विशेष इष्यते ।

'काम्पिल्यः कर्कशश्चन्द्रो रक्तांशो रोचनीत्यपि ।'

इत्यमरः । काम्पिल्यस्य प्रसवः पुष्पं तद्वत् पाटला गण्डपालिः कपोलस्थली यस्य, 'श्वेतरक्तस्तु पाटलः' इति वैजयन्ती । पाकारुणस्फुरितदाडिमकान्ति कालपाकतया अरुणं रक्तवर्णं स्फुरितं विकसितं रवि-करदीपितं वा दाडिमपुष्पमिव कान्तिर्यस्य, अर्थात् कपोलव्यतिरिक्ते प्रदेशे । 'करको दाडिमी त्रयी' इति वैजयन्ती । अयं चेति नीलकण्ठादिभिः समुच्चिनोति । अत्र स्वभावोक्तिरलङ्कारः ॥ ३१ ॥

---

१. 'तदन्तमालं' ज. पाठः. २. 'मुन्नम्य' क. ख. ज. झ. त्र. पाठः. ३. 'कम्पिल्लक' क. झ. त्र. पाठः. ४. 'स्फुटितदाडिम' क.

---

१. 'विलोक्य' झ. पाठः. २. 'इत्यमरः' क. पाठः.

अये! अयं च रोहिणानोकहस्कन्धविश्रान्तकन्धरः करी ।
अत्राप्यनवसरः ?

कण्डूकुड्मलितेक्षणां सहचरीं दन्तस्य कोट्या लिखन्
पर्यायव्यतिकीर्णकर्णपवनैराह्लादिभिर्वीजयन् ।
जग्धार्धैर्नवसल्लकीकिसलयैरस्याः स्थितिं कल्पयन्
धन्यो वन्यमतङ्गजः परिचयप्रारम्भमभ्यस्यति ॥ ३२ ॥

पुनरन्यतो विलोक्याह—अये इति तस्य स्वस्येव शृङ्गाररसिकतया हर्षं द्योतयति । अयं चेति पूर्वोक्तैः समुच्चिनोति । रोहिणानोकहश्चन्दनवृक्षः तस्य शैत्यातिशयात् स्कन्धे प्रकाण्डे देशे विश्रान्ता न्यस्तभारतया श्रमरहिता कन्धरा कण्ठकाण्डं यस्य, करी गजः, वर्तत इति शेषः । अत्रास्मिन्, अपिशब्दो बलीवर्दनवदिति द्योतयति । अनवसरः अस्मद्विवक्षितस्यासमयः ।

तत्र हेतुः—कण्डूकुड्मलितेत्यादि । 'कण्डूः खर्जुश्च कण्डूयः' इत्यमरः । कण्ड्वा हेतुभूतया कुड्मलिते, अर्थाद् दन्तकोटिलेखनसुखानुभूत्या मुकुलिते ईक्षणे नयने यस्याः । सहचरीं क्षणमपि विरहासहां प्रियामिति विशेषणेनैव विशेष्यं सिद्ध्यति, दन्तस्य न पुनर्दन्तयोरित्यनेन परस्परसंश्लिष्टपार्श्वयोर्द्वयोर्घटितमुखत्वेन स्थितिः सूच्यते, कोट्या अग्रेण लिखन् कण्डूयमानः । लिखन्निति नखविलेखनपदव्यथनेन यथासुखं कण्डूयनं व्यज्यते । पर्यायव्यतिकीर्णयोः क्रमवलितयोः कर्णयोः पवनैराह्लादिभिर्मृदुशिशिरतया प्रमोदनशीलैः वीजयन् तालवृन्तकृत्यमनुतिष्ठन् । जग्धार्धैः स्वयं चर्वितैकदेशैरिति स्वादिष्ठं स्वादिष्ठं निरूप्येति द्योत्यते, नवैः सल्लक्याः पल्लवैः, 'सल्लकी तु गजप्रिया' इत्यमरः, अस्याः सहचर्याः स्थितिं शरीरस्थितिं भुक्तिमित्यर्थः कल्पयन् सम्पादयन् । शतृत्रयं हेतौ । धन्यः

१. 'एष प्रियतमास्कन्धविश्रान्तकरो रोहिण' क, 'अये रौहि' ख, 'अयं च रौहि' ग. ङ, 'अयं एव च रौहि' घ, 'अयं च रोहिण' झ. ज, 'एष प्रियतमास्कन्ध' झ. ञ. पाठः. २. 'करः करी' छ. झ. ञ, 'कण्ठः करी' ज. पाठः. ३. 'कथमत्राप्यनवसरः' क. ख. ग. घ. च. छ. ज. झ. ञ. पाठः. ४. 'णामनुचरीं' क. पाठः. ५. 'प्रागल्भ्यं' क. ज. झ. ञ. पाठः. ६. 'ति ॥ अयं' क. पाठः.

(अन्यतो विलोक्य)

अयं तु —

नान्तर्वर्तयति घनस्तु जलदेष्वामन्द्रमुद्गर्जित-
श्वासन्नात् सरसः करोति कवलानावर्जितैः शैवलैः ।
दानज्यानिविषादमूकमधुपव्यासङ्गदीनाननो
नूनं प्राणसमावियोगविधुरस्स्तम्बेरमस्ताम्यति ॥ ३३ ॥

---

भाग्यशालीत्यनेन केवलमहमेवाधन्य इति व्यतिरेकेण द्योत्यते । धन्यत्वे हेतुः— वन्यमतङ्गज इति वन्यः वने भव इति निर्यन्त्रणविलसितत्वं ख्याप्यते,

"सस्मार वारणपतिः परिमीलिताक्ष-
मिच्छाविहारवनवासमहोत्सवानाम् ।"

इत्युक्तेः । मतङ्गजः मतङ्गाद्रौ जायत इति योगरूढ्या गजः, 'सप्तम्यां जनेर्डः' (३-२-९७), परिचय आवर्जनं तस्य प्रारम्भमुपक्रमं अभ्यस्यति आवर्तयति । अभ्यस्यतीत्यनेन कलभत्वात् नवप्रवृत्तसम्भोगत्वमाह । अत्र हर्षाख्यो भावः, सम्भोगशृङ्गारश्च प्रतीयते । स्वभावोक्तिरलङ्कारः ॥ ३२ ॥

तुः पूर्वस्माद्व्यावृत्तौ ।

नान्तरित्यादि — अन्तः कण्ठकुहरे, अन्तरित्यनेनामर्षादुद्विग्नत्वं, प्रभुत्वाद् बहिः प्रवृत्तिश्च द्योत्यते । वर्तयति प्रवर्तयति । आमन्द्रं ईषद्गम्भीरं उद्गर्जितं स्वत उदात्तं गर्जितं आसन्नात् सविधवर्तिन इति सुकरत्वेऽप्यौदासीन्यं प्रकाश्यते । आवर्जितैः आहृतैः । 'शैवलो जलशूकः स्यात्' इति वैजयन्ती । स्तम्बेरमः गजः, 'स्तम्बकर्णयो रमिजपोः' (३-२-१३) इत्यप्, 'हस्तिसूचकयोरिति वक्तव्यमि'ति हस्तिन्यभिधेये 'तत्पुरुषे कृति बहुलम्' (६-३-१४) इत्यलुक् । ताम्यति ग्लानौ वर्तते ॥ ३३ ॥

---

१. 'अन्यतोऽवलोक्य' झ. ञ. पाठः. २. 'च' छ. पाठः. ३. 'नासन्नाद्' ख. ग. घ. ङ. च. छ. ज. झ. ञ. पाठः. ४. 'कवलान्यावर्तितैः' क. पाठः. ५. 'शीकरैः' क. पाठः ६. 'सङ्गलीनाननो' ञ. पाठः.

---

१. 'एषविलासि' ख. पाठः.

[1]अलमने[2]नायासि[3]तेन । एष सानन्दसहचरीस[1]माकर्ण्यमानमधुर-[4]गम्भीरकण्ठगर्जितध्वानिर[5]परो मत्त[6]मातङ्गवर्गपालः प्रत्यग्रविकसितकदम्ब-[7]संवादिसुरभिशीतला[8]मोदबहलसङ्गलितमांसलकपोलनिष्यन्द[9]कर्दमित-

स्वयमनुभूतविरहवेदनतया तस्य समानव्यसनस्य दयते — अलमिति प्रतिषेधे, आयासितेन प्रश्नादिभिः कदर्थितेन । 'प्रकृत्यादिभ्य उपसङ्ख्यानम्' (वा. २-३-८) इति तृतीया, अस्यायासो मास्म भूदित्यर्थः । अन्यतो विलोक्य सबहुमानमाह — एष इत्यादि । सानन्दया तच्छ्रवणादाह्लादितया सहचर्या समाकर्ण्यमान उत्तम्भितकर्णवालीकं सादरं श्रूयमाणो मधुरश्चारुरूपत्वाद् गम्भीरो महत्त्वाच्च कण्ठगर्जितध्वनिः कण्ठकुहरे कुहूकुहूकारेण वर्तमानः स्तनितशब्दो यस्य अपरः पूर्वस्माद् दुःखितादत्यन्तविलक्षणः मत्तः प्रवृत्तमदः, 'निर्वृतिर्हि मनसो मदहेतुः' इत्युक्तक्रमेण निर्वृतत्वात्, मातङ्गवर्गस्य गजयूथस्य पालो रक्षिता, गजेन्द्र इत्यर्थः । प्रत्यग्रविकसितैः तत्कालप्रफुल्लैः कदम्बकुसुमैः संवादिना सदृशीभवनशीलेन । 'विकचकदम्बसंवादिमधुरसौरभभरितभुवनं' इति हर्षचरिते । तत्र हेतुः — सुरभिशीतलामोदबहलेनेति सुरभिणा घ्राणतर्पणेन शीतलेनानुग्रहेणामोदेन परिमलेन बहलः सान्द्रो यस्तेन सङ्गलितेन सम्यगनवरतं प्रवृत्तेन मांसलेन घनेन कपोलनिष्यन्देन करटतटस्फुटनक्षरितेन मदजलनिर्झरेण कर्दमितं

१. 'अलमलमनेन' ञ. पाठः. २. 'नाप्यायासितेन' ञ. पाठः. ३. 'तेन । अन्यतः सञ्चरामि । (विलोक्य) एष' क, 'तेन । (सहर्षं) एष' छ, 'तेन । (सानन्दं) एष' ज. पाठः. ४. 'गम्भीरगर्जित' छ. पाठः. ५. 'परोऽपि मत्त' छ. ज. पाठः. ६. 'मातङ्गयूथपालः' क. छ. झ. ञ. पाठः. ७. 'सञ्जातसुरभि' क. झ. ञ, 'संवादितसुरभि' च. पाठः. ८. 'मोदबहुलसंवलित' क. ज, 'मोदमांसल' छ. पाठः ९. 'कर्दमकषाय' घ. च. छ. ट. 'कर्दमिततीरं समुद्धूतकमलिनी' ञ, 'कर्दमितकरटः समुद्दामित' झ. पाठः.

१. 'आकर्ण्यमान' झ. पाठः.

कषायमुद्दलितकमलिनीषण्डविप्रकीर्णकमलकेसरमृणालकन्दलाङ्कुरमनवरतप्रवृत्तकमनीयतालताण्डवप्रचलकर्णजर्जरितजलतरङ्गविततनीहारमुत्रस्तकुररसारसं सरोऽवगाह्य क्रीडति। भवत्वेनमाभाषे। महाभाग नागपते!

पङ्किलीकृतं, कलुषितमित्यर्थः; उद्दलिताडुन्मूलितात् कमलिनीषण्डात् पद्मिनीसमुदायाद् विप्रकीर्णानि इतस्ततो विक्षिप्तानि कमलिनीकेसराणि तत्किञ्जल्कानि मृणालानि बिसवलयानि कन्दलाः पत्रोद्गमाः अङ्कुराः अतिबालानि मुकुलानि च यस्मिन् , अनवरतप्रवृत्तेन अविच्छिन्नप्रवृत्तेन कमनीयतालेन मनोहरशब्दमानलयेन ताण्डवेनोद्धतनृत्तेन प्रचलाभ्यां कर्णाभ्यां जर्जरितेषु ताडितत्वात् शकलितेषु जलतरङ्गेषु सलिलवीचिषु विततो विस्तृतो नीहारो हिमानी यस्मिन् । नीहारशब्देन सूक्ष्मशिशिरविमलबहलतया सलिलशीकरनिकरोऽतिशयोक्त्याध्यवसीयते । उत्रस्ताः अतिशयेन भीताः कुरराः सारसाश्च यस्मिन्नित्येतानि तत्कालविशेषणानि । एवं यथातथेति क्रीडनक्रियाविशेषणानि वा ।

'क्रौञ्चस्तु कुञ्चोत्क्रोशः कुररो मत्स्यनाशनः',

'सारसो मैथुनी कामी' इति,

'आधारस्तु तटाकोऽस्त्री कासारः सरसी सरः'

इति वैजयन्ती । अवगाह्य प्रविश्य क्रीडति रमते । भवत्विति तस्य धन्यत्वानुमोदनम् । एनमिति निर्वृततया निश्चितत्वात् प्रश्नाद्यवकाशः

१. 'खण्ड' क. ज. झ. ञ. पाठः. २. विकीर्ण' ङ. छ, 'प्रकीर्ण' ज. पाठः. ३. 'पर्णकमलकेसर' क. झ. ञ, 'र्णकेसर' ख. घ. ज. पाठः. ४. 'लबिसकन्द' झ. ञ. पाठः. ५. 'कन्दकोमलाङ्कुर' क. झ. ञ, 'कन्दाङ्कुर' ख. घ. च. ज. पाठः. ६. 'रमाहरन् अन' क, 'राकरमन' च, 'रप्रकरमन' छ, 'रनिकरमन' ज. झ. ञ. पाठः. ७. 'यकर्णताल' ङ. ज. झ. ञ. पाठः. ८. प्रचलितकर्ण' ग. घ. ङ, ९. 'चलितजर्ज' छ, 'चलजर्ज' झ. ञ. पाठः १०. 'ततरलतरङ्ग' छ. ज. पाठः. ११. 'ननीहार' ट. पाठः. १२. 'हारसमुद्भ्रस्त' छ. पाठः, १३. 'विहरति' क. झ. ञ. पाठः. १४. 'भवत्वेवमाभाषे' क, 'भवत्वेतावदाभाषे' घ, 'भवत्वाभाषे' छ. झ. पाठः १५. 'भाषे। नागपते!' क, 'भाषे। हा नागपते!' छ. पाठः,

१. 'विकीर्णानि' क. पाठः.

श्लाघ्ययौवनः खल्वसि । कान्तानुवृत्तिचातुर्यमप्यस्ति भवतः । साप-
वादं तु —

लीलोत्खातमृणालकाण्डकवलच्छेदेषु सम्पादिताः
पुष्प्यत्पुष्करवासितस्य पयसो गण्डूषसङ्क्रान्तयः ।
सेकः शीकरिणा करेण विहितः कामं विरामे पुन-
र्न स्नेहादनरालनालनलिनीपत्रातपत्रं धृतम् ॥ ३४ ॥

प्रतीयते । आभाषे चाटुवचनैरभिमुखीकरोमि, 'समाभाष्येदमब्रवीत्', 'कति समासाद्य सादरं' इत्यादिवत् । महाभाग ! भाग्यशालिन्, नागपते ! गजयूथनाथ, श्लाघ्ययौवनः सहृदयचमत्करणीयतारुण्यः। खलुरवधारणे विशिष्टसम्भोगफलत्वात् यौवनस्य, तत्रापि न केवलं पशुचेष्टया प्रवृत्तिः, किन्तु वैदग्ध्यात् सरसत्वापादने(ने)त्याह, कुसुमसधर्माणां योषितामुपलालनविधेयत्वात् । कान्तानुवृत्तिचातुर्यं प्रियायाः करिण्याः अनुवृत्तौ चित्तानुसरणे चातुर्यं चतुरस्य विदग्धस्य भावः । तत्र विशेषमाह—सापवादं त्विति । तुर्विशेषे. अपवादः सूक्ष्मदृष्टेर्वचनीयत्वं, तत्सहितं चातुर्यमित्यर्थः ।

तत्र हेतुमाह— लीलोत्खातेत्यादि । लीलोत्खातैः विलासेनोन्मूलितैः मृणालकाण्डैर्बिसदण्डैः, 'आस्वादवद्भिः कवलैस्तृणानां' इत्यादिवत् ये कवलाः ग्रासाः, अर्थात् स्वेन तस्याः संपादितास्तेषां छेदेषु चर्वणावसानेषु पुष्प्यद्भिः विकसद्भिः, 'पुष्प विकासे' इति धातुः श्यनविकरणी, पुष्करैः पद्मैर्वासितस्य परिमलितस्य पयसो जलस्य गण्डूषाः स्वमुखनिवेशिता अंशाः तेषां सङ्क्रान्तयस्तस्या मुखे समर्पणानि ।

'ददौ सरःपङ्कजरेणुगन्धि गजाय गण्डूषजलं करेणुः' ।

इत्युक्तत्वात् । सेक आर्द्रीकरणं मध्याह्नतापशमनाय, शीकरिणा जलबिन्दुवर्षणशीलेन, विहितः अनुष्ठितः । काममित्यवधारणे, एतत्सर्वं समीचीनमेवेत्यर्थः । वाक्यद्वयेन चातुर्यं समर्थितम् । सापवादत्व-

१. 'श्लाघनीयः खल्वसि' छ. पाठः. २. 'चातुर्यमहित' च. छ. 'चातुर्यं भवतः । किन्तु सापवादं' झ. ञ. पाठः. ३. 'तः । लीलो' छ, 'तः । (सापवादं) लीलो' ज. पाठः. ४. 'दल' ट. पाठः. ५. 'पुष्यत्' क. ख. ज. झ. ञ, 'पुण्याः पुष्कर' च. ट. पाठः. ६ 'वत् स्नेहा' ख. पाठः.

१. 'सर्पणानि' क. ख. ग. छ. झ. पाठः २. 'ददौ रसात् पङ्कज' ग. छ. झ, पाठः. ३. 'इत्युक्तवत्' क. ख. पाठः.

कथमवधीरणा नीरसं व्रजति । हन्त ! मूढ एवास्मि यदस्मिन् वनचरे वयस्यमकरन्दोचितं व्यवहरामि । हा प्रियवयस्य मकरन्द !—

धिगुच्छ्वसितवैशसं मम यदित्थमेकाकिनो
विशेषरमणीयवस्त्वनुभवाद्यथाभाविनः ।

मिदानीं समर्थयति — विरामे सेकावसाने, पुनःशब्दो व्यावृत्तौ, अरालनालनलिनीपत्रातपत्रं अकुटिलितदण्डमिति धारणयोग्यत्वमाह, पद्मिनीदलरूपं छत्रं न धृतं हस्तेन तस्या मूर्ध्न्यातपनिवारणाय, हस्तोऽप्यस्ति, नलिनीपत्रमपि समीपे वर्तते, आतपबाधापि तस्या विद्यते, स्नेहोऽपि तस्यामुद्वेलो भवतः; तथाप्येवं न कृतं इति सहृदयानामपवदितुमवकाशो दृश्यत इति सुहृद्बुद्ध्या सपरिहासं वचनम् । अत्र काव्यलिङ्गमलङ्कारः, सापवादचातुर्ययोर्वाक्यार्थतया प्रतिपादनात् ॥ ३४ ॥

कथमित्याश्चर्ये, स्वेन प्रियसुहृत्तया कल्पिते तस्मिन् नीरसत्वस्यानाशङ्कितत्वात् अवधीरणा नीरसं मदुक्तावज्ञया शुष्कं निरस्तस्नेहं व्रजति स्वेच्छयान्यतो गच्छति । ततो निर्विण्ण आह—हन्तेति विषादे । मूढः योग्यायोग्यविवेकशून्यः । यद् यस्माद्, अस्मीति मदवशादर्धनिमीलितलोचनत्वादिकं दुर्विलसितशतमभिनयेन निर्दिशति, वनचर इति सज्जनसंसर्गवन्ध्यत्वं ध्वनति, वयस्यमकरन्दोचितं सुहृदि मकरन्दे यदुचितं युक्तं तथेत्यर्थः, व्यवहरामि आचरामि । तस्मान्मूढ एवास्मीति सम्बन्धः । उन्मत्तोऽपि सन् मत्तहस्तिवृत्तान्तेन प्रसङ्गतो मकरन्दस्य स्मारित आह—हेति ।

उन्मादकल्माषितस्मृतित्वाद् सन्निहितमेव तं मन्वान आह—धिगुच्छ्वसितेत्यादि । उच्छ्वसितवैशसं प्राणसन्धारणरूपं दुःखानुभवं, 'शसु हिंसायां' इत्यस्माद्विपूर्वादचि विशस इति रूपं, स्वार्थे तद्धितः; विशिष्टा हिंसेत्यर्थः ।

'विधिना कृतमर्धवैशसं ननु मां कामवधे विमुञ्चता ।'

१. 'योऽस्मिन्' क. ख. घ. च. ज. झ. ञ. ट. पाठः. २. 'वनेचरे' क. झ. पाठः. ३. 'व्याहरामि' छ. ज. पाठः. ४. 'हा वयस्य ! धिगु' क. पाठः. ५. 'धिगेव रमणीय' क. ज. झ. ञ. 'विरोधिरमणीय' छ. पाठः. ६. 'यतां त्वदनुभावभावादते । त्वया' क. झ. ञ. पाठः.

१. 'मपहसितुं' ख. पाठः. २. 'दुर्विलसितमभि' क. पाठः. ३. 'वर्जितत्वं' ख. ग. ञ. पाठः.

त्वया सह तया न यः स दिवसोऽपि विध्वंसतां
प्रमोहमृगतृष्णिकां धिगपरत्र या मानुषे ॥ ३५ ॥

इत्यादिप्रयोगात्। 'धिगुपर्यादिषु' (वा० १-४-४८) इत्यादिना धिग्योगे द्वितीया। ममेति यः स्वप्नेऽपि त्वया क्षणमविरहितस्तस्य ममेति द्योत्यते। तदित्याक्षिप्यते। यदेकाकिनः युवयोः साहचर्यरहितस्य इत्थमनेन प्रकारेण युष्मद्विरहदुःखतप्ततया यद्वर्तते तदित्यर्थः, मरणमेव वरं न पुनरीदृशं जीवनमिति भावः। तत्र हेतुः—विशेषरमणीयवस्त्वनुभवाद् अतिशयेन हृदयङ्गमानां वस्तूनां, गिरिसरिदरण्यगोचराणां पदार्थानां प्रत्यक्षीकरणात्, वृथाभाविनो व्यर्थीभवनशीलाद्धेतोर्युवाभ्यां सहानुभव एव रमणीयानां रमणीयता, अन्यथा प्रत्युत सन्तापकारित्वमेवेति भावः। कालवशाज्जायमाने विरहे कथमुच्छ्वसितं जुगुप्स्यत इत्यत्राह त्वयेति। मकरन्देति सम्बोध्य त्वयेत्युक्तौ तया च सहेत्युक्तिः अङ्गिनो नायिकायाः सदानुसन्धीयमानत्वादित्यवगन्तव्यम्। त्वया तया मालत्या च सह यो नानुभूयते स दिवसोऽपि विध्वंसतां अत्यन्ताभावमनुभवतु। अतस्तन्मूलो विरहोऽपि न भविष्यतीति भावः। प्रमोहमृगतृष्णिकां अयं मे सुहृद्, इयं मे प्रियेत्यन्यथाज्ञानरूपां मरीचिकां, मरीचिकात्वारोपणं जलबुद्ध्या विलुभितस्य तृषितस्य मरुधरणिपतितासु मध्याह्नमिहिरमरीचिकावीचिकासु सुधाप्रवृत्तिरिव. ममापि वनचरेषु गन्धसिन्धुरादिषु बन्धुबुद्धिबन्धनमिति द्योतयति। अपरत्र युष्मद्व्यतिरिक्ते मानुषे मनोः प्रजापतेः स्वायम्भुवस्यापत्यवर्गे, प्राणिजाते इत्यर्थः। 'मनोर्जातावञ्यतौ षुक्च' (४-१-१६१) इति षुक्च।

"तपस्तप्त्वासृजद्यं तु स स्वयं पुरुषो विराट्।
तं मां वित्तास्य सर्वस्य स्रष्टारं द्विजसत्तमाः ॥"

इति मनुवचनात् मानुषशब्दः प्राणिमात्रोपलक्षणः, गजादिविरक्तस्योक्तित्वात्, अपरत्र मानुषे या भवति तां प्रमोहमृगतृष्णिकां धिगिति सम्बन्धः। अत्र सुहृद्गतो भावः प्रकाश्यते। अप्रस्तुतप्रशंसालङ्कारः ॥ ३५ ॥

१. 'सह न यस्तया च दिवसः स विध्व' क. छ. ज, 'सह न यस्तया स दिवसोऽपि. ब, 'सह न याति योऽत्र दिवसोऽपि स ध्वं' झ. ब. पाठः. २ 'प्रमोदमृग' क. ज' झ. ञ. पाठः. ३. 'रत्र वा मानुषे' ङ. छ. ज, 'रत्र या जायते' झ. ब, 'रत्र यामो वयम् ॥' ट. पाठः

**मकरन्दः**—अये उन्मादमोहान्तरितोऽपि[1] मां प्रति कुतश्चिद्[2] व्यञ्जनात् प्रबुद्ध एवास्य सहजस्नेहसंस्कारः। तदसन्निहितमेव मां मन्यते। ([3]पुरतः स्थित्वा) एष पार्श्वचर एव ते[4] स मकरन्दो मन्दभाग्यः।

[5]**माधवः**—(समालोक्य) हा! प्रियवयस्य[6] मकरन्द! सम्भावय परिष्वजस्व माम्। प्रियां तु मालतीं प्रति निराशः[7] संवृत्तोऽस्मि[8]।

[9]**मकरन्दः**—(सहर्षं[10]) एष सम्भावयामि जीवितेश्वरम्। (विलोक्य सकरुणं) हा[11] कष्टम्! आविर्भूतमत्परिष्वङ्गोत्कण्ठ एव निश्चेतनः संवृत्तः।

---

अये इति हर्षे, उन्मादमोहान्तरितः उन्मादजनितेन वैचित्त्येन तिरस्कृतः, मां प्रति मामुद्दिश्य, 'प्रतियोगेषु च दृश्यते' इति द्वितीया, कुतश्चित् कस्माच्चिद्, द्विरदवृत्तान्तादेरित्यर्थः, व्यञ्जनात् व्यज्यतेऽनेन प्रकाश्यत इति व्यञ्जनं निमित्तं, तस्माद्धेतोः, प्रबुद्धः उन्मीलितः सहजः स्वाभाविको मनसि स्थितः स्नेहसंस्कारः प्रेमवासना। तत् तस्मात् कारणात् असन्निहितं परोक्षदेशगतं मन्यते अवगच्छति, 'उच्छ्वसितवैशसं मम यदित्थमेकाकिनः' इत्याद्युक्तेरिति भावः। पुरतः अग्रतः। एष इति सन्निधिं द्योतयति, पार्श्वचरः समीपे वर्तमानः, स यस्त्वयानुस्मृत्य प्रस्तुतः, मन्दभाग्यः ईदृशीं तव दशां द्रष्टुं स्वल्पपुण्यतयाद्यापि जीवन्नित्यर्थः।

पुरतः स्थितेत्युक्तेश्च फलमाह—समालोक्येति। हेति मुहूर्तादर्शनजनिते विषादे। सम्भावय सम्मानय। सम्माननप्रकारमाह—परिष्वजस्व आलिङ्गेति। तुर्यावृत्तौ, 'त्वया सह न यस्तया चे'ति सहगणितयोर्मध्ये त्वमपि तावद्दिष्ट्या दृष्टः, प्रियां मालतीं प्रति तु निराशो निरस्तदर्शनाशः, एतावता कालेन वार्तामात्रस्याप्यश्रवणादिति भावः।

सहर्षमिति स्वाभिलषितस्यैव तेनापि प्रार्थितत्वाद्धर्षसहितम्। सम्भावयामि परिष्वजे इत्यर्थः, जीवितेश्वरमिति प्राणानां स्वामिनं, तदन्वयव्यतिरेकानु-

---

१. 'पि सम्प्रलयं मां प्रत्यप्रतिकूलः। यतः कुत' क. पाठः. २. 'व्यञ्जकात्' क. ज. झ. ञ. पाठः. ३. 'पुरः स्थित्वा' क. ख. ग. घ. झ. ञ. पाठः. ४. 'ते मक' क. छ. झ. ञ. पाठः. ५. 'माध—प्रिय' क. झ, 'माध—(आलोक्य) प्रिय' ख, 'माध—हा प्रिय' छ. ज. ञ. पाठः. ६. 'स्य सम्भा' क. छ. ज. झ. ञ. पाठः. ७. 'शः परिश्रान्तोऽस्मि' क. झ. ञ, 'शः एव सं' ज. पाठः. ८. 'स्मि। (इति मूर्च्छति।) मक—' क. झ. ञ, पाठः. ९. 'मक एवं सं' क, 'मक—एषोऽहं' ज. पाठः. १०. '(सानन्दं)' छ. पाठः. ११. 'हा कष्टम्! कथमाविर्भूत' ख. ग. घ. ङ, 'कथमाविर्भूत' छ, 'कष्टम्! कथमाविर्भूत' ञ. पाठः.

तत्कृतमिदानीमाशाव्यसनेन । सर्वथा नास्ति मे वयस्य युक्तः परिच्छेदः । हा वयस्य !

यत् स्नेहसञ्ज्वरवता हृदयेन नित्य-
मावद्धवेपथु विनापि निमित्तयोगात् ।
त्वय्यापदो गणयता स्वयमन्वभावि
तत्सर्वमेकपद एव मम प्रशान्तम् ॥ ३६ ॥

---

विधानाज्जीवितस्य । सकरुणं सशोकम् । आविर्भूतमत्परिष्वङ्गोत्कण्ठः प्रकाशिता ससम्भ्रमभुजम् । तत् इदानीमन्यस्यां दशायां दृष्टायां, आशाव्यसनेन प्रियवयस्यः कालेन स्थिरचित्तो भविष्यतीत्य(भिधानेनेन)रूपेण निबन्धेन दुःखेन वा । तत्र हेतुः—सर्वथा सर्वेण प्रकारेण, मालत्या अदर्शनादस्य दशया कालस्योद्दीपनतयेत्येवमादिभिः समस्तैः प्रकारैः, नास्ति न जीविष्यतीति 'वर्तमानसामीप्ये वर्तमानवद्वा' (३-३-१३१) इति लट् । युक्तः उपपन्नः परिच्छेदः निर्णयः ।

तदभावं निर्णीय परिदेवयते—यत् स्नेहेत्यादि । स्नेहसञ्ज्वरवता स्नेहावेगसंसारदुःखजनितत्वात् महारोगेण नित्ययुक्तं यत् तेन, नित्ययोगे मतुप्, हृदयेन मनसा आबद्धवेपथु समन्तात् संश्लिष्टकम्प यथा निमित्तयोगात् कारणसम्बन्धाद्विनापि सुरक्षिततया प्रभुत्वाच्च सम्भावनीयव्यसनहेतुविरहेऽपीत्यर्थः । 'पृथग्विने'(२-३-३२)त्यादिना पञ्चमी । त्वय्यधिकरणे, आपदो व्यसनानि, बहुवचनेन शङ्काया वैविध्याच्छङ्कनीयानामापदामपि वैचित्र्यं प्रकाशयति, शङ्कमानेन स्वयं प्रकृत्या स्वेन वा अन्वभावि एतावन्तं कालं अनुभूतं तच्छङ्काजनितदुःखं सर्वं कृत्स्नं एकपदे एकस्मिन् पदन्यासे एकपदन्यास इत्यर्थः । प्रशान्तं प्रकर्षेण समाप्तं, शङ्कितस्य प्राप्तौ शङ्कमानावस्थादुःखस्य

---

१ 'किमिदानीं' क, 'किमिदानीमाशासेनेन' ख, 'किमिदानीमाशासनत्वेन' च पाठः. २. 'दानीमाश्वासेन' छ, 'दानीं जीविताशा' ज. ञ, 'दानीमाशानिबन्धनेन' ट. पाठः. ३. 'सर्वथैव मे नास्ति वयस्य इति युक्तः परिच्छेदः' क. ग. झ. ञ, 'सर्वथाथ नास्ति मे' च. पाठः. ४. 'मे जीविष्यति इति युक्तः परिच्छेदः' ट., 'मे प्रियवयस्य इति युक्तः परिच्छेदः' छ. ज. पाठः. ५. 'तत् स्नेह' क. पाठः ६. 'त्वद्व्यापदो' झ. ञ. पाठः. ७. 'भयमन्वभावि' क. ख. घ. च. ज. झ ञ पाठः. ८. 'प्रणष्टं' ज. पाठः.

---

१. 'धाने रूपेण' ख. ग. ङ ज. झ. पाठः २. 'पदविन्यासे' क. पाठः. ३. 'मानदुःखस्य' ग. पाठः

सखे! वरं त एवातिक्रान्ता मुहूर्ताः, तथाविधमपि भवन्तं येषु चेतयमानमनुभूतत्वात्। इदानीं तु मम—

भारः कायो जीवितं वज्रकीलः।

काष्ठाः शून्या निष्फलानीन्द्रियाणि।

अवस्थानं सिद्धमेव, यथा झटिति पटु रटति जलधरपटले स्फुटमशनिः शनैर्मम शिरसि पतिष्यतीति शङ्कमानस्य पतिते तस्मिंस्तद्दुःखानुवृत्तिरेवेति भावः। 'बहुदुःखो निर्दुःखः' इति लोकवादं चानुसन्धत्ते। अत्रावेगो ध्वन्यते। अतिशयोक्तिरलङ्कारः॥ ३६॥

वरं ईषत्प्रियम्, 'दैवाद् वृते वरः श्रेष्ठे त्रिषु क्लीबे मनाक्प्रिये' इत्यमरः, अतिक्रान्ताः अपनीताः, मुहूर्ताः

'अष्टादश निमेषा स्युः काष्ठा त्रिंशत् तु ताः कलाः।
तास्तु त्रिंशत् क्षणस्ते तु मुहूर्तो द्वादशास्त्रियाम्॥'

इति लक्षितावयवरूपाः कालांशाः, येषु मुहूर्तेषु तथाविधमुन्मादेन पशुवद्यथातथं चेष्टमानं, अपिर्विरोधे, तथाविधस्यापि वस्तुतोऽसत्त्वात्, चेतयमानं जानानं, विशेषविज्ञानाभावे विज्ञानसामान्यस्य पशुवद्विद्यमानत्वात् काष्ठलोष्टसदृशावस्थातो वरमित्युक्तिः, 'चिती संज्ञाने' इति धातुः, अनुभूतत्वात् प्रत्यक्षीकृतत्वात्। इदानीमस्मिन् काले, तुर्विशेषे।

भारः काय इत्यादि—भारः दुर्बलस्य दुर्वहं वस्तु कायः शरीरं, जीवितं प्राणाः वज्रकीलः वज्राख्यरत्नकृतः कीलोऽग्निः, तस्य लोहाद्यभेद्यतया वज्रग्रहणं, 'वज्रपञ्जरमिति शरणागते'रित्यादिवद् अतिदृढमन्तःशल्यमित्यर्थः। काष्ठा दिशः शून्याः सर्वबन्धुराहित्येन निर्जनवनतुल्याः; [इन्द्रियाणि] निष्फलानि शोभनरूपमधुरशब्दादिदर्शनश्रवणाभावात्; शान्तालोकः अस्तमितप्रकाशः, सर्वतः सर्वत्र जीवलोकः। अत्र कायो भार इत्यादिवाक्यैः क्रमात् तत्कार्यकरणप्रवृत्तेरेव देहधारणप्रयोजनत्वं सर्वजनानां तत्सन्निधावेव सुखावहत्वं, तस्यैव

१. 'अथवा वरं' ज. पाठः २. 'तावन्त एव' क पाठः ३. 'अनुभूतवानस्मि। इदानीं' क. ख. ग. घ. ङ. च. छ. ज. झ. ञ. ट. पाठः. ४. 'तु भारः' क झ. ञ. पाठः ५. 'कीलं' छ. ज. झ. ञ. पाठः

१. 'अवसानं' क पाठः २. 'इत्यमरः, लक्षित' झ. पाठः. ३. 'लक्षिताद्यवरूपी' ख. ङ. छ. ञ. झ. पाठः. ४. 'पञ्जरेति' घ. ग. पाठः. ५. 'वृत्तेरपि देह' ज. पाठः

कष्टः कालो मां प्रति त्वत्प्रयाणे
शान्तालोकः सर्वतो जीवलोकः ॥ ३७ ॥

(विचिन्त्य) तत् किं नु खलु माधवास्तमयसाक्षिणा मया भवितव्यमित्यतो जीवामि । तदस्मात् गिरिशिखरात् पाटलावतीं निपत्य माधवाग्रेसरो भवामि । (किञ्चित्परिक्रम्य सकरुणं निवृत्य अवलोक्य च) कष्टं! भो कष्टम् !

---

समस्तबन्धुताकार्यकरणत्वं, तस्यैव सर्वेन्द्रियाह्लादकत्वं, तस्यैव सर्वकलाशोभनत्वं, तस्यैव शोकमोहादिसकलतमोनिरासकत्वं च प्रकाश्यते । अत्र रूपकमतिशयोक्तिश्चालङ्कारः ॥ ३७ ॥

यस्मादयमन्त्योच्छ्वासो वर्तते तस्मात् माधवास्तमयसाक्षिणा माधवस्य निधने साक्षिणा साक्षाद्द्रष्ट्रा मया भवितव्यं भाव्यमिति प्रकारे । अतोऽस्मात्प्रकाराद्धेतोः किन्नु जीवामि तदर्थं किं मम जीवनमित्यर्थः । तर्हि कथं क्रियतामित्यत्राह— तत् यस्मात् साक्षित्वमसह्यं तस्मादस्मात्समीपवर्तिनो गिरिशिखरात् बृहद्द्रोणीशैलशृङ्गात् पाटलावतीं नाम तत्रत्यां नदीं निपत्य आप्लुत्येत्यनेन पतनक्रियाया अपादानभूतस्य गिरिशिखरस्य कर्मभूतायाश्च नद्याः पावनत्वाद् भृगुपतनस्य च पुण्यस्मरणादुर्मरणत्वं प्रतिपाद्यते,

"एवं गोब्राह्मणार्थं वा दीनार्थे वा त्यजेत् तनुम् ।
सोऽपि पुण्यमवाप्नोति आनृशंस्यव्यपेक्षया ॥
ख्याते पुण्यतमे तीर्थे निमज्जेत् स्वकृतं स्मरन् ।
सोऽपि पुण्यकृतान् लोकान् सपदि प्रतिपद्यते ॥"

इति विश्वेश्वरवचनात्, 'कृत्वा पुंवत् पातमुच्चैर्भृगुभ्यः' इत्यादिमाघोक्तेश्च, माधवाग्रेसरो माधवस्य परस्मिन्नप्यस्मिन्निव लोके मार्गदर्शको भवामीत्यर्थः । किञ्चित् परिक्रम्य स्वल्पदेशं गत्वा स्नेहपाशेन पुनर्निवृत्य परिवृत्य ।

---

१. 'लोकः ॥ तत्' क. पाठः. २. 'नु माध' ग. ङ. ज. पाठः. ३. 'णा भवि' ख. ग. घ. ङ. च. ज. पाठः. ४. 'मिति जीवामि' क. झ. ञ. पाठः. ५. मि । भवत्वमुष्मादेव गिरि' क, 'मि भवत्वस्माद् गिरि' झ. ञ. पाठः. ६. 'वत्यां निपत्य' क. ज. झ. ञ. पाठः. ७. 'माधवस्य मरणाग्रेसरो' क. घ. च. छ. ज. झ. ञ. पाठः. ८. 'मि । (सक' क. ङ. ज. पाठः. ९. 'परिवृत्य' ङ. ज. पाठः. १०. 'आलोक्य' क. पाठः.

१. 'इति चेश्वरवचनात्' क. ख. ग. झ. पाठः.

तदेतदसितोत्पलद्युति शरीरमस्मिन्नभू-
न्मम[1]ातिदृढपी[2]डितैरपि न तृप्तिरालिङ्गनैः ।
यदुल्लसितवि[3]स्मयादतनु पीतवत्यः पुरा
नवप्रणयविभ्रमाकुलितमालतीदृष्टयः ॥ ३८ ॥

आश्चर्य[4] ! एकस्यां[5] तनावचरमे[6] वयस्येतावतो[7] गुणसमाहारस्य सन्नि-[8]वेशः कथमिवाभूत् ! वयस्य[9] माधव !

---

तदित्यादि—तत् तथा पूर्वमनुभूतं एतत् इदानीं निश्चेतनतया धरणि-पांसुषु पतितमिति भावः, असितोत्पलद्युति नीलेन्दीवरप्रभम् । अनुभवप्रकार-मेवाह—अस्मिन् शरीरे अभूदिति[1] तथाभावस्य[2] भूतत्वोक्तिः । अतिदृढपीडि-तैः अङ्गान्यनुप्राशाद्भिरिवाङ्गैश्चिरकालं[3] कृतविमर्दनैरित्यर्थः, मम न तृप्तिः सन्तोषः, अमृतावगाहस्येव तत्स्पर्शस्य निरतिशयनिर्वृतिजनकत्वात् । अथ लोको-त्तरसौन्दर्यसौभाग्यास्पदत्वमाह—उल्लसितविस्मयात् अदृष्टपूर्वलावण्यादिदर्श-[4]नजनिताया आश्चर्यबुद्धेर्हेतोः, अतनु अनल्पमिति क्रियाविशेषणं, अतृप्तेः नव-त्वोक्तिः प्रणयस्य दुर्वारत्वख्यापनार्थं नूतनप्रेमजनितैः विलासैराकुला विविध-भङ्गितरङ्गिताः मालत्याः दृष्टयः विलोकनप्रकाराः यच्छरीरं पीतवत्यः आग्रहात् कवलितवत्यः । अत्र मकरन्दस्य सुहृद्विषयो भावो नायिकाया औत्सुक्याख्यश्च व्यज्यते । प्रेयोऽलङ्कारः, सादृश्यव्यतिरिक्तनिमित्तोत्थापित-त्वात् स्मृतेः, 'अहो कोपेऽपि कान्तं मुखं' इत्यादिवत् तस्य लोकोत्तरसुकृत-शालित्वं चमत्करोति ॥ ३८ ॥

एकस्यां तनौ एकस्मिन् शरीरे इत्यनेन,

---

१. 'ममापि दृढपी' छ. ज. पाठः. २. 'पीडनै' क. ज. झ. ञ. पाठः ३. 'विस्मया बत निपीत' क. झ. ञ, 'विभ्रमं मधुनिपीत' छ, 'विभ्रमा बत निपीत' ज. पाठः. ४. 'आश्चर्यमेतत्' ग. ङ, 'आश्चर्यमाश्चर्यम् !' छ, 'हन्त भोः ! एक' ज. पाठः. ५. 'एतस्यां' झ. ञ. पाठः. ६. 'स्याचरमे' क. पाठः. ७. 'तनावेतावतो' ग. छ. ज. पाठः. ८. 'सि तावतो' क. झ. ञ. पाठः. ९. 'सखे माधव!' क. ग. ङ. छ. ज. झ. ञ. पाठः.

---

१. 'शरीरेणाभूदिति' ङ. छ. झ. पाठः. २. 'तथाभूतस्य' क. ख. पाठः ३. 'त्रुविशद्भिः' छ. पाठः. ४. 'लावण्यदर्शन' ङ. छ. पाठः.

आपूर्णश्च कलाभिरिन्दुरमलो यातश्च राहोर्मुखं
सञ्जातश्च घनाघनो जलधरः शीर्णश्च वायोर्जवात् ।
निर्वृत्तश्च फलेग्रहिर्द्रुमवरो दग्धश्च दावाग्निना
त्वं चूडामणितां गतश्च जगतः प्राप्तश्च मृत्योर्वशम् ॥ ३९

'प्रायेण सामग्र्यविधौ गुणानां
पराङ्मुखी विश्वसृजः प्रवृत्तिः ।'

इति न्यायात् क्वचित् कस्यचिदेव गुणस्य सद्भाव इति भावः । एतावत् इत्यनुभवाभिनयनाभिजात्यसौन्दर्यसौजन्यवैदग्ध्यसौभाग्यैश्वर्यादीनां प्रकाशनं, गुणसमाहारस्य गुणानां समुदायस्य सन्निवेशः सम्यङ्निधानं कथमिवाभूत् केन प्रकारेणासीत् । किंनाम्नस्तपस इदं फलं तदस्माभिरपि यत्नतोऽन्वेष्यमिति भावः ।

अथ तादृशस्य गुणराशेः सहृदयशल्यमकाण्ड एव जीवितखण्डनमाशङ्क्य शोचति—आपूर्णेत्यादि । आपूर्णः समग्रः कलाभिः भागैः, अर्थात् पञ्चदशभिः, क्षयवृद्धिरहिता सर्वाधारभूता षोडशी कला इन्दुः अमलः तुहिनजलधराद्यावारकरहितः यातः प्राप्तः राहोर्विधुन्तुदस्य । सञ्जातः निवृत्तः । 'घनाघनो मत्तगजे वासवे वर्षकाम्बुदे ।' इति वैजयन्ती, कुवलयदलनीलेन गगनतलव्यापिना वपुषा तटिदिन्द्रचापमण्डितो महावर्षोन्मुखः संवृत इत्यर्थः । जलधरः मेघमात्रं शीर्णः शाल्मलीतूलवदितस्ततः शकलीकृत्य विक्षिप्तः, जवात् चण्डवेगतया, 'स्यादवन्ध्यः फलेग्रहिः' इत्यमरः, फलानि गृह्णाति सदा फलतीति 'फलेग्रहिरात्मम्भरिश्च' (३-२-२६) इति निपातनादिन्प्रत्ययः एवं च, द्रुमवरः सहकारादिवृक्षश्रेष्ठः । 'दवदावौ वनारण्यवह्नी' इत्यमरः, वनवह्निना जगतो लोकस्य लोकवर्तिनां जनानां, चूडामणितां शिरोभूषणरत्नत्वमिति लक्षणया शिरसा वाह्यत्वमिति सिद्ध्यति, गतः प्राप्तः, सहजानां सांस्कारिकाणां च गुणानां कालवशात् कमलानामिव दिवसमुखादभिव्यक्तपरिमलत्वोपपत्तेः, मृत्योरन्तकस्य वशमायत्ततां, न तु मृत्युमित्यनेनाशावतामङ्गलोक्तिपरिहारः । अत्रोपमानत्रयेण सकलजगन्नयनाह्लादकत्वं स्वत एव परोपकारपरत्वं सरसजनश्लाघ्योपकाररमणीयत्वं च प्रकाश्यते । प्रतिवस्तूपमालङ्कारः, सामान्यधर्मस्यैकस्यैव प्रकारभेदेन

१. 'कलाधरेन्दु' ख पाठः. २. 'प्राप्तोऽसि मृत्यो' क. पाठः. ३. 'मृत्योः पदम्' च. पाठः. ४ 'शम् ॥ (विचिन्त्य) तत्' क. पाठः.

१. 'सामान्यविधौ' ङ. पाठः.

1787

तत् परिष्वजे तावदेवंगतमपि[1] प्रियवयस्यम् । अर्थितश्चानेन सम्प्रत्येवायमर्थः ।

(परिष्वज्य)

[2]हा प्रियवयस्य ! [3]विमलविद्यानिधे ! गुणगुरो ! हा मालतीस्वयंग्राहजीवितेश्वर[4] ! हा कामन्दकी[5]मकरन्दा[6]नन्दचन्द्र माधव ! [7]अयमत्र[8] जन्मन्यपश्चिमः पश्चिमपार्श्व[9]स्थां [10]प्रार्थितो मकरन्दबाहुपरिष्वङ्गः । सखे[11] ! सम्प्रति मकरन्दो मुहूर्तमपि जीवतीति मैवं[12] मंस्थाः[13] । कुतः—

---

प्रतिवाक्यमवस्थानात् । चकाराभ्यां च प्रतिवाक्यं क्रियायौगपद्यप्रतिपादनादेकाधिकरणविषयः समुच्चयालङ्कारोऽप्यत्रानुसन्धेयः ॥ १९ ॥

तन्मृत्युवशनात्त्वया पुनर्दुर्लभपरिष्वङ्ग[1]त्वात् , परिष्वजे आलिङ्गामि तावदिति अयमेव परमो लाभ इत्यर्थः , एवंगतं इत्थंभूतावस्थं अर्थितः याचितः अनेन माधवेन अयमर्थः परिष्वङ्गरूपः पदार्थः प्रयोजनं वा । हा प्रियवयस्य! मकरन्द सम्भावय 'परिष्वजस्व मा'मित्यनन्तरमेवोक्तत्वात् । परिष्वज्येदानीमपि निस्संज्ञतया तदभावं निश्चित्य परिदेवयते—विमलविद्यानिधे ! संशयविपर्यासरहितज्ञाननिधानस्थलभूत गुणगुरो गुणैर्विनयमाधुर्यादिभिरलघिष्ठ अथवा गुणेषु लोकस्याचार्यभूत, परैरपि स्पृहणीयगुणेत्यर्थः । मालत्या स्वयंग्राहेण स्वयंवरेण[2] सम्पादितप्राणनाथ ! कामन्दक्या मकरन्दस्य च विशेषादानन्दे चन्द्रः । अत्र अस्मिन् जन्मनि जनने अपश्चिमः अस्मात् पश्चिमः

---

१. 'मपि वयस्यम् ।' क. झ. पाठः २. 'हा वयस्य' क. ग. ङ. छ. ज. झ. ञ. पाठः. ३. 'विमलकलानिधे' ज. पाठः. ४. 'श्वर ! हा सौन्दर्यविनिर्जितरतिरमणच्छाय ! ' हा कामिनीहृदयमन्मथ ! हा बान्धवपयोनिधिशरच्चन्द्र ! हा कामन्दकी' क. पाठः ५. 'मकरन्दयोरानन्द' छ. पाठः. ६. 'नन्दनमुखचन्द्र' क, झ. ञ, 'नन्दमुग्धचन्द्र' छ, 'नन्दजनक माधव ! अयं ज, 'ननचन्द्र' ट. पाठः. ७ 'अयं ते पश्चिमा' छ. पाठः. ८. 'मत्र ते जन्म' ज. झ. ञ. पाठः. ९. 'वस्थां प्रापितो' क. 'वस्थप्रार्थितो' छ. ज. झ. ञ. पाठः. १०. प्रथितस्ते मक' ग. ङ. पाठः. ११. 'स एष मक' क. पाठः. १२. 'मैवं मंस्थाः '—क. ग. ङ. च. पाठः. १३. 'स्थाः । आ जन्मन' क. झ. ञ. पाठः.

---

१. 'न्तरोक्तत्वात् ' क. पाठः. २. 'वरेण' ख. ग. छ. झ. पाठः.

आ जन्मनः सहनिर्वासितया मयैव
मातुः पयोधरपयोऽपि समं निपीय ।
त्वं पुण्डरीकमुख ! बन्धुतया निरस्त-
मेको निवापसलिलं पिबसीत्ययुक्तम् ॥ ४० ॥

---

पश्चाद्भावी न विद्यते परिष्वङ्कः स्वस्यैव पश्चिमत्वादिति भावः । पश्चिमा-वस्थां प्रार्थितः पश्चिमस्यामन्त्यायां दशायां त्वयैव नाथितः । अत्र 'जन्मन्यप-श्चिमः' इत्युक्तेर्जन्मान्तरे त्ववश्यं भविष्यतीति द्योतितम् । तत् कथमित्याशङ्क्य आह—सम्प्रति त्वयि परैष्यति मा संस्थाः मा विदांकुरु । 'मनु अवबोधने' इत्यस्माल्लुङि माङ्योगे मध्यमैकवचनस्य रूपमिदम् । एवकारः संशयनिवृत्त्यर्थः । अवधारणमुपपत्त्या समर्थयति—कुतः कस्माद्धेतोरिति चेत् अस्मादित्यर्थः ।

आ जन्मन इत्यादि—जन्मनः प्रभृति सहनिवासितया अपृथक्-सञ्चरणतया, एवकारो भिन्नक्रमः, मया समं सहैव मातुस्त्वज्जनन्याः पयोधरपयः स्तनक्षीरं, अपिशब्देनान्येषां भोग्यानां साधारण्ये कैमुतिकन्यायोऽवतार्यते, पयः पुरा पीत्वा; पुण्डरीकमुख विकसितकमलवत् प्रसन्नमुखेत्यनेन यथा यथा मया हठात्कारेण भोग्यवस्तुजातं गृह्यते तथा तथा त्वं प्रहृष्यसि । अतस्तादृशं तव मुखमपश्यतो मे कथं जीवनं भवत्विति द्योतयति । बन्धुतया पित्रादिसमूहेन 'ग्रामजनबन्धुसहायेभ्यस्तल् ' (४-२-४३) इति समूहार्थे तल् प्रत्ययः । निरस्तं शोकनिघ्नतया शास्त्रार्थलङ्घनभयादबुद्धिपूर्वं क्षिप्तं अकालप्रवृत्ततयानौचि-त्यात् ,

'न च स्म वृद्धा बालानां प्रेतकार्याणि कुर्वत ।'

इति रामायणोक्तेः । एकः मया रहितः निवापः, 'निवापः पितृतर्पणं' इत्य मरः, तर्पणोदकं, अर्थात् परलोकोपनतमित्यर्थः, पिबसि इदानीं पास्यसि, वर्त-मानसामीप्ये लट्, इतिः प्रकारे अयुक्तं अयं प्रकारोऽनभ्यासादनुपपन्न इत्यर्थः । अत्रार्थापत्तिः काव्यलिङ्गं चालङ्कारः ॥ ४० ॥

---

१. 'निवासितया' क. पाठः. २. 'निवापं' छ. पाठः. ३. 'निरस्तमेको' छ. पाठः.

---

१. 'परैष्यति' क. ख. ग. पाठः. २. 'मन ज्ञाने इत्य' ख. ग. पाठः. ३. 'पितृदानं निवापः स्याच्छ्राद्धं' इत्यमरः' ख. पाठः. ४. 'वरदानसामर्थ्य' ङ. छ. ज. पाठः.

(सकरुणं विमुच्य) इयमधस्तात् पाटलावती । भगवत्यापगे !

प्रियस्य सुहृदो यत्र मम तत्रैव सम्भवः
भूयादमुष्य भूयोऽपि भूयासमनुसञ्चरः ॥ ४१ ॥

(इति पतितुमिच्छति ।)

---

विमुच्य माधवं विसृज्य । अधस्तात् अधोदेशे इत्यनेन गिरिशिखरारूढत्वं सिद्ध्यति । महानद्याः सङ्कल्पितवरदानसामर्थ्यात्तामभिमुखीकृत्य स्वाभिमतमाशास्ते—भगवति समग्रैश्वर्यादिगुणविशिष्टे आपगे हे नदि ।

प्रियस्येत्यादि—'इष्टस्य यत्र यस्मिन् देशे सम्भवो जन्म, एतद्देहावसान इत्यर्थात् ,

'जातस्य हि ध्रुवो मृत्युः ध्रुवं जन्म मृतस्य च ।'

इति भगवद्वचनात् ,

"नैतदस्ति महाभागे जरामृत्युनिवर्तकम् ।
सर्वलोकेषु जानीहि मोक्षादन्यत्र सुव्रते ॥"

इति महेश्वरवचनात् , मोक्षस्य च 'तमेव विदित्वा अतिमृत्युमेति', 'नान्यः पन्था अयनाय विद्यते' इति ,

'कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते ।'

इति श्रुतिस्मृतिशतैर्ज्ञानैकसाध्यत्वनिर्णयात्तत्त्वज्ञानमन्तरेण शरीरं त्यजतः सर्वथा शरीरान्तरपरिग्रहं निश्चित्य सम्भव इत्युक्तिः । तत्रैव ममापीत्यपिः अत्राप्याऽऽसञ्जनीयः, तस्मिन्नेव देशे ममापि सम्भवो भूयात् । एवकारेण कर्मवैचित्र्यवशात् स यदि नरके सम्भवेत् स एव मे स्वर्ग इति द्योत्यते ! भूयोऽपि तस्मिन्नपि जन्मनि अनुसञ्चरः अनु पश्चात् सञ्चरति तत्साहचर्यमनुभवतीत्यनुसञ्चरः, आशिषि लिङ् । अत्रौत्सुक्यं भावो व्यज्यते आशीरलङ्कारः ॥ ४१ ॥

इतिस्समाप्तो, पतितुं गिरिशिखरादधोदेशवर्तिनीं नदीमास्कन्दितुं इच्छति परिकरबन्धादि करोतीत्यर्थः ।

---

१. 'च्य परिक्रम्य च' क. ग्र. ज, 'च्य च परिक्रम्य' ज. पाठः । २. 'भगवन् गौरीपते ! प्रिय' क. पाठः । ३ 'प्रियसुहृदो' क. पाठः । ४. 'दमुष्य' क. पाठः ।

(प्रविश्य सहसा)

सौदामिनी— (वारयित्वा) वत्स वत्स ! कृतं साहसेन !

मकरन्दः — अथ कासि ? किमर्थं त्वयाहं प्रतिषिद्धः ?

सौदामिनी — अपि त्वमायुष्मान् मकरन्दः ?

---

सहसा अचिन्तितमेवेति तस्या अनुग्रहेऽभियोगं व्यञ्जयति । सौदामिनी प्रकृता योगिनी । वारयित्वा अग्रहस्तेन गृहीत्वा निषिद्ध्य ।

वत्सेति पुत्रस्नेहं सूचयन्ती मातृवत्स्वस्यालङ्घ्यवचनत्वं व्यनक्ति । कृतमलं साहसेन अविचारितकारितया । प्रकृत्यादि तृतीया ।

अथशब्दः पक्षव्यावृत्तौ । मया साहसं क्रियतां मा वा , त्वं तु कासि अस्माकं कामन्दकीवद् गुरुभूता कचिदेतावन्तं कालमज्ञाता स्थिता, अथवा मातापितृसम्बन्धिनी लिङ्गिनीत्वमवलम्बस इत्यर्थः । किमर्थं कस्मै प्रयोजनाय प्रतिषिद्धः साहसाद्वारितः । किंशब्दः क्षेपे । मालतीवृत्तान्तपरिज्ञानसुखमन्तरेण माधवो न जीविष्यति । तस्मिन न जीवति नाहं जीविष्यामि । अतो विशल्यकरणीं मालतीप्रवृत्तिं विना किमनेन वारणज्ञानदेशीयेन निवारणप्रयसनेनेति भावः ।

अथ तदभिप्रायानुगुणं मुमुक्षुरुत्तरं विवक्षुर्मालतीकथितैर्लक्षणैरनुमितमपि प्रश्नतस्तन्निर्णिनीषुः पृच्छति— अपिः प्रश्ने, त्वमिति प्रतीतमात्रस्य परामर्शः, आयुष्मान् मकरन्दः माधवप्रियसुहृत्तया माननीयत्वेन मालत्या निर्दिष्टो मकरन्दनामा किमसीत्यर्थः ।

---

१ '(श्य) सौदा' छ. पाठः. २. 'मकरन्द वार' छ. पाठः. ३. 'त्स ! अलं साह' क, 'वत्स ! कृतं' छ. ज. झ. ञ. पाठः. ४. 'मक— (विलोक्य) अ' क. ग. ङ. ज. झ. ञ, 'मक— (विलोक्य) कासि' छ पाठः. ५. 'अम्ब कासि' क. ज, 'अयि कासि' झ. ञ. पाठः. ६. 'किमहं त्वया प्र' क. झ. ञ. पाठः. ७. 'त्वया प्रतिषिद्धः' घ. पाठः. ८. 'प्रातिहतः' क. पाठ. ९. 'सौदा—आयुष्मन् ! किं त्वं मकरन्दः' क. घ. ज झ. ञ. ग, 'सौदा — किं त्वं मकरन्द आयुष्मान् ?' च. पाठः. १०. त्वं मक' छ. पाठः.

---

१. 'त्वा हस्ते गृहीता'' क. छ. झ, 'त्वा अग्रहस्ते गृहीत्वा' ग. छ, पाठः. २. मुमुक्षुर्मालतो' क. ग. छ. पाठः

**मकरन्दः**—मुञ्च । स एवास्मि मन्दभाग्यः ।

**सौदामिनी**—वत्स! योगिन्यस्मि,[1] मालत्यभिज्ञानं च[2] धारयामि।

(इति बकुलमालां दर्शयति ।)

[3] **मकरन्दः** — (सोच्छ्वासं)[4] अपि[5] जीवति मालती ?

**सौदामिनी** —अथ किं[6] ? वत्स! किमत्याहितं माधवस्य?[7] यदनिष्टं व्यवसितोऽसि[8] इत्युत्कम्पितास्मि[9] ।

---

पुनरपि साहसे वर्तमान आह—**मुञ्च**, हस्तरोधमित्यर्थात् । **स** मकरन्दः, **मन्दभाग्यः** क्षीणपुण्य इति सुहृद्व्यसनसाक्षित्वानिस्सहतामात्मनः सूचयति ।

तन्नामनिर्णयेनोत्तरमाह — **योगिनीति** मन्त्रौषधादिसाधनसिद्धिप्रभावतया श्रद्धेयवचनत्वं स्वस्याः प्रकाशयति; 'कासी'ति प्रश्नस्य उत्तरं चेदम् । **मालत्यभिज्ञानं** मालत्या स्वजीवनप्रत्ययाय दत्तं चिह्नं, 'अङ्कं चिह्नमभिज्ञानम्' इति वैजयन्ती । मालत्यभिज्ञानमित्युक्त्या स्वस्या साहसकरणात् मित्रादिभ्यो भयेन पितृगृहगमनस्याशङ्क्यत्वात् स्वादर्शनेऽसौ किं करोति क वर्तते इति प्रियतमवृत्तान्तस्यापरिज्ञानाच्च सर्वस्यास्य वृत्तान्तस्यावगमाय योगिनीं प्रथमं प्रेषितवती मालती तया सह स्वयं नागतवतीति गम्यते, अन्यथा कल्पनागौरवप्रसङ्गात् । **धारयामि** हस्तेन वहामि, न तु यत्किञ्चिद्ददामीति निस्संशयत्वमाह । अनेन 'किमर्थ'मित्याक्षेपगर्भस्य प्रतिक्षेपः प्रश्नस्य कृतः ।

बकुलमालादर्शनेऽप्यसन्तुष्टः पृच्छति, तस्य जीवनमरणसाधारणत्वात् । **अपिः** प्रश्ने, **जीवति** प्राणान् धारयतीति प्रश्नः, प्रथममत्यन्तासम्भावितस्य जीवितस्य निर्णये विशेषप्रश्नस्य पश्चादपि सुकरत्वात् ।

**अथ किं** तथैवेत्यर्थः । स्वानुग्रहस्यानवकाशत्वापातमाशङ्क्य विषण्णा आह—**अत्याहितम्** अतिशयितं दुःखम् । अनिष्टमप्रियं प्राणपरित्यागमित्यर्थः ।

---

१. 'मालतीप्रत्यभिज्ञानं' ज. पाठः २. 'चावधार' छ. पाठः. ३. 'मक — अपि' ग. पाठः. ४. 'सं सकरुणं)' क. ज. झ. ञ, 'स सकरुणं च) छ. पाठः. ५. 'अयि जीवति' क, 'आर्ये ! अपि जीवति' झ. ञ. पाठः. ६. 'किं? अपि च वत्स' झ. ञ. पाठः. ७ 'धृं कर्तुं व्यव' ख. पाठः ८. 'सि ? अथ माधवः क्व? मक —' क. पाठः. ९. 'इत्याकम्पितास्मि' ख. च. छ. ज. झ. ञ. पाठः.

मकरन्दः[1] — आर्ये[2] ! प्रमुग्धमेव[3] तं वैराग्यात् परित्यज्यागतः[4] । तदेहि तूर्णं सम्भावयावः ।

(त्वरित[5]तरं परिक्रामतः ।)

मकरन्दः[6] — दिष्ट्या[7] पुनः प्रत्यापन्न[8]चेतनो वयस्यः ।

सौदामिनी[9] — (विलोक्य) संवदत्यु[10]भयोर्मालतीनिवेदितश्शरीराकारः ।

---

सर्वेभ्यापि प्राणेभ्य इष्टतमाभावात् । व्यवसितः कर्तुं निश्चितवान् । कर्तरि निष्ठा । उत्कम्पिता भीत्या तरलहृदया अनिष्टमध्यवसितोऽसि यत् तत्किमत्याहितं माधवस्येत्युत्कम्पितास्मीत्यन्वयः, तदत्याहितमन्तरेण त्वदनिष्टाध्यवसायस्यानुपपत्तेरित्यर्थः ।

प्रमुग्धः मूर्च्छितः । एवेत्यनेन निश्वासशेष एव तस्मिन् पूर्वमेव स्वस्य मरणोद्योगः प्रकाश्यते । वैराग्यात् शरीरादिष्वनित्यतादर्शनेन निर्वेदाद् आगतः, इमं देशमिति शेषः । तूर्णं शीघ्रं सम्भावयावः समाश्वासयावः ।

दिष्ट्या अस्माकं भाग्यवशात्, प्रत्यापन्नचेतनः;

'प्रेक्षोपलब्धिश्चित्संवित्प्रतिपज्ज्ञप्तिचेतनाः ।'

इत्यमरः, स्वरूपात् प्रच्युता पुनस्तत्प्राप्ता चेतना ज्ञानं यस्य ।

संवदति न व्यभिचरति, उभयोर्माधवमकरन्दयोः मालतीनिवेदितः मालत्या वर्णादिलक्षणैर्व्युत्पादितः शरीराकारो देहस्य संस्थानविशेषः ।

---

१. 'मक— तमहं प्रमुग्ध' ग. ङ. पाठः. २. 'आर्ये ! तमहं प्र' क. ख. छ. ज. झ. ञ. पाठः. ३. 'म वैरा' क. ग. ङ. छ. ज. झ. ञ. पाठः. ४. 'तः । सौदा — तदेहि' ख. ग. ङ. छ. पाठः. ५. 'त्वरितं परि' क. ख. घ. ङ. ज. झ. ञ. पाठः. ६. 'मक — (विलोक्य) दिष्ट्या' ग. ङ. छ. पाठः. ७. 'दिष्ट्या प्रतिपन्न' छ, 'दिष्ट्या प्रत्यापन्न' ज. पाठः ८ 'प्रत्यासन्न' घ. पाठः. ९. 'सौदा — संव' ग. ङ. पाठः. १०. 'वदत्यनयोः' ङ. पाठः.

*माधवः — (आश्वस्य) अये प्रतिबोधितैइवास्मि केनापि। (विचिन्त्य) नूनमस्यायं नवजलधरधारासारवाहिनः प्रभञ्जनस्यानवेक्षितास्मदवस्थो व्यापारः।

भगवन् पौरस्त्यपवन !

भ्रमय जलदानम्भोगर्भान् प्रमोदय चातकान्

मदय शिखिनः केकोत्कण्ठान् कठोरय केतकान्।

---

अये इति निर्वेदे, प्रतिबोधितः संज्ञां लम्भितः, इवेत्यद्यापि मूर्च्छावासनानुवृत्तेः प्रतिबोधकस्य प्रयासवैयर्थ्यमिति भावः, केनापीति विशेषापरिज्ञानात् तस्य द्वेष्यत्वाच्चोक्तिः। सामान्यतोऽनुमितं तर्केण विशेषे स्थापयति — अस्येति। बीजमानत्वात् नवजलधरधारासारवाहिनो नूतनमेघधारावर्षं सर्वतो नेतुं शीलं यस्येति प्रबोधनसमग्रत्वोक्तिः। प्रभञ्जनस्य प्रकर्षेण भनक्ति आमर्दयति लोकमिति साधिक्षेपं वचनम्। कर्तरि ल्युट्। अनवेक्षितास्मदवस्थः अनालोचिता कथञ्चिल्लब्धा अस्माकं मूर्च्छासुखानुभूत्यवस्था येन, अथवा विरहावस्था, व्यापारः प्रतिबोधनरूपा प्रवृत्तिः।

तमभिमुखीकृत्योपालभते — भगवन् निरतिशयज्ञानविशिष्टेति न पुनरज्ञानात् त्वयेदं कृतं केवलं निष्कृपतयेत्यर्थः। अत एवोपर्यकरुणेत्यामन्त्रणम्।

भ्रमयेत्यादि — भ्रमय सञ्चारय अम्भोगर्भान् जलमुदरे येषामिति भारगौरवात् स्वयं सञ्चरणाशक्तिर्द्योत्यते। प्रमोदय प्रहृष्टान् कुरु, वारिधारावारणहेतुत्वात्, चातकान् धाराटपक्षिणः, तेषामपि त्वदेकशरणत्वात्। कोकिला-

---

१. 'आश्चर्यं' घ. पाठः. २. 'अयं' क. पाठः. ३. 'त एवास्मि' क. झ. ञ, 'तवानस्मि' ज. पाठः. ४. 'पि। नूनं' क. पाठः. ५. 'मस्याभिनवजीमूतजलवाहिनः' क, 'मस्य नव' घ, 'मस्यायमभिनवजीमूतजलबिन्दुवाहिनः' झ. ञ. पाठः. ६. 'धरासारवाहिनः' घ. च, 'धरपवनस्य' छ, 'धरप्रभञ्जनस्य' ज. पाठः. ७. 'स्यानपेक्षिता' क. झ. पाठः. ८. 'स्योऽयं व्यापारः' क. पाठः. ९. 'पौरस्त्यवायो' ज. पाठः. १०. 'कोकिलान्' ग. च. ट. पाठः. ११. 'कलय' क. छ. ज. झ. ञ. ट. पाठः. १२. 'कलारवकण्ठान्' ख. पाठः.

---

१. 'प्रबोधक' क. पाठः. २. 'वैयर्थ्यादिति' झ. पाठः. ३. 'नुमितमर्थं विशेषे' क. पाठः. ४. 'प्रतिबोध' ग. पाठः. ५. 'घन साधनसमग्र' क. पाठः.

---

* The first two sentences in Mādhava's speech occur just before the remarks of Makaranda and Saudāminī in क. ख. घ. च. झ. ञ. ट. mss.

विरहिणि जने मूर्च्छां लब्ध्वा विनोदयति व्यथा-
मकरुण! पुनः संज्ञाव्याधिं विधाय किमीहसे ॥ ४२ ॥

विति वा पाठः । तेषामपि वसन्तवदृर्षास्वपि हर्षस्य महाकविप्रसिद्धेः । यथा प्रावृड्वर्णने भारविः —

"व्यथितमपि भृशं मनो हरन्ती
परिणतजम्बुरसोपयोगहृष्टा ।
परभृतयुवती स्वनं विचक्रे
नवनवयोजितकण्ठरागरम्यम् ॥"

इति । मदय तृप्तान् कुरु, नर्तयेत्यर्थः, मदातिशयकार्यत्वान्नर्तनस्य, शिखिनो मयूरान् । केकोत्कण्ठान् केकानादेन स्वागतीकृतेनोच्चलितकन्धरान्, तेषामपि निसर्गसौहृदात् । कठोरय कठोरान् परोल्लिसान् कुरु, विकासयेत्यर्थः. केतकान् केतकीकुसुमानि, जलदगर्जिते तडित्स्फुरणे चोद्भिन्नानां तेषामपि त्वदधीनपरिपाकत्वात् । केतकानिति पुंल्लिङ्गत्वे प्रमाणं मृग्यम्,

"द्विरददन्तवलक्षमलक्ष्यत स्फुरितभृङ्गमृगच्छवि केतकम् ।"

इत्यादिषु षण्ढत्वेनैव प्रयोगदर्शनात् । केतकीरिति केतकमिति च वा पाठः । आमन्त्रणे निमन्त्रणे वा लोट् । विरहिणि प्रियजनविक्षेपविशिष्टे जने इति न पुनर्मयीति सर्वस्यापि विरहिणो जनस्य साधारणीयं प्रवृत्तिरिति द्योतयति । मूर्च्छां मोहं लब्ध्वेति चिरप्रार्थितावाप्तस्या लाभो महानिधिलाभ इवेति व्यञ्जयति । तत्र हेतुः—विनोदयति अये इति तमेव गमयति । व्यथां अनलकुहरलुठनवत् कठिनां वेदनां पुनर्भूयोऽपि संज्ञाव्याधिं प्रबोधरूपं रोगं, अन्तरितव्यथोद्बोधनात्, विधाय सम्पाद्य किमीहसे किं प्रयोजनमभिप्रैषि, न किंचित् प्रयोजनं तव सेत्स्यतीत्यर्थः । जलदभ्रमणादीनां तु लोकोपकारकत्वात् सुहृत्कार्यत्वात् स्वधर्मत्वाच्च सप्रयोजनत्वम् । अस्य तु व्यापारस्य परोपद्रवरूपत्वात् अनिष्टफलत्वमेवेति भावः । अत्र पवनं प्रत्यसूया व्यज्यते, उपकारबुद्ध्या प्रयुक्तस्य न केवलमुपकार(क)त्वाभावः, अपि त्वनर्थावहत्वं चेति द्योतनात् । विषमालङ्कारो व्यङ्ग्यः ॥ ४२ ॥

१. 'विहाय' क. पाठः.

१. 'हसान्' क. पाठः. २. 'योक्ष्यते' ख. पाठः. ३. 'ते' ग. पाठः.

1787

मकरन्दः — सुकृतमनेन सकलजन्तुजीवनेन मातरिश्वना[1]।

माधवः — देव वायो! तथापि भवन्तमेवं[3] प्रार्थये।

विकसत्कदम्बनिकुरुम्बपांसुभिः[4]
सह जीवितं[5] च हर मे प्रिया यतः।
अथवा तदङ्गपरिवासशीतलं
मयि किञ्चिदीरय भवांस्तु मे गतिः॥ ४३॥

सुकृतं शोभनमनुष्ठितं, सकलजन्तुजीवनेन सर्वप्राणिप्राणनेनेति हर्षात् स्तुतिः, मातरिश्वना वायुना।

देवेति समीहितसाधनसामर्थ्यं द्योतयति। तथापीति यद्यपि भवता प्रतिकूलमाचरितं तथापि, गत्यन्तराभावादित्यर्थः।

विकसदित्यादि। कदम्बनिकुरुम्बस्य कदम्बकुसुमसमूहस्य पांसुभिः परागैः।

'समुदायस्समुदयो निकुरुम्बं कदम्बकम्।'

इति वैजयन्ती। सहेति हरणेऽनायास(त्व?)माह। हर नय। प्रिया यतः यस्मिन् देशे तस्मिन्निति। अथवेति प्राणहरणं दयया न क्रियते चेत् तदङ्गपरिवासशीतलं तस्या अङ्गैः परिवासोऽधिवासित्वमङ्गेषु वा परितस्स्थितिः तेन शीतलं सन्तापहरम्, अङ्गानां शीतलत्वेन तत्संसृष्टस्यापि शीतलत्वस्योपपत्तेः[1], किञ्चिदित्यविशेषोक्तिः, तथाविधस्य सर्वस्यापि सन्तापहरत्वात्, ईरय प्रक्षिप।

१. 'सुवृत्तमखिलजन्तु' क. झ, 'सुविहितमनेनाखिलजन्तु' ञ. पाठः. २. 'ना। अपि च —

एवं केतकसूनसौरभजुषः पौरप्रगल्भाङ्गना
व्यालोलालककवल्लरीविलुठनव्याजोपभुक्तानना:।
किञ्चोन्निद्रकदम्बकुड्मलपुटीधूलीलुठत्षट्पद-
व्यूहव्याहतिहारिणो विरहिणः कर्षन्ति वर्षानिलाः॥

माधवः — देव' छ. ज. पाठः. ३. 'मेव प्रार्थ' क. पाठः. ४. 'विलसत्' ट. पाठः. ५. 'पांसुना' क. छ. ज. झ. ञ, 'सौरभैः' ब. च. पाठः. ६. 'तं वह मम प्रिया' क. झ. ञ, 'तं घटय मे प्रिया' ज. पाठः. ७. 'अपि वा' घ. पाठः. ८. 'किञ्चिदर्पय' छ. ज. झ. ञ. पाठः. ९. 'भवांस्तु मे' क, 'भवान् हि मे' झ. पाठः.

१. 'शीतलत्वोपपत्तेः' ख. ग. पाठः.

(कृताञ्जलिः प्रणमति ।)

**सौदामिनी** — सुसमाहितः खल्वभिज्ञानार्पणस्यावसरः ।

(अञ्जलौ बकुलमालां मुञ्चति ।)

**माधवः**—(साकूतं सविस्मयहर्षं च) कथमियं सा अस्मद्विरचिता प्रेयस्याः स्तनोद्वाहदुर्ललितमूर्तिः अनङ्गमन्दिराङ्गणबकुलपादपकुसुममाला ।

---

तथापीत्युक्तस्य हेतुमाह — तुर्व्यावृत्तौ, अस्मिन् कृत्ये नान्यस्य सामर्थ्यमिति भावः । गतिरुपायः शरणं वा । अत्र दैन्यं व्यज्यते । अप्रस्तुतप्रशंसालङ्कारः, कार्यमुखेन कारणस्य विरहसन्तापस्य प्रकाशनात् ॥ ४२ ॥

कृताञ्जलिर्घटितहस्तद्वयः प्रणमति तन्मार्गे दण्डवत् पतति ।

सुसमाहितः सुष्ठु सङ्घटितः, विधिनेति शेषः । कविनेत्यपि स्फुरति । अभिज्ञानार्पणस्य मालतीचिह्नभूतबकुलमालाप्रदानस्य अवसरः समयः ।

मुञ्चत्यस्पष्टमेव पातयतीत्यर्थः ।

साकूतं साभिप्रायं, प्रियाजीवितसूचकत्वं अभिप्रेत्येत्यर्थः । सविस्मयहर्षं विस्मयः प्रार्थनानन्तरमेव पवनेन दत्तत्वात्, हर्षः प्रियासत्तानुमापकत्वात्, ताभ्यां सहितं, तस्या विनाशे भगवता मारुतेन तदभिज्ञानस्य बकुलमालायाः समर्पणं अरुन्तुदं नोपपद्यते इत्यभिप्रायः । कथमित्याश्चर्ये । इयं दृश्यमाना सा अनुभूतचरी स्तनोद्वाहदुर्ललितमूर्तिः स्तनाभ्यामुद्वहनेन दुर्ललिता दृप्ता मूर्तिः संस्थानं यस्याः, अनङ्गमन्दिराङ्गणबकुलपादपकुसुममाला कामदेवायतनचत्वरवर्तिनो बकुलवृक्षस्य पुष्पैः कृता माला ।

---

१. 'तः प्राप्तः खलु' छ. पाठः. २. 'ज्ञानदर्शनस्या' क. पाठः. ३. 'लौ मालां' क. ख. ज. पाठः. ४. 'मालामर्पयति' च. छ ज. पाठः. ५. '(साकूतविस्मयहर्षं) क. घ. च. झ. ञ. ट, '(साकूतं सविस्मयं सहर्षं च)' छ. ज. पाठः. ६. 'अस्मद्विरचिता' क. ज. झ. ञ. पाठः. ७. 'प्रियायास्तनो' क, 'प्रियतमास्तनो' घ. च. छ झ. ञ. ट, 'प्रियास्तनो' ज. पाठः. ८. 'स्तनोद्वेदुर्ललित' क, 'स्तनोद्वहनदुर्ललित' च. ट, 'स्तनोन्नाहदुर्ललित' ज. झ. ञ. पाठः. ९. 'राजबकुल' झ. ञ. पाठः. १०. 'बकुलप्रसवमाला' क. झ. ञ. ट, 'बकुलपादपप्रसवमाला' घ. च. पाठः.

---

१. 'न्मार्गेण दण्ड' ख. ग. ङ. छ. झ. पाठः. २. 'सुकरत्वं' झ. पाठः. ३. 'प्रियादत्तानु' छ. पाठः. ४. 'द्वहनदुर्ललित' क. पाठः.

(सम्यङ्निरूप्य)

कः सन्देहः । स एवायमस्याः —

मुग्धेन्दुसुन्दरतदीयमुखावलोक-
हेलाविशृङ्खलकुतूहलनिह्नवाय ।
दुर्न्यस्तपुष्परचनोऽपि लवङ्गिकाया-
स्तोषं ततान विषमग्रथितो विभागः ॥ ४४ ॥

(सहर्षोन्मादमुत्थाय) प्रिये मालति मालति! इयं वीक्ष्यसे ।
(सकोपमिव) अयि मदवस्थानभिज्ञे !

---

सम्यङ्निरूप्य अत्यन्तासम्भावितप्रासतया पुनः सूक्ष्मं निरीक्ष्य इत्यर्थः । किंशब्दः क्षेपे, सन्देहस्य नावकाश इत्यर्थः । तथात्वमेवोपपादयति— स एव अयमस्या विभाग इत्यन्वयः ।

मुग्धेन्दित्यादि — मुग्धं कोमलमिन्दुवत् सुन्दरं लावण्यशालि च तदीयं तस्याः सम्बन्धि यन्मुखं तस्यावलोकहेलायां दर्शनलीलायां विशृङ्खलस्य निर्यन्त्रणस्य कुतूहलस्य कौतुकस्य निह्नवाय छादनार्थं दुर्न्यस्तपुष्परचनः अक्रमकृतकुसुमसन्निवेशः, अत एव विषमग्रथितः उच्चावचसन्दर्भः अपीत्युपक्रमानिर्वाहादसन्तोषविषयत्वेऽपीत्यपिना विरोधो व्यज्यते । विभागः दर्शनात् पूर्वं ग्रथितात् भागाद्भिन्नः प्रदेशः, तोषं प्रीतिं ततान चकार । 'तनु करणे' इति धातुः । अत्र च मालतीमुखावलोकनविहस्ततया विषमविरचितैकभागामपि बहुमन्यमान इति पूर्वोक्तमनुसारयति । अत्र विरोधः प्रेयश्चालङ्कारः ॥ ४४ ॥

सहर्षोन्मादं हर्षोऽभिज्ञानलाभात्, उन्मादस्त्वनुवर्तत एव, अतस्ताभ्यां सहितं यथा तथा, उत्थाय । मालामञ्जलौ निक्षिप्य परिहासार्थं स्वयं तिरोहितां प्रियतमां मन्यमान आह — मालति मालतीति वीप्सया हर्षसम्भ्रमो व्यज्यते । इयमिति पुरोवर्तिनी कथं न दृश्यस इत्यर्थः । वीक्ष्यसे किमन्तर्धानप्रयासेनेति

---

१. '(निरूप्य सहर्षं)' क. ग. घ. पाठः. २. 'हः । तथा हि — स एव' क. ग. ङ. छ. ज. झ. ञ, 'हः । कथं हि स एव' ख. पाठः. ३. 'रचितोऽपि' छ. ज. झ. ञ. पाठः. ४. 'ग्रथितैकभागः' क, 'ग्रथितोऽपि भागः' च. झ. ञ. पाठः. ५. 'चण्डि मालति । इयं' ज. पाठः. ६. 'ति इयं' क. ख. च. ज. झ. ञ. पाठः. ७. 'विलोक्यसे' ञ. पाठः.

प्रयान्तीव प्राणाः सुतनु ! हृदयं ध्वंसत इव
ज्वलन्तीवाङ्गानि प्रसरति समन्तादिव तमः ।
त्वराप्रस्तावोऽयं न खलु परिहासस्य विषय-
स्तदक्ष्णोरानन्दं वितर मयि माभूरकरुणा ॥ ४५ ॥

(सर्वतो विलोक्य सनिर्वेदं) कुतोऽत्र मालती ? (बकुलमालामुद्दिश्य) —

---

भावः । सकोपमिवेति स्वोक्तावपि तस्या अनाविर्भावात् कोपसहितम् । इवशब्दः परमार्थतः कोपस्याभावात् तद्विषये तस्य प्रणयप्रवृत्तत्वादपरमार्थत्वमाह । मदवस्थानभिज्ञे मदीयामवस्थामतिक्लेशदुःस्थामजानाने ।

स्वावस्थानिवेदनपुरस्सरं तस्याः परिहासमुपालभते— प्रयान्तीवेत्यादि । प्रयान्ती गच्छन्तीव, सर्वमर्मणां तुद्यमानत्वात् । ध्वंसते स्थानात् पततीव, समस्तवस्त्वपरिज्ञानात् । ज्वलन्ति वह्निना दीप्यन्त इव दुर्वारदारुणज्वरग्रस्तत्वात् । समन्तात् सर्वतः तमोऽन्धकारं प्रसरति प्रवर्तत इव, मूर्च्छाया अविच्छेदात् । त्वराप्रस्तावः त्वरया झटिति प्रवृत्तेरवसरः । परिहासस्य क्रीडाया विषयः अवकाशः । तत् तस्मात् अक्ष्णोर्नेत्रयोरानन्दं वितर देहि, प्रकाशीभावात् । मयि य एवं गतस्तस्मिन् मयीति सर्वथा दयनीयत्वं द्योत्यते, अकरुणा दयारहिता मा भूः । अत्रोत्प्रेक्षालङ्कारः, तोदनादेः प्राणप्रयाणादिरूपेण सम्भावनात् 'लिम्पतीव तमोऽङ्गानी'त्यादिवत्; अतिशयोक्तिश्च, दुःखातिशयस्य भङ्ग्या प्रतिपादनात ॥ ४५ ॥

सर्वतः लताकुञ्जादिषु तिरोधानशङ्कया निरीक्ष्य । सनिर्वेदं अदर्शनादुद्वेगसहितम् । अत्र अस्मिन् देशे कुतः कस्माद्धेतोः, मम व्यामोह एव तद्वितर्क-

---

१. 'दृष्ट्वा' क. घ. च. छ. ज. झ. ञ. ट. पाठः' २. 'मालां प्रति' ख. ग. ङ. छ. ञ. पाठः. ३. 'इय) अयि प्रियाप्रणयिनि बकुलमाले ! उपकारिण्यसि यतः अतः स्वागतं भवत्याः । निष्प्र' क, 'इय) अये प्रियाप्रणयिनि ! परमोपकारिण्यसि । निष्प्र' ज, 'इय) अयि प्रियाप्रणयिनि ! बकुलमाले ! उपकारिण्यसि । अतः स्वागतं भवत्याः । निष्प्र' झ. ञ. पाठः.

---

१. 'प्रणयवृत्त' झ. पाठः. २. 'ने । अथवावस्था' ग. ङ. छ. झ. पाठः. ३. 'रति वर्तत' झ. पाठः.

निष्प्रत्यूहाः प्रियसखि! यदा दुस्सहास्सम्बभूवु-
र्देहोद्दाहव्यसनगुरवो मन्मथोन्माथवेगाः ।
तस्मिन् काले कुवलयदृशस्त्वत्समाश्लेष एव
प्राणत्राणं प्रगुणमभवन्मत्परिष्वङ्गकल्पः ॥ ४६ ॥

मूलमित्यर्थः। अनेनाञ्जलौ बकुलमालां मुक्त्वा किमयं करिष्यतीति जिज्ञासया सौदामिनीमकरन्दयोरन्तर्हितत्वमवगम्यते, उपरि मूर्च्छावसरे तयोरुपसरणस्य वक्ष्यमाणत्वाच्च ।

परमोपकारित्वमनुस्मृत्य शोचति — निष्प्रत्यूहा इत्यादि । 'विघ्नोऽन्तरायः प्रत्यूहः' इत्यमरः । मदनुरागपरिज्ञानात् पूर्वं निर्विघ्ना निवारकाभावाद् दुर्वारा इत्यर्थः । प्रियसखीति प्रियाया इष्टा, सख्याः कार्यस्य प्राणसमासमाश्वासनस्य करणात्, सम्बुद्धिः । यदा यस्मिन् काले दुस्सहाः सोढुमशक्याः तीव्रवेदनत्वात् संबभूवुः दैवात् सम्भूताः देहोद्दाहव्यसनगुरवः न केवलमन्तः बहिरपि शरीरस्योत्कटेन दाहदुःखेन दुर्भराः, मन्मथस्योन्माथो निरतिशयो बाधः तस्य वेगाः मूर्च्छादिजनकाः प्रसराः । त्वत्समाश्लेषः लवङ्गिकया मद्धस्तादादायोपहृतायास्तव हृदि विन्यासः, एवकारेण त्राणान्तराभावमाह, प्राणत्राणं प्राणानां रक्षणमौपधं, 'कृत्यल्युटो बहुलम्' (३-३-११३) इति करणे ल्युट्, मदनुरागसूचकत्वात्, प्रगुणमृजु साक्षादित्यर्थः, प्रियतमस्वहस्तकृतत्वात् प्रगुणत्वमाह, मत्परिष्वङ्गकल्पः मदालिङ्गनादीषदसमाप्तः, त्वां मध्येकृत्य मयैवाश्लिष्टमिति तस्याः सङ्कल्पादिति भावः । अभवदिति भूतत्वमाह । अनद्यतनत्वज्ञकत्वाल्लङ् । सेदानीं न दृश्यते त्वमेवैका दृश्यसे इति भावः ॥ ४६ ॥

१. 'निष्प्रत्यूहं' क. पाठः. २. 'दाहव्यसन' ज. पाठः. ३. 'न्मादवेगाः' क. च. छ. ज. झ. ञ. ट. पाठः. ४ 'गुणनमभून्मत्' क. पाठः.

१. 'हस्तनिर्मितत्वात्' क. पाठः. २. 'त्वमेवाह' क. पाठः.

(सकरुणं निर्वर्ण्य)

आनन्दनानि मदनज्वरदीपनानि
गाढानुरागरसवन्ति तदा तदा च ।
स्नेहाङ्कनानि मम मुग्धदृशश्च कण्ठे
कष्टं स्मरामि तव तानि गतागतानि ॥ ४७ ॥

(हृदये निधाय मूर्च्छति ।)

मकरन्दः— (उपसृत्य वीजयन्) सखे! समाश्वसिहि समाश्वसिहि ।

---

सकरुणं सशोकं निर्वर्ण्य निपुणं निरीक्ष्य । पूर्वानुभवमनुसन्धायाह—आनन्दनानीत्यादि । परमसुखजननानि, 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' (३-१-१३४) इति कर्तरि ल्युः । मदनज्वरदीपनानि कामदाहस्य पोषकाणि, गाढानुरागरसवन्ति अन्तःप्ररूढानुरागरसभूयिष्ठानि, तदा तदा च तेषु तेषु कालेषु, कदाचित् पारितोषिकत्वेन, कदाचिदलङ्कारत्वेन, कदाचिद् द्यूतादिग्लहत्वेन, कदाचिन्निक्षेपत्वेन इत्यादिभिः प्रकारैरित्यर्थः, स्नेहाङ्कनानि स्नेहस्य चिह्नानि, तानि अनुभूतानि गतागतानि गमनान्यागमनानि च स्मरामि । इदानीं स्मरणगोचरीभूतानि तानि; अतः परं किं कष्टमित्यर्थः । अत्र स्मृतिर्व्यज्यते । प्रेयश्चालङ्कारः ॥ ४७ ॥

हृदये वक्षसि ।

---

१. 'निश्वस्य)' ज. पाठः. २. 'आनन्दमिश्रमदन' क. झ. ञ. पाठः. ३. 'हृदयज्वर' ङ. पाठः. ४. 'जीवनानि' ख. पाठः. ५. 'कदा कदा च' ट. पाठः. ६. 'स्नेहाक्षराणि' क. ख. झ, 'स्नेहोत्कटानि' ङ. पाठः. ७. 'ख) सखे' ख. ग. ङ. ज. पाठः. ८. 'जीवयन्' घ. पाठः. ९. 'सिहि । माध —' ञ. पाठः.

---

१. 'न्निक्षेप इत्या' ख. ब. छ. झ, 'निक्षेपेत्यादि' ङ. पाठः.

माधवः— (आश्चर्यं) मकरन्द ! किं न पश्यसि कुतोऽपि मालतीस्वहस्तस्य लाभः ? तत् कथं मन्यसे किमेतदिति ? ।

मकरन्दः — वयस्य माधव ! इयमार्या योगेश्वरी अस्य मालत्यभिज्ञानस्यं उपनेत्री ।

माधवः— (विलोक्य सकरुणं अञ्जलिं बद्ध्वा) आर्ये प्रसीद । कथय किं जीवति मे प्राणेश्वरी ?

---

कुतोऽपि अज्ञातादपादानात् मालतीस्वहस्तस्य मालत्याः साक्षादभिज्ञानस्य स्वहस्तलिखितवाचकस्य, स्वहस्तशब्दोऽत्र लक्षणया चिह्नमात्रमाह ।

"किं मिथ्या भवतो हृतेन दयितास्नेहस्वहस्तेन मे ।"

इति विक्रमोर्वशीयोक्तेः । तत् तस्मात् एतत् लाभरूपं वस्तु किं परमार्थरूपं मायादिकं वा रूपमिति मन्यसे तर्कयसि । कथं केन प्रकारेणेति मन्यसे । इतीति शब्द आवर्तनीयः, किंरूपं मन्यसे, कुतो जनादापतितं मन्यस इत्यर्थः ॥

तस्य संशयं छिनत्ति—इयमिति पुरस्थिततया अभिनयः । आर्या कल्याणी अकारणोपकारित्वात्, योगेश्वरी इति पूज्यत्वमुपकारसामर्थ्यं च द्योतयति, मालत्यभिज्ञानस्येति न मायादिकं, तदेवेदं त्वदनुभूतमिति किमित्यस्योत्तरम् । उपनेत्री एतदस्मत्समीपमुपनीतवती, कृद्योगे कर्मणि षष्ठी,

'नियमविधिजलानां बर्हिषां चोपनेत्री ।'

इति कुमारसम्भवोक्तवत् । इयमुपनेत्रीति कथमिति प्रश्नस्योत्तरम् ।

विलोक्य तां दृष्ट्वा । सकरुणमिति विशिष्टबन्धुदर्शनात् किमियं वक्ष्यतीत्याशङ्कया विवृद्धशोकमित्यर्थः । लिङ्गिनीत्वादञ्जलिबन्धः । किं

---

१. 'समाश्वस्य' ख. ज. झ. पाठः. २. 'स) आश्चर्यं ! मकरन्द ! छ. ट. पाठः. ३. 'पि सहसैव मालती' ज. झ. घु. ट. पाठः. ४. 'लतीस्नेहस्य हस्तलाभः' क, 'लतीस्नेहस्वहस्त' ज, 'लतीस्नेहं वहतो बकुलदाम्नो लाभः' झ. ञ. पाठः. ५. 'कथं न मन्यसे' क, 'कथं नु मन्यसे' झ. ञ. पाठः. ६. 'कुत एतदिति' झ. ञ. पाठः. ७. 'मक- इय' ज. पाठः. ८. 'स्य इय' क. छ. झ. ञ. पाठः. ९. 'योगीश्वरी' छ. ज. झ. ञ. पाठः. १०. 'स्य नेत्री' क. पाठः. ११. 'माध-सक' ज. पाठः. १२. 'कृताञ्जलिः) क. ज. झ. ञ. पाठः. १३. 'कथय जीव' क. ज. झञ. पाठः १४. 'प्रिया' क. झ. ञ, 'प्रियतमा' छ, 'प्रिया सा' ञ. पाठः.

---

१. 'एतस्मिन् [illegible]' क, '[illegible]' [illegible], झ. पाठः.

**सौदामिनी** — वत्स ! समाश्वसिहि समाश्वसिहि । दिष्ट्या ते प्रेयसी सा कल्याणिनी ।

**माधवमकरन्दौ**— (समुच्छ्वस्य) आर्ये ! यद्येवं तत् कथय सर्वतः, क एष वृत्तान्त इति ।

**सौदामिनी**— अस्ति, पुरा करालायतने अघोरघण्टः कपालपाणिर्व्यापादितः ।

---

जीवतीति विशेषप्रश्नस्य जीवनमूलत्वात् प्रश्नः । प्राणेश्वरी तज्जीवनायत्तत्वादस्मज्जीवितस्य तज्जीवितोक्त्यैव अस्मज्जीविितत्राणमपि कृतं भविष्यतीति व्यञ्जयति ।

तदाशयज्ञा वैदग्ध्यादुत्तरमाह — समाश्वसिहि विश्वस्तो भव, तज्जीवनं प्रतीत्यर्थः । वीप्सया सन्देहं निवर्तयति । अथ समाश्वासनया स्थिरीकृतहृदये तस्मिन् स्फुटमाह — दिष्ट्या ते दैवसम्पन्नत्वात्तव सा या त्वयान्यथा शङ्किता सा कल्याणिनी मङ्गलवती । कल्याणञ्च जीवितमक्षतशरीरत्वमासन्नसमागमत्वं च ।

समुच्छ्वस्य तदाप्ततया प्रसन्नहृदयौ भूत्वा आहतुः — एवं यदि जीवति चेत् , सर्वतः सर्वप्रकारेण, विस्तरत इत्यर्थः । एष प्रस्तुतः वृत्तान्तः कः मालत्या वृत्तं किंरूपमिति ।

अस्ति इदमिति शेषः । अस्यार्थस्य भवद्भ्यां पूर्वमेव विदितत्वादतः परमेव वक्तव्यमिति भावः । कपालपाणिः कपालं पाणौ यस्य, कापालिक इति यावत् । व्यापादितः मारितः ।

---

१. 'हि जीवति सा' क. ब. झ. ञ. पाठः. २. 'कल्याणी' छ. ज. झ. ञ. पाठः. ३. '(हृष्ट्वा उच्छ्वस्य)' क. पाठः. ४. '(स्व) यद्येवं' च. पाठः. ५. 'वं कथय' ङ. ञ. पाठः. ६. 'य कथमेव' क, 'य क एष' ङ. ब. झ. ञ. पाठः. ७. 'सौदा—पुरा' क. च. ङ. झ. ञ. पाठः. ८. 'रा किल करा' झ. ञ. पाठः. ९. 'तने मालतीमुपहरन् अघोर' क. ब. च. झ. ञ. ट, 'तने मालतीमुपाहरन् अघोर' ङ. पाठः. १०. 'करवाल' क. झ. ञ, 'कृपाण' ङ. च. ज. पाठः. ११. 'पाणिना माधवेन व्यापा' क, 'पाणिर्माधवेन व्यापा' ग. छ. झ. ञ. पाठः.

---

१. 'अक्षयशरीर' झ. पाठः. २. 'गतत्वं' क. पाठः.

माधवः— (सावेगं)[1] आर्ये विरम[2] विरम[3]। ज्ञातो वृत्तान्तः।

[4]मकरन्दः— सखे! क इव?

माधवः — सखे! किमन्यत्। सकामा करालकुण्डलेति।

मकरन्दः — आर्ये अप्येवम्?

सौदामिनी — एवं, यथा विदितं[5] वत्सेन।

[6]मकरन्दः— कष्टं भो! कष्टम्।

---

'व्यापादनं च हिंसा' इति वैजयन्ती[1]।

वचनोपक्रम एव वक्ष्यमाणमूहतो ज्ञात्वा सावेगं समनःक्षोभमाह — विरम निवर्तस्व, अतःपरं वचनादिति शेषः। वीप्सया दुःश्रवत्वं[2] सूच्यते। निषेधे हेतुः—ज्ञातो वृत्तान्तः त्वदुपन्यासादेव मयानुमानेन विदित इत्यर्थः।

स्फुटमजानानः पृच्छति— क इव त्वया ज्ञातो वृत्तान्तः कीदृश इव!

संक्षिप्योत्तरमाह— अन्यद्वस्तु किं नान्यद्वस्त्वित्याक्षेपे किंशब्दः। सकामा पूर्णो[3] अस्मत्प्रतीकाररूपः कामो मनोरथो यस्याः।

तदुक्तमर्थं द्रढयितुं पृच्छति — अपिः प्रश्ने, एवमित्थं किमित्यर्थः। एवं तथा, यथा येन प्रकारेण विदितं ज्ञातं वत्सेन माधवेन।

निर्णीतवृत्तान्तो विधिमुपालभते — कष्टमयुक्तमिदम्। भो इत्याकाशे महाजनस्याभिमुख्यकरणम्। वीप्सयात्यन्तायुक्तत्वं व्यज्यते।

---

१. '(सोद्वेगं)' क. घ. पाठः. २. 'म। परिज्ञातो' क, 'म। ज्ञा' छ. ज. पाठः. ३. 'म विज्ञातो' छ. ज. पाठः. ४. 'मक— क' क. पाठः. ५. 'निवेदितं' क. ज. पाठः. ६. 'मकं— भो कष्टम्। कुमुदा' छ. ज. पाठः.

---

१. 'यन्ती। 'व्यापादनं विशसनं कदनं च निसुम्भनम्'। इत्यमरश्च' छ. पाठः. २. 'याश्रवणत्वं' छ. पाठः. ३. 'पूर्णो मत' छ. पाठः.

कुमुदाकरेण शरदिन्दुचन्द्रिका
यदि रामणीयकगुणाय सङ्गता ।
सुकृतं तदस्तु कतमस्त्वयं विधि-
र्यदकालमेघविततिं त्वयूयुजत् ॥ ४८ ॥

माधवः — हा प्रिये मालति ! कष्टमतिबीभत्समापन्नासि ।

तथात्वमेवोपपादयति — कुमुदाकरेणेत्यादि । कुमुदाकरेण कुमुदषण्डेनेत्यनेन प्रसिद्धं विमलकोमलशीतलादिकत्वं द्योत्यते, शरदिन्दुचन्द्रिका मेघाद्यावरणराहित्येन समग्रगुणस्येन्दोर्ज्योत्स्नेत्यनेन बहलविमलत्वादिभिर्जगदाह्लादकत्वं प्रकाश्यते, रामणीयकगुणाय सदृशसमागमत्वात् परस्परस्य निरतिशयसौन्दर्यगुणं लब्धुं, कुमुदाकरस्य चन्द्रिकासन्दर्शने विकासात् तस्याश्च तत्समागमे लावण्यमूर्च्छनात् सङ्गता संश्लिष्टा यदि, तत् सुकृतं सुष्ठु समाचरितमनेनेत्यर्थात् । तुर्य्यावृत्तौ । अयन्तु विधिर्दैवं कतमः कीदृशः अकालमेघविततिं शरत्सम्बन्धित्वोक्तेः शरदि च मेघसम्बन्धस्यानुपपत्तेः, अकाले विरुद्धे काले, नञोऽत्र विपक्षोऽर्थः ।

'प्रतिषेधे च सत्तायामन्यत्वे सदृशेऽपि च ।
कुत्साल्पविरहार्थेषु विपक्षे चापि नञ् स्मृतः ॥'

इति वचनात् , मेघानां विततिः विस्तारं, अयूयुजत् योजितवान्, अन्योन्यमदर्शनाय, तयोर्मध्ये इति प्रसिद्धेर्लभ्यते । 'युजिर् योगे' इत्यस्माल्लुङि चङि च रूपम् । यत् यस्मात् तस्मात् पूर्वं परव्याहतकरणादुन्मत्तवदुपालम्भनीय एवायं विधिरित्यर्थः । किंशब्देन क्षेपवाचिना प्रतिपाद्यते । अत्र अप्रस्तुतप्रशंसालङ्कारः, अप्रस्तुतादर्थात् परस्परानुरूपगुणयोर्नायकयोः समागमः प्राक् समुपपाद्य पश्चात्तद्विघाताय स्वयमेव प्रवर्तमानस्य विधेः प्रस्तुतस्यार्थस्य सारूप्यतः प्रतीतेः; अतिशयोक्तिर्वा, प्रकृतस्यार्थस्य समेनार्थेन निगीर्याध्यवसानात् ॥ ४८ ॥

अथ गुरुवधामर्षितया कपालकुण्डलया तस्या व्यापादितत्वमेव निश्चित्य प्रेमपरवशः परिदेवयते — हेति । कष्टं कृच्छ्रं अतिबीभत्सं अत्य-

१. 'गुणेन' छ. पाठः. २. 'तनिर्व्ययूयुजत' क. छ. ज. पाठः. ३. 'मापतितासि' घ. ञ. पाठः.

१. 'परस्परं निर' क. पाठः. २. 'कुत्सार्थविरह' क. पाठः.

कथमिव तदाभवस्त्वं कमलमुखि कपालकुण्डलाग्रस्ता ।
उत्पातधूमलेखाक्रान्तेव कला शशधरस्य ॥ ४९ ॥

भवति कपालकुण्डले !

---

न्तजुगुप्सितं, महाभाग्यराशेस्तव कपिलाया इव व्याघ्रीमुखात् कापालिकीसकाशात् निधनस्यातिगर्हितत्वमिति भावः ।

"बधेर्धातोः सनन्तस्य बीभत्सारूपसम्भवः ।
येत्पदार्थे तु बीभत्सा स बीभत्स इतीरितः ॥
गर्हणीयश्च निन्द्यश्च कुत्सनीयश्च यो भवेत् ।
स भावः कथ्यते सद्भिर्बीभत्स इति संज्ञया ॥"

इति भावप्रकाशः । आपन्नासि प्राप्तासि ।

तदवस्थादौस्थ्यमुत्प्रेक्ष्याह — कथमिवेत्यादि । कमलमुखीति तथाविधप्रसादलावण्यविशिष्टं मुखं तव निरतिशये भये प्रत्युपस्थिते तरलतरनयनत्वादिभिर्विशिष्टत्वेनोत्प्रेक्ष्यमाणं मां दहतीति द्योतयति । कपालकुण्डलया ग्रस्ता कबलीकर्तुमाक्रान्ता तदा तस्मिन् काले कथमिवाभवः केन प्रकारेणावर्तिष्ठाः, स प्रकारो न वाङ्मनसगोचरः, केवलं त्वयानुभूत इति भावः । उत्पातधूमलेखाक्रान्ता जगदुपद्रवसूचकधूमकेतुलेखा ।

'... ... ... 'तिरस्कृता
धूमग्रहेण विमला शशिनः कलेव ।'

इति पूर्वमप्युक्तम् । अथवा भुवनसंहारज्वलितकालानलधूमकबलितेत्यर्थः ।

'परिमट्ठमेरुसिहरो सूराहिमुहो व्व पळअधूमुप्पीडो ।'

इति सेतूक्तवत् । उपमया सर्वजनोद्वेगहेतुत्वं कापालिक्याः, सकलसहृदयदयनीयत्वं च नायिकायाः प्रतीयते । अत्र शङ्काख्यो भावः प्रकाश्यते । उपमालङ्कारः ॥ ४९ ॥

आकाशे अभिमुखीकृत्य प्रियतमाजीविताशया प्रार्थयते — भवति पूज्ये इति ।

---

१. 'कथमपि तदा' ज. पाठः. २. 'रेखा' च. पाठः. ३. 'भगवति' क. छ. ब. झ. ञ. पाठः.

---

१. 'गर्हत्व' क. ख. ज. ङ. झ. पाठः' २. 'यत्पदार्थेषु' क, 'यत्पदार्थे च' ग, 'यत्पदार्थस्य' इति मुद्रितपाठः. ३. 'भावः' ख. ग. घ. ङ. झ. पाठः.

निर्माणमेव हि तदादरलालनीया
मा पूतनात्वमुपगाः शिवतातिरेधि ।
नैसर्गिकी सुरभिणः कुसुमस्य सिद्धा
मूर्ध्नि स्थितिर्न मुसलैरवताडनानि ॥ ५० ॥

सौदामिनी — अलमावेगेन ।

---

तत्रेदमनुचितमिति तामावर्जयति -- निर्माणमित्यादि । निर्माणं विधातुः सृष्टिः । तदिति समग्रगुणत्वानुभवपरामर्शः । एवकारेण स्वभावतो दर्शनमात्रे आदरेण लालनीयत्वं बहुमानेन सम्भाव्यत्वं प्रकाश्यते । अथवा एवकारो भिन्नक्रमः, वयं भवतीविषये अपराद्धा नाम, प्रतीकारश्च भवत्याः कर्तव्यो भवतु नाम । तथापि तन्निर्माणमादरलालनीयमेव, पदार्थस्वाभाव्यात् ।

'पदं हि सर्वत्र गुणैर्निधीयते ।'

इति न्यायेनास्मत्सम्बन्धो न तत्र निरूपणीय इति भावः । अतः पूतनात्वं मोपगाः विशेषवेदिनी यत् त्वं अविशेषज्ञानां क्रव्यादानां पिशाचीनां भावं गन्तुं नार्हसि । शिवतातिः तस्याः कल्याणदायिनी, 'शिवतातिः शिवङ्करः' इति हलायुधः, एधि भव । अस्तेर्लोटि मध्यमपुरुषैकवचने 'घ्वसोरेद्धावभ्यासलोपश्च' (६-४-११९) इत्येत्वं, 'हुझल्भ्यो हेर्धिः' (६-४-१०१) इति हेर्धिरादेशश्च । हिशब्दसूचितां प्रसिद्धिमेव समर्थयति — निसर्गः स्वभावस्तत्र भवा नैसर्गिकी, सुरभिणः घ्राणतर्पणगन्धस्य[कुसुमस्य]सिद्धा लोके प्रसिद्धा मूर्ध्नि स्थितिः शिरसि धारणम् । मुसलैः व्रीह्याद्यवहननसाधनैर्दण्डैः अवताडनानि गाढप्रहाराः । कुसुमस्य स्वेच्छोपभोगशेषत्वेऽपि न कश्चिदनुन्मत्तः शिरसि धारणमन्तरेण मुसलदण्डैः तत् खण्डयतीति भावः । सिद्धानीति लिङ्गवचनविपरिणामः । बहुवचनेन ताडनस्यैवानौचित्ये किं पुनस्ताडनानामिति व्यज्यते । अत्रार्थान्तरन्यासोऽलङ्कारः, विशेषस्य सामान्येन समर्थनात् ॥५० ॥

तदाशङ्कामुपपत्त्या निवर्तयति — आवेगेन तन्निधनाशङ्काजनितेन मनःक्षोभेणालम् ।

---

१. 'तदा तव माननीयं' क, 'तदा तव लालनीयं' छ. ज पाठः. २. 'तातिरोधि' क. छ, 'तातिकेतु' ब. पाठः. ३. 'चरणे' क. पाठः. ४. 'लैर्वत चहनानि' ज. पाठः. ५. 'सौदा— वत्स ! अलं' क. ज, झ. ब. पाठः.

अकरिष्यदसौ पापमतिनिष्करुणैव सा ।
नांभविष्यमहं तत्र यदि तत्पेरिपन्थिनी ॥ ५१ ॥

**माधवमकरन्दौ** — (प्रणम्य) यदि प्रसन्नपार्यापादैः तत् कथय कों पुनस्त्वमस्माकं ऐंकबन्धुरिति ।

---

अकरिष्यदित्यादि — अकरिष्यत् करिष्यति असौ इयं प्रस्तुता सा तथाविधवैरप्रतीकारकाङ्क्षिणी, पापमतिः अतिनिष्करुणा अतिशयेन निरस्तकारुण्या, एवकारेण ताच्छील्यं ध्वन्यते, नाभविष्यं न सन्निहिता भविष्यामि, तत्र श्रीपर्वते तत्परिपन्थिनी तस्य पापकारणस्य प्रतिपक्षभूता । अत्र लिङ्निमित्ते लृङ् क्रियातिपत्तौ लिङ्निमित्तं हेतुहेतुमत्त्वादि क्रियाया अतिपत्तिरनिर्वृत्तिः विरुद्धक्रियोपनिपातनात् । अत्र च पापकरणस्य हेतुमतः स्वसन्निधानाभावरूपहेतुवैगुण्यादतिपत्तिः प्रकाश्यते । अत्र काव्यलिङ्गमलङ्कारः, आवेगनिषेधहेतोर्वाक्यार्थत्वेनोपन्यासात् ॥ ५१ ॥

प्रणम्येति । पूर्वं लिङ्गिनीत्वेऽप्यावेगवशात् समुदाचारस्याननुष्ठितत्वादिदानीं मनसः स्वस्थतया बहुमानातिशयाच्च नमस्कृत्येत्यर्थः । आर्यापादैः पूज्यया आर्यया । पादा इति नामान्ते 'देवो भट्टारको वापि' इति पादशब्दस्य पूज्यवाचित्वात् । प्रसन्नमनसा द्विषयेऽनुग्रहः कृत इति भावे निष्ठा । तत् तर्हि पुनश्शब्दो व्यावृत्तौ, अस्मिन्नवसरे नान्यः कश्चिदावासको दृष्टः त्वं तु का कीदृशं सम्बन्धमवलम्ब्य वर्तसे, विद्यया जन्मना वा सम्बन्ध इत्यर्थः । एतत्प्रश्ने हेतुः—एकबन्धुरद्वितीयो मुख्यो बन्धुः, तत्कार्यकरणादिति भावः ।

---

१. 'माभवि' क पाठः. २. 'प्रतिबन्धिनी' च. पाठः. ३. 'अतिप्रसन्न' क. ज. झ. ञ. पाठः, ४. 'चरणैः' क. पाठः. ५. 'कथं पुन' क. पाठः ६. 'त्वमेवास्माकं बन्धु' क पाठः, ७. 'एवं बन्धु' झ, 'एवंविधो बन्धु' ज, 'एवंविधा बन्धु' छ. ज. पाठः.

---

१. 'पक्षरूपाभूता' ज. छ. घ. पाठः. २. 'पत्तिरनभिनिर्वृत्तिर्विरुद्ध' ङ. पाठः. ३. 'निपातः' ख. ग. निपातात् क. ज. पाठः. ४. 'वाचकत्वात्' ङ. पाठः. ५. 'दाम्बासको' ङ. पाठः

सौदामिनी—ज्ञास्यते खल्वेतत् । (उत्थाय) इयमिदानीमहं—

गुरुचर्यातपस्तन्त्रमन्त्रयोगाभियोगजाम् ।

इमामाक्षेपिणीं सिद्धिमातनोमि शिवाय वः ॥ ५२ ॥

(इति समाधवा निष्क्रान्ता ।)

---

मन्त्रिप्रतिज्ञापरिज्ञानसहितस्य कामन्दकीसम्बन्धस्य तत्सन्निधावेव व्यक्तीभविष्यतश्चमत्कारातिशयहेतुत्वाद् इदानीं प्रकाशने रसभङ्गमाशङ्क्य भङ्ग्या छादयति,

"स पृष्टः सर्वतो वार्तमाख्यद्राज्ञे न सन्ततिम् ।
प्रत्यापयिष्यतः काले कवेराद्यस्य शासनात् ॥"

इति रघुवंशोक्तेः । एतत् ज्ञास्यते ज्ञातं भविष्यति, मत्तत्त्वरूपं वस्तु । अत्र विद्याबलात् तत्समीपं नीतेन माधवेन मालतीमाश्वास्य तत्सहितेन तेनानीतेन बन्धुजनमाश्वासयितुमाशयेनाह — उत्थाय गगनं समुत्पत्य । इयं या भवत्स्नेहयन्त्रिता ।

गुरुचर्येत्यादि—गुरुषु तत्तद्विद्यागुरुषु प्रयुक्ता शुश्रूषा गुरुचर्या, तपः कृच्छ्रचान्द्रायणादिभिः शरीरपरिशोधनं, तन्त्रं औषधं, मन्त्राः पञ्चाक्षरादयः योगो यमाद्यष्टाङ्गश्चित्तवृत्तिनिरोधोपायप्रयोगः, तेष्वभियोगो निर्बन्धस्ततो जातां, समग्रीभूतामिति यावत् । तपःप्रभृतीनां सर्वेषां गुरुचर्यामूलत्वेऽपि तस्याः पृथग्ग्रहणं तैर्विनापि गुरुप्रसादादेव निरतिशयप्रभावसम्पत्तिरेकलव्यादिवत्, किमुत तत्साहचर्यादिति द्योतयितुम् ।

"तन्त्रं प्रधाने सिद्धान्ते तन्तुवाने परिच्छदे ।
शास्त्रौषधान्त्रमुख्येषु प्रयोगेऽध्वरकर्मणाम् ॥"

इति वैजयन्ती । इमामिति इदानीमेव दृश्यफलत्वमाह, आक्षेपिणीं आकर्षिणीं देशात् देशान्तरप्राप्तिकारिणीमिति यावत्, सिद्धिं विद्याफलप्राप्तिं आतनोमि समन्ताद्विस्तारयामि, वः शिवाय मालतीमाधवसम्बन्धिनां सर्वेषां व्यसनशान्तये । अत्र अप्रस्तुतप्रशंसालङ्कारः, स्नेहकारुण्ययोः कारणयोः कार्यमुखेन प्रकाशनात् ॥ ५२ ॥

समाधवा माधवसहिता निष्क्रान्ता श्रीपर्वताभिगमनायेत्यर्थात् ।

---

१. 'ज्ञास्यथ' क. ज. पाठः. २. 'मन्त्रसिद्ध्यभियोगजां' ङ. पाठः. ३. 'माकर्षिणीं' ख. पाठः. ४. 'विद्यामातनोमि' क. पाठः.

---

१. 'प्रज्ञाविशिष्टश्चित्' क. पाठः. ३. 'समभूतामिति' ख. पाठः. २. 'सूत्रवाचे' ख. पाठः. ४. 'सन्निहिता' ख. पाठः.

मकरन्दः — आश्चर्यमाश्चर्यम् ।

व्यतिकर इव भीमस्तामसो वैद्युतश्च
क्षणमुपहतचक्षुर्वृत्तिरुद्भूय शान्तः ।

(विलोक्य सभयं)

कथमिह न वयस्यस्तत् किमेतत् (विचिन्त्य) किमन्यत्
प्रभवति हि महिम्ना स्वेन योगेश्वरीयम् ॥ ५३ ॥

तदा तद्विद्याप्रभावदर्शनाद् विस्मयमान आह — व्यतिकर इवेत्यादि । व्यतिकरः सम्मिश्रितः भीमः भयङ्करः, तामसः तिमिरसम्बन्धी, अस्पष्टरूपत्वात्, वैद्युतः विद्युत्सम्बन्धी च, तेजःपुञ्जस्फुरणमात्रोपलब्धेः, क्षणं कालकलां उपहतचक्षुर्वृत्तिः प्रतिहता चक्षुषो वृत्तिर्व्यापारो येन, उद्भूय उद्गतो भूत्वा शान्तः, तिरोहितः, तमोविद्युतोर्व्यतिकर इव कश्चित् पदार्थ इति शेषः । सभयं अपायशङ्कया भयसहितम् । इह अस्मिन् स्थाने न वयस्यः सुहृन्न दृश्यते, कथमित्याश्चर्ये । तत् तस्मात् किमेतत् इदं वर्तमानं वस्तु किमिति विकल्पे, किं स्वप्नः उत माया अथवा पूर्वमसंस्तुतयानया योगिन्या वञ्चनं प्रयुक्तमित्यर्थः । विचिन्त्य निरूप्य । किमन्यत् किंशब्दः क्षेपे, अन्यदसद्विकल्पितं न किञ्चिदित्यर्थः । कस्मादन्यदित्यपेक्षायामाह — प्रभवति प्रभुः सर्वोत्कृष्टा वर्तते । स्वेन अनन्यसामान्येन महिम्ना विद्याप्रभावेन योगेश्वरी कर्मज्ञानरूपस्य योगस्य स्वामिनीत्याप्तत्वं ध्वन्यते, इयमिति मालत्यभिज्ञानोपनयनादिभिः प्रत्यक्षानुग्रहत्वं विश्वसनीयाकारत्वं च द्योत्यते । अत्र भयचिन्तामतयो भावाः प्रतीयन्ते । उत्प्रेक्षालङ्कारः, अदृष्टदेवताया इवाकर्षणदेवताया दुष्प्रेक्षस्य झटिति नायकाकर्षणं कृत्वा तिरोहितस्य स्वरूपस्य तमोविद्युद्व्यतिकरत्वेनोत्प्रेक्षणात् । 'व्यतिकर इव भीम' इत्यादि चित्राभिनयवत्, हस्ताध्येयोपाङ्गाध्येययोः कथितत्वात् ॥ ५३ ॥

१. 'आश्चर्यं । व्यतिकर' ग. घ. ङ. ज. पाठः. २. 'मुपगत' ङ. पाठः. ३. 'वृत्तिमुद्भूय' क, 'वृत्तिरुद्धूय' ज. पाठः. ४. 'कथमिव न वयस्य' ज. पाठः. ५. 'योगीश्वरीयम्' क, ख, ग. ज. पाठः.

१. 'तत्प्रभाव' ङ, घ. पाठः. २. 'चिन्तादयो' ङ. पाठः. ३. 'दुष्प्रेक्ष्यस्य' ङ. पाठः.

(सवितर्कं) तत् किमयमर्थोऽनर्थ इति सम्प्रति मूढोऽस्मि ।
अपि च —

अस्तोकविस्मयमविस्मृतपूर्ववृत्त-
मुद्भूतनूतनभयज्वरजर्जरं नः ।
एकक्षणत्रुटितसङ्घटितप्रमोह-
मानन्दशोकशबलत्वमुपैति चेतः ॥ ५४ ॥

---

सवितर्कं पुनरपि सुहृत्स्नेहकातरतया विचारसहितमित्यर्थः । तत् तस्मात्, यस्मादिह वयस्यो न दृश्यते अस्याश्चात्तत्वमनुमीयते तस्मात्, अयं वर्तमानो वृत्तान्तः अर्थः प्रयोजनं अनर्थः अर्थविरुद्ध इति अस्मिन् प्रकारे मूढो निर्णेतुमशक्तोऽस्मि ।

मोहवशात् मनसः क्षोभमनुसन्धायाह — अपि च — अस्तोकविस्मयमित्यादि । अस्तोकविस्मयं अनल्पो विद्याप्रभावदर्शनेन विस्मयोऽद्भुतबुद्धिर्यस्य; अविस्मृतं बुद्ध्यारूढं पूर्ववृत्तं मालत्यपायान्माधवस्योन्मादादिकं स्वप्नवृत्तान्तवच्चिन्त्यमानं येन; उद्भूतेन प्रवृद्धेन नूतनेन माधवतिरोधानानन्तरं जातेन भयज्वरेण किं भविष्यतीत्याशङ्कारूपेण महाव्याधिना जर्जरं सहस्रधा विशीर्णं; एकस्मिन्नेव क्षणे त्रुटितः खण्डितः, कुशल्यायास्थवीति मननेन सङ्घटितः संश्लेषितः पुनरपायशङ्कया च प्रमोहो मूर्च्छास्मिन्; आनन्देनान्त्यावस्थायां वर्तमानायां स्वयोराचिन्तितोपनतया योगिन्या समाश्वासनान्मालत्यानयनाय माधवस्य नीतत्वाच्च, शोकेन सुहृद्विरहदुःखेन शबलत्वं नानावर्णत्वमिति लक्षणया विविधविकारविक्षिप्तत्वं प्रकाश्यते । अत्र भावशबलत्वमलङ्कारः ॥ ५४ ॥

---

१. 'तर्कं) किमयं' क. घ. ङ. ज. झ. ञ. पाठः. २. 'यमनर्थ इति' क. पाठः. ३. 'मुग्धोऽस्मि' ङ, 'प्रमुग्धोऽस्मि' छ. ञ. पाठः. ४. 'मपस्मृत' क. झ. ञ. पाठः. ५. 'च' क. पाठः. ६. 'प्रमोद' ख. ग. घ. ङ. पाठः. ७. 'शबलं समुपैति' ञ. पाठः.

---

१. 'यस्मात् प्रियवयस्यो' क. पाठः. २. 'वर्तमानयोः स्वयो' क. पाठः.

1787

तदत्र कान्तारगहने सहास्मद्वर्गेण प्रविष्टां भगवतीमनुसृत्य वृत्तान्तमेवं कथयामि ।

(इति निष्क्रान्तः ।)

इति मालतीमाधवे मालत्यन्वेषणं नाम

॥ नवमोऽङ्कः ॥

---

तत् यस्मात् बन्धुसन्निधौ संविभागात् सद्यदुःखत्वं मनसो भविष्यति तस्मात्, अत्र बृहद्द्रोणीशैलसमीपवर्तिनि कान्तारगहने, 'कान्तारो वर्त्म दुर्गमम्' इत्यमरः, दुर्गस्य वनस्य गह्वरे अस्मद्वर्गेण लवङ्गिकादिनास्मद्बन्धुसमूहेन सह भगवतीं कामन्दकीमनुसृत्य अन्वेषणेन प्राप्येति तस्या विचारक्षमत्वादर्थानर्थनिर्णयप्रमाणत्वं प्रकाशयति, एवं योगिन्यागमनमाधवनयनरूपं, कथयामीत्यनेनानन्तराङ्कादौ कामन्दक्यादीनामपि प्रवेशं सूचयति कविकुलतिलक इत्यशेषमतिमङ्गलम् ॥

मालतीमाधवस्येत्थं नवमाङ्कार्थचर्चनम् ।
पूर्णज्योतिःप्रसादेन चक्रे पूर्णसरस्वती ॥

॥ इति नवमोऽङ्कः ॥

---

१. 'तदत्रैव कान्तार' क. पाठः. २. 'कान्तारावखाने' ज. पाठः. ३. 'अन्विष्य' क. झ. ञ, 'मनुसृत्य' घ ङ, 'मनुप्रसृत्य' ट. पाठः. ४. 'तस्या वृत्तान्त' क. छ. पाठः ५. 'मेनं' क. ख. ग. घ, ङ च. छ. ज. झ ञ, ढ. पाठः. ६. 'कथयिष्यामि' क. पाठः.

## अथ दशमोऽङ्कः ।

(ततः प्रविशति[1] कामन्दकी मदयन्तिका लवङ्गिका च ।)

**कामन्दकी — हा वत्से मालति ! मदङ्गालङ्कारकारिणि[3] ! कासि ? देहि मे प्रतिवचनम्[4] ।**

**आ जन्मनः प्रतिमुहूर्तविशेषरम्या-[5]**
**ण्याचेष्टितानि तव सम्प्रति तानि तानि ।**

---

अथ महाकविः —

"अङ्कान्तपात्रैरङ्कास्यं छिन्नाङ्कार्थस्य सूचनात्"

इति लक्षितेनाङ्कास्येन सूचितानां पात्राणां प्रवेशमाह — ततः प्रविशतीत्यादिना ।

रसदोषपरिहारायाङ्गिनमनुसन्दधाति — हा वत्से इत्यादिना । मदङ्गालङ्कारकारिणि[1] मदुत्सङ्गशोभासम्पादिनि, सततसन्निधानात् सौन्दर्यविशेष[2]-जनकत्वाच्च, कासि कस्मिन् देशे वर्तसे । प्रतिवचनं विलपन्त्या मम समाश्वासनरूपमुत्तरम् ।

आ जन्मन इत्यादि । आ जन्मनः जन्मकालादारभ्य प्रतिमुहूर्तविशेषरम्याणि[3] क्षणे क्षणे गुणातिशयप्रकाशनेन मनोहराणि आचेष्टितानि[4] शारीरान् व्यापारान् गतिहसितादीन्, तानि तानि इत्यशक्यवर्णनत्वमनुभव-

---

१. '(प्रविशन्ति काम ... काः ।)' घ. च. ट. पाठः. २. 'काम — (सास्रं) हा वत्से' क, 'काम — वत्से' ङ. छ, 'काम — (सकरुणं सास्रं) हा वत्से ! ज. झ. ण. पाठः. ३. 'मदलङ्कारकारिणि' क, 'मदङ्गालङ्कारिणि' ख. ग. ज. झ, ञ. पाठः. ४. 'देहि प्रति' ङ. पाठः. ५. 'प्रभृति यानि विशेष' ङ. पाठः.

---

१. 'मदङ्गालङ्कारिणि' ज. पाठः २. 'विषयज' ज. पाठः ३. 'मेन रम्याणि' ज. पाठः. ४. 'आवेष्टितानि' क. ङ. पाठः.

चाटूनि चारुमधुराणि च संस्मृतानि
देहं दहन्ति हृदयं च विदारयन्ति[1] ॥ १ ॥

अपि च[2] — पुत्रि !

अनियतरुदितस्मितं विराज-
त्कतिपयकोमलदन्तकुड्मलाग्रम् ।
वदनकमलकं शिशोः स्मरामि
स्खलदसमञ्जसमञ्जु[3]जल्पितं[4] ते ॥[5] २ ॥

---

गोचरत्वं च द्योत्यते । चाटूनि क्रीडायोजनादिप्रार्थनया प्रियवचनानि चारु-मधुराणि हृद्यान्यनुल्बणानि च सम्प्रति संस्मृतानि स्मरणगोचरीभूतानि । देहं शरीरम् दहन्ति महाज्वरजनकत्वेन । तत्र हेतुः—हृदयं मनो विदारयन्ति क्रकचवत् पाटयन्ति । अतो हृदयसन्तापमूलत्वं देहदाहस्य । अत्रातिशयोक्तिः प्रेयश्चालङ्कारः ॥ १ ॥

पुनः प्रकारान्तरेण स्मरन्त्याह — अनियतेत्यादि । अनियतरुदित-स्मितं अनभिसन्धिपूर्वकत्वाद् बालस्वभावेनान्तरान्तरा सङ्कीर्णत्वादनियतं नि-यमरहितं रुदितं क्रन्दितं स्मितं हासश्च यस्मिन्, विराजन्ति शोभमानानि कतिपयानां परिमितानां कोमलानां मृदूनां दन्तकुड्मलानां दशनाङ्कुराणां अग्राणि असमग्रप्ररूढत्वाच्छिखराणि यस्मिन् , वदनकमलकं मुखरूपं बाल-कमलं, अल्पार्थेऽनुकम्पायां वा कप्रत्ययः , शिशोः स्तनन्धयावस्थायाः । स्खलद् अन्यस्मिन् विवक्षितेऽन्यथाप्रवर्तमानाक्षरं असमञ्जसं स्वपरिकल्पितसङ्केतवशात् घटे पटः पुष्पे फलमित्यादिरूपत्वाल्लौकिकव्यवहारोत्तीर्णं मञ्जु मधुरं च जल्पितं भाषितं यस्मिन् । अत्र रूपकं प्रेयश्चालङ्कारः ॥ २ ॥

---

१. 'विकारयन्ति' ट. पाठः. २. '(आकाशे) अपि च' क. पाठः. ३. 'मुग्धजल्पितं' ज. झ. पाठः. ४. 'शिक्षितं ते' ट. पाठः. ५. 'तत् ॥' क. पाठः.

---

१. 'कल्पितं क्वचिद्' ग. झ. ज. पाठः.

इतरे[1] — हा[2] सुप्पसण्णमुहचन्दसुन्दरि ! कहिं[3] सि? को[4] वा[5] दे सरीररअणस्स[6] देव्वदुव्विळासपरिणामो[7] एक्कईआए[8] उवणदो[9][10] ? हा महाभाअ माहव ! उवत्थिअत्थमिअमहूसवो[11] दे जीबळोओ संवुत्तो ।

(हा सुप्रसन्नमुखचन्द्रसुन्दरि ! कासि? को वा ते शरीररत्नस्य दैवदुर्विलासपरिणाम एकाकिन्या उपनतः? महाभाग ! माधव उपस्थितास्तमितमहोत्सवस्ते जीवलोकः संवृत्तः ।)

---

इतरे मदयन्तिकालवङ्गिके । हा सुप्रसन्नमुखचन्द्रसुन्दरि क्वासि ? को वा ते शरीररत्नस्य दैवदुर्विलासपरिणामः एकाकिन्या उपनतः । सुप्रसन्नेन कदाचिदपि रोषादिविकाररहित्यात् मुखचन्द्रेण [सुन्दरि !] शोभने। वाशब्दो विकल्पे। शरीररूपस्य रत्नस्य सर्वशरीरेभ्य उत्कृष्टत्वात्। दैवस्य दुष्टो व्यापारो दुर्विलासः तस्य परिणामः परिपाकः । को वा किंप्रकारो वा । एतावता कालेनादर्शनाद्विनाशस्तावन्निश्चित एव । स किंप्रकार आधिदैविक आधिभौतिको वेत्यर्थः । एकाकिन्या इति अस्माभिस्सहानुभूतश्चेत्तथा न दुःखायेति भावः । महाभाग माधव! उपस्थितास्तमितमहोत्सवस्ते जीवलोकस्संवृत्तः । महाभागेति भाग्यशाली, माधव इति लोकस्योद्घोषणापि मृषा जातेति भावः । उपस्थितः प्राप्तः तदानीमेवास्तमितो नष्टश्च, न तु कञ्चित्कालं स्थितः, महोत्सवः प्रियतमाप्राप्तिरूक्षणं निरतिशयं कल्याणं यस्मिन् । जीवलोकः मनुष्यलोकः ।

---

१. 'मदयन्तिकालवङ्गिके — (सास्रमाकाशे) हा' क, 'इतराः' च, 'इतरे— (सास्रं) हा' ज. झ ञ. पाठः. २. 'हा पिअसहि सुप्प' क. च. छ. ज. झ. ञ. ट. पाठः. ३. 'कहिं गदासि' क. ज. झ. ञ. पाठः. ४. 'को दे' ज. पाठः. ५. 'वा सिरीसकुसुमसुउमारस्स सरीरस्साअं देव्व' क, 'सरीरकुसुमस्स देव्व' च, 'वा सिरीसकुसुमसुउमारस्स दे सरीरस्स देव्व' झ. ञ. पाठः. ६. 'सरीरस्स देव्व' ज. पाठः. ७. 'दुव्विणअपरिणामो' क. झ. ञ. पाठः ८. 'अकेल्लिआए' क, 'एकाकिणीए' छ. ज. झ. ञ. पाठः. ९. 'जवगदो' क. पाठः. १०. 'दो ! महा' क. झ. ञ. पाठः. ११. 'उवत्थिअत्थमिअ' ञ. पाठः.

कामन्दकी — हा वत्सौ!

अभिनवरागरसोऽयं भवतोः कृतकौतुकः परिष्वङ्गः।
लवलीलवङ्गयोरिव नियतिर्महावात्ययाभिहतः ॥ ३ ॥

हा वत्सौ! मालतीमाधवौ!

अभिनवेत्यादि। अभिनवः अपर्युषितत्वान्निरर्गलः अन्यत्रादृष्टपूर्वो वा रागरसः परस्परप्रेमास्वादो यस्मिन्। "रागोऽनुरागे लाक्षादौ।"

"रसो रागे विषे वीर्ये तिक्तादौ पारदे द्रवे।
रेतस्यास्वादने हेम्नि निर्यासेऽमृतशब्दयोः॥"

इति वैजयन्ती। अयमस्माकं बुद्धिस्थः भवतोः भवत्याः भवतश्च कृतकौतुकः कदा भविष्यतीति जनितोत्कण्ठः परिष्वङ्गः आश्लेषः।

"अथ श्यामकके लाका लवली लावली फला।" इति,
"लवङ्गं देवकुसुमं श्रीसंज्ञं च वराङ्गकम्।"

इति च वैजयन्ती। तयोरिवेति विश्लेषस्य सहृदयहृदयसाक्ष्यत्वमुपमाने प्रकाश्यते। नियतिर्दैवं महत्या वात्यया मण्डलीवायुनेव नियत्या अभिहत हठात्पीडितः। अत्र दैन्यं व्यज्यते। उपमालङ्कारः ॥ ३ ॥

१. 'काम (सविशेषखेदं) हा' क. ख. ज. झ. ञ. पाठः. २. 'नियतिमहा' क. ख. ग. घ. च. छ. ज. झ. ञ. पाठः.

१. 'स्वादो यस्य। रागो' ज. पाठः. २. 'सहृदयसाक्ष्यत्वं' ज. पाठः. ३. 'हठाद्विघ्नितः' ग, 'हठाद्दलितः' ज. पाठः.

लवङ्गिका—(सोवेगं) हदास वज्जमअ हिअअ! सव्वहा णिसंसंसि।

(हताश! वज्रमय हृदय! सर्वथा नृशंसमसि।)

(इति हृदयमाहत्य पतति।)

मदयन्तिका — लवङ्गिए! णं भणामि खणमत्तं पि दाव समस्सस।

(लवङ्गिके! ननु भणामि क्षणमात्रमपि तावत् समाश्वसिहि।)

लवङ्गिका — मादे! किं करोमि। दिढवज्जळेवपडिणिबंधणिच्चळं जीविदं ण मं परिच्चअइ।

(मातः! किं करोमि? दृढवज्रलेपप्रतिबन्धनिश्चलं जीवितं न मां परित्यजति।)

---

हताश! वज्रमय हृदय! सर्वथा नृशंसमसि। हता निष्फला इतः परं जीविष्यामीत्याशा यस्य, वज्रमय कुलिशोपादान अतिकाठिन्यात्। सर्वथा सर्वप्रकारेण चिरपरिचयसत्कारसततसाहचर्यादिष्वन्यतरमपि न गणयसीति भावः। नृशंस बन्धुवात्सल्यरहितं निर्दयमित्यर्थः।

हृदयं वक्षः आहत्य हस्ताभ्यां ताडयित्वा पतति भुवि लुठनाय दण्डवत् प्रपतति।

लवङ्गिके ननु भणामि क्षणमात्रमपि तावत् समाश्वसिहि। क्षणमात्रमपीति क्षणान्तरे तत्त्वं निश्चित्य पश्चात् सर्वाः प्राणानेव परित्यक्ष्याम इत्यभिप्रायः। समाश्वसिहि आहननादिकं मा कृथा इत्यर्थः।

मातः! किं करोमि? दृढवज्रलेपप्रतिबन्धनिश्चलं जीवितं न मां परित्यजति। मातः! अम्बेति सदैन्यमामन्त्रणम्। किं आहननादिभ्योऽन्यत् किं

---

१. '(सोद्वेगं)' क. छ. ञ. झ. ञ. पाठः. २. 'हा हदास' क. पाठः. ३. 'मअ सव्वहा' क. झ. ञ. पाठः. ४. 'णिसंसोसि' क, 'णिसंसासि' ट. पाठः. ५. 'मद— सहि ळव' क. घ. झ. ञ. पाठः. ६. 'क्खणमेत्तअं पि' क. ख. ग. ङ, च. पाठः. ७. 'लव — सहि किं' क. झ. ञ, 'लव— मदयन्तिए किं' छ. ज. ञ. पाठः. ८. पडिबद्धणिच्चळं' क. झ. ज. झ. ञ. पाठः. ९. 'चळं मम जीविदं' क, 'चळं विअ जीविदं' छ. ञ, 'झ. ञ पाठः.

---

१. 'वत् पतति' ख. ग. पाठः.

कामन्दकी — [1]वत्से मालति ! जन्मनः प्रभृति [2]वल्लभतरा ते लवङ्गिका । तत् [3]किमुज्जिहानजीवितां [4]वराकीं नानुकम्पसे । इयं हि—

उज्ज्वलालोकया स्निग्धा त्वया त्यक्ता न राजते ।
मलीमसमुखी वर्तिः प्रदीपशिखया यथा ॥ ४ ॥

[5]कथं च [6]कल्याणि ! कामन्दकीं [7]परित्यजसि । नन्वकरुणे ! [8]मदीयचीवराञ्चलोष्मणैव ते [9]प्रगुणीकृतान्यङ्गानि ।

---

करोमि, अयमेव जीवितपरित्यागोपायः प्रयत्नतोऽनुष्ठेय इत्यर्थः । तत्र हेतुः— दृढेन वज्रलेपेन बन्धद्रव्यविशेषेण यः प्रतिबन्धः सङ्घटनं तेन निश्चलं [1]स्वस्थानतो गलनरहितं जीवितं न परित्यजति स्वयं न मुञ्चति ।

उज्जिहानजीवितां उत्क्रामत्प्राणां 'ओहाङ् गतौ' इत्यस्माच्छानच्, वराकीं शोच्यां, नानुकम्पसे स्वात्मप्रकाशनेन चिरजीवितां न करोषि । शोच्यतामेवोपपादयति — इयं लवङ्गिका हियंसार्धे ।

उज्ज्वलेत्यादि । उज्ज्वलालोकया दीप्तलावण्यया प्रभामहत्या च स्निग्धा दृढानुरागा तैलसिक्ता च, मलीमसमुखी विषादविवर्णवदना मषीमलिनाभा च, वर्तिर्दशा, प्रदीपशिखया दीपज्वालया यथाशब्द इवार्थे । अत्रार्थश्लेषोऽलङ्कारः ॥ ८ ॥

कथं चेति । चकारोऽप्यर्थे । कामन्दकीमपि कथं परित्यजसि

---

१. 'जन्मतः प्रभृति' क. छ, 'आजन्मनो वल्ल' घ. च. ट. पाठः. २. 'वल्लभा ते' क. छ. ञ. पाठः. ३. 'किमेनामुज्जिहान' क. छ ञ. पाठः. ४. 'तां नानु' ञ. पाठः. ५. 'कथं कल्याणि' क, 'कथं त्वं कल्याणि' ञ. पाठः. ६. 'कल्याणिनि !' छ. पाठः. ७. 'जहासि' क. छ, 'त्यजसि' ज. ञ पाठः. ८. 'चीवरोष्म' क. छ. ञ, 'चीरचीवराञ्चलो' च. ट. पाठः. ९. 'गुणीकृता' ञ, 'प्रगुणितान्यङ्गानि' ञ. पाठः.

---

१. 'संस्थानतो' ग. छ. ञ. पाठः.

स्तन्यन्यासात्प्रभृति सुमुखी दन्तपाञ्चालिकादि-
क्रीडायोगं तदनु विनयं प्रापिता वर्धिता च ।
लोकश्रेष्ठे गुणवति वरे स्थापिता त्वं मयैव
स्नेहो मातुर्मयि समधिकस्तेन युक्तस्तवापि ॥ ५ ॥

'लवङ्गिकादिषु सखीस्नेहमात्रमेव, मयि तु मातृत्वगुरुत्वसखीत्वानां सामानाधिकरण्यात् स्नेहबहुमानविस्रम्भभाजनत्वं ताभ्यो विशेषोऽस्त्येव । अतः स्वप्नेऽपि मत्परित्यागोऽनुत्प्रेक्षणीयः' इत्यर्थः । कामन्दकीमिति न पुनर्मामिति तत्तादृश-विशिष्टस्नेहत्वेनानुभवं व्यञ्जयति। तदेवोपपादयति— ननु संवादे । अकरुणे ! आर्तानुकम्पारहिते । मदीयचीवराञ्चलोष्मणा मत्सम्बन्धिनश्चीवराञ्चलो दशा तस्योष्मा, उत्सङ्गेऽनवरतं निवेश्य धारितत्वात्, तेन सम्मृज्य स्वेदिततये-त्यर्थः । प्रगुणीकृतानि मञ्जूकृतानि, बाल्य एव शिशूनां गात्रसौष्ठवस्य ज्ञातिजनेन विधेयत्वात् । तथा दशकुमारचरिते — 'यद् दुहितुर्जन्मनः प्रभृत्यङ्गक्रिये'ति; 'स्वेदो मार्दवकराणाम्' इति संग्रहोक्तेश्च ।

पुनरपि स्वस्नेहप्रकाशनेन स्वपरित्यागानौचित्यमाह — स्तन्यन्यासादिति । स्तन्यस्य मातृस्तनपयसः परित्यागादारभ्येत्यनेन स्तन्यदानमात्रमेव धात्र्येव मात्रा कृतमिति द्योतयति । 'पाञ्चालिका पुत्रिका स्याद्' इत्यमरः । दन्तः करिदन्तः प्रसिद्ध्या, 'दन्तशफरुकधारिण्या', 'दन्त-पुत्रिका' इत्यादिप्रयोगाद्, दन्तनिर्मितपुत्रिकादिभिः । आदिशब्दात् कन्दुकगरीयकगुडघटीकेलनादिकं गृह्यते, तैः या क्रीडा रमणं तत्र योगं जयसाधनमुपायप्रयोगम् । ततोऽनन्तरं शैशवमतीत्य कौमारकावतरण इत्यर्थः । विनयं स्त्रीरत्नत्वात् नृत्तगीतवाद्यादिकासु चतुष्षष्ट्यां, कामसूत्राङ्गविद्यासु, कामसूत्रे च, ब्राह्मणीत्वादमात्यपुत्रीत्वाच्च धर्मार्थशास्त्रयोश्च शिक्षां;

१. 'स्तन्यत्यागात्' क. ग. छ. ज. झ. ञ. पाठः. २. 'दन्तपाञ्चा' क. ख. पाठः. ३. 'पाञ्चालिकेव' क. छ. ज. झ. ञ. पाठः. ४. 'स्तनेहयुक्त' ख. ग. घ. ट. पाठः.

१. 'मम सम्बन्धिन' ख. पाठः. २. 'जरतीजनेन' छ. झ. पाठः. ३. 'स्वेदे मार्दवकरणात्' ख. ग. छ. पाठः.

(सवैक्लव्यम्,) हा चन्द्रमुखि! सम्प्रति निराशासि।

"विनिन्युरेनं गुरवो गुरुप्रियम्"

इति रघुवंशोक्तेः, "विनयः शास्त्रनिश्चयः" इति कामन्दकवचनाच्च। प्रापिता लम्भितेत्युभयत्रापि सम्बध्यते। 'कामसूत्रं तदङ्गविद्याश्च पुरुषोऽधीयेत, प्राग्यौवनाद्युवतिः, प्रत्ता च पत्युरभिप्रायाद् योषितां शास्त्रग्रहणासम्भवादनर्थकमिह शास्त्रे स्त्रीशासनम्' इत्याचार्याः। 'प्रयोगग्रहणादासां प्रयोगस्य च शास्त्रपूर्वत्वाद्' इति वात्स्यायनः। 'आचार्यस्तु कन्यकानां धात्रेयिका वृद्धदासी भिक्षुकी स्वसे'ति, 'सन्त्येव हि शास्त्रप्रहतबुद्धयो गणिका राजपुत्र्यो महामात्रदुहितरश्चे'ति च कामसूत्रोक्तेः। तस्याश्शास्त्रे स्वस्याश्चाचार्यकेऽधिकारोऽनेन प्रदर्शितः। वर्धिता रूपलावण्यमार्दवबलमेधासौभाग्यादिजनकैराहारैरौषधविशेषैश्च पोषितासि। लोकश्रेष्ठे लोकतो लोके वा उत्कृष्टे। तत्र हेतुः — गुणवति प्रशस्ताभिजनादिगुणे, प्राशस्त्ये मतुप्, वरे भर्तरि स्थापिता शास्त्रोपायप्रयोगपूर्वकमनुरागवर्धनाद्वाजीवितान्तं निर्विकारं निवेशिता। मयैवेति सर्वत्र कृत्ये पित्राद्यपेक्षापि मया न कृता, तेषां मन्नियोगमात्रकिङ्करत्वादिति बोध्यते। तेन तच्छब्दो वाक्यार्थं साकल्येन परामृशति। एवमेवं च मया कृतमिति यद् तेन हेतुना तवापि मयि मातुः सप्रश्रिकः मातुः स्वजनन्या अपि सविशेषः, मातृविषयात्स्नेहादप्यतिरिक्त इत्यर्थः। 'पञ्चमी विभक्ते' (२-३-४२) इति पञ्चमी। स्नेहो विभक्त उचितः युक्त इत्यनेन स्वविषये स्निग्धेषु स्नेहस्यौचित्यं न च द्वेषस्य। अतस्त्वमकृतज्ञासीत्युपालम्भो व्यज्यते। अतः कामन्दकीमपि कथं परित्यजसीति सम्बन्धः। अत्राप्रस्तुतप्रशंसालङ्कारः, कार्यमुखेन कारणस्य स्नेहातिशयस्य प्रकाशनात्, काव्यलिङ्गं च, अपरित्यागहेतोः भङ्ग्योपादानात्॥ ५॥

सवैक्लव्यं नैराश्यभावनया निरस्तधैर्यम्। यथा सम्प्रति वार्तामात्रस्याप्यनुपलम्भात्। निराशा पुरा कृतेषु मनोरथेषु निरस्तवाञ्छा।

१. 'व्यं) चन्द्र' क. ज. पाठः. २. 'शास्मि संवृत्ता' क. ज. झ. पाठः.

१. 'वाजीवनान्तं' ख. पाठः. २. 'कृत्येऽपि पित्रा' झ. पाठः. ३. 'मात्रत्वाद' ख. ग, 'मात्रत्वाप्यनुलम्भनात' झ. पाठः.

अकारणस्मेरमनोहराननं-
शिखाललाटार्पितगौरसर्षपः ।
तवाङ्कशायी परिवृत्तभाग्यया
मया न दृष्टस्तनयः स्तनन्धयः ॥ ६ ॥

लवङ्गिका — भअवइ पसीद । णीसहासि संपअं जीविदुव्वहणे ।

के ते मनोरथा इत्याह — अकारणेत्यादि । अकारणेन अनभिसन्धिपूर्वकेण, अविदितस्नेहशोकतया सुमनोहरत्वाच्छैशवस्य, अथवा सहजेन, स्नेहेन मद्विषयेण मनोहरं मन्दस्मितादिभिः प्रकटितप्रसादमाननं यस्य । शिखायां शिरसि ललाटे च अर्पिता रक्षार्थं निहिता गौराः कनकवर्णाः सर्षपाः सिद्धार्था यस्य, 'देवे चोत्तमाङ्गनिहितरक्षासर्षपे समुन्मिषत्प्रतापानलस्फुलिङ्गनिकर इवे'ति हर्षचरितोक्तवत् । अङ्कशायी उरसि शयनशीलः, 'अङ्कश्चिह्नेऽन्तिकोरसो'रिति वैजयन्ती, उत्सङ्गवर्ती वा, 'अङ्कादङ्कं सञ्चरन्ती' इत्यादिप्रयोगात् । परिवृत्तभाग्यया अन्यथाभूतसुकृतया न तु भाग्यहीनयेति, इतः पूर्वं भवत्या जन्मनः प्रभृति परिणयनावसानस्य महोत्सवस्यानुभूतत्वादिदानीमेव दुष्कृतफलं दुःखमभिज्ञायत इति भावः । तनयः पुत्रः स्तनन्धयः स्तन्यपायी । 'नासिकास्तनयोर्ध्माधेटोः'(३-२-२९), इति खश् । अत्र प्रथमं तनयस्यैव दर्शने मनोरथः, ततस्तदवस्थावशेन तद्विशेषणविशिष्टस्येत्यनुवादमुखेन मनोरथानां बाहुविध्यं प्रकाशयति, 'पुत्रा मे सघृतक्षीरं भुञ्जीरन्नि'ति वृद्धकुमारीवरप्रार्थनवत् । अत्र स्वभावोक्तिरलङ्कारः ॥ ६ ॥

भगवति ! प्रसीद । निस्सहासि साम्प्रतं जीवितोद्वहने । तदहमस्माद् गिरिप्रपातादात्मानमवधूय निर्वृता भविष्यामि । प्रसीद अनुज्ञयानुगृहाण ।

१. 'स्मेरमनो' क. छ. ज. झ. ञ. पाठः. २. 'मनोरमानन' छ. पाठः. ३. 'ङ्गाभी' क. पाठः. ४. 'या न दृष्टपूर्वस्तनयः' ङ. पाठः ५. 'सि जीवि' ज. पाठः. ६. 'जीवणुव्वहणे' क. पाठः. ७. 'उव्वहणेण' क. झ. ञ. पाठः.

१. 'शोकाबासमनो' ङ. छ. झ. पाठः. २. 'सुकृततया' ख. पाठः. ३. 'भाग्यहीनतयेति' ख. झ. पाठः. ३. 'अतः पूर्वम्' झ. पाठः. ४. 'अनुज्ञयानु' ग. पाठः.

**तां अहं इमादो गिरिप्पपातादो अत्ताणं अवधुणिअ णिव्वुदा भविस्सं।**

(भगवति ! प्रसीद । निस्सहास्मि साम्प्रतं जीवितोद्वहने । तदहमस्माद् गिरिप्रपातादात्मानमवधूय निर्वृता भविष्यामि ।)

(प्रपातादात्मानं क्षेप्तुकामा सहर्षं परिक्रामति ।)

**कामन्दकी** — (सदयं वीक्ष्य) वत्से मदयन्तिके !

---

**निस्सहा** अशक्ता साम्प्रतं दुःखस्यातिभूमिगमनाद् जीवितोद्वहने प्राणसन्धारणे तद् यस्मान्निस्सहा तस्मात् पुरः समीपे वर्तमानाद् गिरिप्रपाताद् शैलतटात् । 'प्रपातस्तु तटो भृगुः' इति वैजयन्ती । ल्यब्लोपे पञ्चमी । प्रपातमारुह्येत्यर्थः । आत्मानमवधूय देहं परित्यज्य, पतनेनेत्यर्थात् । अथवा अपादानमात्रे पञ्चमी, गिरिप्रपातादात्मानमवधूय निपात्येत्यर्थः । निर्वृता सुखिता ।

**सहर्षमिति** तस्या अपि प्रतिषेधमनुमतिं परिकल्प्य सन्तोषसहितम् ।

**सदयं** आर्तिविशेषदर्शनात् कृपासहितं वीक्ष्य, लवङ्गिकामित्यर्थात् । **वत्से** इति वारयैनामिति विवक्षया सम्बुद्धिः ।

---

१. 'ता इमादो' क. ट, 'साहं' छ. ज. झ. ञ. पाठः. २. 'गिरिसिहरादो' क. झ. ञ. पाठः, ३. 'अत्ताणअं' क. झ. पाठः. ४. 'णिव्वुता' ज. पाठः. ५. 'स्सं । तह मे भअवदी आसिप्पसादं करेदु, जेण जम्मन्तरे वि पिअसहिं पेक्खिस्सं । काम— ' क, 'स्सं । तह मे भअवदी आसिसं करेदु, जेण जम्मन्तरे वि [दाव ज.] पिअसहिं पेक्खिस्सं । काम—' ज. झ. ञ. पाठः. ६. '(गिरिप्रपाता' ध. पाठः. ७. 'दात्मानं हातुमिच्छति ।) काम—' घ. पाठः. ८. 'सहर्षं कृतार्थमिवात्मानं मन्यमाना सावेगं रुदती अस्तमरणाकाङ्क्षा विक्षिप्याश्रुजलं निश्वस्य मरणेनैवात्मानं विभावयन्ती अनृणमकल्पयत् ।) काम—' ठ. पाठः. ९. 'काम—ननु लवङ्गिके ! कामन्दक्यपि [कामन्दकयापि क.] नातः परं वत्सावियोगेन जीविष्यति । [जीवितव्यं । क.] समध्यायमुत्कण्ठावेग आवयोः । किञ्च—

सम्भ्रमः कर्मणो भेदायदि न स्यान्न नाम वः [स्यादनागमः क.] ।

प्राणानान्तु परित्यागे सन्तापोपशमः [परम् क.] फलम् ॥

लव— जहा तुम्हे आणवेध । (उत्तिष्ठति ।) काम—सदयं' क. ज. झ. ञ. पाठः.

---

१. 'इत्यमरः' ख. झ. पाठः.

मदयन्तिका— किं आणवेहि अग्गेसरी होदु त्ति । अवहिदह्मि ।
(किं आज्ञापयथ अग्रेसरी भवेति । अवहितास्मि ।)

लवङ्गिका — सहि ! पसीद ! विरम एत्तो अत्तणो वहादो । मा अ एदं जणं विसुमरेहि ।

(सखि प्रसीद ! विरमास्मादात्मनो वधात् । मा चैतज्जनं विस्मर ।)

मदयन्तिका — (सकोपमिव) अवेहि । णह्मि दे वसं गआ ।
(अपेहि । नास्मि ते वशं गताः ।)

---

तद्विवक्षितमन्यथा स्वाभिमतानुगुणं परिकल्प्याह— किमाज्ञापयथ अग्रेसरी भवेति । अवहितास्मीति । अग्रेसरी स्वयमपि मरणाय तस्याः पुरः प्रवृत्ता भवेति । किमाज्ञापयथ किंशब्दः प्रश्ने नियुङ्ध्वमितीत्यर्थः । बहुवचनं गुरुविषयत्वात् । अवहिता आज्ञापितेऽर्थे सादरा ।

तयापि मरणे व्यवसिते तां निवारयन्त्याह—सखि प्रसीद , मद्वचनकरणाय । विरमास्मादात्मनो वधात् । विरम निवर्तस्व । 'व्याङ्परिभ्यो रमः" (१-३-८३) इति परस्मैपदम् । आत्मनो वधादिति प्रत्यवायबहुत्वं स्मारयति । 'प्रायश्चित्तं न पश्यामि येन शुद्ध्येत् सह' इति स्मृतेः । आत्मवचनकरणाय तस्या जीवितं निश्चित्याह —मा चैतज्जनं विस्मर । एतज्जनं मालतीं मां च ।

तदभिप्रायं ज्ञात्वाह—सकोपं ईर्ष्यासहितं, स्वयमात्मवधायोद्यच्छमाना मां कथं निवारयति , सखीस्नेहस्य द्वयोस्तुल्यत्वात् ।

"यत्रोभयोस्समो दोषः परिहारोऽपि वा समः ।
नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे ॥"

---

१. 'मद—आणवेह' ढ. पाठः. २. 'इ भअवई अग्गे' ख. च. ड. पाठः. ३. 'हो दि त्ति' ख. घ. ङ. ट. पाठः. ४, 'सि । ता अव' ट. पाठः. ५. 'अत्ताणअवहादो । ण अ एदं' ग, 'अत्ताणअवहादो ण एदं' ङ. पाठः. ६. 'वावादणादो' ब. झ. म. पाठः. ७. 'मा एदं' क. छ. झ, 'मा अ एणं' ज, 'मा क्खु एदं' म. पाठः. ८. 'विसुमरेसि' क. ज. झ. म. पाठः. ९. 'सक्रोधमिव' ख. पाठः. १०. 'वसंवदा' क. ज. झ. म. पाठः.

---

१. 'तथापि' क. झ. पाठः. २. 'जीवनं' ख. ङ, 'दीपनं' क. झ. पाठः.

कामन्दकी — हन्त व्यवसितं वराक्या ।

मदयन्तिका — (स्वगतं) णाह मअरन्द ! णमो दे ।
(नाथ मकरन्द ! नमस्ते । )

लवङ्गिका — भअवइ ! अअं एव्व महुमदीसोत्तसंपाअपवित्त-मेहलो महीधरविटङ्को ।
(भगवति! अयमेव मधुमतीस्रोतस्सम्पातपवित्रमेखलो महीधरविटङ्कः ।)

---

इति न्यायादिति भावः । इतशब्दः प्रणयकृतत्वात् कोपस्यातात्त्विकत्वं ध्वनति । अपेहि । नास्मि ते वशं गता । अपेहि अपसर । वशमायत्ततां गता नाहमस्मि त्वद्वचनं न करोमीत्यर्थः ।

हन्तेति विषादे, व्यवसितं मरणाय निश्चितं वराक्या शोच्यया, सखी-स्नेहात् । अनेन 'एक्कणअराहिवासेण सहपंसुक्कीळणादिही तुमं पिअसही भणिआ अ' इति पूर्वोक्तं सौहार्दातिशयं सूचयति ।

अथ भङ्ग्या कविः प्रस्तुतं रसमनुसन्धत्ते—नाथ मकरन्द नमस्ते । आकाशे लक्ष्यं बद्ध्वोक्तिः । माधवं त्वमनुम्रियसे, अहं च मालतीम् । अतस्त्वय्य-जीवति न मया जीव्यत इत्यतो मया म्रियते । तस्मात् स्वातन्त्र्यदोषो यथा मे न स्यात् तथा प्रसादयामीत्यर्थः ।

भगवति ! अयमेव मधुमतीस्रोतस्सम्पातपवित्रमेखलो महीधरविटङ्कः । अयमित्यास(क्ति ? त्ति) माह । मधुमतीति पूर्वप्रस्तुता महानदी, तस्याः प्रवाह-प्रवर्तनेन पवित्रा मेखला तटो यस्य, महीधरविटङ्कः पर्वतस्य विषमोन्नतप्रदेशः, विषमदृङ्को विटङ्कः,

"हिमाद्रिटङ्कादिव भान्ति यस्यां
गङ्गाम्बुपातप्रतिमा गृहेभ्यः ।"

इति भर्तृकाव्यप्रयोगात् ।

---

१. 'काम—(स्वगतं) हन्त' क. पाठः. २. 'निश्चितं' क. ज. झ. ञ. पाठः. ३. 'णमो दे णमो' क, 'णमो णमो दे' झ. ञ. पाठः. ४. 'सन्दाणिदपवित्त' क. छ. ज. झ. ञ. पाठः. ५. 'महीहरब्भिडो' च. ढ, 'महीधरस्स विटङ्को' ञ. पाठः.

कामन्दकी — अलमिदानीं प्रस्तुतान्तरायेण । (सर्वाः पतितुमिच्छन्ति ।)

(नैपथ्ये)

आश्चर्यमाश्चर्यम् !

व्यतिकर इव भीमस्तामसो वैद्युतश्च
क्षणमुपहतचक्षुर्वृत्तिरुद्भूय शान्तः ।

कामन्दकी — (विलोक्य साद्भुतहर्षं)

कथमिहैं मम वत्सौ तत्किमेतत्

(प्रविश्य)

मकरन्दः — किमन्यत् ।

---

इदानीं निष्प्रतीकारत्वादाश्वासनस्य, शक्यतया प्रस्तुतस्य लवङ्गिकामदयन्तिकाभ्यामुपक्रान्तस्यात्मत्यागस्येत्यर्थः । अन्तरायेण विघ्नेन न निवारयाम इति भावः । सर्वा अपि कामन्दक्या अपि समानदुःखतया मरणाध्यवसाय उच्यते । इच्छन्ति झटिति परिकरबन्धं कृत्वा गिरिशिखरमारोढुमिच्छन्तीत्यर्थः ।

विद्याप्रभावानीतस्य माधवस्य पुनर्मालत्या सहानयनाय योगिन्या विद्याप्रयोगः कृत इति नैपथ्यपात्रेण सूचयति— आश्चर्यमाश्चर्यम् ।

व्यतिकर (IX ५३) इवेत्यादि (पृष्ठ० ५३८)।

तच्छ्रुत्वा ततोमुखं किमिदमित्यवलोक्याह—साद्भुतहर्षं अदृष्टपूर्वविद्याप्रभावदर्शनादचिन्तितमालतीमाधवसमागमदर्शनाच्च विस्मयानन्दयुक्तम् । इह अस्मिन् प्रदेशे मम वत्सौ ममापत्ये मालतीमाधवौ, दृश्येते इति शेषः । कथमित्याश्चर्ये । तत् तस्माद् एतद् वर्तमानं वस्तु किमिति चिन्ता ।

तच्चिन्तां भङ्ग्या निराकरोति । प्रविश्य मकरन्दः — किमन्यदित्यादि । अनेन नैपथ्योक्तिरपि मकरन्दोक्तिरित्यर्थात् सूच्यते । 'तदत्र

---

१. 'कृतमिदानीं' क. ख. ज. झ. ञ. ड. पाठः. २. 'तान्तरेण' घ. पाठः ३. 'आश्चर्य ! व्यति' ज. पाठः. ४. 'काम—(सहसा विलोक्य साद्भुतं सहर्षं च) छ. पाठः. ५. 'क्य) कथ' ट. पाठः. ६. 'कथमिव' ख. पाठः. ७. 'मिह न वयस्यस्तत्' क. पाठः. ८. 'वत्सस्तत् 'छ. ब. झ. ञ. पाठः.

---

१. 'शक्यतयेत्यर्थः प्रस्तुत' क. ग. पाठः. २. 'परिबन्धं' क. छ. ञ. पाठः. ३. 'किमित्यवलोक्याह' ख. पाठः

प्रभवति हि महिम्ना स्वेन योगेश्वरीयम् ॥ ७ ॥

(नेपथ्ये)

कथमतिदारुणो जनवादस्संवर्तते ।

मालत्यपायमधिगम्य विरक्तचेताः
सांसारिकेषु विषयेषु च जीविते च ।
निश्चित्य वह्निपतनाय सुवर्णबिन्दु-
मभ्येति भूरिवसुरित्यधुना हताः स्मः ॥ ८ ॥

---

कान्तारगहने सहासद्वर्गेण प्रविष्टां भगवतीमनुसृत्य वृत्तान्तमेनं कथयामी'त्युक्तं च सङ्कट्टयति । वक्तुरेकत्वात् प्रयोगस्य चाभेदात् पूर्वोक्त एव श्लोको गृहीतः ॥ ७ ॥

अथ निरतिशयं सुखमुपपादयिष्यंस्तद्रसापादनाय दुःखस्य परां काष्ठां दर्शयितुमनर्थान्तरमवतारयति कविः, प्रकरणनायकस्य सापायसुखसिद्धिरस्त्वात्-नेपथ्ये इति ।

जनवादः किंवदन्ती ।

जनवादस्वरूपमेव दर्शयति — मालत्यपायमित्यादि । मालत्या अपायमपगमं नाशमित्यर्थः, अधिगम्य ज्ञात्वा विरक्तचेताः निःस्नेहहृदयः अनित्यत्वदुःखोदर्कत्वाद्यनुसन्धानेन निर्विण्ण इति यावत् । सांसारिकेषु संसारसम्बन्धिष्वित्यैहिकत्वमत्रार्थात् प्रतिपाद्यते, अन्यथा जीवितविरक्त्यनुपपत्तेः। मुमुक्षुत्वे ज्ञानार्थमेव प्रवर्तितव्यम् । अग्निप्रवेशस्य तु क्वचिन्मोक्षसाधनत्वाश्रवणात्, विधिकृतस्य तस्य स्वर्गसाधनत्वश्रवणाच्च । तत्र तु प्रमाणमुपरि वक्ष्यमाणम् । विषयेषु शब्दाद्युपभोगेषु, जीविते च बन्धुविनाशदुःखानुभवाद् भारभूते शरीरधारणे, विपद्देहत्वाद्देहस्य । अथ जीवितापाये विषयापायस्तावत् भवतु नाम, जीवितं पुनः कथं बलात् परित्यज्यते आत्महत्यायाः परलोकविरुद्ध-

---

१. 'योगीश्वरी' झ. ज. क्ष. ञ. पाठः. २. 'जनसंवर्तो वर्तते' क, 'जनवादः सम्प्रति वर्तते' ग. छ, 'जनसम्मर्दः सम्प्रति वर्तते' छ, 'जनावमर्दः संप्रवर्तते' ज, 'जनसम्मर्दो वर्तते' झ. ञ. पाठः. ३. 'जीवितेषु' ट. पाठः. ४. 'धुना शृणोमि' ठ. पाठः.

---

१. 'सङ्घट्टयति' ञ. पाठः.

मदयन्तिकालवङ्गिके — झत्ति मालईमाहवाणं दंसणब्भुदओ,

स्वादित्याह—निश्चित्य परलोकाविरुद्धत्वं धर्मशास्त्रैर्निर्णीय, शिशो रोगादिपीडायां परदेवतासन्निधावुपोषितस्य जपहोमदानादिभिः संस्कृतात्मनो भृगुवह्नितीर्थपतनादिभिः शरीरपरित्यागे स्वर्गप्राप्तिस्मरणात्,

"तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।"

इति भगवद्वचनाच्चोदनालक्षणत्वाच्च धर्मस्येत्यर्थः । वह्निपतनाय मन्त्रपूत पवित्रहविर्भूतेऽग्नौ पतितुं, "तुमर्थाच्च भाववचनात्" (२-३-१५) इति चतुर्थी । सुवर्णबिन्दुसंज्ञं 'मधुमतीसिन्धुसम्भेदपावन' इत्यपौरुषेयप्रतिष्ठिते लिङ्गे सततसन्निहितत्वेनोक्तं प्राक् परमेश्वरं, अभ्येतीत्यनेन स्थानविशेषाच्च पुरुषार्थसाधनत्वमाह । उमामहेश्वरसंवादे महेश्वरवचनमास्मिन्नर्थे प्रमाणम् । यथा—

"अग्निप्रवेशनं चेच्छेत् तेनैव विधिना शुभे ।
कृत्वा काष्ठमयं चित्यं पुण्यक्षेत्रनदीषु वा ॥
देवताभ्यो नमस्कृत्य कृत्वा चाग्निं प्रदक्षिणम् ।
भूत्वा शुचिर्व्यवसितः प्रविशेदग्निसंस्तरम् ॥
सोऽपि लोकान् यथान्यायं प्राप्नुयात् पुण्यकर्मणाम् ॥"

इति । कल्यशरीरस्यापि स्नेहादिभिर्यत्नजस्य मरणस्य निर्दोषत्वं अग्निप्रवेशादिभिस्तत्रैवोक्तम् । इति जनवादो वर्तत इति योज्यम् । अतोऽधुना हताः स्मः नष्टाः स्मो वयम् । ईदृशस्य पुरुषरत्नस्य विनाशे वर्णाश्रमरक्षकाभावात् सचिवायत्तसिद्धित्वाच्च पद्मावतीश्वरस्येति भावः । मुनिजनवचनमिति ग्राह्यं, 'करुणवनेचरवचनादनन्तरं तां न पश्यामि' इति वक्ष्यमाणत्वात् । अत्रामात्यगतो निर्वेदो व्यज्यते । वनेचरगतश्च तद्विषयो भावः । करुणरसस्तु व्यापकः । अप्रस्तुतप्रशंसालङ्कारः, दुहितृस्नेहस्य कार्यमुखेन प्रकाशनात् ॥ ८ ॥

झटिति मालतीमाधवयोर्दर्शनाभ्युदयः, झटित्यस्माहितम् । झटितिम्यां

१. 'मदयन्तीलवङ्गिके — मालई' क. पाठः. २. 'णमहूसवो' क पाठः.

१. 'स्कृत्वा' ख. पाठः. २. 'शुद्धिर्व्यवसितः' ग. पाठः.

ज्ञप्ति अचाहिदं ।

(झटिति मालतीमाधवयोर्दर्शनाभ्युदयः, झटित्यत्याहितम् ।)

कामन्दकीमकरन्दौ — दिष्ट्या दृष्टमाश्चर्यम् ।

किमयमसिपत्रचन्दनरसच्छटासारयुगपदवपातः ।
अनलस्फुलिङ्गकलिलः किमयमनभ्रः सुधावर्षः ॥ ९ ॥

अपि च —

सञ्जीवनौषधिविषव्यतिकरमालोकतिमिरसम्भेदम् ।
अद्य विधिरशनिशशधरमयूखसंवलनमनुकुरुते ॥ १० ॥

---

तुल्यकालत्वं सूच्यते । अत्याहितममात्यमरणारम्भरूपा महती विपत्तिः ।

दिष्ट्या दैववशादाश्चर्यं दृष्टमत्यन्तासम्भावितस्य मालतीदर्शनस्य प्राप्तेः।

अथ दृष्टमाश्चर्यं श्रुतेनार्थेन बहुलत्वादुत्प्रेक्षते — किमयमित्यादि । अयमर्थ इत्यध्याहार्यं, अथवावपातवर्षयोः कटाक्ष्यमाणत्वात् । अयमिति पुलिङ्गनिर्देशः । अन्यथेदमिति सामान्येनोद्देश्यत्वात् । असिपत्राः खड्गाकारदला नरकविशेषवृक्षाः, "असिपत्रवनं चोग्रं कालसूत्रमपिवत् (?)" इति वचनात् । तेषां चन्दनरसस्य च छटा समूहस्तयोरासारो वेगवान् वर्षः, तस्य युगपदवपातः एकोद्वेगेन सह निपातनम् । अत्राप्यनभ्र इति सम्बध्यते, अनलस्फुलिङ्गकलिलः अग्निकणैस्सङ्कीर्णः अनभ्रः मेघरहितः, मेघस्यैव वृष्टिकर्तृत्वात्, सुधावर्षः अमृतसेकः । अत्र हृदयविदारणशिशिरीकरणयोः देहदाहाह्लादनयोश्च यौगपद्यं वाक्यद्वयेन प्रतिपाद्यते । उत्प्रेक्षा विरोधो विभावना चालङ्कारः ॥ ९ ॥

अथ पूर्वानुसंहितविरुद्धकार्ययौगपद्यकरणनिपुणं दैवं सचमत्कारमनुसन्धत्ते — सञ्जीवनौषधीत्यादि । सञ्जीवनं प्राणनं तदर्था ओषधी मृतसञ्जी-

---

१. 'काम — (सहर्षं) हा धिक् ! कष्टं ! आश्चर्यमाश्चर्यं' क, काम — 'धिक् ! कष्टमाश्चर्यं च' छ. पाठः. २. 'हृया कष्टं भो ! आश्चर्यं' ब, 'हृया हा धिक् कष्टं ! आश्चर्यमाश्चर्यं' झ, 'हृया हा धिक् कष्टं भो ! आश्चर्यमाश्चर्यं' ञ. पाठः. ३. 'नरसच्छटसारयोर्युग' क, 'नच्छटासारयोयुग' छ. पाठः. ४. 'अनलस्फुलिङ्ग' ब. पाठः. ५. 'कलितः' क. ज. झ. ञ. पाठः. ६. 'वर्षः ॥ सञ्जी' क. छ. ज. झ. ञ. पाठः ६. 'सम्मेलनं कुरुते' छ. पाठः.

---

१. 'नरणखला' ख. पाठः. २. 'नरकवृक्षाः' ख. पाठः. ३. 'पत्रवनं' ख. पाठः. ४. 'सूत्रमपीपिवत्'(?) ख. पाठः. ५. 'ह्लादयोश्च' ख. ग. पाठः.

(नेपथ्ये)

हा ताद ! विरम विरम । ऊसुआह्मि दे वअणकमलदंसणेण । पसीद सम्भावेहि मं । कहं च मम कारणादो समत्थलोआलोअन्तरालविक्खम्भ-

वन्यादिः, विषं कालकूटादि तयोः, आलोकतिमिरयोः प्रकाशतमसोः, अशनि-शशधरमयूखयोः वज्रचन्द्रकिरणयोः, व्यतिकरसम्भेदसंवलनशब्दा मिश्रण-पर्यायाः । विधिः दैवमनुकुरुते अनुगच्छति । आश्वासनसन्तापयोः प्रकाशाप्रका-शयोः विदारणाप्यायनयोश्च तत्कार्याणां सुखदुःखानुभवयौगपद्यसम्पादनेन करणात् शशधरमयूखाशनीति प्रक्रमानुगुण्येन वक्तव्ये व्यत्यासेन कथनमनि-यमेन सुखदुःखयोः दुःखसुखयोश्चानुभूतिं व्यञ्जयति । अत्रोपमालङ्कारः, अनुकरणसादृश्यपर्यायत्वात् ॥ १० ॥

अथ 'कथमिह मम वत्सा'विति नेपथ्यवर्तित्वेन दृश्यमानयोः मालती-माधवयोः सूचनां 'मालत्यपायभविगम्ये'ति प्रकाशितभूरिवसुमरणस्य व्यवसाय-श्रवणकातरयोर्मालत्या वचनं नैपथ्यगतत्वेन निबध्नाति — नैपथ्ये हा तातेत्यादि । हा तात विरम विरम । अस्माद्व्यवसायादिति अनु-क्तिस्त्वराद्योतिका, प्रविश पिण्डीमित्यत्र गृहं भक्षयेतिवत् । उत्सुकास्मि ते वदन-कमलदर्शनेन तव मुखपद्मस्य दर्शनं प्रत्युत्कण्ठितास्मि । 'प्रसितोत्सुकाभ्यां तृतीया च '(२.३.४४) इति तृतीया । प्रसीद सम्भावय मां अनुग्रहं कुरु मामुपला-लय आलिङ्गनाङ्कोपवेशनमूर्धन्याघ्राणादिभिरिति भावः । कथं च मम कारणात् समस्तलोकालोकान्तरालविष्कम्भनिर्मलैकमङ्गलप्रदीपभूतम् त्मानं परित्यजसि । चकारो वाक्यार्थसमुच्चये, त्वर्थे वा । ममेत्यर्थान्तरसङ्क्रमितवाच्येन ध्वनिना

१. 'ताद ताद ऊसु' ख. पाठः. २. 'रम दंसणोसुअह्मि दे वअणकमलस्स । पसीद' क. ग. पाठः. ३. 'रम दंसणोसुअह्मि दे वअणकमलस्स । पसीद' झ. पाठः. ४. 'दंसणस्स पसीद' ज. पाठः. ५. 'कहं मम' क. ग. ङ. ज. झ. ञ. पाठः. ६. 'लोआलोअन्तरा' क. ज. झ. ञ. पाठः. ७. 'विक्खादणिम्म' क. झ. ञ. पाठः.

१. 'मरणव्यवसाय' ख. पाठः. २. 'कातरया मालत्या' ङ. झ. पाठः. ३. 'मूर्धाघ्राण' ङ छ. झ. पाठः.

णिम्मलेक्कमङ्गळप्पदीवभूदं अत्ताणं परिच्चअसि। मए उण अळज्जाए णिरणुक्कोसा तुझे त्ति संभाविअं आसि।

(हा तात! विरम विरम। उत्सुकास्मि ते वदनकमलदर्शनेन। प्रसीद सम्भावय माम्। कथं च मम कारणात् समस्तलोकालोकान्तरालविष्कम्भ-निर्मलैकमङ्गलप्रदीपभूतमात्मानं परित्यजसि। मया पुनरलज्जया निरनुक्रोशा यूयमिति सम्भावितमासीत्।)

---

स्वस्याः क्षुद्रत्वं प्रकाश्यते। कारणादिति हेत्वर्थतया षष्ठीयोगे पञ्चमी। समस्तस्य निरवशेषस्य चक्रवालगिरिमध्यप्रदेशविस्तारभूमण्डलस्यैवेत्यर्थः।

"रविचन्द्रमसोर्यावन्मयूखैरवभास्यते।
ससमुद्र[2]सरिच्छैला तावती पृथिवी स्मृता॥"

इति भागवतोक्तेः,

'अभास्करममर्या[2]दं न जानीम ततः परम्।'

इति श्रीरा[3]मायणवचनात्। "लोकालोकश्चक्रवालः" इत्यमरः। 'विष्कम्भो विस्तारप्रतिबन्धयो'रिति वैजयन्ती। निर्मलं कज्जलरहितं, एकं अद्वितीयं इति विशेषणद्वयं द्वीपान्तरेभ्यो व्यतिरेकार्थं; मङ्गलं अभ्युदयार्थं प्रदीपं भूत जातं समस्तार्थप्रकाशकत्वात्, आत्मानं स्वशरीरं कथं परित्यजसि केन प्रकारेण मुञ्चसि। मतिमतामप्यहो व्यामोहः, यत् काचस्य हेतोः कौस्तुभं विक्रीणीत इति भावः। मया पुनरलज्जया निरनुक्रोशा यूयमिति सम्भावितमासीत्। पुनःशब्दो व्यावृत्तौ। अलज्जयेति मद्विरहे यूयं प्राणत्यागायोद्यताः, अहं तु युष्मद्वियुक्तोऽद्यापि प्राणिमीत्यहो मे निर्लज्जतेति भावः। यूयमिति यादृशस्नेहमोहितास्ते यूयं निरनुक्रोशाः कारुण्यरहिताः

---

१. 'णिम्मलकुलेक्क' क. झ. ञ. पाठः. २. 'अत्ताणअं' क. झ. पाठः. ३. 'अणज्जाए' क. झ. ञ. पाठः. ४. 'साए तुझे' ज. पाठः. ५. 'तुझे परिच्चत्ता' छ. ज. पाठः.

---

१. 'सरिद्वीपा यावती' ख. पाठः. २. 'जानामि' ख. ग. झ. पाठः. ३. 'रामायणे' झ. पाठः.

[1]कामन्दकी—हा वत्से !

[2]जन्मान्तरादिव पुनः [3]कथमपि लब्धासि[4] यावदयमपरः ।
उपराग इव शशिकलां [5]विकलयितुमुपस्थितोऽनर्थः ॥ ११ ॥

---

इति सम्भावितं सम्भावितचित्तमासीत्, 'उवहारीकदह्मि राइणो तादेण । राआराहणं क्खु तादस्स गरुअं ण उण मालई' इत्यादिवचनैरुपालब्धवत्वात् ।

अथ करुणतरमालतीवचनश्रवणकातरा कामन्दकी तां शोचति—जन्मान्तरादिवेत्यादि । जन्मान्तरात् [1]भूरिवसुजठरसम्भूतिव्यतिरिक्ताद् भवविशेषाद् एतावन्तं कालमत्यन्तादर्शनादद्य दर्शनाच्च । इवेति न वस्तुतः पूर्वजन्म एव वर्तमानत्वादुत्प्रेक्षा [2]द्योत्यते । कथमपि कृच्छ्रेण पौरुषस्य गोचरतया दैवानुग्रहमात्रेणेत्यर्थः । पुनर्लब्धासि भूयः प्राप्तासि' अस्माभिरिति शेषः । यावच्छब्दो वाक्यालङ्कारे अवधारणे वा; अथवा अवधौ; यत्कालावधौ लब्धासि तावदित्यायाति । तावत्कालावधाविति तुल्यकालत्वं द्योतयति । अयं वर्तमानः अपरः [3]त्वददर्शनादनर्थादन्यः, अथवा यस्मात् परोऽधिको अनर्थो नास्ति सोऽपरः ।

'उपरागो ग्रहो राहुग्रस्ते त्विन्दौ च पूष्णि च ।'

इत्यमरः । लब्धासीति मध्यमप्रयोगादप्रयुज्यमानस्यापि त्वमिति स्थानिनः स्वरसत एवापतितत्वात्त[4]स्य च [5]विकलयितुमिति सकर्मकक्रिया[6]प्रयोगसामर्थ्यात् त्वामिति विपरिणामेन सिद्धिः । अन्यथा शशिकलामिति द्वितीयान्तस्यैवोपमान[7]स्यासम्बन्धात् महाकविप्रयोगसामर्थ्यसिद्धेष्वर्थेषु चोद्यस्यापोद्यत्वात्—

---

१. 'काम—वत्से' ग. ङ. ट. पाठः. २. 'वत्से मालति ! जन्मा' ज. ञ. पाठ ३. 'कथमिव' छ. पाठः. ४ 'सि भीरु यावदयं' क. पाठः. ५. 'कबलयितुं' क. ज. झ. ञ. पाठः.

---

१. 'राव जरठभूरिवसुसंभूति' झ. पाठः. २. 'द्योतते' ङ. छ. पाठ. ३. 'त्वद्दर्शनार्थ'दन्यः' ङ. छ. झ. पाठः. ४. 'स्य त्वामिति' झ. पाठः. ५ 'विकल्पयितुमिति ङ. पाठः. ६. 'प्रयोगाच्च सामर्थ्यं' झ. पाठः. ७ 'स्थापोद्यर्थात्' ख. ग. छ, 'स्थापादित्वात्' ङ 'स्थापोद्यत्वात्' झ. पाठः.

इतरे—हा पिअसहि ! । (हा प्रियसखि ! )

(ततः प्रविशति मुग्धां मालतीं धारयन् माधवः ।)

माधवः—कष्टं ! भो कष्टम् ।

एषा प्रवासं कथमप्यतीत्य
यात्रा पुनः संशयमन्यथैव ।
को नाम पाकाभिमुखस्य जन्तु-
र्द्वाराणि दैवस्य पिधातुमीष्टे ॥ १२ ॥

---

'तिष्ठेत् कोपवशात् प्रभावपिहिता दीर्घं न सा कुप्यति ।'

इत्यादौ; अथवा शोकाकुले वक्तरि न न्यूनपदत्वं दोषः, प्रत्युत गुण एव । यथा हर्षाकुले वक्तरि 'मा मा मानद माति मामल'मित्यादौ । विकलयितुं विकलां विवशां कर्तुम् । 'तत्करोति' इति णिच् । उपस्थितः प्राप्त अनर्थः प्रयोजनस्य विपक्षभूतो विपत्प्रकारः । अत्रोत्प्रेक्षामूलातिशयोक्तिरुपमा चालङ्कारः ॥ ११ ॥

इतरे मदयन्तिकालवङ्गिके । हा प्रियसखि !

मुग्धां मूर्च्छितां धारयन् क्षितितलपतनभयेन स्ववक्षसा भुजाभ्यां चावष्टम्भयन् ।

अचिन्तितोपनतमनर्थान्तरमनुसन्दधानः निष्प्रतीकारदारुणायः दैवायासूयन्नाह—भो इति शोकोक्त्यनुसारेणाकाशे जनमभिमुखीकृत्योक्तिः । कष्टं महत् कृच्छ्रम् । वीप्सया मुक्तकण्ठं परिदेवितं व्यज्यते ।

एषेत्यादि । एषेति भाग्यवशादपरोक्षितत्वं प्रकाश्यते' प्रवासं देशान्तरगमनं कथमपि दैववशात् अतीत्य निस्तीर्य । अन्यथा प्रकारान्तरेण पितृनिधनशङ्कारूपेण । पुनश्शब्देन पूर्वव्यसननिवृत्त्या क्षणमात्रं कृतकृत्यम्मन्यत्वमजरामरत्वमानित्वं च स्वयोः प्रकाश्यते । संशयं जीविष्यति वा न वेति प्राणसन्देहम् । एवकारो भिन्नक्रमः । संशयमेव न तु कथमयमस्मद्विरहेण कृशीभूता विवर्णतां गतेत्यादिशोकास्पदत्वं, यात्रा प्राप्ता पाकाभिमु-

---

१. 'लव'— हा पिअ' क, 'इतराः—हा पिअ' झ. पाठः. २ 'इति माल' घ. ट. पाठः. ३. 'प्रमुग्धां' क. ङ. झ. ञ. पाठः. ४. 'भोः— एषा' छ. ज. पाठः. ५. 'पाताभिमुखस्य' ट. पाठः. ६. 'जन्तोर्द्वाराणि' घ. झ. ञ. ट. पाठः.

---

१. 'अत्रोत्प्रेक्षातिशयोक्ति' ग. पाठः. २. 'पूर्वं व्यसन' ख. पाठः. ३. 'पाताभिमुखस्य' छ. पाठः.

स्वस्य शाल्यादेरिव शरदादिनास्मिन् काले फलमिदं सुखदुःखरूपमयमनुभवि-तव्यं इति कालवशेन फलदानोद्यतस्य दैवस्य पूर्वजन्मकृतस्य कर्मणः। 'पूर्वजन्मकृतं कर्म दैवं पौरुषमैहिकम्' इत्याचार्यवचनात् जन्मान्तरोपार्जितेषु पुण्यापुण्यरूपेषु बहुषु कर्मसु बलवतोरेव देहप्रारम्भकयोः फलदानसामर्थ्यात् तयोश्च भोगमन्तरेण क्षयानुपपत्तेः,

"वर्तमानमिदं याभ्यां शरीरं सुखदुःखयोः।
प्रारब्धं पुण्यपापाभ्यां भोगादेव तयोः क्षयः॥"

इति प्रामाणिकवचनात्। द्वाराणि अनुप्रवेशमार्गान्। बहुवचनेन द्वारैक्ये सर्वा-त्मना पिधातुं प्रयत्नः क्रियेत' अपि सर्वतो द्वारत्वे का प्रतीकारप्रत्याशेति द्योत्यते।

'अथवा भवितव्यानां द्वाराणि भवन्ति सर्वत्र।'

इत्युक्तवत्। पिधातुं

"वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः।
धाञ्कृञोस्तनिनह्योश्च बहुलत्वेन शौनकि॥"

इति वचनात्, अपेरल्लोपः।

'अपिधानतिरोधानपिधानाच्छादनानि च।'

इत्यमरः। क ईष्टे किंशब्दः क्षेपे, न कश्चित्समर्थ इत्यर्थः। नाम इति प्राकाश्ये' प्रसिद्धोऽयमर्थ इत्यर्थः। निरवग्रहस्य सर्वनाम्नोऽतिप्रसक्तत्वमाशङ्क्य परिहरति जन्तुर्जननमरणयोः कर्मपारतन्त्रः, सुरनरादिरिति भावः; परमेश्वरस्यैव कर्मपारतन्त्र्यविरहात्। 'अशुद्धाः सर्व एवैते देवाद्याः कर्मयोनयः। 'न तस्य कार्यं करणं च विद्यते' 'जगतामुपकाराय न सा कर्मनिमित्तजा' इत्यादिश्रुतिस्मृतिवचनात्[3]। ईष्ट इति 'ईश ऐश्वर्ये' इत्यस्यात्मनेपदिनो लटि प्रथमपुरुषैकवचने रूपम्। क ईष्ट इति शक्त्यभावमेवाह, शक्तौ सत्यां हि प्रवृत्तिशङ्का, सैव नास्तीत्यर्थः। अत्रार्थान्तरन्यासोऽलङ्कारः सामान्येन विशेषस्य समर्थ्यमानत्वात् दैवस्य दुर्निवारत्वोक्त्या च तस्य निबन्धे स्वस्य द्वयोश्च नाशे कुलद्वयसम्बन्धानां सर्वेषां महाप्रलयकल्पस्यैव प्रध्वंसस्य दैवेन चिकीर्षित-त्वेन किं निरर्थकेन पौरुषेणेति द्योत्यते॥ १२॥

१. 'शाल्यदेरिव' छ. पाठः. २. 'मनुभावितव्य' ग. पाठः. ३. 'त्यादिश्रुति-वच' ग, 'त्यादिस्मृतिवच' छ. पाठः. ४. 'स्य ध्वंसस्य' ङ. छ. पाठः.

**मकरन्दः**— अथ क्व सा योगेश्वरी ?

**माधवः**—

श्रीपर्वतादिहात्रामन्वायातौ तथैव सह सद्यः ।
करुणवनेचरवचनादनन्तरं तां न पश्यामि ॥ १३ ॥

**कामन्दकीमकरन्दौ** — महाभागे पुनः परित्रायस्व नः । किमित्यन्तर्हितासि ।

---

**अथशब्दः** प्रस्तुतव्यावृत्तौ । आस्तामत्रत्यो वृत्तान्त इत्यर्थः । सेत्यनुभूतं महाप्रभावत्वं करुणार्द्रान्तःकरणत्वमित्याद्यशेषत्वं ध्वन्यते ।

**श्रीपर्वतादित्यादि** । आवामहं मालती च, तया योगिन्या **सहैव इह** अस्मिन् देशे **अन्वायातौ** पूज्यतया तामनुगच्छन्तावागतौ, स्व इति शेषः । **सद्यस्तत्क्षण एवेति** तत्प्रभावान्निमेषमात्रेणागमनं प्रकाश्यते । **करुणवनेचरवचनात्** करुणा दया सात्रास्तीति करुणः, अर्श आदित्वादच् ।

"करुः क्लेश इति प्रोक्तः क्लेशं न सहते यतः ।
यस्य धीः करुणा सा स्यात् प्रत्यये करुणो भवेत् ॥"

इति **भावप्रकाशः** । करुणानां दयालूनां, अथवा करुणाद् वनेचराणां अरण्यवासिनां मुनीनामित्यर्थः । 'तत्पुरुषे कृति बहुलम्' (६-३-१४) इत्यलुक् । **वचनात्** 'मालत्यपायमधिगम्य विरक्तचेताः' इत्यादेर्वाक्यात् । तस्य नैपथ्योक्तमुनिवचनत्वं भङ्ग्या प्रकाशयति । **अनन्तरं** अत्रैव **न पश्यामी**त्यन्तर्धाय गतत्वमाह । करुणवनेचरवचनादनन्तरमित्युक्त्या भूरिवसुपरित्राणत्वरया सा धावितेति सूचयति कविः ॥ १३ ॥

आकाशे योगिनीमभिमुखीकृत्याहतुः— **महाभागे इति** । **महाभागे** महान्निरतिशयो भागो भाग्यं यस्याः, अन्यैरशक्यबहुजनप्राणत्राणस्य निष्कारणं कृतत्वात् । **पुनरिति** पूर्वं मालतीपरित्राणद्वारेण त्रातत्वात् इदानीमप्यनर्थान्तरस्यापतितत्वादितोऽपि नः परित्रातुं त्वमेव शक्तो नान्यः कश्चिदित्यर्थः ।

---

१. 'मक—(सहसोपसृत्य माधवं प्रति) सखे ! अथ' क. झ. ख, 'मक—क्व सा' ख. ॰, 'मक—सखे! अथ' घ. ज. पाठः. २. 'अथ सा योगिनी क्व?' क. झ. ञ. पाठः. ३. 'योगिनी' छ. ञ. पाठः. ४ 'श्रीपर्वतादहं सत्वरमापतितस्तथैव' क'
'श्रीपर्वतादिहागतां तामनुयातोऽस्म्यनन्तरम् ।
करुणवनेचरवचनादन्तरितां न पश्यामि ॥' छ'
'श्रीपर्वतादिहाहं सत्वरमपतं तथैव' ज. झ. ञ. पाठः. ५. 'दन्तरितां तां न' ज. पाठः ६. 'रन्दौ—(सप्रणयमाकाशे) महा' क. झ. ञ. पाठः. ७. 'भागे पुनस्त्रायस्व' क. 'भागे परित्रायस्व' छ, 'भागे पुनस्त्रायस्व नः' झ. पाठः. ८. 'किमर्थमन्त' क. ज. झ. ञ. पाठः.

---

१. 'प्राणपरित्यागस्य' ग. पाठः. २. 'सतीत्राणरूपेण' क. छ. झ. पाठः.

मदयन्तिकालवङ्गिके[1]— सहि माळइ ! णं भणामो सहि माळइ[2] त्ति। (सोत्कम्पं[3]) भअवइ परित्ताआहि[4]। चिरणिरुद्धणीसासणिच्चलं[5] से हिअअं। हा अमच्च ! हा पिअसहि! दुवे वि तुझे परप्फरावसाणस्स कारणं जाआ[6]।

(सखि मालति ! ननु भणावः सखि मालतीति। (सोत्कम्पं) भगवति परित्रायस्व। चिरनिरुद्धनिश्वासनिश्चलमस्या हृदयम्। हा अमात्य ! हा प्रियसखि ! द्वावपि युवां परस्परावसानस्य कारणं जातौ।

परित्रायस्व सर्वतो रक्ष। किमिति कुतो हेतोः अन्तर्हिता विद्यया छन्ना पुण्यराशेस्तव दर्शने वयं किमयोग्या इति, अथवा कारणान्तरेणेत्यर्थः।

मुग्धायाः प्रबोधनायाहतुः—सखि मालति। सकृदुक्ते प्रबोधमदृष्ट्वा पुनः सनिर्बन्धमाहतुः— ननु भणावः। ननुः संवादे। किं त्वया न श्रूयते, सखि मालतीत्यावां ननु वदाव इत्यर्थः। द्विरुक्तेऽपि तस्याः प्रबोधमदृष्ट्वा सोत्कम्पं अपायशङ्कया ससाध्वसमाहतुः— भगवति परित्रायस्व। चिरनिरुद्धनिश्वासनिश्चलमस्या हृदयम्। परित्रायस्व जीवनोपायानुष्ठानेन रक्षेत्यर्थः। चिरनिरुद्धेन बहुक्षणस्तब्धेन निश्वासेन हेतुना निश्चलं निष्कम्पम्। निश्वासोच्छ्वासप्रवेशनिर्गमसमये हि तदनुगुणं चलति वक्षःस्थलम्। हृदयस्पन्दनाभावे च मृतभ्रान्तिजनकत्वाद् भयोपपत्तिरावयोरिति भावः। हा अमात्य ! हा प्रियसखि ! द्वावपि युवां परस्परस्यावसानस्य कारणं जातौ। मालत्यपायाधिगमेनामात्यस्य मरणाध्यवसायात्[1], तदध्यवसायश्रवणेन मालत्या मोहाच्च परस्परस्यान्योन्यस्यावसानं मरणं, तस्य कारणं हेतुर्जातावित्युक्तिः।

१. 'के—णं' छ. पाठः. २. भणामि माळ' क. छ, 'भणामि सहि माळ' ज. पाठः ३. '(सोत्कण्ठं)' क. पाठः. ४. 'हि। णिरुद्ध' छ. पाठः. ५. 'णिप्फुरं' क. घ. ज. न, 'णिप्फळं' ख. पाठः. ६. 'जादो' क. पाठः.

१. 'मरणाध्यवसायात्' ख. पाठः.

1787

कामन्दकी — हा वत्से मालति !

माधवः — हा प्रिये !

इतरे — हा पिअसहि ! (हा प्रियसखि ! )

(सर्वे मोहमुपगम्य पुनः संज्ञां झटिति लभन्ते ।)

कामन्दकी — तत् किमेतत् झटिति पाठ्यमानादिवाम्बुदादम्बुनिवहः परिस्खलन्नस्मान् प्राणयति ।

माधवः—(सोच्छ्वासं) अये प्रत्यापन्नचेतना मालती । तथाह्यस्याः—

---

अथ निर्विघ्नसमागमेन नायकयोर्निरतिशयं सुखमुपपादयिष्यन् कवीश्वरस्तस्य स्वादुतमत्वापादनाय दुःखस्य परां कोटिं प्रकाशयति —हा! वत्सेत्यादिना । मालत्याः सञ्जीवनाभावं निश्चित्य सर्वेषां परिदेवितम् ।

इतरे मदयन्तिकालवङ्गिके । हा प्रियसखि ।

उपगम्येति ल्यपा संज्ञालाभस्य झटित्यं प्रकाशयंस्तस्य योगिनीप्रभावजनितत्वं द्योतयति कविः; 'सामानकर्तृकयोः पूर्वकाले' (३-४-२१) इति क्त्वो विधानात् ।

तदेव कामन्दकीवचनभङ्ग्या स्फुटीकरोति — किमेतदाश्चर्यमेतत् किंमूलमित्यर्थः पाठ्यमानात् केनचिद्विदार्यमाणादिवेति बाहल्यादुत्प्रेक्षा। परिस्खलन् सर्वतः पतन् ।

सोच्छ्वासं मोहस्तम्भविरहादुच्छ्वासं मुक्त्वेत्यर्थः । अये इत्याश्चर्ये, असम्भावितत्वात्तस्यार्थस्य । प्रत्यापन्नचेतना पुनःप्राप्तप्रबोधा। तथात्वमेवोपपादयति—तथाह्यस्याः ।

---

१. 'काम—वत्से' छ· पाठः· २. 'माध—हा प्रिये मालति !' ज· पाठः. ३. 'मकरन्दः—हा पिअसहि' क. छ. ज. झ, ञ, 'इतराः' ङ· पाठः. ४. 'म्य संज्ञां' क· पाठः· ५. 'काम -(ऊर्ध्वमवलोक्य) तत्' क· झ· ञ, 'काम'—'किमे' घ, काम— झटिति' छ. पाठः. ६. 'किमेतदाश्चर्यं झटिति' घ, 'किमेष झटिति' क. ज· झ. म, 'किमेतत् पाठ्य' ट. पाठः. ७. 'वातपाठ्य' छ· पाठः· ८. 'दम्बुदानिवहः' घ· पाठः· ९. 'प्राणयति' क. ज· झ· ञ· पाठः· १०· 'प्रत्यासन्न' ख. च· ट· पाठः· ११. 'चेतनेव माल' ज. पाठः.

---

१. 'मूलार्थं' ख. ग. छ. पाठ.

भवति विततश्वासोन्नाहप्रेङ्खन्नपयोधरं
हृदयमथ च स्निग्धं चक्षुर्निजप्रकृतौ स्थितम् ।
तदनु वदनं मूर्च्छाच्छेदात्प्रसादि विराजते
परिगतमिव प्रारम्भेऽह्नः श्रिया सरसीरुहम् ॥ १४ ॥

(नैपथ्ये)

---

भवति विततेत्यादि । विततस्य चिरनिरुद्धतया नदीस्रोतस इव सम्पिण्डितस्य श्वासस्य प्राणवायोरुन्नाहेनोर्ध्वप्रसरणेन प्रेङ्खन्तौ प्रकर्षेण प्रेरितौ, कम्पिताविति यावत्, पयोधरौ स्तनौ यस्मिन्,

"अद्यापि स्तनवेपथुं जनयति श्वासः प्रमाणाधिकः ।"

इतिवत् । हृदयं वक्षः । अथ अनन्तरं, स्निग्धं स्नेहगुणविशिष्टं भूत्वा, पूर्वं किञ्चिद्रौक्ष्यं स्पर्शात्, निजप्रकृतौ स्वस्वभावे विपुलायतरक्तनीलधवलत्वादिगुणयोगित्वे स्थितं स्थैर्यं गतमित्यर्थः, चक्षुरितीन्द्रियत्वाभिप्रायेण जात्येकवचनत्वेन वा विवक्ष्यते । तदनु तस्मादनन्तरं वदनं मुखम्, मूर्च्छाच्छेदात् मोहस्य निवृत्तत्वात् प्रसादि प्रसादो नैर्मल्यं, तद्विशिष्टं, पूर्वं वैवर्ण्यप्रसङ्गात् । अह्नः प्रारम्भे दिवसस्यादौ प्रभातकाले श्रिया शोभया परिगतं सर्वतः प्राप्तं [सरसीरुहमिव] । पूर्वमपि सूक्ष्मरूपायास्तस्या अवस्थानात् प्रातः परिगतमित्युक्तिः । अत्र स्वभावतो वदनस्यापि मूर्च्छासमयेऽप्यमुक्तशोभत्वं प्रबोधसमये पुनर्विस्तीर्णशोभत्वं च प्रकाश्यते । हृदयं भवति, अथ चक्षुः स्थितं, तदनु वदनं विराजत इति मूर्च्छाच्छेदक्रमोक्तिः । अत्र स्वभावोक्तिरुपमा चालङ्कारः ॥ १४ ॥

अथ—

"करुणवनेचरवचनादनन्तरं तां न पश्यामि"

इति सूचितयोगिन्यन्तर्धानप्रयोजनं नैपथ्यपात्रेण तयैव प्रकाशयति—नैपथ्ये ।

---

१. 'श्वासा नासा प्र' क. पाठः. २. 'न्नाहाः प्र' ख. पाठः. ३. 'प्रसन्नपयोधरं' क. पाठः. ४. 'मपि च' क. घ. ङ. ज. झ. म पाठः.

---

१. 'सम्बन्धितस्य' ग. पाठः. २. 'प्रसरेण' झ. पाठः. ३. 'न्द्रियाभिप्रायेण' ङ. छ. झ. पाठः. ४. 'अतो वदन' ङ. छ. झ. पाठः.

अविगणय्य नृपं सहनन्दनं
चरणयोर्नतमग्निचये पतन् ।
सपदि भूरिवसुर्विनिवर्तितो
मम गिरा गुरुसम्मदविस्मयः ॥ १५ ॥

माधवमकरन्दौ—(ऊर्ध्वमवलोक्य सहर्षं) भगवति दिष्ट्या वर्धसे ।

---

अविगणय्येत्यादि । अविगणय्य तृणायापि न मत्वेति पूर्वोक्तविरक्तिपरिपाको व्यज्यते । 'निस्पृहस्य तृणं जगत्' इति न्यायात् । नृपमिति कोपप्रसादयोर्निग्रहानुग्रहसमर्थस्योल्लङ्घने महदहो साहसिक्यमिति द्योत्यते । नृपमित्यनेन जगत्परिपालनाधिकृतस्य वसुन्धराभारसन्धारणक्षमस्कन्धमन्त्रिरत्नायत्तसिद्धित्वात् तदपाये राज्यनाशमाशङ्क्य दैन्यं च व्यज्यते । अत एव चरणयोर्नतमित्युक्तिः, न तु वाचा निवारयन्तमिति । सहनन्दनममात्यनन्दनसहितं, तस्यापि राजचित्तानुवर्तनपरत्वादेतद्गुणगणवशीकृतत्वाच्च नृपसमानमिति दुःखत्वमिति भावः । चरणयोः प्रणतं चरणग्रहणात् पादौ कराभ्यां गृहीत्वा भूमण्डले दण्डवत् पतितत्वं प्रकाश्यते, नतिमात्रस्य दूरतोऽपि शक्यत्वात् । अग्निचये प्रभूतेन्धनचितेऽग्नौ पतन् न तु पतिष्यन्निति दैवयोगात् स्वस्याः समयोपस्थानं व्यञ्जयति । सपदि मदुपसरणात् प्रागेव शीघ्रं निवर्तितः, पतनादर्थात् । कथं सपदि निवर्तित इत्यत्राह—मम गिरा न तु मयेति, अनेन गगनशृङ्गसङ्गिन्या मम दर्शनात् प्रागेव गम्भीरमधुरया दूरतो वाचैव 'जीवति मालती, कुशलिनी च, मा कष्टं कष्टं साहस'मित्येवंरूपयेत्यर्थः । गुरुसम्मदविस्मयः गुरुः निर्भरः सम्मदो हर्षः मालतीकुशलश्रवणोत्सवात् विस्मयः आश्चर्यबुद्धिः, अचिन्तितमेव समये समुपस्थानात् । अत्राद्भुतरसो ध्वन्यते । भावोदयोऽलङ्कारः, सम्मदविस्मययोर्भावयोरुदयप्रतिपादनात् ॥ १५ ॥

---

१. 'मग्निमुखे पतन्' क. ख. पाठः. २. 'वर्तते मम' ग. पाठः. ३. 'रन्दौ—भगवति' छ. ज. पाठः. ४. 'सविस्मयं' क. पाठः.

---

१. 'णयोर्निपतितमिति' ग. पाठः २. 'व्यज्यते' ख. पाठः ३. 'श्रवणात् विस्मयः' ख. पाठः.

सा योगिनीयमतिशयविघटितजलदाऽभ्युपैति नो यस्याः ।
वागमृतजलासारो जलदजलासारमतिशेते ॥ १६ ॥

कामन्दकी—प्रियं नः प्रियं नः ।

मालती—दिट्ठिआ चिरस्स पच्चुज्जीविदह्मि । (दिष्ट्या चिरस्य प्रत्युज्जीवितास्मि ।)

कामन्दकी—(सहर्षबाष्पं) एह्येहि पुत्रि !

---

अथ 'महाभागे किमित्यन्तर्हितासी'ति तद्दर्शनोत्सुक्यदुःखासिकाखेदितां कामन्दकीमाह्लादयतः—सा योगिनीयमित्यादि । सा या निष्कारणपरमोपकारकरणप्रकाशितसौजन्या इयं पुरोवर्तिनी, अतिशयविघटितजलदा अस्मदनुग्रहत्वरया अतिशयितेन गगनगमनवेगेन विघटिता परस्परविश्लेषिता, वेगमारुतोद्भूतत्वात्, जलदा मेघा यया, नः अभ्युपैति अस्मान् लक्षीकृत्यायाति । विप्रकृष्टान्तरे वियति तडित इव झटिति जलदपटलपाटनेन धावन्त्या स्पष्टदृष्ट्यभावत्वात् कथं सैवेति निश्चीयत इत्यत्राह—यस्या वागमृतजलासारो वचनरसस्य पीयूषरसस्य वेगवान् वर्षः । मृतदेशीयानां स्वेषां सञ्जीवनादमृतत्वारोपः । जलदजलासारं 'झटिति पात्यमानादिवाम्बुदा'दित्यादिना प्राणनेन प्रतिपादितमेघजलवर्षमतिशेते स्वगुणैरधःकरोति, जलदजलासारस्य प्रवृत्तमोहमात्रनिवर्तकत्वात्, वागमृतजलासारस्य तु निवृत्तजातीयस्यास्य पुनरुत्थानाय जागरूकत्वेन, तदन्तरेण पूर्वस्य गजस्नानतुल्यत्वात् । अत्र रूपकं व्यतिरेकश्चालङ्कारः ॥ १६ ॥

अथ सम्पूर्णमनोरथा आह—प्रियं नः अस्माकमभिमतं, सम्पन्नमिति शेषः । वीप्सा हर्षद्योतिका ।

दिष्ट्या चिरस्य प्रत्युज्जीवितास्मि दैववशात् बहोः कालात् प्रतिष्ठापितप्राणास्मि, चिरकालानुभूतस्य दुःखसागरस्य निस्तीर्णप्रायत्वात् ।

सहर्षबाष्पं प्रत्युज्जीवितायाः दर्शनाद्धर्षेण निवृत्तदुःखस्मरणादीदृशस्य

---

१. 'सा योगिन्यम्बरतो विघटित' क. झ. ञ. पाठः. २. 'दाभ्युपैत्ययं यस्याः' क. झ. ञ. पाठः. ३. 'नौ यस्याः' ज. पाठः. ४. 'स्याः अमृतजलासारा वाग्जलद' घ. पाठः. ५. 'प्रियं नः प्रियम्' क, 'प्रियं प्रियं' ख, 'प्रियं नः।' ज. पाठः. ६. 'मालत्यादयः' क. ट. पाठः. ७. 'ज्जीविदह्म' क, 'ज्जीवह्म' ट. पाठः. ८. (सहर्षं सबाष्पं च)' क. झ, '(सहर्षं) छ. पाठः. ९. 'हि मे पुत्रि' घ. पाठः. १०. 'पुत्रि मालति' झ. ञ. पाठः.

---

१. 'दूलितत्वात्' क. पाठः.

मालती—कहं भअवई ? (कथं भगवती ?) (पादयोर्निपतति ।)

कामन्दकी—(उत्थाप्यालिङ्गय मूर्ध्न्याघ्राय च)

जीव जीवितसमाय जीवितं
देहि जीवय सुहृज्जनं च ते ।
अङ्गकैस्तुहिनसङ्गशीतलैः
पुत्रि ! मां प्रियसखीश्च जीवय ॥ १७ ॥

---

मम वत्सया कथं तादृग्दुःखमनुभूतमिति बाष्पेण च सहितम् । एह्येहि आगच्छागच्छेत्यालिङ्गनत्वरया वीप्सा ।

कथं भगवती, दृश्यत इति शेषः । कथमित्याश्चर्ये, एवं पुनर्दर्शनस्य स्वप्नेऽप्यचिन्तितत्वाद् गुरुत्वात् तत्सम्बन्धसञ्जीवितत्वाच्च ।

पादपतनं शिरीषमृद्व्याः क्षितितले पतनमसृष्यन्ती सपद्युत्थाप्य विरहतप्तस्वशरीरनिर्वापणायालिङ्गय दुहितृवात्सल्यान्मूर्ध्नि चाघ्रायेत्यर्थः ।

आशिषं प्रयुङ्क्ते—जीवेत्यादि । जीव चिरमायुरवाप्नुहि । जीवितसमाय प्राणसमाय माधवाय, जीवितं देहि । सुहृज्जनं मकरन्दादिकं जीवय धृतप्राणं कुरु । अङ्गकैः सौकुमार्यातिशयादनुकम्पनीयैरङ्गैः तुहिनसङ्गशीतलैः हिमजलावगाहाच्छैत्यदायिभिः । प्रियसखीः लवङ्गिकामदयन्तिकावलोकितादिकाः । प्रथमं जीवेत्युक्तिः सकलजीवितमूलभूतत्वात् तज्जीवितस्य, पश्चाज्जीवितसमाह्लादिजीवितदानाद्युक्तिरेतज्जीवितायत्तत्वादन्वयव्यतिरेकादिति मन्तव्यम् । अत्राशीर्नामालङ्कारः ॥ १७ ॥

---

१. 'माल—भअ' ङ, 'माल—हा कहं' ज. झ. ञ. पाठः. २. 'पादयोः पतति' क. पाठः. ३. 'मूर्ध्न्युपाघ्राय' ख. घ. च. छ. ज ट. पाठः. ४. 'य) जीव' ञ. पाठः. ५. 'एहि जीवित' क. पाठः. ६. 'जीवतु' क. झ. ञ. पाठः ७. 'ज्जनश्च ते ।' क. घ. छ. ज. झ. ञ. पाठः. ८. 'सखीश्च' क. घ. ञ. झ. ञ, 'सखींश्च' छ. पाठः.

---

१. 'मूर्ध्न्युपाघ्रायेत्यर्थः' ख. पाठः. २. 'समादिजीवितदान' ख. ङ. छ, 'समासादिजीवित' ख. पाठः. ३. 'जीवितार्तत्वात्' ङ. छ, 'जीवितार्थत्वात्' ख. पाठः.

माधवः—वयस्य मकरन्द! सम्प्रत्युपादेयो माधवस्य जीवलोकः संवृत्तः ।

मकरन्दः—(सहर्षं) एवमेतत् ।

इतरे—पिअसहि! मणोरहादिरित्तदंसणे! सम्भावेहि अह्मे परिस्संगेण ।

(प्रियसखि! मनोरथातिरिक्तदर्शने! सम्भावयास्मान् परिष्वङ्गेण ।)

मालती—हा पिअसहीओ! । (हा प्रियसख्यौ! )

(उभे आलिङ्गति ।)

---

सम्प्रति मालतीजीवितनिर्णये उपादेयः स्वीकार्यः, पूर्वमुद्वेगजनकत्वेन जिहासितत्वात्, माधवस्येति मालतीमयजीवितत्वेनात्मप्रसिद्धिं द्योतयति, जीवलोकः मनुष्यलोकः ।

एवमेतदित्यस्मिन् वस्तुनि स्वानुभवसंवादं दर्शयति ।

इतरे मदयन्तिकालवङ्गिके । प्रियसखि! मनोरथातिरिक्तदर्शने सम्भावयास्मान् परिष्वङ्गेण । मनोरथो नाम स्वाभिमतस्य दुर्लभस्य वस्तुनः सङ्कल्पः, अपि नामैवं भविष्यति भाग्यवशादस्माकमिदानीमिति, तस्य दर्शनं तथात्वेन साक्षात्कारः, स हि परा काष्ठा जगति मनोनिर्वृतेः ।

'अष्टाविमानि हर्षस्य नवनीतानि भारत ।'

इत्युपक्रम्य—

'अभिप्रेतस्य लाभं च पूजा च जनसंसदि ।'

इति महाभारतोक्तेः ततोऽपि अतिरिक्तमतिशयितं तव दर्शनमिदानीमित्यतिशयः प्रतिपाद्यते ।

हा प्रियसख्यौ । हेति

---

१. 'देयो जीव' क. पाठः. २. 'षं) वयस्य माधव! एव' घ. ट. पाठः. ३. 'मदयन्तिकालवङ्गिके—' क. झ. ञ, 'इतराः' छ. पाठः. ४. 'हान्तारिददंसणे' क, 'हादिक्कान्तदंसणे' ज. झ. ञ. पाठः. ५. 'णेण संभा' प. छ. ट, 'णे णं सम्भा' ख, पाठः. ६. 'संवृतः' क. घ. च. पाठः.

कामन्दकी—वत्सौ! किमेतत्?

माधवमकरन्दौ—भगवति!

कपालकुण्डलाकोपदुर्जातजनितापदः।
वयमभ्युद्धृताः[1] कृच्छ्रान्निर्बन्धादार्ययानया[2] ॥ १८ ॥

कामन्दकी[3]—कथमघोरघण्टवधविजृम्भितमेतत्[4]।

"स्वजनस्य[1] हि दुःखमग्रतो विवृतद्वारमिवोपजायते।"

इति न्यायात् सखीदर्शनेऽतीतदुःखस्मरणविषादद्योतकम्। उभे युगपदालिङ्गतीत्यर्थः। उभे आलिङ्गतीति दुःखनिर्गमात्[2] समयः। 'जीव जीवितसमे'त्यादिना 'हा! पिअसहीओ' इत्यन्तेनान्योन्यभाषणात्परिभाषणम्।

मालतीव्यसनस्य मूलमजानाना पृच्छति—वत्सौ हे पुत्रौ, किमेतत्? मालतीव्यसनरूपमेतद्वस्तु किं किम्मूलमित्यर्थः।

तस्योत्तरमाहतुः[3]—कपालकुण्डलेत्यादि[4]। कपालकुण्डलायाः कोपरूपेण दुष्कृतेन सम्पादितव्यसनाः, मालतीव्यसनस्य सर्वबन्धुसाधारणत्वात् वयमिति सर्वेषां स्वेषां सङ्ग्रहः अभ्युद्धृताः अभिमुखीभूयोत्तरिताः[5], कृच्छ्रादस्माद्व्यसनात्, पङ्कातङ्कादिव मतङ्गजाः, निर्बन्धात् निर्बन्धं अभ्युद्धरणे महान्तं संरम्भं कृत्वा। ल्यब्लोपे पञ्चमी। आर्यया निरतिशयसौजन्यया। 'न चावदद्भर्तुरवर्णमार्या', 'कुलोद्गतं सत्यमार्यमि'त्यादिवत्। अनया पुरो दृश्यमानया योगेश्वर्या। अत्रातिशयोक्त्यलङ्कारः[6], परिरक्षणस्याभ्युद्धरणत्वेनाध्यवसितत्वात् ॥ १८ ॥

'कपालकुण्डलाकोपे'त्युक्तस्य तत्कोपस्य कारणमनुमानेन सम्पादयति—

---

१. 'वयमप्युद्धृताः' क, 'वयं समुद्धृताः' छ. पाठः. २. 'निर्बन्धेनार्यया' क, 'बन्धनादार्यया' छ. पाठः. ३. 'काम—अघोर' ब. ट. पाठः. ४. 'विजृम्भणमेतत्' च. ट. पाठः.

---

१. 'स्य तु दुःख' ख. पाठः. २. 'दुःखविगमात्' झ. पाठः. ३. 'तत्रोत्तर' ख. पाठः. ४. 'माह—कपाल' ङ. छ. झ. पाठः. ५. 'भूयोत्थापिताः' ख. पाठः. ६. 'ङ्कारः, रक्षणस्य' ख. ब. पाठः.

लवङ्गिकामदयन्तिके---अहो अच्चरिअं ! पुणरुत्तदारुणस्स परिणामरमणीअत्तणं विहिणो ।

(अहो आश्चर्यम् ! पुनरुक्तदारुणस्य परिणामरमणीयत्वं विधेः ।)

(प्रविश्य)

सौदामिनी---भगवति कामन्दकि! स एष वश्चिरन्तनाऽन्तेवासी जनः प्रणमति ।

---

अघोरघण्टवधस्य माधवकर्तृकस्य विजृम्भितं फलपरिपाकः । कथमित्याश्चर्ये ।

"अग्नेः शेषमृणाच्छेषं शत्रोः शेषं न शेषयेत् ।"

इति वचनादनादरोपेक्षितस्य शत्रुशेषस्याहो परिणामदारुणत्वमिति भावः ।

अहो आश्चर्यम् ! पुनरुक्तदारुणस्य परिणामरमणीयत्वं विधेः । पुनरुक्तदारुणस्य उपर्युपरि क्रूरस्य, विपत्परम्परासम्पादनात्, परिणामरमणीयत्वमुदर्के शोभनत्वं, निर्विघ्नसुखपर्यन्तत्वात्, विधेर्दैवस्य ।

निश्शेषदुःखनिरसनेन कृतकृत्यां योगिनीं समये प्रवेशयति---प्रविश्य सौदामिनीति । स इति चिरमस्खलितोपचारभक्तिनिम्नतया यः प्रसादातिशयभूमिः स इत्यर्थः, एष इदानीं पुरो वर्तमानः, वः इति गुरुषु बहुवचनं, चिरन्तनः पुराण इत्यनेनाधुनिकीनां व्यावृत्तिः, 'सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च' (४-३-२३) इति ट्युतुटौ, अन्तेवासी शिष्यः; 'शयवासवासिष्वकालात्' (६-३-१८) इत्यलुक्, जनः मार्गेमात्रमित्यनुद्धतिसूचकं वचनम् ।

---

१. 'मद---लवङ्गिए अच्चरिअं' क. पाठः. २. 'अं अच्चरिअं' छ. पाठः. ३. 'रमणिज्जं वाहिणो विळसिदं' क. पाठः. ४. ('ततः प्रविशति सौदामिनी ।) सौदा---' च. ट. पाठः. ५. 'सौदा-(उपसृत्य) भग' क. ख. ग. पाठः. ६. 'वति ! स एष' च. ज. पाठः.

2780

कामन्दकी—अये ! भद्रा[1] सौदामिनी ।

माधवमकरन्दौ—कथमियं[2] सा भगवत्याः[3] पक्षपातस्थानमाद्य-शिष्या सौदामिनी ? यतः[4] सर्वमधुना सङ्गच्छते।

कामन्दकी—

एह्येहि भूरिजनजीवितदानपुण्य-[5]

सम्भारधारिणि चिरादसि हन्त दृष्टा[6] ।

---

अये इति अचिन्तितदर्शनात् प्रार्थितदर्शनाच्च हर्षः प्रकाश्यते । भद्रा कल्याणी, गुरुप्रसादसम्पन्नत्वात् ।

योगिनीकर्तृकस्य स्वविषयपरमोपकारसंरम्भस्य कारणं प्राग् बहुधा विचिन्त्याप्यपश्यन्तौ सम्प्रति तन्नामश्रवणाद्गीतसन्देहावाहतुः—कथमिति सहर्षाद्भुतमुक्तिः । सेति कथाप्रसङ्गेषु सस्नेहबहुमानं भगवत्या क्षणे क्षणे पुरा कथितत्वात् स्वबुद्ध्यारूढत्वं[1] ध्वनति । कथनसिद्धमर्थं भङ्ग्या सूचयति— पक्षपातस्थानं स्नेहातिशयविषयः । आद्यशिष्या प्रथमशिष्या प्रधानभूता वा, सौदामिनीति संज्ञा तावत्पुरैव मन्त्रवदावर्तिता, इदानीं तस्याः संज्ञिनः सम्बन्धो दिष्ट्या गृहीत इति भावः। यतः यस्मादियं सौदामिनी तत इत्यायाति, अधुना साम्प्रतं सर्वं मालतीपरित्राणं माधवाश्वासनं भूरिवसुसञ्जीवनमित्यादिकं सर्वं वस्तु, सङ्गच्छते सङ्गतं उपपन्नं, कारणस्य[2] भगवतीसम्बन्धस्य महतो विद्यमानत्वादिति भावः । सङ्गच्छत इति 'समो गम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्य' (१-३-२९) इति संपूर्वादकर्मकाद् गमेरात्मनेपदम् ।

पूर्वं शुश्रूषातिशयात् विद्याग्रहणसामर्थ्याच्च पक्षपातमात्रविशिष्टेदानीं परमोपकारकरणादचिन्त्यमन्त्रसिद्धिप्रभावसमग्रतया च बहुगुणस्नेहबहुमानशालिन्याह — एह्येहीत्यादि । आगच्छागच्छेति प्रणामस्य क्षणमालिङ्गनविबात्स्यात्तदक्षमयोक्तिः । पादपरमाणौ मयि कोऽयमत्यादर इत्यत्राह —

---

१. 'भद्रे सौदामिनि!' छ., 'भद्रं सौदामिनि' ज. पाठः. २. 'रन्दौ – (सविस्मयं) कथ' क. झ. ञ, 'रन्दौ—अथ किमियं सा' च. पाठः. ३. 'यं भग' क. झ. पाठः. ४. 'तस्सर्वं' क. झ. ञ. पाठः ५. 'भूरिवसुजीवित' क. छ. ज. पाठः. ६. 'चिराय मयासि दृष्टा ।' क. पाठः.

---

१. 'त्वं दर्शयति' ख. पाठः. २. 'कारण' ग. पाठः.

दत्तप्रमोदमपि नन्दय मे शरीर-
मालिङ्गय सौहृदनिधे ! विरम प्रणामात् ॥ १९ ॥

अपि च —
वन्द्या त्वमेव जगतः स्पृहणीयसिद्धि-
रेवंविधैर्विलसितैरतिबोधिसत्त्वैः ।

---

भूरिजनजीवितदानपुण्यसम्भारधारिणीति भूरीणां बहूनां जनानां जीवित-दानेन प्राणप्रदानेन यत् पुण्यं तस्य सम्भारं सञ्चयं धारयितुं शीलं यस्याः ।

"एकतः क्रतवस्सर्वे समाप्तवरदक्षिणाः ।
एकतो भयभीतस्य प्राणिनः प्राणरक्षणम् ॥"

इति महाभारतोक्तेरेकस्य प्राणिनः प्राणप्रदाने महत् पुण्यं, बहूनां पुनः किमुच्यतामिति सम्भारशब्देन प्रकाश्यते । हन्तेति हर्षे । चिराद् बहोः कालाद् दृष्टासि । दत्तप्रमोदं दर्शनादेव जनितहर्षं इष्टतमस्य वस्तुनो दर्शनमात्रादेव शरीरस्याप्यायमानत्वात् । अपीति तावन्मात्रेण तृप्त्यभावं सूचयति । आलिङ्गय नन्दयं बहुपुलकोत्कम्पादिभिः कृतार्थय । मे शरीरमिति पूर्वानुभूतस्य त्वत्स्पर्शसुखस्य चिरविच्छेदेन निकाममुषितमिति द्योतयति । सौहृदनिधे बन्धुजनवात्सल्यस्य जलस्य जलनिधिवन्निधे साकल्यनिवेश-स्थानभूते । प्रणामाद् आलिङ्गनसंलापादिसुखव्यवधायकाद् विरम निवर्तस्व । अत्र सम्भारधारिणीत्यातिशयोक्तिः । 'विशेषोऽस्ति न सतां पुत्रशिष्ययोः' इति वचनात् सन्छिष्याविषयो भावश्चात्र प्रकाश्यते ॥ १९ ॥

अथ 'भूरिजनजीवितदानपुण्यसम्भारधारिणी'ति, 'सौहृदनिधे' इति च सूचितमर्थं स्पष्टीकरोति — अपि च वन्द्या त्वमेवेत्यादि । वन्द्या अभिवाद्या स्तुत्या च । एवकारेण न मादृश्यः ईदृश्यां विपदि निष्प्रतीकाराः, प्रत्युत त्वमेवेति द्योतयति । जगतः न कतिपयानां, अपि तु सर्वस्यापि

---

१. 'मभिनन्दय' ज. पाठः. २. 'मानन्दसौहृद' ज. पाठः. ३. 'वन्द्यासि सर्वजगतः' छ. पाठः. ४. 'जगतां' क, 'जगति' ड. पाठः. ५. 'रधिबोधि' ख. पाठः

---

१. 'शीलमस्याः' ख. ग. ङ. छ. पाठः. २. 'य पुलको' झ. पाठः. ३. 'यसुखापादि' ङ. छ. पाठः.

यस्याः पुरा परिचयप्रतिबन्धबीज-
मुद्भूतभूरिफलशालि विजृम्भते नः ॥ २० ॥

लोकयेत्यर्थः । 'कृत्यानां कर्तरि वा' (२-३-७१) इति षष्ठी । तत्र हेतुः — स्पृहणीयसिद्धिः सर्वैरन्यैस्तपस्विभिरस्माकमीदृशी सिद्धिः कथमापादनीयेत्यभिलषणीया मन्त्रसाधनादिजनिता फलप्राप्तिर्यस्याः । सिद्धिर्भवतु नाम तथापि निष्कृपाः केचन तत्फलक्षयभयेन प्राणिनां व्यसनेषु तान् विनियुञ्जते, तथा काठिन्यमपि तव नास्तीत्याह — एवंविधैः एवमित्यनुभवाभिनयः, अनुभूतस्यास्मदनुग्रहस्यैवंविधः प्रकारो येषामित्यनेन सदविधुरजनत्राणताच्छील्यमनुभावोक्तिः । विलसितैः क्रीडितैरित्ययत्नसाध्यत्वमुपकारस्याभिमानाभावश्च द्योत्यते । परोभ्युपपत्तौ न चोपमानं तवेत्याह — अतिबोधिसत्त्वैः बोधिसत्त्वं जिनमुनिमतिक्रान्तैः । 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' (वा० १-४-७९) इति समासः । तस्य परमकारुणिकत्वेन प्रसिद्धावपि शङ्खचूडादीनां रक्षणे स्वात्मत्यागरूपस्य महतः पातकस्यानुष्ठीयमानत्वात् सुकृतदुष्कृतयोस्तुल्यफलत्वं तदात्वदुःखानुभूतिश्च विद्यते । तव तु दीनरक्षणफलमेवाप्यते, न चात्मा कदर्थ्यत इत्यहो तच्चरितेभ्यस्त्वच्चरितानि दूराद्वीयांसि द्योतन्त इति भावः ।

'बुद्धस्तु श्रीघनश्शास्ता बोधिसत्त्वो विनायकः ।'

इति वैजयन्ती । पुरा परिचयप्रतिबन्धबीजं अतीते काले यः परिचयः संस्तवः तस्य प्रतिबन्धः दृढीभावः तद्रूपं बीजं शाल्यादिबीजवत् । उद्भूतभूरिफलशालि पङ्क्तिभिः प्रचुरैः फलैः प्राणत्राणादिभिः विशिष्टं विजृम्भते लोके ख्यायते, अथवा वर्धते, उपर्युपरि मङ्गलप्रसाधकत्वात् । नः अस्माकम् । 'एह्येही'त्यादिना 'वन्द्या त्वमेवे'त्यादिना च श्लोकाभ्यामिष्टप्राप्तिजनितसम्भ्रमरूप आवेगो ध्वन्यते । कमोलङ्गनस्यापि चिकीर्षितत्वादुभयत्र काव्यलिङ्गमलङ्कारः ।

१. 'विजृंभितेन' च. छ. ज. ट. पाठः. २. 'ते' क. ग. ञ. पाठः.

१. 'फलावाप्ति' ग. पाठः. २. 'त्वमिनवाभिनयः' ग. छ. झ. ञ. पाठः. ३. 'पराभ्युपपत्तौ' झ. पाठः. ४. 'पातस्य' क. छ. झ. पाठः. ५. 'अपि शिष्यते' क, झ. पाठः.

मदयन्तिकालवङ्गिके — इअं सा अज्जा सोदामिणी ? (इयं सा आर्या सौदामिनी ?)

मालती — बाढं । इमाए क्खु भअवईसंबन्धपक्खवाएण णिब्भच्छिअ कपालकुण्डलं, अत्तणो आवसहं उवणीअ भअवईणिव्विसेसं समासासिअम्हि । किं च केसरावलीसाभिण्णाणहत्थाए इह आगत्तूण सव्वे तुम्हे संभारिदा ।

(बाढम् । अनया खलु भगवतीसम्बन्धपक्षपातेन निर्भर्त्स्य कपालकुण्डलां, आत्मनः आवसथमुपनीय भगवतीनिर्विशेषं समाश्वासितास्मि । किञ्च केसरावलीसाभिज्ञानहस्तया इहागत्य सर्वे यूयं सन्धारिताः ।)

---

'पुरा परिचयप्रतिबन्धबीजमुद्भूतभूरिफलशालि विजृम्भते' इत्यनेन

"स्तोकोद्दिष्टस्तु तद्धेतुबीजं विस्तार्यनेकधा ।"

इति लक्षितं प्रकरणं, बीजमपि कविना वैदग्ध्याद् भङ्ग्या प्रकाशितमिति वेदितव्यम् ; 'अपि नाम कल्याणिनो'रित्यादिनोपक्षिप्तस्य बीजस्य 'अस्मत्सौदामिनीसमक्षं प्रवृत्तेयं प्रतिज्ञे'त्यादिना परिकरेण बहुलीकृतत्वात् ; सौदामिनीमुखेन प्रतिज्ञायाः प्रकाशयिष्यमाणत्वाच्च ॥ १० ॥

इयं सा आर्या सौदामिनी ? काका प्रश्न आक्षिप्यते ।

तस्योत्तरमाह — बाढं दृढं, न सन्देह इत्यर्थः । अनया खलु भगवतीसम्बन्धपक्षपातेन निर्भर्त्स्य कपालकुण्डलां आत्मनः आवसथमुपनीय भगवतीनिर्विशेषं समाश्वासितास्मि । खलुः अवधारणे । भगवतीसम्बन्धः कामन्दक्याः सुहृत्पुत्री निरतिशयप्रेमभूमिः इति यः, तं श्रुत्वा यः

---

१. 'भअवईपक्ख' क. पाठः २. 'वाइणीए' क. ख. ग. झ. न. पाठः ३. 'अ मं भअ' क, 'अ आसासिदम्हि' ञ. ज. पाठः ४. 'भअवईसिणेहणिव्विसेसं' झ. ञ. पाठः ५. 'ए एत्थ आग' ब. च. पाठः ६. 'संधारिदा मरणादो । स एसा जीविदप्पदाइणी सोदामिणी' क, 'संरक्खिआ' घ. च, 'संधारिआ' ट. पाठः

---

१. 'भूतमिति' ब. झ. पाठः

**इतरे — सुप्पसण्णा णो कणिट्ठा भअवई ।**

(सुप्रसन्ना नः कनिष्ठा भगवती ।)

**माधवमकरन्दौ — अहो नु खलु भोः ।**

---

पक्षपातः, सा हि सर्वथास्माकमुपकारुनीयेति स्वत्वबुद्धिः, तेन हेतुना । निर्भर्त्स्य धिङ् मूर्खे ! असदपत्येषु गन्धमप्याघ्रातुं तव का शक्तिरित्यादिभिः सन्तर्ज्येत्यनेन तस्याः स्वविशसनारम्भो द्योत्यते । [आत्मन आवसथमुपनीय] स्वस्या गृहं प्रापय्य । भगवतीनिर्विशेषं कामन्दकीतो यथा न कश्चिद्भेद उपलभ्यते तथेति क्रियाविशेषणम् । आलिङ्गनाङ्कारोपणमूर्धाघ्राणादिभिः 'वत्से ! मा भैषीः । अहं भगवत्यन्तेवासिनी सौदामिनी । तन्मयि जीवन्त्यां कस्तवाऽपाय प्रभवेत् । पित्रादिभिश्च त्वामद्यैव संयोजयिष्यामी'ति सान्त्वितासीत्यर्थः । न केवलं वाङ्मात्रेण प्रवृत्त्या चानुगृहीतवतीत्याह — केसरावलीसाभिज्ञानहस्तया इहागत्य सर्वे यूयं सन्धारिताः । केसरावल्या बकुलमालया साभिज्ञानचिह्नसहितो हस्तो यस्याः, विश्वास्यवचनत्वायेति भावः । इहागत्येति श्रीपर्वतादस्य देशस्य दवीयस्त्वमभिनीयाह । सर्वशब्देन माधवादीनां साकल्येन ग्रहणम् । सन्धारिताः सम्यगवस्थापिताः प्राणिता इत्युपकारस्य परा कोटिर्द्योत्यते । 'धृङ् अवस्थाने' इति धातुः ।

सुप्रसन्ना नः कनिष्ठा भगवती । कामन्दक्या वृद्धत्वादस्या युवत्वाच्च कनिष्ठात्वव्यपदेशः, शिष्यत्वात् किञ्चिन्न्यूनत्वेन वा ।

'कनिष्ठकनीयांसौ न्यूनेऽल्पत्वेऽनुजेऽपि च ।'

इति वैजयन्ती । अस्माकं सुष्ठु प्रसादसुमुखी, दिष्ट्या जातेति शेषः ।

अथैदृशस्य परित्राणसंरम्भस्यानुपपत्तेरिति 'प्रत्यक्षे गुरवस्स्तुत्याः' इति न्यायाद्व तदीयमुपकारं चमत्कृत्याहतुः — अहो नु खलु भोः इति सविस्मयं तत्रस्थान् सर्वानभिमुखीकुरुतः ।

---

१. 'मदयन्तिकालवङ्गिके —' क. झ. ञ, 'इतराः' च. छ. ज. पाठः.

---

१. 'सन्तर्ज्यत्यनेन' ग. पाठः. २. 'स्वस्य गृहं' ग. पाठः. ३. 'तापः प्रभ' झ. पाठः. ४. 'वचनायेति' ब. पाठः. ५. 'न्यूनेन वा' झ. पाठः. ६. 'दृशस्सन् परित्राण' छ. पाठः.

अपि चिन्तामणिश्चिन्तापरिश्रममपेक्षते ।
इदं त्वकृतमन्येन कृतमाश्चर्यमार्यया ॥ २१ ॥

अपि चिन्तामणिरित्यादि । चिन्तागोचरवस्तुदानाच्चिन्तामणिरिति प्रसिद्धो रत्नविशेषः । अपिशब्देनैतदाह — कल्पतरुस्तावन्मनसा सङ्कल्पं, सङ्कल्पितस्य मनसा भूयो भूयो याचनं चापेक्षते;

"क्षुण्णं यदन्तःकरणेन वृक्षाः
फलन्ति कल्पोपपदास्तदेव ।"

इत्यादिमहाकविवचनात् । कामधेनुस्तु मनसा सङ्कल्पं, वाचा याचनं, शरीरेण परिचर्यां च, दिलीपादिषु तथा दर्शनात् । कालमेघः पुनर्याचितोऽपि कदाचिद्ददाति, कदाचिन्न ददाति, कदाचिद्याचितारमुपेक्ष्यान्यतो ददातीत्यतः सर्वेभ्यः एतेभ्यः प्रेक्षावद्भिः चिन्तामात्रसापेक्षस्य चिन्तामणेर्दातृत्वे परां कोटिमारोपितत्वात् । तस्यापि निरूप्यमाणे सापवादमौदार्यमिति सापवादत्वमेवाह — चिन्तापरिश्रमं चिन्ता मनोव्यापारविशेषः । किमस्मादहं प्रार्थये इति प्रथमं निरूप्य पश्चान्ममेदमपेक्षितं वस्त्विति कस्मिंश्चिदर्थे स्वप्रार्थनामवस्थाप्य ततो मह्यमिदमायुष्मता दीयतामिति मनोवृत्तिरूपया याचितुर्याच्ञापरिश्रमः खेदस्तमपेक्षते । तदनन्तरमेव फलति । यदा चिन्तामणेरियं शैली तदा का वार्ता कल्पवृक्षादीनाम् । अतः इदं अनुभूतं, तुविशेषे, अन्येन स्वव्यतिरिक्तेन केनचित् अकृतमननुष्ठितं, पूर्वं दुष्करत्वात् । दुष्करत्वेऽपि क्षुद्रं भवत्वित्याशङ्क्य तथा नेत्याह — आश्चर्यं महाफलत्वादचिन्तितत्वाच्च विस्मयजननम् । आर्यया पूज्यया, अनया योगेश्वर्येति शेषः । कृतमनुष्ठितं, इदं, वस्त्विति शेषः । व्यतिरेकोऽत्रालङ्कारः, 'अहो नु खलु भोः', 'अपि चिन्तामणि'रित्यादिनाद्भुतप्राप्तेरुपगूहनम् ॥ २१ ॥

---

१. 'परिश्रम' क. पाठः. २. 'इदं च कृतमन्येन कृत' ख, 'इदं त्वचिन्तितं मन्ये कृत' छ. छ. ज. झ. ञ., 'इयं त्वकृतमन्येन कृत' च. पाठः. ३. 'कृतमाश्चर्यमचिन्तितं' क. पाठः.

---

१. 'चित्तगोचर' छ. पाठः. २. 'भवन्ति' ग. पाठः. ३. 'मननात् सङ्कल्पं' ग, 'वचनात् सङ्कल्पं' क. पाठः. ४ 'परिचर्या' ग. छ. पाठः. ५. 'तस्मान्येत्याह' ङ. छ. झ. पाठः.

सौदामिनी – (स्वगतं) हन्त[1] लज्जयति मामत्यन्तसौजन्यमेतेषाम्। (प्रकाशं) भगवति[2]! एतत् प्रहृष्टनन्दनाभिनन्दितेन राज्ञा पद्मावतीश्वरेण भूरिवसोः प्रत्यक्षमभिलिख्य[3] पत्रमायुष्मतो[4] माधवस्य प्रेषितम्। (लेखमर्पयति।)[5]

अथ 'स्तूयमानस्स जिह्राय स्तुत्यमेव समाचरन्ति'ति न्यायात् महात्मतया परोत्कर्ष[1]भावनानिरतिशयया[2] च प्रत्यक्षस्तुत्या लज्जिताह—हन्तेति विषादे। लज्जयति त्रपापरवशां करोति। अत्यन्तसौजन्यं अतिशयितं सुजनत्वं, कृतज्ञता हि सुजनानां जीवितमिति भावः। पूर्वं "फुरन्तमच्छरवेल्लक्खमसीमलिणमुहे भूरिवसुणन्दणे किं दाणिं तुह्माणं जामादुएहिं अपरितोसो त्ति पडिबोहिअ गओ अब्भन्तरं राआ" इति राजप्रसादस्यैव प्रतिपादितत्वाद्राजप्रतिबोधि[3]तयोरपि[4] परिभूतयोः प्रभूतयो[5]रमात्ययोः प्रसादानभिव्यक्तेस्तौ किन्नु करिष्यत इत्याशङ्का। तमन्तःप्ररूढं पत्रिकामुखेनेदानीं परिहरति कविः, तत्परिहारस्यैवावशिष्टत्वात्—भगवतीत्यादि। प्रहृष्टनन्दनाभिनन्दितेन प्रत्यक्षं भूरिवसोरिति चानेन भूरिवसुजीवनानन्तरं प्रसादसुमुखेन राज्ञा'युष्मते माधवाय योगेश्वरीहस्तेऽस्मत्प्रीतिसूचकं पत्रं प्रेषयितुमिच्छामी'त्यमात्ययोरनुयुक्तत्वं ताभ्यां च साधु निरूपितं देवेने'त्यनुमोदितत्वं च प्रकाश्यते। अभिलिख्य नत्वाभिलेख्येति स्वहस्तन्यस्ताक्षरतया परमप्रमाणत्वं व्यज्यते। पत्रं तालीदलं आयुष्मत इति पुत्रविषयत्वाद् व्यवहारः। प्रेषितं प्रहितं, मम हस्त इत्यर्थात्। लेखं लिखितपत्रम्।

१. 'मामेव सौजन्यमेतेषां' क. पाठः. २. 'वति प्र' ग. पाठः. ३. 'प्रतिष्ठ' च. पाठः. ४. 'स्य आयुष्मतो' क. पाठः. ५. (इति पत्रमर्पयति) क, (लेखामर्पयति) ख, (अर्पयति) छ, (लेखपमर्पयति) ज. पाठः.

१. 'परोत्कर्षभावनः' ग. पाठः. २. 'भावनया निरति' ग. पाठः. ३. 'प्रतिबोधितत्व' ख. पाठः. ४. 'प्रतिबोधयोरपि' ग. पाठः. ५. 'प्रभूततमयो' ग. पाठः.

मकरन्दः—(गृहीत्वा वाचयति)

''श्लाघ्यानां गुणिनां धुरि स्थितवति श्रेष्ठान्वयाये त्वयि
प्रत्यस्तव्यसने महीयसि परं प्रीतोऽस्मि जामातरि ।
तेनेयं मदयन्तिकापि भवतः प्रीत्यै तव प्रेयसे
मित्राय प्रथमानुरागघटिताप्यस्माभिरुत्सृज्यते ॥ २२ ॥''

श्लाघ्यानामित्यादि । श्लाघ्यानां सहृदयचमत्कारगोचराणाम् । तत्र हेतुः—गुणिनां श्रुतशीलादिभिः गुणैर्नित्ययुक्तानामिति । धुरि कार्यभार विषये स्थितवति प्रतिष्ठिते,

''अविघ्नमस्तु ते स्थेयाः पितेव धुरि पुत्रिणाम् ।''

इति रघुवंशोक्तवत् , अनभिजातगतीनां गुणानामरण्यचन्द्रिकावदनुशोच्यत्वादभिजातगतानां पुनरभिनवजाम्बूनदकनकघटितानां अनर्घरत्नानामिव निरतिशयशोभाजनकत्वं, तच्च तवैवास्तीत्याह—श्रेष्ठान्वयाये प्रशस्तवंशे । 'प्रशस्यस्य श्रः'(५-३-६०) इति इष्ठन् । महीयसि वित्तमित्रक्षेत्रादिसम्पत्सामग्र्येण महदन्तरेभ्योऽतिरिक्ते, जामातरीत्यनुवादेन 'प्रभवति निजस्य कन्यकाजनस्य महाराजः' इत्यमात्यवचनादनुमानेन स्वपुत्रीत्वेनाभिमतायाः मालत्या अनुरूपेण वरेण त्वया वयं वर्धामह इति मादयति । त्वयि प्रत्यस्तव्यसने निवृत्तं भाग्यवशान्मालत्यदर्शनरूपं व्यसनमापद् यस्य तथाभूते सति, परमत्यन्तं प्रीतोऽस्मि । इदानीं राज्यस्यैव सुस्थितत्वादिति भावः । तेन प्रीतत्वेन हेतुना, इयमिति बुद्धिसन्निहितत्वादुक्तिः, मदयन्तिकापीत्यपिशब्देन यथा मालती सर्वथास्माकमुपलालनीया तथा मदयन्तिकापि नाणुमात्रमपि न्यूनेति स्वेषां स्नेहभूमित्वं समग्रगुणत्वं सुखसम्बन्धित्वं च द्योत्यते । तादृशी कथं दीयत इत्यत्राह—भवतः प्रीत्यै पूज्यस्य तव जीवितसर्वस्वेनापि समाराध्यत्वमिति भावः । तव प्रेयसे प्राणेभ्योऽपि गरीयसे प्रेमास्पदाय मित्राय,

'समानशीलव्यसनेषु सख्यम्',

''सद्भिर्विवादं मैत्रीं च नासद्भिः किञ्चिदाचरेत्''

१. 'काम —(गृहीत्वा' क. च. ज. झ. ञ. ट, 'साध — गृहीत्वा' घ. पाठः. २. 'पति, स्वस्त्यस्तु व । परमेश्वरः समाश्वासयति । यथा—श्लाघ्यानां' क. ज. झ. ञ. पाठः. ३. 'न्वयेऽपि त्वयि' क, 'न्वये च त्वयि' क. झ. ञ. पाठः. ४. 'काय भवतः' क. घ. झ. ञ. ट. पाठः.

१. 'सौहृदचमत्कार' ग. पाठः. २. 'तच्चरितस्यैवास्तीत्याह' ख. पाठः. ३. 'भूयस्त्वं' क. झ. पाठः.



1787

कामन्दकी (माधवमुद्दिश्य) वत्स! किं श्रुतम्?

माधवः—(सहर्षं) श्रुतम्। इदानीं सर्वतः कृतार्थोऽस्मि।

मालती— दिट्ठिआ एदं पि दाव अवगअं हिअअस्स णो आसङ्कासल्लं।

(दिष्ट्या एतदपि गतं हृदयस्य नः आशङ्काशल्यम्।)

---

इत्यादिवचनात्. महात्मनस्तव तुल्याभिजनादिगुण एव मैत्री प्रवर्तते नान्यत्रेति वचनमेव न तदाभिजात्यादिषु प्रमाणमिति प्रकाश्यते॥ प्रथमानुरागघटिता प्रथमेन लोकोत्तरत्वादग्रगण्येन भवेन वा अनुरागेण प्रेम्णा घटिता संश्लेषिता, तथाविधस्यानुरागस्य बन्धुजननैरपेक्ष्येण समग्रभरसहिष्णुत्वमिति भावः। अपि शब्देन एवमेतत्तथापि धर्माचार्यदुश्चेष्टितैः पित्रादीनामस्माकमपि कन्यादाने कियानप्यधिकारोऽस्त्येवेति सोत्प्रासं वचनं सूच्यते। अपिर्भिन्नक्रमः, अस्माभिर्नन्दनादिभिरपीत्यर्थः। उत्सृज्यते दीयते। परिकरोऽत्रालङ्कारः, विशेषणानां साभिप्रायत्वेन निवेशनात्। 'एतत्प्रहृष्टनन्दनाभिनन्दितेने'त्यादिना 'श्लाघ्यानां गुणिनामि'त्यन्तेन पद्मावतीश्वरेण माधवस्य पर्युपासनात् प्रसादः॥ २२॥

उद्दिश्य अभिमुखीकृत्य। किं श्रुतं लेखार्थगौरवमवधानेन गृहीतं किमित्यर्थः।

सहर्षं आनन्दबाष्पादिहर्षलक्षणविशिष्टम्। श्रुतं अवधाय गृहीतमित्यर्थः। लेखार्थस्यावधानेन गृहीतस्य फलितांशमाह—इदानीमेतल्लेखार्थानुसन्धाने कृते सर्वतः सर्वप्रकारेण, प्रियतमाप्राप्त्या सुहृत्कार्यसम्पत्त्या शङ्कितानर्थशमनेन चेत्यर्थः। कृतार्थः कृतं पर्याप्तं प्रयोजनं यस्य, कृञ्वस्तीनां क्रियासामान्यवाचित्वात्। 'किं श्रुतं', 'श्रुतमिदानी'मित्यादिना वाञ्छितावाप्तेरानन्दः।

पूर्वमाशङ्कितत्वेन व्याख्यानममात्यकोपनिगदेन प्रकाशयति कविः—

---

१. '(स सहर्ष)' ज. पाठः. २. 'वत्स श्रूयतां' क. ज. झ. ञ. पाठः. ३. 'माध—श्रुतं' क. च. छ. ज. झ. ञ. पाठः. ४. 'सर्वथा' छ. ज. ञ. पाठः. ५. 'कृतार्थोऽस्मि' छ. ज. पाठः. ६. 'णं अवगअं' छ. 'णं हिअअस्स' ट. पाठः. ७. 'एत्ताहे अव' क. झ. ञ, 'एदं पि गदं हिअ' ह. पाठः. ८. 'स्स आस' छ. ज. झ. ञ. पाठः.

---

१. 'त्यादिप्रमाण' ख. पाठः. २. '...' ख. पाठः. ३. 'स्वजन' ख. ग. पाठः. ४. 'लेखनार्थ' ग. पाठः. ५. 'कोपसन्निगदेन' ख. ग. पाठः.

लवङ्गिका—सम्पदं णिरवसेसं माहवस्स पूरिआ मणोरहा।

(साम्प्रतं निरवशेषं माधवस्य पूरिता मनोरथाः।)

मकरन्दः—कथमवलोकितबुद्धरक्षिते कलहंसकश्च पुरतस्समुदितानस्मान् वीक्ष्य तत्रैव हर्षनिर्भरं प्रनृत्ताः।

---

दिष्ट्या एतदपि गतं हृदयस्य नः आशङ्काशल्यम्। एतदपीति सदानुसन्धीयमानत्वादुक्तिः। अपिशब्दो राजकोपाशङ्कायाः पूर्वमेव निवृत्तत्वं व्यञ्जयति। गतं नष्टं नो हृदयस्येति माधवादीनां सर्वेषां सदान्तर्वर्तित्वमाह। आशङ्काशल्यं चिन्तारूपशल्यं शरफलं अरुन्तुदत्वात् झटित्यपनेतुमनीषत्करत्वाच्च।

साम्प्रतं निरवशेषं माधवस्य पूरिता मनोरथाः। साम्प्रतमिदानीं लेखागमनादनन्तरमित्यर्थः। निरवशेषं अवशेषः पूरणीयत्वेनासमाप्तोऽशस्स निरस्तो यथा तथेति क्रियाविशेषणम्। पूरिताः स्वार्थे णिच्, पूर्णाः। अथवा दैवेनेत्यायाति। मनोरथाः प्राप्यत्वेन सङ्कल्पिता अर्थाः।

अथ रससंविधानरत्ननिधानभूतो महाकविः पात्रत्वेन सुप्रविष्टानामङ्गानामप्यननुसन्धानं रसविघाताय, किं पुनरङ्गिन इत्युपदिशन् भङ्ग्याङ्गानां क्षणान्तरितानामनुसन्धानं करोति—पुरतः स्थितान् समुदितान् निर्विघ्नं समागता-

---

१. 'माहवसिरिणो माळदीए अ समं फलिदा मणो' क, 'माहवसिरिणो पूरिआ मणो' ख, 'माहवसिरिणो माळदीए अ फलिदा मणो' झ. ञ. पाठः. २. 'मक—(पुरोऽवलोक्य) कथ' क. ज. झ. ञ. पाठः. ३. 'कलहंसकेन सह सुप्रमोदं (प्रमोदनिर्भरं झ. ञ.) नृत्यन्तावित एवागच्छतः। (ततः प्रविशतोऽवलोकितबुद्धरक्षिते कलहंसकश्च। विविधं नृत्तं कृत्वा सर्वे उपसृत्य सप्रणामं कामन्दकीं प्रति) जय भअवदि कज्जणिहाणे! (माधवं प्रति) जय मअरन्दणन्दण माहवपुण्णचन्द! दिट्ठिआ वड्ढसि। (सर्वे. क. झ. ञ. पाठः ४. 'दूरतस्स' क. ख. ग. घ. ङ. छ. ज. झ. ञ. पाठः, ५. 'समागतानस्मान्' ज. पाठः. ६. 'तान् वनेऽस्मान्' च. ट. पाठः. ७. 'क्ष्य हर्ष' ग. ङ. पाठः. ८. 'रं नृत्यन्ति' छ, 'रं नृत्यन्त इत एवागच्छन्ति। (ततः प्रविशतोऽवलोकितबुद्धरक्षिते कलहंसश्च।) ते—(विविधं नृत्तं कृत्वा सर्वे उपसृत्य सप्रणामं कामन्दकीं प्रति) जअ भअवदि कज्जणिहाणे! (माधवं प्रति) जअ मअरन्दणन्दण माहवपुण्णचन्द! दिट्ठिआ वड्ढसि। सर्वे सस्मितं पश्यन्ति।)' ज. पाठः.

---

१. 'नानुप्रविष्टानां' ग. पाठः.

(सर्वे संस्मितं पश्यन्ति ।)

लवङ्गिका—को वा इमस्सिं महूसवे ण णच्चइ ?

(को वा अस्मिन् महोत्सवे न नृत्यति ?)

कामन्दकी—एवमेतत् । अस्ति वा कैश्चिदेवम्भूतमत्यन्तचित्र-रमणीयोज्ज्वलं महाप्रकरणम् ।

---

तस्मान् मालतीमाधवादिकान् हर्षनिर्भरं प्रमोदेन पूर्णं यथा तथेति । ताललया-नुबद्धघनेन हास्यप्रवृत्तिः सूच्यते—प्रनृत्ताः नर्तितुमारब्धाः ।

हास्यस्य फलमाह—सस्मितं पश्यन्तीति ।

को वा अस्मिन्महोत्सवे न नृत्यति । वाशब्दो विकल्पे । तादृशं कमपि जनं न पश्यामीत्यर्थः ।

तद्वचनमनुमोदमानाह—एवमेतत् । त्वदुक्तं सत्यमेव, निनर्तिषया अस्माकमपि मनः स्फुरितमिति भावः । तत्र हेतुः—कश्चित् कस्मिंश्चिद्देशे एवम्भूतं एवमित्यनुभूयमानमालतीमाधववृत्तान्ताभिनयः, एतत्प्रकारविशिष्टम् । कोऽयं प्रकार इत्यत्राह—अत्यन्तचित्रं प्रकाममाश्चर्यभूतमिति वृत्तकुटिलतया अचिन्तितोपनमत्सुखदुःखशबलतया निरतिशयसुखावसानत्वाच्चेत्यर्थः । प्रक-रणं प्रस्तावः कार्यस्येत्यर्थात् । 'अर्थः प्रकरणं लिङ्गमि'ति, 'श्रुतिलिङ्गवाक्य-प्रकरणस्थानसमाख्यानां पारदौर्बल्यमर्थविप्रकर्षाद्' इत्यादिवचनात् । अनया चोक्तिभङ्ग्या —

'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥''

इति श्रुतिवचननीत्या देवतागुरुप्रसादपरिमृदितकषायतया प्रादुर्भूतशब्दब्रह्म-साम्राज्यं स्वहृदयानुरूपं परिसमापितप्रायः प्रारब्धप्रकरणः पण्डितविदग्धमण्डल-

---

१. 'साहर्ष सस्मितं' क, 'सविस्मयं' ट. पाठः. २ लव—तदीअकज्जं वि अ एदस्सिं' ज. पाठः. ३ 'एदस्सि' छ. पाठः ४. 'स्सि परिपुरिदस-व्वमहूसवे' क, 'स्सिं पअरणमहूसवे' ख. घ. च 'स्सिं सम्पूरिदं । अदो सव्वप्पआरम-हूसवे' ज, 'स्सिं सम्पूरिदस्सव्वप्पआरम्भहूसवे' झ. ञ. पाठः. ५. 'कुतश्चिदेवं[illegible]' क. घ. च ज. झ, ञ, ट, 'कुतश्चिदिदं चित्रं प्रकरणं' छ. पाठः. ६. 'भूतं विचित्रं' क 'भूतमद्भुतविचित्रं' ख. घ. च. ट, 'भूतमत्यन्तचित्र प्रक' ग. 'भूतमत्यन्तविचित्रं' छ, 'भूतं महाद्भुतं विचित्रं' ज, 'भूतमद्भुतं विचित्रं' झ. ञ. पाठः. ७. 'ज्वलं प्रकरणं' झ. ञ, 'ज्वलमहा' ट. पाठः.

---

१. 'तदुक्तं' ज. पाठः. २. 'सहृदयानुरूपं' छ. पाठः.

**सौदामिनी**—इदमत्र रामणीयकम् । यद्भामात्ययोर्भूरिवसुदेवरातयोश्चिरात्सम्पूर्णोऽयमितरेतरापत्यसम्बन्धामृतमनोरथः ।

---

मुण्डमण्डनमहामणिर्महाकविरात्मनः प्रकरणाख्यरूपकविशेषसंविधानचातुरीं सहृदयान् प्रति प्रकाशयति । एवम्भूतं मालतीमाधवाख्यप्रकरणप्रकारयुक्तं, एवम्भूतं पुनरेवंकृतमित्युक्त्या प्रकरणनिर्माणाय स्वस्मिन् संरम्भिणि गुरुदेवताप्रसादपौरुषेयस्यैव तस्यायत्नतः प्रादुर्भूतत्वमात्मनस्तत्राहंममाभिमानराहित्यादविकत्थनतां च व्यञ्जयति । अत्यन्तविचित्रं अष्टादशविद्यास्थानचतुष्षष्टिकलासमुदायसुधासागरसर्वस्वस्य तत्र तत्र प्रसङ्गानुगुण्येन निवेशनात् प्रपञ्चकर्तुर्विरिञ्चस्यापि विस्मयकरमित्यर्थः ।

"नाटकं सप्रकरणं भाणः प्रहसनं डिमः ।
व्यायोगसमवाकारौ वीथ्यङ्केहामृगा इति ॥"

इत्युद्दिष्टं, 'अथ प्रकरणे वृत्तमुत्पाद्यं लोकसंश्रयम्' इत्यादिना लक्षितश्च रूपकभेदः प्रकरणम् ।

अथैतावन्तं कालं गोपितमर्थं पूर्ववृत्तसाक्षिण्या योगिन्या मुखेन समये कविरुद्घाटयति—इदमित्यादि । इदं वक्ष्यमाणं अत्र प्रकरणे, **रामणीयकं** सौन्दर्यं, सहृदयानां निरतिशयचमत्कारमित्यर्थः । इदं नान्यद्युष्मद्विवक्षितं वर्णजातं तस्मात् सर्वस्मादप्यस्य सुतरां मनोहरत्वादिति भावः । तत् किमित्यत्राह—यदित्यादि । **चिरात्** बहोः कालात्, गुरुचर्याकालतः प्रभृति प्रवृत्तत्वात् सम्पूर्णः सम्पन्नफलो जातः । अयमिदानीं सर्वैरस्माभिरनुभूयमानः इतरेतरापत्यसम्बन्धामृतमनोरथः अन्योन्यस्यापत्याभ्यां दुहित्रा पुत्रेण च द्वारीकृताभ्यां यस्सम्बन्धस्समीचीनश्लेषः । समानसम्बन्धत्वात्तद्रूपेऽमृते यो मनोरथः कदा प्राप्स्याव इति सङ्कल्पः । प्रयत्नसाध्यत्वात् सिद्धिक्षण एव परनिर्वृतिजनकत्वादायत्यां निरुपमहितसाधनत्वाच्चामृतत्वारोपः ।

---

१. 'रमणीयान्तरं' क, 'रमणीयतरं' झ. ञ पाठः. २ 'भामात्यभूरिवसु' ज. पाठः. ३. 'रात्पूर्णोऽ' क. झ ञ, 'त्सम्भूतपूर्णोयं' च. ट. पाठः ४. 'सम्बन्धामनो' क, 'सम्बन्धमनो' छ, 'सम्बन्धरूपो मनो' ज, 'सम्बन्धात्मा मनो' झ. ञ. पाठः.

---

१. 'भूतं न पुनः' ख. ग. पाठः. २. 'निरतिशयं चम' ङ. छ. झ. पाठः. ३. 'सहसम्बन्ध' ख. पाठः

मालती—(स्वगतं) कहं विअ। (कथमिव।)

माधवमकरन्दौ—(सकौतुकं।) भगवति! अन्यथा वस्तु वृत्तमन्यथा वचनमार्यायाः।

लवङ्गिका—(जनान्तिकं) भअवइ किं त्ति पडिवज्जि! दव्वं। (भगवति! किमिति प्रतिपत्तव्यम्।)

कामन्दकी—(स्वगतं) सम्प्रति मदयन्तिकासम्बन्धेन नन्दनोपग्रहात् प्रत्यस्तशङ्काः खलु वयम्। (प्रकाशं) वत्सौ न

---

अविदितत्वान्मालती सविस्मयकौतुकं तर्कयति—कथमिव केन प्रकारेणास्या वचनमिदमित्यर्थः।

सकौतुकं तत्त्वश्रवणोत्सुक्ययुक्तम्। अन्यथा प्रकारान्तरेण वृत्तं वस्तु वृत्तमनुष्ठितकार्यतत्त्वममात्यभूरिवसुमत्युलङ्घनेन प्रवृत्तमित्यर्थः। अन्यथा तद्विरुद्धप्रकारान्तरप्रकाशनपरं अमात्यमतिपूर्वकप्रवृत्तिप्रतिपादनयुक्तमित्यर्थः। वचनं 'यदामात्ययो'रित्यादि। आर्यायाः पूज्याया योगिन्याः। 'इदमत्र रामणीयक'मित्यादिना 'अन्यथा वस्तु वृत्त'मित्यन्तेन कार्यमाणाद्विरोधः।

अथ विदितवृत्तान्ता लवङ्गिका तत्त्वकथने राजनन्दनयोः पुनर्विकारमाशङ्कयाह—भगवति! किमिति प्रतिपत्तव्यम्। किमिति किं वस्तु, एतद्बुभुत्सितस्यार्थस्य प्रकाशनमप्रकाशनं वास्माभिरङ्गीकर्तव्यमित्यर्थः।

तदीयामाशङ्कामुपपत्त्या निराकुर्वाणा प्रकाशनमेव प्रतिपत्तव्यमित्याह—सम्प्रति राजामात्यप्रसादसूचिकां पत्रिकां प्राप्तेत्यर्थः, मदयन्तिकासम्बन्धेन मदयन्तिकानिमित्तेन संश्लेषेण नन्दनोपग्रहात् अमात्यनन्दनस्यास्म-

---

१. 'तं) तं कहं विअ' ज. पाठः. २. 'मकरन्दः—अन्यथा ज. पाठः. ३. 'वस्तु प्रवृत्तं अन्यथा वचनमार्यायः।' ज. पाठः. ४. 'किं एत्थ पडि' क, 'किं पडि' ज. झ. ञ. पाठः. ५. 'काम—सम्प्रति' ग. च. ट. पाठः. ६. 'सम्बन्धान्नन्दनोप' क. झ. ञ. पाठः. ७. 'नन्दनावग्रहात्' ज. पाठः.

---

१. 'तत्त्वश्रवण' ख. ग. झ. पाठः. २. 'न्तरयुक्तं वस्तु वृत्तं' ङ. छ. झ. पाठः. ३. 'कथनेन राज' झ. पाठः.

खल्वन्यथा[1] वस्तु वृत्तमन्यथा[2] वचनमार्यायाः[3] । यतः[4] श्रावकावस्थाया-मस्मत्सौदामिनी[5]मक्ष[6]पनयोर्भूरिवसुदेवरा[7]तयोर्वृत्तेयं[8] प्रतिज्ञा । अवश्य-मावाभ्यामपत्यसम्बन्धः कर्तव्य इति । प्रधानप्रकृतिकोपस्त्वेवं परिहृतः[9] ।

त्सक्ष्यापादनात् प्रत्यस्तशङ्काः दूरीकृतविकारशङ्काः । खलुरवधारणे । अनेन भगिन्यामस्मद्गृहवर्तिन्यां तस्य विकृतिर्नोपपद्यते । तत्किमर्थमद्याप्यपह्नुति-व्यसनमनुभूयत इति दर्शितम् । विपक्षे बाधकभावं[2] निश्चित्य तत्त्वं प्रकाशयति—वत्सौ न खल्विति । वत्साविति बाल्त्वाद्यथादृष्टग्राहिणो यूयं, परमार्थस्तु तथा नेति द्योतयति । न खल्वन्यथा वस्तु वृत्तमिति । बीजोपक्षेपाद् ग्रथनम् । तर्हि कः परमार्थ इत्यत्राह—यत इत्यादि । श्रावकावस्थायां श्रावकौ गुरुशुश्रूषया शिष्यौ भूत्वा यदा तावर्तिषातां तस्यां दशायां, ब्रह्मचर्याश्रमालम्बनकाल एवेत्यर्थः । आवाभ्यामपत्यसम्बन्धः कर्तव्यः इतीयं प्रतिज्ञा वृत्तेति यतः तस्मात् न खल्वन्यथा वस्तु वृत्तमन्यथा वचनमस्या इति सम्बन्धः । अत्र प्रथमत एवोपक्षिप्तस्यामात्यप्रतिज्ञारूपस्य मुख्यबीजस्य कृत-कार्यत्वेन निगमनं कृतमिति वेदितव्यम् । 'यतः श्रावकावस्थाया'मित्यादिना-नुभूताख्यानान्निर्णयः, अमात्यवृत्तिविकृतेः स्वप्रवृत्तेः । किमर्थमेवं महता प्रयासेन चोरवच्चेष्टितं अनायासेन साक्षादेव सम्बन्धकार्यस्य शक्यत्वादित्याश-ङ्क्याह—प्रधानप्रकृतिकोपस्त्वेवं परिहृत इति । प्रधानभूतायाः मुख्यायाः प्रकृते राज्याङ्गस्य, पुरोहितादिभ्योऽमात्यस्यान्तरङ्गत्वात् ।

१. 'न्यथा वृत्त' छ. पाठः. २. 'वृत्तं, यतः' क. झ. ञ. पाठः. ३. 'मस्याः' ग. ङ. च. छ. ज. ट. पाठः. ४. 'यत्र' ग. घ. पाठ. ५. 'प्रत्यक्षमनयोः' क. झ. ञ. पाठः. ६. 'क्षं तयोः' छ. ज. पाठः. ७. 'यो वृत्तेयं' क. झ. ञ, 'योः प्रवृत्ते-येयं' छ. पाठः. ८. 'रातवृत्तेयं' ख. 'रातयोः प्रवृत्तेयं' घ. पाठ. ९. 'प्रतिहतः' क. पाठः.

१. 'मृच्छकटिका' ङ. झ. पाठः २. 'बाधकाभावं' ख. ङ. पाठः. ३. 'स्याशङ्क्यत्वाद्' ङ, 'स्याशक्यत्वाद्' छ. झ. पाठः.

मालती—अहो संवरणं। (अहो संवरणम्।)

माधवमकरन्दौ—आश्चर्यं जनयन्ति खलु महतामपि संवादिन्यः कल्याण्यो नीतयः।

कामन्दकी—वत्स माधव!

---

"स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च।
राज्याङ्गानि प्रकृतयः पौराणां श्रेणयोऽपि च॥"

इति वैजयन्ती। नन्दनस्येत्यर्थः। कोपमन्यस्मै मालत्याः साक्षाद्दानेऽपि कृतवान्, तद्द्वारा राज्ञोऽपि कोपप्रसङ्गात्। एवमनुष्ठितेन चौरिकाविवाहरूपेण प्रकारेण परिहृतं निराकृतम्।

विदितत्वात्सविस्मयमाह—अहो संवरणम्। आश्चर्यं तातस्य मन्त्रगोपनमित्यर्थः। अनेन संवरणं तदिति पूर्वोक्तमनुस्मारयति।

सविस्मयावाहतुः—आश्चर्यं विस्मयबुद्धिं, जनयन्ति खलु उत्पादयन्त्येव, महतां भूरिवसुप्रभृतीनामपि संवादिन्यः विसंवादो निष्कृष्टप्रकारादन्यथाभावः, तद्रहिता अव्यभिचारा इत्यर्थः, कल्याण्यः शोभितोपक्रमतया च मङ्गलभूताः, नीतयः उपायप्रयोगाः। 'अहो संवरणं' इत्यादिना 'कल्याण्यो नीतय' इत्यन्तेनार्थदर्शनात् पूर्वभावः।

अथ—

'कृतार्थो भूयासं प्रियसुहृदि यत्नैरभिमतैः।'

इत्याद्याशासितप्रकारेण सिषाधयिषितसकलार्थसम्पत्त्या निर्वृतहृदया सम्पन्नकार्यजातानुक्रमणपूर्वकं नायकस्य दैवसम्पन्नत्वं स्वस्या नीतिप्रयोगनैपुणं

---

१. 'जयन्ति मह' क. झ. ञ, 'जयन्ति खलु मह' ज. पाठः. २. 'खलु जगति मह' ङ. पाठः ३. 'महतां विसंष्ठुलाः प्रलापिन्यः कल्या' क, 'महतां विसंवादिन्यः प्रत्यायिन्यः कल्या' ज, 'महतां संस्तुतापलापिन्यः कल्या' झ. ञ. पाठः. ४. 'कल्याणिन्यो' क. झ. ञ, 'कल्याणाः' ज. पाठः. ५ 'वत्सौ—यत् प्रागेव' ज. 'वत्स—यत्प्रागेव' ज. झ. ञ. पाठः.

यत्प्रागेव मनोरथैर्वृतमभूत् कल्याणमायुष्मतो-
स्तत्पुण्यैर्मदुपक्रमैश्च फलितं क्लेशोऽपि मच्छिष्ययोः ।
निष्णातश्च समागमोऽभिविहितस्त्वत्प्रेयसः कान्तया
सम्प्रीतौ नृपनन्दनौ यदपरं प्रेयस्तदप्युच्यताम् ॥ २३ ॥

---

च भङ्गया चमत्कुर्वाणा तमाह्लादयति—यत्प्रागेवेत्यादि । प्रागेव युवयो-र्जननात् पूर्वमेव मनोरथैर्वृतं सङ्कल्पैः प्रार्थितं, अस्माभिरिति शेषः । बहु-वचनेन बहुसुखत्वं मनोरथस्य व्यज्यते, अमात्ययोः कदा नु दुहिता पुत्रश्चो-त्पत्स्येते, कदा च तत्सम्बन्धप्रतिज्ञा तयोः पूरयिष्यते, कदा नु तयोः समृद्धी-र्द्रक्ष्याम इत्यादिप्रकारबाहुल्यात् । कल्याणं परस्परसमागमादिसाधनं मङ्गलं आयुष्मतोः आयुष्मत्या आयुष्मतश्चेति सोपलालनं वचनं, पुण्यैः युवयोः पुराकृतैः पचेलिमैः सुकृतैः मदुपक्रमैर्ममोपायप्रयोगैः । चकारेण दैवपौरुषयो-रविरोधेन समुदितत्वे फलप्राप्तेः कः सन्देह इति द्योत्यते । फलितं सञ्जातफलं जातं, निर्विघ्नसमागमादिकार्यसम्पत्तेः । अत एव मच्छिष्ययोरवलोकिता-सौदामिन्योः परस्परदर्शनाद्युपायानुष्ठानेन कपालकुण्डलानिर्भर्त्सनादिभिश्च यः क्लेशो मनोवाक्कायव्यापारबाहुल्यपरिश्रमः, सोऽपि फलित इति लिङ्गविपरि-णामेन योज्यम् । अनेन—

'अर्थं सप्रतिबन्धं प्रभुरधिगन्तुं सहायवानेव'

इति न्यायात् ममापि सच्छिष्यासाहाय्यत एव सफलपरिश्रमत्वं जात-मिति, तदभिनन्दनं क्रियते, 'कर्मान्ते दासभृत्याश्चे'ति वचनाद्दासतुल्यानां शिष्याणामपि प्रवृत्तिफलसिद्धौ स्तुत्यत्वात् । निष्णातः विदग्धोपायसाधित-त्वात् । निष्णातमिति वा पाठः, निपुणमिति क्रियाविशेषणम् । 'निनदीभ्यां स्नातेः कौशले '(८-३-८९) इति षत्वम् । अभिविहितः सम्पादितः । त्वत्प्रे-

---

१. 'त्स्वत्पुण्यैः' ट. पाठः. २. 'क्लेशैश्च' ट. पाठः. ३. 'गमोऽपि विहितः क. ङ. ज. झ. म. पाठः. ४. 'श्रेयस्तदप्यु' क. पाठः.

---

१. 'लिङ्गपरिणामेन' ग. ङ. पाठः.

1787

माधवः — अतः परमपि प्रियमस्ति ? तथापीदमस्तु—

यसः त्वत्प्राणेभ्योऽपि प्रियतमस्य मकरन्दस्येत्यनेन स्वकार्यलाभात् तत्कार्यलाभस्याभिनन्दनीयत्वं द्योतयति । कान्तया प्रियतमया मदयन्तिकयेत्यर्थः । अनेन बुद्धरक्षितायाः श्रमोऽपि फलित इति सूचयति । अतोऽपि प्रियतमं कार्यं निष्पन्नमित्याह—सम्प्रीतौ सम्यक् त्वद्विषये प्रसन्नौ नृपनन्दनौ पद्मावतीश्वरोऽमात्यनन्दनश्च । तयोस्संप्रीत्यभावे निष्पन्नस्य सर्वस्यापि कार्यस्य व्यसनोदर्कत्वेन गजस्नानकल्पत्वमिति भावः । अतः परमस्मादन्यत् प्रेयः प्रियतमं वस्तु यत् लिप्सितमित्यर्थात्, तदपीत्यपिना सिद्धकार्यवत्तस्याप्ययत्नसाध्यत्वं स्वस्याः तत्प्रियानुष्ठानैकतानत्वं च द्योत्यते, उच्यतां कथ्यताम् । न पुनरुपक्रम्यतामित्यनेन ममेदं स्पृहाया विषय इति तद्वचनानन्तरमेव तत्सिद्धिं द्रक्ष्यसीति प्रकाश्यते । 'यत्प्रागेवे'त्यादिना कथार्थस्थिरीकरणात् कृतिः । 'यदपरं प्रेयस्तदप्युच्यता'मिति कार्यार्थसंहरणात् कार्यसंहारः । अत्र च 'अपि नाम कल्याणिनो'रित्यादिनोपक्षिप्तस्य मालतीमाधवपाणिग्रहणस्य 'सो वि सहअरो माहवस्स बाळमित्तं मअरंदो णंदणस्स भइणिअं मदअन्तिअं जइ समुव्वहइ तक्खु माहवस्स अहिअं पिअं होइ'ति । मदयन्तिकामकरन्दपरिणयस्य चाधिकृतत्वादुभयस्यापि साधितत्वात् प्रकरणार्थपरिसमाप्तिः प्रतिपादिता ॥ २१ ॥

अथ मालतीप्राप्त्यैव परमपुरुषार्थस्य त्रिवर्गस्य साधितत्वात्ततः परस्य लिप्साविषयस्याभावात्तदनुयुक्तमर्थं प्रतिक्षिपति—अतः परमपि प्रियमस्तीति । अतः सिद्धादर्थात् परमुत्कृष्टं प्रियं वस्तु, अपिर्विरोधे, अस्तीति काका प्रश्नरूपया न किञ्चिदस्तीत्याक्षेपः प्रकाश्यते । 'अतः परमपि प्रियमस्ती'ति

---

१. 'माध—(सहर्षं प्रणमति) भगवति अतोऽपि परं' क, 'माध—नातः परं प्रेय' ख. घ. ट, 'माध— (सहर्षं ) अतः परं ममापि प्रिय' ज, 'माध— (सहर्षं प्रणमन् ) भगवति अतः परमपि प्रिय' झ. ञ. पाठः. २. 'मस्तु भगवतीप्रसादात्' क, 'मस्तु भगवतीपादप्रसादात् —' ख. घ. पाठः.

---

१. 'तव प्राणेभ्यो' क, 'तत्प्राणेभ्यो' च. पाठः

भरतवाक्यम् —

शिवमस्तु सर्वजगतां परहितनिरता भवन्तु भूतगणाः ।
दोषाः प्रयान्तु[1] नाशं सर्वत्र[2] सुखी भवतु लोकः[3] ॥

कामन्दकी—एवमस्तु ।

(इति निष्क्रान्ताः सर्वे)

---

वाञ्छितार्थप्रातिकथनाद् भाषणम् । तथापि अतः परस्य वस्तुनो लिप्साया विषयस्याभावेऽपीत्यर्थः । इदं वक्ष्यमाणं वस्तु । अस्त्विति प्रार्थनायां लोट् । अनेन च लिप्साभावेऽपि महापुरुषानुग्रहस्य सर्वथा स्वीकर्तव्यत्वं श्रेयस्साधनत्वादिति द्योतयति । नाटकन्यायाच्चेयमुक्तिः । भरतवाक्यमिति । प्रकरणस्य साकल्येनाभिनीय परिसमापितत्वात् माधवभूमिकां परित्यक्तवतः स्वप्रकृतिमात्रनिष्ठस्य वचनम् । इदं वक्ष्यमाणमित्यर्थः । प्रार्थनाप्रकारमाह — शिवमस्त्वित्यादि । शिवम् अभ्युदयः । ऐहिकविषयानुभवसम्पत्तिरित्यर्थः । सर्वजगतां सर्वेषां शरीरिणाम् । तत्र हेतुः—परहितनिरताः परशब्देन स्वकार्यत्वात् कारणभूतेभ्यः स्वेभ्योऽन्येषामित्युच्यते ।

"तथाहि सर्वे तस्यासन् परार्थैकफला गुणाः ।"

इतिवत् । तेषां हिते श्रेयसि निरताः नितरां रता उद्युक्ताः । स्वगुणैः शब्दादिभिः परहितैकनिष्ठा इति यावत् । तेषां न्यूनातिरेके जगत्क्षोभस्यावश्यंभावात् । भूतगणाः आकाशादीनां महतां भूतानां सङ्घाः ।

---

१. 'न्तु शान्तिं स' छ. पाठः. २. 'त्र जनः सुखी भवतु इति भवभूतिविरचिते मालतीमाधवे दशमोऽङ्कः' छ. पाठः. ३. 'कः, इति निष्क्रान्ताः सर्वे' ख. ग. घ ङ. पाठः.

" पञ्चानामपि भूतानामुत्कर्षं पुपुषुर्गुणाः "

इत्युक्तम् । दोषा रागद्वेषलोभादयः । 'प्रवर्तमानलक्षणाः स्युर्दोषा रागादयश्च ते' इति वचनात् । नाशं प्रयान्तु धीधैर्यात्मज्ञानादिभिरपुनरुत्थानाय विलयं गच्छन्तु ।

" धीधैर्यात्मादिविज्ञानं मनोदोषौषधं परम् "

इति वचनात् । सर्वत्र सर्वदेशेषु सर्वावस्थासु वा सुखी निश्शेषदुःखनिवृत्त्या निरतिशयानन्दानुभवविशिष्टो भवतु । मिथ्याज्ञानमूलस्य रागादेः सम्यक्ज्ञानेन निवृत्तत्वात् रागादिमूलस्य च दुःखराशेस्तन्निरसनेनैव[1] निरस्तत्वात् ।

" यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि[2] स्थिताः ।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते "

'अभयं वै जनक प्राप्तोऽसि' 'तरति शोकमात्मवित्' इत्यादिश्रुतिवचनैः । अस्यांस्त्वार्यायाः[3] पूर्वार्धेन अभ्युदयप्रार्थना उत्तरार्धेन निःश्रेयसप्रार्थना चार्यस्य परमेश्वरं प्रति परमकारुणिकेन कविना कृतेति वेदितव्यम् । 'तथापीदमस्तु । शिवमस्तु सर्वजगता'मित्यादिना शुभशंसनात् प्रशस्तिः । एवमेते पञ्च सन्धयश्चतुष्षष्ट्यङ्गैः[4] प्रतिपादिताः । अत्र प्रकरण आदौ 'सानन्दमि'ति, मध्ये 'विधाता भद्रन्न' इति, अन्ते 'शिवमस्तु सर्वजगतामि'ति च प्रयोगात् मङ्गलोपक्रमत्वान्मङ्गलमध्यत्वान्मङ्गलान्तत्वाच्चैतच्छीलनपराणां सकलसमीहितसम्पत्तिः प्रकाशिता । अत्र

१. 'न्निधनेनैव' ख. पाठः. २. 'दि श्रिताः' ग. पाठः. ३. 'स्याश्चार्या' ङ. पाठः. 'स्यां चार्यायां' छ. पाठः. ४. 'ष्ट्यङ्गैः' ङ. पाठः.

माधव इति साक्षाल्लक्ष्मीपतिर्नारायण उच्यते, 'शृङ्गारो विष्णुदैवत्य' इति वचनात् शृङ्गारदेवता भगवानेवात्र नायक इत्यनुसन्धानार्थम् । मालती तु सौकुमार्यसौरभ्यादियोगाल्लक्ष्मीः । देवरात इति देवैः भगवदवतारितार्थं भूमाववतारितत्वात् काश्यपः । भूरिवसुरिति अनन्तरत्नाकरत्वात् क्षीरसागरः । मकरन्द इति 'रसो वै सः' इत्यादिवचनात् परमानन्दरूपः परमेश्वरः । मदयन्तिकेति महामायात्वेन जगन्मोहनाद् भवानी । कामन्दकीति कामितार्थदानसामर्थ्याद्[1] भक्तिः । बुद्धरक्षितेति बुद्धैर्विद्वद्भिः परिपालितत्वात् सरस्वती । अवलोकितेति प्रेक्षावद्भिः सम्यगालोचितत्त्वात् नीतिः । लवङ्गिकेति परिमलबहलत्वात कीर्तिः । कलहंस इति मधुराव्यक्तोच्चारः परमात्ममन्त्रः । अघोरघण्ट इति अशास्त्रविहितहिंसापरत्वादधर्मः । कपालकुण्डलेति हिंसा । सौदामिनीति प्रकाशात्मिका झटिति स्फुरणेन सकलान्धकारपटलविघटनपटीयसी विद्येत्यादिरुपासनोपयुक्ता वासनापि महाकवेर्दैष्टिकैरनुसन्धेयेति सकलमतिमङ्गलम् ॥ २४ ॥

मालतीमाधवस्येत्थं दशमाङ्कार्थचर्चनम् ।
पूर्णज्योतिःप्रसादेन चक्रे पूर्णसरस्वती ॥

॥ इति दशमोऽङ्कः ॥

॥ शुभमस्तु ॥

---

१. 'अभिमतार्थप्रदान' क. पाठः.

# APPENDIX I.

*Alphabetical Index of verses giving the metre, alaṅkāra, bhāva and rasa of each verse.*

| Verse | | Metre | Alaṅkāra | Bhāva | Rasa | Page |
|---|---|---|---|---|---|---|
| अकरुणप्रवृत्ता | IX 51 | अनुष्टुप् | काव्यलिङ्गं | | | 566 |
| अकरुण वितर | ,, 23 | आर्या | | | | 520 |
| अकारणस्नेह० | X 6 | वंशस्थं | स्वभावोक्तिः | | | 579 |
| अतिमुक्त० | V 3 | See अतिमुक्त० | | | | |
| अत्रान्तरे किमपि | I 29 | वसन्ततिलकं | परिकरः, अतिशयोक्तिश्च | | | |
| अर्धेन्दुमयूख० | VIII 10 | शार्दूलविक्रीडितं | विरोधः, निदर्शना च | | वीरः | 72 |
| अद्योदितं | VII 4 | वसन्ततिलकं | अतिशयोक्तिः | | | 481 |
| अनिशितकलित० | X 2 | पुष्पिताग्रा | रूपकं प्रेयश्च | | | 438 |
| अनुभवं वदनेन्दु० | III 10 | द्रुतविलम्बितं | सङ्करः, अनुमानं च | धीरता | | 572 |
| अनुरागप्रवादर | I 16 | अनुष्टुप् | | | | 170 |
| अन्यैः कल्पित० | V 18 | See अन्यैः कल्पित० | | | | 43 |
| अन्येषु जन्तुषु | I 23 | वसन्ततिलकं | विरोधः, विषमं, अप्रस्तुतप्रशंसा च | | | 61 |

*Appendix* I—(*contd.*)

| Verse | | Metre | Alaṅkāra | Bhāva | Rasa | Page |
|---|---|---|---|---|---|---|
| अन्योन्यसंभिन्न० | I 36 | इन्द्रवज्रा | | | | 88 |
| अपत्यसम्बन्ध० | I 13 | उपेन्द्रवज्रा | | | | 41 |
| अपहास्तत० | IX 19 | वियोगिनी (ललिता) | विषमः | | | 517 |
| अपि चिन्तामणि० | X 21 | अनुष्टुप् | व्यतिरेकः | | | 607 |
| अभिनवराग० | ,, 3 | गीतिः | उपमा | दैन्यं | | 574 |
| अभिहन्ति हन्त | I 42 | मञ्जुभाषिणी | उपमा | | | 100 |
| अयमभिनव० | IX 5 | मालिनी | स्वभावोक्तिः | | | 500 |
| अलसवलित० | I 31 | मालिनी | अतिशयोक्तिः दीपकं च | दया, असूया, दैन्यं च | | 75 |
| अविगणय्य नृपं | X 15 | द्रुतविलम्बितं | भावोदयः | | अद्भुतः | 596 |
| अविमुक्तमद्ग्रथित० | V 8 | मञ्जुभाषिणी | अप्रस्तुतप्रशंसा | | | 261 |
| अविरलमिव | III 16 | मालिनी | | औत्सुक्यं | | 200 |
| अश्रुपूत० | V 12 | अनुष्टुप् | See स्वश्रुपूत० | | | |
| असारं संसारं | V 30 | शिखरिणी | मालानिदर्शना, अतिशयो- | असूया | करुणः | 311 |
| असौ विद्याशाभिः | II 11 | ,, | उपमा, उत्प्रेक्षा च [क्तिः | | | 142 |
| अस्तोकविस्मय० | IX 54 | वसन्ततिलकं | भावशबलत्वं | भावशबलता | | 569 |

| | | | | | | |
|---|---|---|---|---|---|---|
| अस्माकमेक० | VI 4 | वसन्ततिलकं | उदात्तं , अतिशयोक्तिश्च | | | 326 |
| आ जन्मनः प्रति० | X 1 | ,, | अतिशयोक्तिः, प्रेयश्च | | | 571 |
| ,, सह | IX 40 | ,, | अर्थापत्तिः, काव्यलिङ्गं च | | | 547. |
| आनन्दनानि | IX 47 | ,, | प्रेयः | स्मृतिः | | 559 |
| आग्नेः कल्पित० | V 18 | शार्दूलविक्रीडितं | रूपकं | | शृङ्गारः | 280 |
| आमूर्जश्च कलाभि० | IX 39 | ,, | प्रतिवस्तूपमा, समुच्चयश्च | | | 545 |
| आमूलकण्टकित० | VI 20 | वसन्ततिलकं | दृष्टान्तः | | | 382 |
| आविर्भवन्ती | III 4 | उपजातिः | उपमा | | | 159 |
| आश्चर्यमुत्पल० | III 5 | वसन्ततिलकं | सङ्करः | आवेगः हर्षश्च | | 160 |
| इदमिह मदनस्य | II 6 | पुष्पिताग्रा | | | | 129 |
| इयमवयवैः | VI 6 | हरिणी | दृष्टान्तः, समुच्चयश्च | | | 333 |
| ईषत्तिर्यग्वलन० | IV 2 | मन्दाक्रान्ता | सूक्ष्मं | | | 220 |
| उज्ज्वलालोकया | X 4 | अनुष्टुप् | अर्थश्लेषः | | | 576 |
| उत्कृत्योत्कृत्य | V 16 | स्रग्धरा | | | बीभत्सः | 277 |
| उत्फुल्लार्जुनसर्ज० | IX 17 | शार्दूलविक्रीडितं | स्वभावोक्तिः, यथासंख्यं च | | | 514 |
| उदग्रप्रदेह० | VI 13 | वसन्ततिलकं | अप्रस्तुतप्रशंसा, पर्यायोक्तं | असूया | | 361 |
| उद्वृत्तस्खलित० | V 3 | प्रहर्षिणी | [च | | | 249 |
| उन्नालबाल० | IX 13 | वसन्ततिलकं | काव्यलिङ्गं, स्वभावोक्तिश्च | | | 509 |
| उन्मीलन्मुकुल० | I 41 | प्रहर्षिणी | अप्रस्तुतप्रशंसा | | | 99 |

| Verse | | Metre | Alaṅkāra | Bhāva | Rasa | Page |
|---|---|---|---|---|---|---|
| एकीकृतस्त्वयि | VI 12 | वसन्ततिलकं | उत्प्रेक्षा, अतिशयोक्तिश्च | | | 359 |
| एतत्पूतनचक्र॰ | V 14 | शार्दूलविक्रीडितं | | | बीभत्सरौद्राद्भुताः | 274 |
| एतस्मिन्मद॰ | IX 14 | प्रहर्षिणी | उदात्तं | | | 510 |
| एते कतकसून॰ | After X 42 | शार्दूलविक्रीडितं | | | | 554 |
| एषा भवार्त | X 12 | इन्द्रवज्रा | अर्थान्तरन्यासः | | | 590 |
| एह्येहि भूरि॰ | X 19 | वसन्ततिलकं | | सच्छिष्यादिविषयो [भावः | | 602 |
| कच्चित्सौम्य | IX 25 | मन्दाक्रान्ता | अप्रस्तुतप्रशंसा, समासो- | | | 523 |
| कठोरास्थिग्रन्थि॰ | V 34 | शिखरिणी | स्वभावोक्तिः [क्तिश्च | | रौद्रः | 317 |
| कष्टकुड्मलितेक्षणा | IX 32 | शार्दूलविक्रीडितं | ,, | हर्षः | | 533 |
| कथमिव तदा | IX 49 | पथ्या | उपमा | लज्जा | | 564 |
| कथयति त्वयि | VIII 11 | द्रुतविलम्बितं | अनुमानं | | | 483 |
| कपालकुण्डला॰ | X 18 | अनुष्टुप् | अतिशयोक्तिः | | हास्यः | 600 |
| कबलित इव | III 16 | मालिनी | | | | 200 |
| करालायतना॰ | V 21 | अनुष्टुप् | अनुमानं | | | 286 |
| कर्णार्पणं॰ | V 13 | शार्दूलविक्रीडितं | भाविकं, स्वभावोक्तिश्च | | रौद्रः | 272 |

| | | | | | | |
|---|---|---|---|---|---|---|
| कल्याणानां | I 5 | मन्दाक्रान्ता | | | | 12 |
| काश्मीर्याः कृत० | IX 7 | शार्दूलविक्रीडितं | | | | 501 |
| किं वा भणामि | VI 11 | अनुष्टुप् | आक्षेपः | औत्सुक्यं | | 354 |
| किमपि किमपि मन्दं | VIII 13 | मालिनी | अप्रस्तुतप्रशंसा | | करुणः | 487 |
| किमयमरि० | X 9 | आर्या | उत्प्रेक्षा, विरोधः, विभावना | | | 536 |
| कुमुदाकरेण | IX 48 | मञ्जुभाषिणी | अप्र. सा अतिशयोक्तिश्च | | | 563 |
| कुवलयदल० | V 5 | हरिणी | भाविकं, अप्रस्तुतप्रशंसा च | | रौद्रः | 254 |
| केकाभिर्नीलकण्ठ० | IX 30 | स्रग्धरा | स्वभावोक्तिः, काव्यलिङ्गं, अर्थान्तरन्यासश्च | | | 531 |
| क्षिपन्निद्रामुद्रां | II 12 | शिखरिणी | स्वभावोक्तिः, आधिकं च | | | 144 |
| गमनमलसं | I 20 | हरिणी | अनुमानं, काव्यलिङ्गं च | | | 55 |
| गाढोत्कण्ठ० | VI 19 | शार्दूलविक्रीडितं | उदात्तं | | | 378 |
| गात्रेषु चन्दन० | IX 22 | वसन्ततिलकं | | | | 520 |
| गुञ्जत्कुञ्ज० | V 19 | शार्दूलविक्रीडितं | स्वभावोक्तिः | | रौद्रः | 283 |
| गुणापेक्षा० | II 7 | शिखरिणी | | | | 131 |
| गुणैः सतां न | I 9 | अनुष्टुप् | उदात्तं | गुरुविषयः | | 26 |
| गुरुचर्या० | IX 52 | ” | अप्रस्तुतप्रशंसा | | | 567 |
| घर्माम्भो० | I 40 | प्रहर्षिणी | भाविकं, सूक्ष्मं, अनुमानं च | औत्सुक्यं | | 98 |

## Appendix I—(contd.)

| Verse and No. | | Metre | Alaṅkāra | Bhāva | Rasa | Page |
|---|---|---|---|---|---|---|
| चिरादाशातन्तु० | IV 3 | शिखरिणी | आक्षेपः | | | 222 |
| चूडापीडकपाल० | I 2 | शार्दूलविक्रीडितं | स्वभावोक्तिः, उपमा च | | | 4 |
| जगति जयिनस्ते | I 39 | हरिणी | व्यतिरेकः | | | 93 |
| जन्मान्तरादिव | X 11 | आर्या | अतिशयोक्तिः, उपमा च | | | 589 |
| जय देव भुवन० | IX 4 | Do. | | | | 499 |
| …कनिबिडित० | IV 10 | मालिनी | स्वभावोक्तिः | | | 241 |
| …तांऽद्द | III 15 | पुष्पिताग्रा | अप्रस्तुतप्रशंसा, अनुमानं, रूपकं च | | | 1:3 |
| …जीवित० | X 17 | रथोद्धता | आशीः | | | 598 |
| जीवयन्निव | VIII 3 | Do. | उत्प्रेक्षा, उपमा च | | | 447 |
| …म्भाजर्जैर० | IX 16 | शार्दूलविक्रीडितं | स्वभावोक्तिः | | | 512 |
| …वकतु गगने | II 2 | हरिणी | अतिशयोक्तिः, अप्रस्तुतप्रशंसा, आक्षेपश्च | | | 120 |
| …कयति मनो० | III 6 | आर्या | दीपकं | धैर्यम् | | 161 |
| …मद्दे स्मर | V 25 | प्रहर्षिणी | | | | 299 |
| …वदय० | II 10 | पुष्पिताग्रा | संकरः | | | 141 |

| | | | | | | |
|---|---|---|---|---|---|---|
| तत्रतुरसनोप्र० | V 15 | Do. | दृष्टान्तः, निदर्शना च | | अद्भुतः, रौद्रश्च | 276 |
| तथा विनयनम्रा० | III 2 | अनुष्टुप् | विरोधः, निदर्शना च | | | 154 |
| तदेतदृसितो० | IX 38 | पृथ्वी | प्रेयः | औत्सुक्यं | | 544 |
| तन्मे मनः | IV 8 | वसन्ततिलकं | | | | 239 |
| तरुणतमाल० | IX 18 | नर्कुटकं | स्वभावोक्तिः | वितर्कः दैन्यं च | | 515 |
| तां याचते नर० | I 14 | आर्या | | | | 42 |
| तामिन्दुसुन्दर० | I 21 | वसन्ततिलकं | व्यतिरेकः | चिन्ता,, असूया च | शृङ्गारः | 56 |
| ते श्रोत्रियास्तत्त्व० | I 7 | इन्द्रवज्रा | परिसंख्या | | | 20 |
| त्वं वत्सकेति | VI 14 | वसन्ततिलकं | अतिशयोक्तिः | सुहृद्विषयो भावः | | 362 |
| त्वत्पादपङ्कज० | V 27 | Do. | समाधिः | औत्सुक्यं | करुणः | 304 |
| त्वमुत्सकः | VIII 8 | Do. | परिकरः, उपमा च | | | 468 |
| दृष्टं चिराय | VIII 4 | Do. | अतिशयोक्तिः | औत्सुक्यं | | 448 |
| दशति कुहर० | IX 6 | शालिनी | स्वभावोक्ति | | | 500 |
| दन्तच्छदा० | IX 31 | वसन्ततिलकं | Do. | | | 532 |
| दन्तश्रेणिषु | I 3 | शार्दूलविक्रीडितं | उत्प्रेक्षा | | | 7 |
| दया वा स्नेहो वा | IV 6 | शिखरिणी | अप्रस्तुतप्रशंसा | शङ्का | | 232 |
| दहति हृदयं | IX 12 | हरिणी | विशेषोक्तिः | असूया | | 508 |
| दलयति परि० | VIII 1 | मालिनी | उपमा | | | 444 |
| दैवात्पश्येर्जगति | IX 26 | मन्दाक्रान्ता | काव्यलिङ्गं | दैन्यं, औत्सुक्यं च | | 525 |
| दोर्निष्पेष० | VIII 9 | शार्दूलविक्रीडितं | अतिशयोक्तिः | | वीरः | 480 |
| धत्ते चक्षुर्मु० | III 12 | मन्दाक्रान्ता | Do. | | | 173 |
| धिगुच्छ्वसित० | IX 35 | पृथ्वी | अप्रस्तुतप्रशंसा | सुहृद्विषयो भावः | | 548 |

Appendix I—(contd.)

| Verse | | Metre | Alaṅkāra | Bhāva | Rasa | Page |
|---|---|---|---|---|---|---|
| वैर्यं [illegible] | V 32 | वसन्ततिलकं | प्रतिवस्तूपमा, एकदेशविवर्तिरूपकं, अतिशयोक्तिश्च | | वीरः | 315 |
| न [illegible] प्रत्याशा | IX 8 | शिखरिणी | विरोधः, उपमा, अतिशयोक्तिश्च | | | 503 |
| नवेषु [illegible] | IX 27 | उपेन्द्रवज्रा | अनुमानं | | | 527 |
| नाथं [illegible] | V 33 | अनुष्टुप् | Do. | | | 316 |
| नाट [illegible] | V 20 | मन्दाक्रान्ता | सूक्ष्मं, अनुमानं च | आवेगोदयः | | 285 |
| नान्त[illegible]यति | IX 33 | शार्दूलविक्रीडितं | | | | 534 |
| निका[illegible]क्षामाङ्गी | II 3 | शिखरिणी | उपमा, विरोधश्च | हर्षावेगसन्धिः | | 125 |
| निल[illegible]पङ्क॰ | V 2 | शार्दूलविक्रीडितं | अतिशयोक्तिः, स्वभावोक्तिश्च | हर्षः | | |
| निर्म[illegible] | IX 50 | वसन्ततिलकं | अर्थान्तरन्यासः | | | 246 |
| निरस्तो[illegible] | VIII 2 | मन्दाक्रान्ता | अतिशयोक्तिः | औत्सुक्यम् | | 565 |
| निशापरिवर्तदर्शनः | V 17 | स्रग्धरा | स्वभावोक्तिः | | | 446 |
| निष्प्र[illegible] | IX 46 | मन्दाक्रान्ता | | | | 279 |
| नीरदान्धो॰ | II 5 | Do. | | | | 558 |
| नैराश्यकातर॰ | VI 9 | वसन्ततिलकं | सूक्ष्मं | | | 127 |
| न्यस्ताक्षक॰ | V 24 | शार्दूलविक्रीडितं | भावसन्धिः उपमा | विषादो, हर्षश्च आवेगः, असूया, चिन्ता[illegible] | | 347 |
| | | | | | | 295 |

| | | | | | | |
|---|---|---|---|---|---|---|
| पक्ष्मालीपिङ्ग० | I 4 | स्रग्धरा | | | | 8 |
| पद्मावती विसद्ध० | IX 1 | वसन्ततिलकं | सापह्नवोत्प्रेक्षा | | | 493 |
| परिच्छेदव्यक्तिर्न | I 34 | शिखरिणी | भाविकं, अतिशयोक्तिश्च | | | 80 |
| परिच्छेदातीत: | I 33 | Do. | विरोधः, अतिशयोक्तिश्च | | | 79 |
| परिणतिरम० | VI 16 | मालिनी | अप्रस्तुतप्रशंसा | | | 369 |
| परिपाण्डु० | II 4 | मञ्जुभाषिणी | अर्थान्तरन्यासः | | | 125 |
| परिमृदित० | I 25 | मालिनी | अतिशयोक्तिः, निदर्शना च | | | 65 |
| पर्यन्तप्रतिरोधि० | V 11 | शार्दूलविक्रीडितं | विचित्रं , स्वभावोक्तिश्च | | रौद्र | 269 |
| पश्यामि तां | I 43 | वसन्ततिलकं | विशेषः | | | 100 |
| पुरश्चक्षूराग० | VI 15 | शिखरिणी | अप्रस्तुतप्रशंसा, अतिशयोक्तिश्च | | | 364 |
| पृथुचलरसनोग्र० | | See वत्पृथुरसनोग्र० | | | | |
| पृथुतररसनोग्र० | | Do. | | | | 276 |
| प्रकृतिललित० | III 14 | मालिनी | विषमं | चिन्ता | | 191 |
| प्रज्वलितकरि० | V 23 | दण्डकं | अतिशयोक्तिरुदात्तं च | | रौद्रः | 291 |
| प्रणयिसखी० | V 31 | नर्कुटकं | Do, काव्यलिङ्गं च | | | 313 |
| प्रथमप्रिया० | III 7 | मञ्जुभाषिणी | उपमा, यथासङ्ख्यं निदर्शना च | | | 162 |
| प्रसह्य कन्याद | IV 9 | शिखरिणी | अनुमानं | सुहृद्विषयः | | 240 |

*Appendix I—(contd.)*

| Verse | | Metre | Alankara | Bhāva | Rasa | Page |
|---|---|---|---|---|---|---|
| प्रयान्तीव प्राणाः | IX 45 | शिखरिणी | उत्प्रेक्षा, अतिशयोक्तिश्च | | | 557 |
| प्रसरति परि॰ | I 44 | मालिनी | अतिशयोक्तिः | दैन्यं | | 101 |
| प्रासादानां | VII 5 | मन्दाक्रान्ता | उदात्तं, अनुमानं च | हर्षः | | 446 |
| प्रियमाधवे॰ | IX 9 | मञ्जुभाषिणी | उत्प्रेक्षा | | | 503 |
| प्रियस्य सुहृदो | IX 41 | अनुष्टुप् | आशीः | औत्सुक्यं | | 548 |
| प्रेङ्खद्भूरि॰ | VI 5 | शार्दूलविक्रीडितं | उदात्तं, उत्प्रेक्षा च | | | 336 |
| प्रेमार्द्राः प्रणय॰ | V 7 | Do. | अतिशयोक्तिः | औत्सुक्यं | | 258 |
| प्रेम्णा सद्मापि॰ | VIII 6 | Do. | अप्रस्तुतप्रशंसा | स्नेहः, दैन्यं च | | 457 |
| प्रेयन्मनोरथ॰ | VII 3 | वसन्ततिलकं | परिकरः | | | 436 |
| प्रेयो मित्रं | VI 18 | शालिनी | उल्लेखः, अन्योन्यं च | | | 373 |
| फलभरपरिणाम॰ | IX 24 | मालिनी | | | | 522 |
| बन्धुता हृदय॰ | IX 21 | रथोद्धता | उल्लेखः | | | 519 |
| बहिः सर्वाकार॰ | I 17 | शिखरिणी | स्वभावोक्तिः, सूक्ष्मं च | भावसन्धिः | | 44 |
| बाष्पाम्भसा | VIII 5 | वसन्ततिलकं | उत्प्रेक्षा | | | 453 |
| भवति विलल॰ | X 14 | हरिणी | स्वभावोक्तिः, उपमा च | | | 595 |
| भवद्भिः सर्वाङ्ग॰ | IX 29 | शिखरिणी | अप्रस्तुतप्रशंसा | | | 530 |

| | | | | | | |
|---|---|---|---|---|---|---|
| मारः कार्यो | IX 37 | शालिनी | रूपकं, अतिशयोक्तिश्च | | | 542 |
| मूर्छा रसानां | I 6 | इन्द्रवज्रा | | | | 17 |
| मूयो भूयः सविध॰ | I 18 | मन्दाक्रान्ता | उत्प्रेक्षा | | | 45 |
| भो राजानश्चरस॰ | | See हे राजानः | | | | 321 |
| भ्रमय जलदान् | IX 42 | हरिणी | विषमः | असूया | | 552 |
| मनोरोगस्तीव्रं | II 1 | शिखरिणी | उपमा | | | 116 |
| मम हि कुवल॰ | VIII 12 | मालिनी | | | | 485 |
| मयि विगलित॰ | IX 11 | हरिणी | अप्रस्तुतप्रशंसा | | | 506 |
| मरणसमये | V 26 | Do. | विषमं | धृतिः अनुकम्पा द्वेषश्च | शृङ्गारः | 301 |
| मातर्मातर्दलति | IX 20 | मन्दाक्रान्ता | अतिशयोक्तिः | | करुणः | 518 |
| मा मूमुहत्खलु | I 35 | वसन्ततिलकं | आक्षेपः | मतिः | | 81 |
| माल्त्यपायम॰ | X 8 | Do. | अप्रस्तुतप्रशंसा | निर्वेदः | करुणं | 584 |
| मालत्याः प्रथमा॰ | VI 3 | शार्दूलविक्रीडितं | विकल्पः | हर्षः, धृतिश्च | | 324 |
| मा धां सपत्नेष्वपि | IV 5 | इन्द्रवज्रा | अतिशयोक्तिः | | | 231 |
| मुग्धेन्दुसुन्दर॰ | IX 44 | वसन्ततिलकं | विरोधः, श्लेषश्च | | | 556 |
| म्लानस्य जीव॰ | VI 8 | Do. | निरवयवमालारूपकं | हर्षः | | 344 |
| यत्प्रागेव | X 23 | शार्दूलविक्रीडितं | | | | 617 |
| यत्रत्य एष | IX 3 | वसन्ततिलकं | उपमा | | | 496 |
| यत्स्नेहसंज्वर॰ | IX 36 | Do. | अतिशयोक्तिः | आवेगः | | 541 |

*Appendix I—(contd.)*

| Verse | | Metre | Alaṅkāra | Bhāva | Rasa | Page |
|---|---|---|---|---|---|---|
| …दि तद्विषयो | III 13 | वसन्तमालिका | अतिशयोक्तिः, भावसन्धिः | | | 190 |
| …देन्दाबानन्दं | III 9 | शिखरिणी | अतिशयोक्तिः, अनुमानं, तुल्ययोगिता च | | | 167 |
| …द्विरमयास्तिसित० | I 22 | वसन्ततिलकं | विरोधः | आवेगः | | 58 |
| …ह्वाध्ययं | I 10 | शार्दूलविक्रीडितं | आक्षेपः, अतिशयोक्तिः, अर्थापत्तिश्च | | | 27 |
| | | वसन्ततिलकं | | | | |
| …व्रणित० | IV 1 | प्रहर्षिणी | | | | 214 |
| …मां विशेष० | I 12 | | अतिशयोक्तिः, व्यतिरेकं च | औत्सुक्यम् | | 38 |
| …ा कौमुदी | I 37 | वसन्ततिलकं | रूपकं अनुमानं अन्योन्यं च | | | 91 |
| याता सवेन्द्र० | VIII 14 | Do. | अर्थान्तरन्यासः | | | 490 |
| याम्या मुहुः | I 32 | Do. | विरोधः, उत्प्रेक्षा च | | | 78 |
| ये नाम केचिदिह | I 8 | Do. | व्याजस्तुतिः | | | 23 |
| रम्भोरु संहर | VII 2 | Do. | अतिशयोक्तिः, विभावना, विशेषोक्तिश्च | | | 435 |
| राज्ञः प्रियाय | II 8 | Do. | उपमा, उत्प्रेक्षा, आक्षेपश्च | | | 135 |
| …ाहोचन्द्रकला० | V 28 | शार्दूलविक्रीडितं | यथासंख्यं, उपमा च | भावशबलता | | 306 |

| | | | | | | |
|---|---|---|---|---|---|---|
| लीनेव प्रति० | V 10 | Do. | उत्प्रेक्षा | आवेगशान्तिः | | 266 |
| लीलोत्खात० | IX 34 | Do. | काव्यलिङ्गं | | | 537 |
| वन्द्या त्वमेव | X 20 | वसन्ततिलकं | ,, | | | 603 |
| वयं तथा नाम | VII 1 | वंशस्थं | सूक्ष्मं, अप्रस्तुतप्रशंसा, निदर्शना च | मोट्टायितं | | 412 |
| वयं यत | III 18 | पृथ्वी | अप्रस्तुतप्रशंसा | | वीरः | 202 |
| वरेऽन्यस्मिन् द्वेषः | II 13 | शिखरिणी | | | | 147 |
| वानीरप्रसवै० | IX 15 | शार्दूलविक्रीडितं | स्वभावोक्तिः, उपमा, उत्प्रेक्षा च | | | 511 |
| वारं वारं तिरयति | I 38 | मन्दाक्रान्ता | अप्रस्तुतप्रशंसा | दैन्यं, रतिश्च | | 92 |
| विकसत्कदम्ब० | IX 43 | मञ्जुभाषिणी | अप्रस्तुतप्रशंसा | दैन्यं | | 554 |
| विधाता भद्रं | VI 7 | शिखरिणी | आशीः | | | 334 |
| विवृण्वतेद | I 11 | अनुष्टुप् | उत्प्रेक्षा, विरोधश्च | | | 35 |
| विशेषतस्तु | I 15 | Do. | | | | 43 |
| विष्वग्वृत्तिर्जटानां | V 4 | स्रग्धरा | काव्यलिङ्गं, स्वभावोक्तिश्च | | | 250 |
| व्यतिकर इव | IX 53, X 7 | मालिनी | उत्प्रेक्षा | भयं, चिन्ता, मतिश्च | | 568, 583 |
| व्यतिकरितदिगन्ताः | II 9 | Do. | उपमा | | | 139 |
| व्यतिषजति | I 27 | Do. | अर्थान्तरन्यासः | | | 68 |
| व्याघ्राघ्रात० | V 29 | शार्दूलविक्रीडितं | निदर्शना, दृष्टान्तश्च | | रौद्रः | 310 |

*Appendix I—(contd.)*

| Verse | | Metre | Alaṅkāra | Bhāva | Rasa | Page |
|---|---|---|---|---|---|---|
| °ज्योत्स्नाविच्छ° | V 6 | स्रग्धरा | उत्प्रेक्षा, अतिशयोक्तिः, अप्रस्तुतप्रशंसा च | | | 256 |
| व्रजति विरहे | III 2 | हरिणी | अप्रस्तुतप्रशंसा | | | 154 |
| °ज्ज्योत्स्ना° | I 19 | शिखरिणी | उपमा, सूक्ष्मं च | | | 52 |
| °कुन्तला° | III 3 | उपजातिः | सूक्ष्मं | धैर्यशैथिल्यं, त्रपाविगलनं च | | 156 |
| °न्तिः कुतस्तत्य | VI 1 | इन्द्रवज्रा | दृष्टान्तः, अप्रस्तुतप्रशंसा, अतिशयोक्तिश्च | | | 320 |
| °स्वेषु निद्रा | III 11 | Do. | अप्रस्तुतप्रशंसा | | | 171 |
| °विषवस्तु | X 24 | आर्या | | | | 619 |
| °पर्वतादिह | X 13 | Do. | | | | 592 |
| °ख्यानां गुणि° | X 22 | शार्दूलविक्रीडितं | परिकरः | | | 609 |
| °ध्यान्दधेति | VI 17 | वसन्ततिलकं | काव्यलिङ्गं, अतिशयोक्तिश्च | | | 371 |
| °बाधिकदा° | V 1 | मालिनी | भाविकं | देवताविषयको भावः | | 243 |
| संसक्तत्रुटित° | III 17 | प्रहर्षिणी | भाविकं | | रौद्रः | 201 |
| सहनः कर्मणां भेदात् | After X 6 | अनुष्टुप् | | | | 580fn. |
| सजीवनौषधि° | X 10 | आर्या | उपमा | | | 587 |
| सन्तः सन्तु | After X 24 | शार्दूलविक्रीडितं | | | | 619fn. |

